नामद्वयत्वेन विकल्पितानाममीषां त्रिककुद्–धाम, हविर्–हरिः, विरजो
अवशिष्टै द्व्यशीत्युत्तरनवशत्या ( ९८८ ) नामभिः सह सहस्रसंख्या

| प्रस्तारगा एव वि- ति द्योतकसंख्याः | सहस्रनाम्नाम् आनुपूर्व्याम् एकैकप्रस्तारासाधारण– | | | | | |
|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ |
| | ६२ | ३६१ | ३९८ | ३९९ | ४७९ | ४८० |
| १ | त्रिककुद्-धाम | हविर्हरिः | विरतः | मार्गः | सत् | असत् |
| २ | ” | हविः | हरिः | विरजोमार्गः | ” | ” |
| ३ | ” | ” | ” | विरतः | [४००] मार्गः | सदक्षरम् |
| ४ | ” | ” | ” | ” | ” | सत् |
| ५ | ” | ” | ” | ” | ” | ” |
| ६ | ” | ” | ” | ” | ” | ” |
| ७ | त्रिककुत् | [६३] धाम | हविर्हरिः | विरजोमार्गः | [४७९] सत् | असत् |
| ८ | ” | ” | ” | विरतः | [४००] मार्गः | सदक्षरम् |
| ९ | ” | ” | ” | ” | ” | सत् |
| १० | ” | ” | ” | ” | ” | ” |
| ११ | ” | ” | ” | ” | ” | ” |
| १२ | ” | ” | हविः | [३६२] हरिः | विरजोमार्गः | सदक्षरम् |
| १३ | ” | ” | ” | ” | ” | सत् |
| १४ | ” | ” | ” | ” | ” | ” |
| १५ | ” | ” | ” | ” | ” | ” |
| १६ | ” | ” | ” | ” | विरतः | [४०१] मार्गः |
| १७ | ” | ” | ” | ” | ” | ” |
| १८ | ” | ” | ” | ” | ” | ” |
| १९ | ” | ” | ” | ” | ” | ” |
| २० | ” | ” | ” | ” | ” | ” |
| २१ | ” | ” | ” | ” | ” | ” |

मार्गः, सदक्षरम्, असत्क्षरम्, सवः, चतुर्वेदविदेकपात, इति सप्तानां नाम्नाम्, निर्वृत्त्यर्थं द्वादशत्वप्रकारद्योतकप्रस्ताराः इत्यमेकविंशतिर्भवन्ति.

| नामसंख्यापूर्वकनामानि, एकैकप्रस्तारान्तर्गतानि द्वादश. | | | | | |
|---|---|---|---|---|---|
| ७ | ८ | ९ | १० | ११ | १२ |
| ४८१ | ४८२ | ७३२ | ७३३ | ७७७ | ७७८ |
| क्षरम् | अक्षरम् | सः | व | चतुर्वेदवित् | एकपाव |
| " | " | " | " | " | " |
| असत् | क्षरम् | " | " | " | " |
| असत्क्षरम् | अक्षरम् | " | " | " | " |
| असत | क्षरम् | [४८३] अक्षरम् | सवः | " | " |
| " | " | " | सः | [७३४] वः | चतुर्वेदविदेकपाव |
| क्षरम् | अक्षरम् | [७३२] सः | वः | [७७७] चतुर्वेदवित | एकपाव |
| असत् | क्षरम् | " | " | " | " |
| असत्क्षरम् | अक्षरम् | " | " | " | " |
| असत् | क्षरम् | [४८३] अक्षरम् | [७३३] सवः | " | " |
| " | " | " | सः | [७३४] वः | चतुर्वेदविदेकपाव |
| " | " | [७३२] सः | व. | [७७७] चतुर्वेदवित | एकपाव |
| असत्क्षरम् | अक्षरम् | " | " | " | " |
| असत | क्षरम् | [४८३] अक्षरम् | सवः | चतुर्वेदवित | एकपाव |
| असत् | क्षरम् | " | सः | [७३४] वः | चतुर्वेदविदेकपाव |
| सदक्षरम् | असत्क्षरम | [७३२] सः | वः | [७७७] चतुर्वेदवित | एकपात् |
| " | असत | [४८३] क्षरम् | सवः | " | " |
| " | " | क्षरम् | स. | [७३४] वः | चतुर्वेदविदेकपात् |
| सत | असत्क्षरम् | अक्षरम् | सव | [७७७] चतुर्वेदवित | एकपात् |
| " | " | " | सः | [७३४] वः | चतुर्वेदविदेकपात् |
| " | असत | क्षरम् | [४८३] अक्षरम् | मनः | चतुर्वेदविदेकपात |

श्री ।

# तर्कसंग्रहव्याख्यायाः लघुबोधिनी समाख्यायाः प्रसिद्धिपत्रिका ।

भो भो न्यायशास्त्राऽधिजिगांसवो विदाङ्कुर्वन्त्वत्रभवन्तः जगत्प्रसिद्ध-श्रीवृन्दावननिवासिश्रीरङ्गाचार्यस्वामिप्रणीता लघुबोधिनीसमाख्या तर्क-संग्रहसमेता । तर्कसंग्रहव्याख्या साम्प्रतं "लक्ष्मीवेङ्कटेश्वर" मुद्र-णागारे संमुद्र्य प्रकाशिता सा च न्यायशास्त्रपरिभाषाजिज्ञासूनामतीवोप-कारिणी तस्यां च, इतर व्याख्यापेक्षया अधिका उपयुक्ताश्च सर्वेऽपि विषयाः अल्पशो दर्शिताः, तथा च मन्येऽहमेतदध्ययनेन गादाधरीजाग-देशीत्याद्याकरग्रन्थाध्ययने व्यवसायशालिनोऽवश्यं समुत्सहेरन्, येषां म-हाशयानां जिघृक्षाचेत् तैः सूचना कार्येति मे विज्ञप्तिः ।

---

## गोविन्दराजीय भूषणाख्यया तनिश्लोक्याख्यया रामानुजी-याख्यया च व्याख्यया समेतस्य श्रीवाल्मीकिरामायणस्य प्रसिद्धिपत्रिका ।

भो भो विद्यापारावारपारीणा इदं विदाङ्कुर्वन्त्वत्रभवन्तः—तनिश्लो-क्याख्ययाभूषणाख्यया रामानुजीयाख्यया च व्याख्यया समेतं श्रीवा-ल्मीकिरामायणम् अत्युत्तमतैलङ्गदेशीयद्राविडदेशीयपुस्तकमालोच्य प-ण्डितैः सशोधितम्, तच्च सम्प्रति सुव्यक्तैः स्थूलसूक्ष्माक्षरैर्लक्ष्मीवेङ्कटेश्व-रमुद्रणयन्त्रेमुद्र्यते, तस्य च नागेशप्रभृतिविनिर्मिताः सन्ति यद्यपि बह्व्यो व्याख्याः, तथापि सहृदयहृदयाह्लादकनानाविधाऽपूर्वार्थान्वेषणे प्रयतमा-नैरार्यकुलोचित धर्ममर्यादाविचारशीलैर्महाशयैर्निर्विशेषत्वेन सविशेषत्वेन च ब्रह्मस्वरूपप्रतिपादकवेदान्तवाक्यानां समीचीनतर्कसहकृतविषयतेऽव्य-

यस्थाप्नेन तात्पर्यार्थनिर्णायकतया श्रीवाल्मीक्यभिप्रायानुगा रामानुजीयव्याख्या तन्निश्लोकीव्याख्यासमेता भूषणाख्यव्याख्याऽवश्यं निरीक्षणीयेति, मन्येऽहं निरीक्षणेनाभिज्ञानामवश्यं जिघृक्षा भवेदिति ।

---

॥ श्रीः ॥

# श्रीमल्लक्ष्मीवेङ्कटेशाय नमः ।

## श्रीपराशरभट्टार्यविरचितम् ।

## भगवद्गुणदर्पणाख्यश्रीविष्णुसहस्रनामभाष्यम्



श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । ५
श्रीवत्साङ्कसुतः श्रीमाञ्छ्रेयसे मेऽस्तु भूयसे ॥

वन्दे गोविन्दतातौ मुनिमथ मनवै लक्ष्मणार्यं महान्तं
ध्यायेयं यामुनार्यं मम हृदि तनवै राममेवाभियायाम् ।
पद्माक्षं प्रेक्षिषीय प्रथममपि मुनिं नाथमीडे शठारिम्
स्तौमि प्रेक्षेय लक्ष्मीं शरणमशरणः श्रीधरं संश्रयेयम् ॥ १०

ॐ नमो गजवक्त्राद्यैः पारिषद्यैः प्रशासते ॥ श्रीरङ्गराजसेनान्ये सूत्रवत्या समेयुषे ॥ १ ॥ नमो नारायणायेदं कृष्णद्वैपायनात्मने ॥ यदामुष्यायणा वेदा महाभारतपञ्चमाः ॥ २ ॥ जातो लक्ष्मणमिश्रसंश्रयधनाच्छ्रीवत्सचिह्नादपेर्भूयो भट्टपराशरेति फणितः श्रीरङ्गभर्त्रा स्वयम् ॥ श्रीश्रीरङ्गपतिप्रसादतृपया श्रीरङ्गनाथाह्वयः श्रीरङ्गेश्वरका- १५ रितो विवृणुते नाम्नां सहस्रं हरेः ॥ ३ ॥ संसारोयमपण्डितो भगवति प्रागेव भूयः कलौ पूर्णंमन्यतमे जने श्रुतिशिरो गुह्यं ब्रुवे साहसात् ॥ तत्र स्तोत्रमिदं प्रकाशयति यस्स्तुत्यश्च यस्तावुभौ व्यासः कारुणिको हरिश्च तदिदं मौर्ख्यं सहेतां मम ॥ ४ ॥ अर्थे हरौ तदभिधायिनि नामवर्गे तद्व्यञ्जके मयि च बन्धविशेषमेत्य ॥ सेवध्वमेतदमृतं २० प्रणिपत्य याचे मध्यस्थमत्सरिजना इह मा च भूवन् ॥ ५ ॥

---

पाठान्तरं—१—अयम् श्लोकः—१—४ न । लक्ष्मणाह्वम् । २ —गणित—२—गदित— ३ । ३—श्रीमद्रंग—२ । ४—भगवान्मौ—१ । —२ ।

## ❀ श्रीरामायणवत् महाभारतस्य प्रामाण्यसमर्थनम् ❀

इह खलु निखिलोऽपि चेतयमानः प्रमाणतः प्रमेयं परिच्छिन्दन् , त-
च्चेत्प्रमेयमनुकूलम् तदुपाददीत, यथा स्रक्चन्दनकनकादिकम् , तच्चे-
५ द्विपरीतम्; अपोहेत, यथा क्षुरकण्टकादिकम् , तच्चेदुभयरूपम् , उपेक्षे-
त, यथा काष्ठलोष्टादिकम् , तत्र प्रत्यक्षादिप्रमाणान्तरगोचरयोरर्थका-
मयोः, अत्यल्पत्वानर्थकरत्वबीभत्सत्वभङ्गुरत्वदुःखमिश्रत्वदुःसाध-
त्वाद्यनन्तदोषानुषङ्गेण त्याज्यत्वात्, शास्त्रप्रमेययोर्धर्मपरतत्वयोः
तद्वैपरीत्यादनन्तमङ्गलसंगतत्वाच्च, शास्त्रतदर्थयोरुपादेयत्वं प्रक्लृप्यते;
१० यथाहुरैतिहासिकाः पौराणिकाश्चैककण्ठाः । "सत्यं सत्यं पुनः
सत्यमुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्"॥
इति ; तत्र चतुर्दशविद्यास्थानप्रधानभूतस्य वेदस्य " इतिहासपुराणा-
भ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति"॥
[ भारते आदिपर्व० अध्यायः १ श्लोकः २७३ ] इति प्रकारेणे-
१५ तिहासपुराणाभ्यामर्थे निर्णेतव्ये पुराणेभ्य इतिहासोत्कर्षे च विवक्षिते
श्रीमद्रामायणवन्महाभारतं शरणम्.

❀

## ❀ श्रीसहस्रनामाध्यायोत्कर्षसमर्थनम् ❀

तत्र—महाभारतसारत्वात् ऋषिभिः परिगानतः । वेदाचार्यसमाहारात्
भीष्मोत्कृष्टमतत्वतः ॥ परिग्रहातिशयतो गीताद्यैकार्थ्यतश्च नः ।
२० सहस्रनाम्नामध्याय उपादेयतमो मतः ॥

## महाभारतोत्कर्षसमर्थनपूर्वकं महाभारतसारत्वकथनम्

महाभारतं हि परिग्रहविशेषावसिताविप्लववचनसौष्ठवाद्यात्मकात् इति-
हासत्वकृतात्प्राबल्यात् । पुराणेषु तावत् वायुप्रोक्तशैवयोः " मति-
मन्थानमाविध्य येनासौ श्रुतिसागरात् । जगद्धिताय जनितो महाभार-
२५ तचन्द्रमाः " ॥

---

पा०—१—दुःसाधन—४ । २—न देवः—३ । ३—परः— ३ । १ । ४—
श्रीरामा—२ ।

भविष्यत्पुराणे " बिभेति गहनाच्छास्त्रान्नरस्तीव्रादिवौषधात् । भारतःशास्त्रसारोयमतःकाव्यात्मनाकृतः" ॥ मात्स्ये " यस्यद्वैपायनः पुत्रःस्वयं विष्णुरजायत । प्रकाशो जनितो येन महाभारतचन्द्रमाः " ॥ वैष्णवे " कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । ५
कोह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥ [ विष्णुपुराणे अंशः ३ अध्यायः ४ श्लोकः ५ ] मार्कण्डेये " व्यासवाक्यजलौघेन कुधर्मतरुहारिणा । वेदशैलावतीर्णेन नीरजस्का महीकृता " ॥ इत्यादिभिः, स्वस्मिँश्च " यो विद्याच्चतुरो वेदान् साङ्गोपनिषदोन्द्विजः । न चाख्यानमिदं विद्यान्नैवसस्याद्विचक्षणः " ॥ १०
[ भारते आदिपर्व० अध्यायः २ श्लोकः ३७६ ] इत्यादिभिश्च परस्सहस्रैर्वचनैः प्रशस्यमानत्वात्, साङ्गश्रुतिस्मृतीतिहासपुराणसंवादात्, "यदिहास्ति तदन्यत्र यन्नेहास्ति नतत्कचित्"॥ [ भारते आदिपर्व०अध्यायः ६२ श्लोकः ५३]. इति लौकिकवैदिकसकलार्थनिर्णयाधिकृतत्वेन कचिदप्यपक्षपातित्वाच्च, पुराणेभ्यो बलवत्तरं १५
बहवोबुद्धिशालिनोऽध्यवसमुःतत्रापिस्वहृदयभूते आनुशासनिकेपर्वणि दानधर्मेषुसमस्तशास्त्रार्थे,निष्कृष्यनिगम्यमाने,सारसंग्रहरूपेणखल्वयंसहस्रनाम्नामध्यायोऽवतारितः, तस्मात्प्रामाण्यकारणप्रकर्षेण तत्त्वार्थतात्पर्यलिङ्गैश्चाप्रामाण्यप्रशंसावान्यपरत्वशङ्कयोः सुदूरनिरस्तत्वेन परमप्रकृष्टार्थप्रतिपादकत्वाच्चाऽभ्युदयनिःश्रेयसार्थिनामयमेवोपादेयतमः. १ २०

❀ सहस्रनामाध्यायस्य ऋषिभिः परिगीतता ❀

तथा— ( ऋषिभिः परिगानतः, ) ( ऋषिभिः परिगीतानि ) इत्येतद्विवरणावसरएवैष हेतुरुपपादयिष्यते. २

❀ अनेकऋषिगीतभगवन्नाम्नामाप्तव्यासेनैतत् स्तोत्ररूपसमाहारः ❀ २५

किञ्च ( वेदाचार्यसमाहारात् ) भगवान् हि वेदाचार्यः—

---

पा०—१—श्रीविष्णुपुराणे—२. वैष्णवे च—३ । २—पदोद्धि । ३—विद्वा—१—४ । वधा—१—४ न ।

कृष्णद्वैपायनः परमाप्ततमः, भगवन्नारायणावतारत्वेन निरतिशयज्ञानैश्वर्यादिकल्याणगुणकतया निरस्तसमस्तविप्रलम्भादिदोषसंभावनत्वात्कलिचलमन्दाधिकारिमनुष्यानुग्रहाय व्यस्तसमस्तवेदत्वात् वेदार्थयोस्तत्त्वा-
५ नुष्ठानयोरज्ञानसंशयविपर्ययपरिजिहीर्षया प्रणीतपञ्चमवेदत्वात्, स्ववचनेन क्षत्रियं विश्वामित्रं ब्राह्मणीकृतवतो भगवतो वसिष्ठस्य नप्तृत्वात् वसिष्ठपुलस्त्यवरप्रदानलब्धदेवतापारमार्थ्यज्ञानपुराणसंहिताकर्तृत्वादि विषयवरातिशयवत्तया लैङ्गादिष्वपि पुराणेषु प्रसिद्धस्य भगवतः पराशरस्य चापत्यत्वात्, अनन्यसाधारणतपःसमाधिविशेषैश्चाशेषपरमर्षि-
१० परिषत्पूजितत्वाच; एवंविधेनअनेन ऋषिभिः परिगीतानामेव भगवन्नाम्नामन्त्रायितस्तोत्ररूपेण समाहृतत्वान्नायमुपादेयतमः. . ३

## ❀सहस्रनामाध्यायस्य भीष्मकृताधिकतमस्वमतत्व-ख्यापनम्❀

अपि च( भीष्मोत्कृष्टमतत्वतः ) भीष्मोपि हि प्रत्ययिततमः, तथाहि
१५ राजधर्मेषु धर्मराजाय भगवता व्यासेन " श्रोतुमिच्छसि चेद्धर्मान्निखिलेन नराधिप । प्रेहि भीष्मं महाबाहो वृद्धं कुरुपितामहम् ॥ ६ ॥ स ते सर्वरहस्येषु संशयान्मनसि स्थितान् । छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वतत्त्ववित्॥ ७ ॥ साक्षाद्ददर्श यो देवान् सर्वाञ्छक्रपुरोगमान् ॥ ८ ॥ इत्यादौ, यस्य ब्रह्मर्षयः पुण्या नित्यमासन्सभासदः । यस्य
२० नाविदितं किञ्चित् ज्ञानं ज्ञेयेषु विद्यते ॥ १५ ॥ स ते वक्ष्यति धर्मज्ञो धर्मान्सूक्ष्मार्थतत्त्ववित् "[ भारते शान्तिपर्व॰ अध्यायः ३७.] इत्यादौ च, स्वयं च भगवता " शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः । मान्यानि पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ ११ ॥दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् । साङ्गाश्च चतुरो वेदांस्तमस्मि
२५ मनसागतः ॥ १७ ॥

पा॰–१– म–१–न । २–च–१–न ।

सहि भूतं भविष्यच्च भवच्च भरतर्षभ।वेत्ति धर्मभृतांश्रेष्ठस्ततो मे तद्गतंमनः॥ १९॥ तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरन्धरे। ज्ञानान्यल्पी भविष्यन्ति तस्मात्त्वां चोदयाम्यहम्" ॥२३॥ [भारते शान्तिपर्व० अध्यायः ४६] इत्यादौ च "यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानु ५ पृच्छते। वेदप्रवाद इवते स्थास्यन्ति वसुधातले"॥ २९॥[भारते शान्तिपर्व० अध्यायः ५४ ] इत्यादौ "यद्धिभूतं भविष्यच्च भवच्च भरतर्षभ। सर्वं तज्ज्ञानवृद्धस्य तव पाणाविवाहितम् ॥ १८ ॥ अहं च त्वाभिजानामि स्वयं पुरुषसत्तम॥२६॥ तपसाहि भवाञ्छक्तः स्रष्टु लोकांश्चराचरान् "२९ ॥ [भारते शान्तिपर्व० अध्यायः५०] १० इत्यादौ " न ते ग्लानिर्न ते मूर्च्छा" ॥ १६ ॥ इत्युपक्रम्य " सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति । रजस्तमोभ्यामस्पृष्टं घनैर्मुक्तइवोडुराट् " ॥ १८ ॥ [भारते शान्तिपर्व० अध्यायः ५२ ] इत्यादौ च भगवता नारदेन च " कृत्स्नान्हि विविधान् धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ॥ ९ ॥ तच्छीघ्रमनुयुञ्जीध्वं संशयान् १५ मनसि स्थितान्"॥ १० ॥[ भारते शान्तिपर्व० अध्यायः ५४ ] इत्यादौ च प्रपञ्च्य एवं बहुमहर्षिवृद्धसेवादीर्घब्रह्मचर्यतपःसमाधिलब्धसर्वसाक्षात्कारादिप्रभावविशेषवत्तया प्रशस्य, परतत्वधर्मप्रवर्तकतया वरान् वितीर्य नियुक्तत्वात् मातापितृशुश्रूषणतत्प्रसादवरलाभसौभाग्यात्, स्वयं च " दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजः । २० तव प्रसादाद्गोविन्द सद्यो व्यपगतानि मे ॥ १७ ॥ यच्च भूतं भविष्यच्च भवच्च परमच्युत। तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम्॥ १८॥ वेदोक्ताश्चैव ये धर्माः वेदान्तनियताश्च ये। तान् सर्वान् संप्रपश्यामि वरदानात्तवाच्युत ॥ १९॥ इत्यादौ युवेव चास्मि संवृत्तस्त्वदनुध्यानबृंहितः । वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन"॥२३॥ २५ [ भारते शान्तिपर्व० अध्यायः ५४ ] इत्यादौ च प्रतिसंहितयथोक्तस्वपर-

पा०-१-तंचभव्यंच-१-२-३ । २-च-१-न ।

मार्थकत्वाच्च एवंविधस्य भीष्मस्य (एष मे सर्वधर्माणां धर्मोऽधिक तमो मतः) इत्यादिना अधिकतमस्वमतत्वेन ख्यापितत्वाच्च अयमध्यायः उपादेयतमः. ४

५ ## ❀सहस्रनामाध्यायस्य शास्त्रादिभिः बालमूकादिभिश्च परिगृहीतता❀

(परिग्रहातिशयतः) परिग्रहो हि सार्वभौमो भगवन्नामसहस्रस्य, शास्त्रेषु तावत् सभापर्वणि "देवो नामसहस्रवान्" [भारते सभापर्व० अध्यायः ३८ श्लोकः ११] इति भगवानपि नामसहस्रसम्बन्धेन भूष्यते श्री-
१० विष्णुधर्मे च श्रीगजेन्द्रमोक्षणे "सहस्रशुभनामानमादिदेवमजं विभुम्"। [विष्णुधर्मे अध्यायः ६९] इति अत्रचोपोद्घातफलश्रुत्योर्गुणप्रपंञ्चो द्रक्ष्यते आयुर्वेदादिषु च दृष्टादृष्टशास्त्रेषु यथा चरकसंहितायां "विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति" इति अद्यतने च नानाविप्रकीर्णमूले मेहस्य प्रायश्चित्ते "जप्यं
१५ पुरुषसूक्तकम्" इत्यारभ्य "तथैव भगवन्नामसहस्रं भारतोदितम्" यक्ष्मणः "तथैव भगवन्नामसहस्रं परिकीर्त्तयेत्" ज्वरविशेषस्य होमस्तु पूर्ववज्जप्यं "विष्णोर्नामसहस्रकम्" ग्रहादेः "आसत्यतं मरुत्सूक्तं विष्णोर्नामसहस्रकम्" अन्यत्र चैवंविधमन्वेष्टव्यम् प्राकृताःकवयोपीदं सर्वजीवरक्षात्वेन वर्णयन्ति यथाहभट्टबाणः सूतिकागृहवर्णने "अविच्छिन्नपठ्यमान-
२० नारायणनामसहस्रम्" [पूर्वकादम्बर्यां] इति लोके च ग्रहणधारणश्रवणजपसंकीर्तनलेखनव्याख्यानतन्निष्ठपूजनप्रभृतिभिर्विषपिशाचव्याधिग्रहदुःस्वप्नदुर्निमित्ताद्यशिवोपशमना—

---

पाठान्तरं—१—पारमार्थि—३ । परमार्थिक—२ । २—क्षणेच—१—४ । ३—दृश्यते २—३। ४—नेपुच—३ । ५—इत्यारभ्य—१—४—न। २ । ६—शांतिकर्मादौ आर्ष मतं—१ ।

## श्रीवैशम्पायन उवाच ।

**श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।**
**युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

यं महापातकादिप्रायश्चित्ताय ऐहिकामुष्मिकाभ्युदयसिद्धये, संसारग्रन्थिविस्रंसनाय वैष्णवपरमपदावाप्तये तादात्विक भगवद्गुणसुधास्वादसुखाय च, आबालमूकमूर्खस्त्रीनास्तिकैकभेषजं निरतिशयश्रद्धाभक्तिविश्वासपूर्वकं परिगृह्यते, नचैवंविधः परिग्रहो वेदानामपि तेषां मूर्खादिभिः अपरिग्रहात्, कुलचरणगोत्रादिव्यवस्थया प्रतिशाखं परिग्रहविभागाच्च एवं परिग्रहातिशयादस्योपादेयतमत्वम्. ५ ५ १०

## ❋ सहस्रनामाध्यायस्य गीतानारायणीययानसन्ध्याद्येकार्थता ❋

(गीताद्यैकार्थ्यंतथ्यं)भारतसिद्धान्तभूतभगवद्गीतानारायणीययानसन्ध्यग्रपूजोत्तमानुशासनप्रभृतिप्रदेशान्तरतात्पर्यनिष्कर्षरूपत्वेन तदेकार्थत्वाच्च.६ एवमेभिः षड्भिर्हेतुभिः प्रेक्षापूर्वकारिणां परमोपादेयतया निर्णीतम्,व्यासदेवश्रवोदेवस्थाननारदवात्स्यायनसुमन्तुप्रभृतिभिःसकलविद्यादेशिकैर्ब्रह्मर्षिभिर्देवब्रह्मर्षिभिः, स्वयं च भगवता सर्वेश्वरेण गीतोपनिषदाचार्येण पूर्वेषामपि गुरुणा पुण्डरीकविलोचनेन श्रोतृकोटिनिविष्टेन भीष्माच्छ्रुत्वानुमोदितम् श्रीमन्नामसहस्राध्यायं भगवद्गुणतत्त्वप्रतिपत्तयेव्याकुर्महे. १५

तत्र प्रागेव पौनःपुन्येन तत्र तत्र परतत्त्वपरेषु प्रदेशेष्वशेषार्थनिर्णयश्रवणात्तुष्टंमन्यतया स्वयमपृच्छते जनमेजयाय परमसौहार्दादन्यद्गुह्यतमं ग्राहयन् स्वयमेव ( वैशम्पायन उवाच )( श्रुत्वेत्यादि ) २०

पा०—१—यच—२ । खलमूक—१ । ३—आह्म—२—३ न । ४—ब्रह्म—१—न । ५—गुरूणांगुरु—२ । ६—श्रीमद्भगवन्नाम—२ । ७—पर—१—न । ८—णात् हृष्टंमन्य—२—३ ।

( धर्मान् )श्रुतिस्मृत्यादिचोदनालक्षणाभ्युदयनिःश्रेयसफलान् राजमोक्ष दानधर्मरूपेण बहून्.(अशेषेण) कात्स्न्र्येन,ये च यावन्तस्तावतश्चेत्यर्थः.
( पावनानि च ) तपस्तीर्थसेवादीनि शुद्धिकराणि च.
५ ( सर्वशः ) सर्वप्रकारं फलतोऽङ्गतस्स्वरूपतोऽधिकारतश्च( श्रुत्वा. )
( युधिष्ठिरः ) साक्षाद्धर्मसूनुः.
( शान्तनवं ) शन्तनोर्गङ्गायां जातत्वेनाभिजाततमम्.
( पुनरेवाभ्यभाषत) पुनश्च पप्रच्छ पुनः पृच्छा चभीष्मेणात्मनीनतया स्वीकृतमतम् ज्ञातुं ( को धर्मः सर्वधर्माणां भवतः परमो मतः ) इत्य-
१० नन्तरोक्तेः तच्च सदाचारप्रावण्यात्, सन्तो ह्याचार्यनिष्ठामन्विष्य तद्रु-चिपरिगृहीतमेवं तत्त्वं हितं च रोचयन्ते न तु प्रामाणिकत्वमात्रेण.१
तत्रेदमादावेवोदैरिराम प्रेक्षावद्भिः प्रमाणेन परिच्छिद्यानुकूलं प्रमेयमुपा-देयमिति तच्च द्वैधं वर्त्तते उपायोपेयात्मना उपेयं च प्रियप्रियतरप्रियतमरू-पेण त्रैधं उपायश्च हितहिततरहिततमरूपेण, तत्रोपेयस्य जन्मर्द्धिपरि-
१५ णामानित्यत्वादयः चेतनधर्माः क्लेशकर्मविपाकाशयाश्च दोषाः गुणाश्च दोषासंभेदरुचिरत्वस्थावरत्वभूयस्त्वविशिष्टास्संविदानंदैश्व-र्यविभूतिविशेषादयः उपायस्य तु व्ययायासभूयस्त्वव्यभिचारित्व फल्गुफलत्वादयो दोषाः गुणाश्च नियतनिरपायत्वघुतरबहुफलकत्वादयः एवंविधदोषहानगुणवत्त्वतारतम्येन उपायोपेययोः--

---

पा०--१-मिन्ना--२ । २-मित्येवतत्व--२ । ३-त्रिविधं--३ ।४-दयश्च१--२ ।

युधिष्ठिर उवाच ।

किमेकं दैवतं लोके किं वाप्येकं परायणम् ।

तरतमभावः उभयत्रापि संभवति उत्कृष्टतमे उत्कृष्टोत्कृष्टतरयोर्नि-कृष्टवद्वर्जनीयत्वमेव तत्र अनिष्टेभ्यःइष्टेभ्योऽपि निकृष्टेभ्यः निष्कृष्य उत्क- ५ ष्टतममुपादातुम् उपायोपेयौ सह तारतम्येन प्रष्टव्यौ तौ च विवक्षावशेन षो दा विभज्य पृच्छन् ( युधिष्ठिर उवाच ) (किमेकम्) इति श्लोकद्वयेन.

❀ परतत्त्वरूपोपेयप्रश्नः ❀

१–तत्रोपायस्योपेयार्थत्वात्, प्रधानभूतमुपेयं पृच्छन् तस्य च त-त्त्वशास्त्रेषु परतत्त्वपरमप्राप्यात्मना द्वेधोपदेशदर्शनात्, प्रथमं परतत्त्वरूपं १० पृच्छति ( किंमेकम् ) इति.

(लोके)इति प्रतिप्रश्नमनुषज्यते(भवतः परमो मतः) इति च सिंहा-वलोकनन्यायेन यथार्हं च विभक्तिविपरिणमनीया लोक्यते अनेनेति ( लोकः ) श्रुतिस्मृत्यादिशरीरं शास्त्रम्, (एकम्) प्रधानं समाधिकरहितं (परमं यो महत्तेजः ) (तस्य लोकप्रधानस्य) इति प्रतिवचनानुगुण्यात्. १५

नचायं स्वरूपमात्रपरः एकत्वसंख्यापरो वा (एक) शब्दः (दैवतम्) इति प्रातिपदिकैकवचनाभ्याम् सिद्धत्वात् तयोर्व्यावर्त्याभावाच,न हि किञ्चिद्दैवतमस्वरूपमनेकं वास्ति, येन कस्यचिदेवैकत्वं विशेषः तदनुगु-णप्रतिवचनाभावाच.

( दैवतम् ) द्योतनादिपरमैश्वर्यासाधारणगुणचिह्नितं तत्त्वशास्त्रेषु २० प्रतिपाद्यं भवतः किं परमं मतमित्यर्थः अयं च शास्त्रेषु समयेषु च सर्वाधिकं तत्त्वमभ्युपेयुषा–

पा०–१ तत्त्वात्मना फलशास्त्रेषु परमप्राप्यात्मना च । २–द्वैधो–२–४ । कं ३ दैवतमिति–२–३ । ४–ज्ञायते अनेनेति–२–३ ।

स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥

मपि मायाद्यौपाधिकविवर्तपरिणामविशेषनिर्वाह्यज्ञानशक्त्याद्यैश्वर्यत्व-
स्वाभाविकसर्वेश्वर्यत्वादौ सामान्यतो विशेषतश्च हरिहरहिरण्यगर्भादि-
५ तत्त्वपरावरभावेन विप्रतिपत्तिदर्शनेन सन्देहात् प्रश्नः.

❀ परमोपेयप्रश्नः ❀

२—फलशास्त्रेषु मोक्षे तावत् स्वरूपाऽविद्याविशेषवैशेषिकगुणोच्छेदपर-
मात्मसाधर्म्यतद्गुणसंक्रान्तितच्छायापत्यानन्दादिस्वरूपाविर्भावमात्रत-
त्कैङ्कर्याविर्भावादिलक्षणविप्रतिपत्तिदर्शनात् संदिहानः परममुपेयं पृ-
१० च्छति ( किं वाप्येकं परायणम् ) इति.

( दैवतं )( परायणम् ) इत्यादि किमन्यदन्यदुपदिश्यते उत तत्तदवस्था-
मात्रभेदेनैकमेवेति विवेक्तुं(वाऽपि)इति निपातद्वयम्(एकम्)इति पूर्ववत्.
( परं ) निर्दोषनिरतिशयमङ्गलस्वभावतयोत्कृष्टतमम्.
( अयनं ) प्राप्यम् ऐहिकामुष्मिकेषु पुरुषाभिलषणीयेषु कः परमपु-
१५ रुषार्थो भवतोऽभिमत इति एवम् उपेयं द्विधा पृष्टम्.

❀ लघूपायसाध्यसिद्धोपायप्रश्नः ❀

३—अथोपायः तत्तच्छास्त्रेषु कर्मज्ञानभक्तियोगानां विकल्पसमुच्चया-
ङ्गाङ्गिभावादिविवादात् संशयानेन प्रष्टव्यः स च सिद्धस्साध्यस्सालम्ब-
नरूपश्च निद्धस्त्वाराध्यमानतया फलप्रदा देवता तां च लघ्वलघूपायसा-
२० ध्यतया द्वेधा विभज्य पृच्छति ( स्तुवन्तः कम् ) इत्यर्धेन.
( कं स्तुवन्तः ) गुणसंकीर्तनमात्रेणाराधयन्तः.

पाठान्तरं—१ मायाद्यपाधिक—२—३ । २—शक्तिवदैश्वर्य—२—३ । ३—सच
तत्र २।४ —स्तुध्यायमानतया २—३ ।

**को धर्मः सर्वधर्माणां भवतः परमो मतः ।**
**किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥**

---

### ❋अलघूपायसाध्यसिद्धोपायप्रश्नः❋

४–( कमर्चन्तः ) उपासनरूपया भक्त्या परमं पूजनं कुर्वन्तः. ५

( मानवाः ) मनुष्यत्वमात्रपरिकराः.

( शुभं ) द्विविधम् अभ्युदयनिःश्रेयसरूपम्.

( प्राप्नुयुः )

### ❋परमसाध्योपायप्रश्नः❋

५–अथ साध्यः वाङ्मनःकायनिष्पाद्यजपध्यानार्चनप्रभृतिर्देवतो- १० वर्जनात्मको धर्मः तत्र परमं पृच्छति (को धर्म) इति. उक्तलक्षणानां ( सर्वधर्माणां ) मध्ये ( परमः ) निस्तुल्याधिकः,

( को ) ( भवतः ) अभिमतः सुनिश्चित्यापद्धनवत् स्वीकृतः.

### ❋वाचिकजपालम्बनप्रश्नः❋

६–अथ सालम्बनेषु स्तोत्रमन्त्रशुभाश्रयगन्धपुष्पाद्युपकरणेषु १५ वाचिकजपालम्बनं पृच्छति ( किं जपन् ) इति.

नियमविशेषवन्मन्त्राद्यावर्त्तनं जपः " जप्येनैव तु संसिध्येत् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" [ मनुस्मृतिः अध्यायः२ श्लोकः८७ ] "द्रव्ययज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः" [ मनुस्मृतिः अध्यायः २ श्लोकः८६ ] "यज्ञानां २० जपयज्ञोस्मि" [ गीता अध्यायः १० श्लोकः २५ ] इति जपश्रेष्ठ्यान्मानसकायिकविषयौ न पृच्छ्येते ( जन्तुः ) जननधर्मा.

( जन्मसंसारबन्धनात् ) ( जन्म ) इति जरामरणगर्भनिरययातनादिः संसारस्य कार्यवर्गः प्रदर्श्यते.

( संसार ) इति च अविद्याकर्मवासनारुचिप्रकृतिबन्धरूपः २५

---

पा०–१ सच वाङ्मनः २–३ । २–तायजनात्म–२ । ३–संबन्ध–२–३ ।

भीष्म उवाच ।

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥

५ कारणवर्गः ताभ्यां ( बन्धनं ) परमपदप्राप्तिप्रतिबन्धः तस्मात् (मुच्यते) इदं च सर्वफलोपलक्षणं जपादेः सकलफलसाधनत्वस्य वक्ष्यमाणत्वात् तत्र (अशेषेण ) (सर्वशः) इत्युपक्रमेण (लोके मानवाः शुभम् ) इत्यादिविशेषणैश्च कालाधिकार्यङ्गफलप्रकारविशेषा अपि प्रकृष्टाः प्रष्टव्यतया सूचिताः ३

१० इमाम् षट्प्रश्नीम् प्रति ब्रुवाणो ( भीष्म उवाच ) अत्र प्रायेण व्युत्क्रमेण प्रतिवचनं क्रमिकोपनिबन्धनं च प्रतिवचनं वक्ष्यते.

## ❀ साध्येषु जपालम्बनप्रतिवचनम् ❀

६—तत्रोपायद्वारकत्वादुपेयस्य प्रथमं तं प्रतिविवक्षन् आनन्तर्यात् तत्रैवादरातिशयाच्च जपालम्बनं प्रतिवक्ति.

१५ (जगत्प्रभुम्) इति जगतो जङ्गमाजङ्गमस्य ( प्रभुं ) स्वामिनं यथा मनुष्येभ्यो देवाः ऐश्वर्यपरिचर्याभ्यामधिकाः एवमेतेषामपीति ( देवदेवम्)
( अनन्तं ) सर्वतोऽनवच्छेद्यवैभवम्
( पुरुषोत्तमं ) परमोदारम्
( नामसहस्रेण ) जपालम्बनीकृतेन.

२० ( स्तुवन् ) स्तुवन्निति "लक्षणहेत्वोः०" [अष्टा०—३—२—१२६] इति हेतौ शतृप्रत्ययः (सर्वदुःखातिगो भवेत्) इत्यनेन सम्बन्धः स्तवनं सर्वदुःखनिवर्तकमित्यर्थः क एवं स्यात् ( पुरुषः ) चेतनः. कथंभूतः (सततोत्थितः) निरन्तरमुद्युञ्जानः भगवत्स्तुतिचिन्ताव्यविच्छेदस्य परमप्रियहितत्वात् तद्विच्छेदस्य वैशसत्वाच्च श्रूयते हि

२५ "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये—

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ॥
ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ९ ॥

निरुक्तेऽनिलयने अभयं प्रतिष्ठां विन्दते । अथ सोभयङ्गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" । ५
[ तैत्तरीय उपनिषत् १—७ ] इत्यादि उपबृंह्यते च "यन्मुहूर्तं क्षणं वापिवासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया" ॥ "वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः। न शौरिचिन्ताविमुखजनसंवासवैशसम्" ॥ "एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्" ॥ इतिच एवं साध्येषु जपस्यालम्बनमुक्तम् ४ १०

## ❋ जपालम्बनविषयस्यैवार्च्यतमत्वावधारणम् ❋

अर्चनस्तवनयोरेव परमधर्मत्वेन विवक्षितत्वात् धर्मविषयं पञ्चमं प्रश्नमुल्लङ्घ्य प्रथममर्चनीयस्तोतव्यविषयौ चतुर्थतृतीयौ प्रतिवदन्नर्च्यतमं तावत् सार्चनाप्रकारामाह ( तमेव ) इति ( यजमान ) इत्यन्तेन.

उक्तजपालम्बनविषय एवार्च्यतमोपीत्यवधारयति (तमेव च) इति यथाहुः "तमिमं सर्वसम्पन्नमाचार्यं पितरं गुरुम् । अर्च्यमर्चितुमिच्छामः सर्वे संमन्तुमर्हथ" [ भारते सभापर्व० अध्यायः ३८ श्लोकः २१ ] "तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात्"। "ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम्" ॥ [भारते मोक्षपर्व० अध्यायः ३४२ श्लोकः ३६] इत्यादि "अन्तवत्तु फलं तेषां" [ गीता—अध्यायः ७ श्लोकः २३ ] इति च. १५ २०

( पुरुषं ) पुण्डरीकाक्षम् ( अव्ययं ) सदानुभवेप्यनुरूपाक्षयोत्तरोत्तरगुणसंस्तवम्,

पा०—१राहितजन ।

( अर्चयन् ) तत्परिचरणरूपं भक्तियोगम् उपाददानः अधिकारी (नि-रयं ) " मच्चित्ता मद्गतप्राणाः " [गीता–अध्यायः १० श्लोकः ९] इति प्रक्रियया अन्यथा क्षणमपि स्थातुमशक्नुवन्.

५ कथमर्चयन् ( भक्त्या ) स्वामिनि दासस्यानुरागमयी स्थितिर्भक्तिः तया इत्थंभूतः.

पुनश्च कथं ( ध्यायन् ) मानसमविच्छिन्नामृतधाराकारं निःशेषसं-सारतापत्रयनिर्वापणं भगवद्गुणचिन्तनं कुर्वन्.

पुनश्च कथं ( स्तुवन् ) वाचिकं च तादृशं तदनुभवजन्यहर्षप्रकर्ष-
१० पुलकितशरीरं बाष्पगद्गदकण्ठं तद्गुणसङ्कीर्तनं समीहमानः.

पुनश्च कथं ( नमस्यन् ) अत्यन्त प्रह्वीभवन् भक्तिपराधीनतया बा-ह्यान्तरसकलकरणैर्निर्ममत्वावनम्रैरात्मीयैः शरीरेण वचसा च सह सर्वं मदीयं त्वदीयं त्वमेव गृहाणेति भगवत्पादपद्मयोरात्मानमहंमानमलीमसं समर्पयन्नित्यर्थः.

१५ पुनश्च कथं ( यजमानः ) देवपूजनमाचरन् स्वविषयीकारमहोपका-रानुरूपप्रत्युपकारादर्शनभुवा संभ्रमेणाकृत्रिमभक्त्युपहृतप्रयतमनोहरा-र्घ्यपुष्पमधुपर्कप्रभृत्यौपचारिकसांस्पर्शिकाभ्यवहारिकरूपभोगानुरूपभो-गानुपूर्व्या देवसमाराधनमसाधारणमत्यन्तमादरेण कुर्वाण इत्यर्थः एवं भूतः ( सर्वदुःखातिगो भवेत् ) इति.

२० अयमेव भक्तियोगो मुक्तिमहापथस्य्यन्तेषु चिन्त्यमानः प्रत्यभिज्ञाय-ते तथाहि वर्णाश्रमधर्मैराराद्रुपकारकैः–

---

पा०–१–मर्च्छर्वाह्यान्तःकरणैः–ङ । २–मत्यादरेणैः–ङ ।

शमदमादिभिरात्मगुणैस्सन्निपत्योपकारकैश्चाङ्गजातैरभिनिष्पाद्यं वेदनध्यानध्रुवानुस्मृतिविवेकजादिपदपर्यायगोचरान्तरप्रतीतिसन्ततिभिश्चित्तवृत्तिभिरव्यवहिताऽनवरतप्रवाहासकृदावृत्तसादरप्रत्ययसंस्कारप्रचयघटितपटुतरप्रत्यक्षशिरस्कं तत्तत्सदानन्दपुरुषोपकोसलादिसंज्ञकपरविद्याव्यवस्थितगुणोपसंहारमर्यादं ब्रह्मोपासनं भगवान् बादरायणः "तमेवं विद्वान्" [ तै० पु० २० ] "ब्रह्मविदाप्नोति परं" [ तै० आ०–२–१–१ ] "यज्ञेन दानेन तपसाऽनाशकेन" [ बृ०उ०–६–४–२२ ] "शान्तो दान्तः" [ बृ०उ० ६–४–२३ ]इत्यादिश्रुत्यन्तवचनानि, "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" [ ब्र०सू० ३–४–२६ ] "शमदमाद्युपेतः स्यात्"[ ब्र०सू० ३–४–२७ ] "आवृत्तिरसकृदुपदेशात्" [ ब्र०सू ० ४ –१ –१ ] इत्येवंप्रकारब्रह्मसूत्रन्यायैर्मथित्वा मोक्षसाधनं निरणैषीत्.

वाक्यकारश्च "वेदनमुपासनम् स्यात्तद्विषये श्रवणात्" इति इदमेवोपासनं विपक्त्रिमं भक्तिरित्युच्यते नान्यत् कुतः संयोगरूपचोदनाख्याविशेषात् ज्ञाप्यते ह्युपासनस्यैव भक्तेरपि मोक्षलक्षणेन फलेन संयोगः यथा "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" [ तै० ना० १–१० ] इति हृदिति भक्तिः श्रुत्यन्तरेण स्मृतिभिश्च "न संदृशे तिष्ठतीत्युपक्रम्य, भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह" [ भारते मोक्षपर्व० ] इति हृच्छब्दस्थाने भक्तिपदप्रयोगात् यथा च "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" [ गीता–अध्यायः ८ श्लोकः २२ ] "भक्त्या त्वनन्यया शक्यः" [ गीता–अध्यायः ११ श्लोकः ५४ ]

पा० १–शमादिभिः–२ ।

"भक्त्या मामभिजानाति" [ गीता–अध्याय :१८ श्लोकः५५ ]
" भक्त्याऽविच्छिन्नया मुक्तिः " [ इत्याङ्गिरसस्मृतौ ]वैष्णवे
धर्मे "परमात्मनि गोविन्दे भक्तिरव्यभिचारिणी । प्रयच्छति नृणां
५ मुक्तिं मा ते भूदत्र संशयः" ॥ "ये त्वां देवं ध्रुवं भक्ताः
पुराणं पुरुषोत्तमम् । प्राप्नुवन्ति सदा कामानिह लोके परत्र
च ॥ अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः "
इति श्रीमति रामायणे । श्रीवामने " येषां विष्णुः प्रियो नित्यं
ये विष्णोः सततं प्रियाः । न ते पुनः संभवन्ति तद्भक्तास्तत्पराय-
१० णाः " इति रूपं चोभयत्र पुण्डरीकाक्षं ब्रह्मैव चोदना
चोपास्व भजस्वेति उपास्ति भजती हि सेवाविशेषविषयौ अत एव नै-
घण्टुकाः "सेवाभक्तिरुपास्ति" इति । लैङ्गमार्कण्डेययोः "भज इत्येष
धातुर्वै सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन
भूयसी" [ लैङ्गे २ भागे अध्यायः ९ श्लोकः १९ ] इति
१५ उपास्यस्य भगवतो निरवद्यमहागुणत्वान्निस्सीमप्रीतिरूपं निर्व्याजरवा-
म्यात् दास्यैकरुचिगर्भं चेदमेवोपासनं विविच्यत इति भक्तित्वव्यपदे-
शः एवंविधं प्रियत्वमाश्रित्य हि"प्रियो हि ज्ञानिनोत्यर्थम्"[ गीता–
अध्यायः७ श्लोकः १७ ] " भजतां प्रीतिपूर्वकम् " [ गीता अ-
ध्यायः १० श्लोकः१० ] तुष्यन्ति च रमन्ति च " [ गीता–अ-
२० ध्यायः १० श्लोकः ९ ] " नाथ योनिसहस्रेषु " [ विष्णुपुराणे
अंशः १ अध्यायः २० श्लोकः १८ ] " याप्रीतिरविवेकानां "
[ विष्णुपुराणे अंशः १ अध्यायः २० श्लोकः १९ ] इति श्लो-
कद्वयं " तत्स्मृत्याह्लादसंस्थितः " " तन्नामस्मरणोद्भूतपुलकादिति
पुङ्गव " इति श्रीविष्णुतत्त्वे " सेवाभक्तिस्समाख्याता ज्ञानवासनया–

---

पाठान्तरं–१–लैङ्गे मार्कण्डेये च–३ । २–यां या योनिं भजाम्यहं–या प्रीति
१ । ३–इत्यादि श्लोक–२ ।

कृता । उत्पन्नायां ततस्तस्यां स्नेहभावः स्वयं भवेत् " ॥ [ वि-
ष्णुतत्वे ] इति "परमात्मनि यो रक्तो विरक्तो परमात्मनि । सर्वेषणा-
विनिर्मुक्तस्सभैक्षं भोक्तुमर्हति " ॥ [ बार्हस्पत्यस्मृतौ ] इति" स
नो देवः शुभया स्मृत्या संयुनक्तु " [ तै०ना० ६-१०-१९ ] ५
इत्याद्युपासनविधिषु वचनानि प्रवृत्तानि.

दास्यैकरुचिगर्भज्ञापकानिच "मामनुस्मरन्" [ गीता-अध्यायः
८ श्लोकः १३ ] "पार्थानुचिन्तयन्" [ गीता-अध्यायः ८
श्लोकः ८] "कृष्णानुस्मरणंपरम्" इत्यादीनि अनुरित्ययं निहीनोर्थोहि
ज्ञाप्यते तज्ज्ञैः निहीनत्वं चास्य स्वाभाविकं दास्यं तदनुसन्धानगर्भ- १०
मुपासनमनुस्मरणम्, भक्तेश्चकीर्तनादिशरीरत्वं " सततं कीर्तयन्तः "
[ गीता-अध्यायः ९ श्लोकः १४ ] " मन्मना भव " [ गीता--
अध्यायः ९ श्लोकः ३४ ] इत्यादौव्यक्तम्.

अस्या एवसकलशास्त्रार्थसारत्वेन परमगुह्यतमत्वञ्च " इदन्तु ते
गुह्यतमम्" [ गीता--अध्यायः ९ श्लोकः १ ] "यज्ज्ञात्वा नेहभू- १५
योऽन्यत् " [गीता-अध्यायः ७ श्लोकः २] " सर्वगुह्यतमं भूयः "
[गीता-अध्यायः १८ श्लोकः ६४] इत्यादौ दर्शितम् अलं प्रसज्य.५

## ❀उपायशून्यानां ध्यानादिलघूपायप्रदर्शनम्❀

हन्त! इयं भक्तिः " बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते "
[ गीता-अध्यायः ७ श्लोकः १९ ] " जन्मान्तरसहस्रेषु " [ वि-२०
ष्णुधर्मे-६९अध्यायः]इत्यादिप्रकारेण बहुतरजन्मार्जितसुकृतपरि
पक्वकषायाणाम् [ पातञ्जलसूत्रम्-१-१४ ] दीर्घकालनैर-
न्तर्यसेविनादृढभूमिर्भवतीति.

शास्त्रीयसर्वोपायदरिद्राणां प्राणिनां का गतिरिति भयमपनेतुं
लघूपायं दर्शयन् (स्तुवन्तः कम्) इति तृतीयं प्रश्नं प्रतिवक्ति २५
(तमेव) इत्यादि (सर्वभूतभवोद्भवम्) इत्यन्तेन.

---

पा०-१-ममानुस्मरणम् । २ निहीनतार्थो ।

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥६॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
५ लोकनाथं महद्भूतम्—

---

अस्यैव सर्वतोमुखं स्तुतियोग्यत्वमभिप्रयंस्तदपेक्षयाऽऽपेक्षिकक्षुद्रदेवतान्तरादिव्यावर्तकैः अनादिनिधनत्वादिभिर्दशभिर्विशिनष्टि.

(अनादिनिधनं) तस्मादकालोपाधिकमुपकारिणम् (विष्णुम्) अदेशोपाधिकम् ( सर्वलोकमहेश्वरम् ) स्तोतृमनोरथपूरणपर्याप्तमहाविभूतिकम्,
१० ( लोकाध्यक्षम् ) तदुचितनिरुपाधिकानुसन्धानम्.

( ब्रह्मण्यं ) ब्रह्मणेऽनन्तशाखाय वेदाय प्रतिपाद्यतया हितम् अतएवोद्घाटितस्तुतिविषयम्.

( सर्वधर्मज्ञम् ) अतएव स्वस्तुतिपरमधर्मज्ञम्.

( लोकानां कीर्तिवर्धनं ) सर्वलोकाश्रयिणांस्तोतृप्रभृतीनामात्मन इव
१५ " यं स्तुवन् स्तव्यतामेति " [विष्णुधर्मे अध्यायः ७५ ] इतिप्रकारेणाशेषलोकवेदप्रशस्यकीर्तिकारिणम्.

( लोकनाथं ) लोकानां स्वामिनम् , अतः स्तुत्यादिसर्वपरिचरणार्हम्,
(महद्भूतम् ) ऐश्वर्येण परममहत्त्वेन स्वरूपानुबन्धिना युक्तम्, अतोऽक्लेशेन स्तोत्रमात्रेण स्वाराध्यम्; महान्तो हि स्वानुग्रहसंवादसूचनमात्रेण हृष्टाः
२० न बहु वाञ्छन्ति, यथोद्योगे "अन्यत्पूर्णादपाङ्कुम्भादन्यत्पादावनेजनात् अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः" ॥ [भारते उद्योगपर्व० अध्यायः ८९ ] इति.

---

पा०—१—सर्वस्तुति ।२ ऐश्वर्येण । ३ अतोऽक्लेशस्तोत्र । ४ स्वाराधनम् स्वाराधम्

सर्वभूतभवोद्भवम् ॥ ७ ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।

(सर्वभूतभवोद्भवम्) असद्व्यावृत्तानां सत्ताहेतुम्; अतोऽवर्जनीयत्वात्तेषामवश्यमनुग्रहीतारम्. ५

एवंभूतम् ( स्तुवन् ) परिपूर्णभक्तियोगासंभवेऽपि यथातथा वापि गुणसङ्कीर्तनं कुर्वन्.

( सर्वदुःखातिगो भवेत् ) तापत्रयदवदहनमतीत्य निरतिशयानन्दशीतलह्रदं भगवन्तं गच्छेत्.

अस्य च युक्तं लघुतरस्तुतिमात्रविषयत्वम् (ध्यायन्स्तुवन् नमस्यन्) १० इत्यनन्तरोक्तध्यानादिसहचरगुरुतरस्तवनवैलक्षण्यप्रतीतेः, अन्यथा पुनरुक्तिप्रसङ्गात् ( स्तुवन्तः कम्) इति स्वतन्त्रप्रश्नान्तरप्रयुक्तत्वात् अनेकशास्त्रान्तरसङ्गतत्वाच्चावगम्यते. ७

❋ स्मरणकीर्तनप्रणामादिभ्यः परिचरणोत्कर्षः ❋

( को धर्म ) इति पञ्चमं प्रश्नं परिहरति ( एष मे ) इति. १५

(एषः) अनन्तरोक्तो भगवदर्चनस्तवनादिरूपो यथाधिकारं गुरुलघुभावेन व्यवस्थितः.

( सर्वधर्माणां ) मध्ये ( अधिकतमो मतः ).

धर्मा ह्यैहिकाःपशुपुत्राद्यर्थाः, आमुष्मिकाः स्वर्गाद्यर्थाः, असङ्गैर्भगवदाराधनबोधानुष्ठितेष्टापूर्तपरिकर्मिततत्त्वज्ञानसमाधिशरीरो मोक्षार्थः २० सानुरागभगवत्स्मरणकीर्तनप्रणामादिस्तदसाधारणपरिचरणात्मा चेति चतुर्विधाः, तत्र (अधिकतमः) इति तमपा त्रिभ्यश्चतुर्थमुत्कर्षयति.

पा०—१-अस्यचोक्तलघु । अस्यचोत्तमलघु । २ शास्त्रार्थसङ्ग । ३ धर्म्मो । ४ यर्थ, ।

यद्भक्त्या पुण्डरीकाक्षं स्तवैः-

तदुपपादयति (यद्भक्त्या) इति, यस्मात् भक्त्यादिगुणवान् तस्मादधिकतम इति. भक्त्येत्यनुष्ठानसमयेऽपि प्रीतिगर्भत्वेन सुखोपादानत्वपरम्
५ गीतंहि " सुसुखं कर्तुम् " [गीता-अध्यायः ९ श्लोकः२ ] इति. युक्तंचैतत् प्रियतमपतिस्मरणं प्रियंकरमिति, अनेनास्वामिषु देवतान्तरेषु कषायपानवद्विरसत्वेपि हितबुद्ध्या अनुष्ठीयमानेभ्यो व्यावृत्तिः क्रियते.

(पुण्डरीकाक्षम्) इति विषयाभिरूप्येण विकृतभयङ्करतत्वान्तरभज-
१० नेभ्यो व्यावृत्तिः.

(स्तवैः) इति वाङ्मात्रसाध्यत्वेन विश्वजिच्चान्द्रायणादिभ्यो व्ययायासबहुलेभ्यो व्यावृत्तिः, तथाहि भगवान् व्यासः " आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति " ॥ इति, श्रीविष्णुपुराणे
१५ "अवशेनापि यन्नाम्नि" [ वैष्णवेपुराणे ] इत्यादि, वैष्णवे धर्मे "अज्ञानतो ज्ञानतो वा वासुदेवस्य कीर्तनात्। तत्सर्वं विलयं याति तोयस्थं लवणं यथा" [ विष्णुधर्मे ] " शमायालंजलं वह्नेस्तमसो भास्करोदयः। शान्तिःकलेरघौघस्य नामसङ्कीर्तनं हरेः " [ विष्णुधर्मे अध्यायः ६६ श्लोकः ७० ] "यन्नामसंकीर्तनतो विमुच्यते"
२० [ विष्णुधर्मे अध्यायः ४३ ] " यन्नामसंकीर्तनतो महाभयात् विमोक्षमाप्नोति " [ विष्णुधर्मे अध्यायः ४३ श्लोकः २५] सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति " [ विष्णुधर्मे-अध्यायः ७० ] "यस्य नाम्नि स्मृते मर्त्यः समुत्क्रान्तेरनन्तरम्। प्राप्नोति वैष्णवं स्थानं पुनरावृत्तिवर्जितम्"
२५ [विष्णुधर्मे] "अच्युतानन्त गोविन्द नामोच्चारणभेषजात्। नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम्" [विष्णुधर्मे अध्यायः २९] इत्यादि.

पा०-१-एवेन । २ शान्त्यैकले ।

अर्चेन्नरः—

अन्यत्र च, "सङ्कीर्तयेज्जगन्नाथं वेदं वापि समीरयेत्" इति च; वैष्णवेसूक्ते "आस्यजानन्तो नामचिद्विवक्तन, ध्रुवासो अस्य कीरयो जनासः" [ विष्णुसूक्ते ] "अस्य कीरयः" कीर्तयितारः, "ध्रुवासः" अपुनरावर्तिनो भवन्ति "अर्चेत्" इति अस्य धर्मस्य पुरुषविशेषसमाराधनरूपतामनतिपरोक्षां हि सूचयति गीतं च प्रत्यक्षावगमम्" [ गीता—अध्यायः ९. श्लोकः २ ) ५

## ❀ अर्चनादेः सर्ववर्णाधिकारता ❀

इति नह्यस्य. तपस्तीर्थादिवत् पुरुषप्रीणनत्वं शास्त्रास्तिक्यैकसाध्यम् (नर) इति प्रायेण सर्वचेतनानां यथासंभवमधिकारं सूचयति एकवचनं च महायागादिवहुसहकारिनैरपेक्षपरम् निन्द्यगुणवृत्तजन्मनामपि भक्त्यभिरुचिमात्रमहागुणेनाकुतोभयं भजनीयो हि भगवान्.। १०

अथ क्षिप्रमेव भागीरथीप्रवाहेनेव निर्णिक्तकल्मषरुचिः परमधार्मिको भवतीति गीर्यते गुणविषये तावत् "समोहंसर्वभूतेषु" [ गीता—अध्यायः ९ श्लोकः २९ ] वृत्तविषयेषु च "अपि चेत्सुदुराचारः" [ गीता—अध्यायः ९ श्लोकः ३० ] जन्मविषयेपि "मां हि पार्थ व्यपाश्रित्य येपि स्युः पापयोनयः" [ गीता—अध्यायः ९ श्लोकः ३२ ] इत्यादि. १५ २०

नचैतावतादुराचारादेर्धर्मत्वम् "नाविरतोदुश्चरितान्नाशान्तो नासमाहितः" [कठोप०२—२४] "अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृणाम्" इत्येवंप्रकारवचनेभ्यः तस्य भगवदनिष्टत्वेनाधर्मत्वावगमात् अतएवानन्तरमाह "क्षिप्रं भवति धर्मात्मा" [ गीता—अध्यायः ९ श्लोकः ३१ ] इतिसर्वाश्रमिणामनाश्रमिणश्च विदुरादेः "शमदमाद्युपे- २५

पाठान्तरम् १—ऋत्विगादि । २ जन्मादीनामपि । ३ निःशेषनिर्णिक्त । ४ गीयतेहि । ५ दुश्चरितादेः । ६ इत्याद्येवम् ।

तस्स्यात्" [ ब्रह्मसूत्रम् ३–४–२७ ] "अन्तराचापि तु तद्दृष्टेः" [ ब्रह्मसू० ३–४–३६ ] इत्यादीनि ब्रह्मसूत्राण्यधिकारनिरूपणपरत्वे. युक्तश्चैषः सर्वावस्थेनापि पुरुषेण मातुरिव पुत्रेण परमवत्सलस्य सर्व-
५ बन्धोर्निसर्गसुहृदश्च भगवतो नामग्रहणादावप्रतिषेधः दृष्टश्च गजेन्द्रगृध्र-राजवायसरावणावरजकौसलनागरजानपदवल्लवीमालाकारप्रमुखेषु. अपशूद्राधिकरणे त्वत्रैवर्णिकानामनग्निविद्यत्वादग्निविद्याङ्गेषु गुरूपसदनाद्यौपनिषदसंस्काराभावेन वेदान्तवेद्यपरविद्योपार्जने च अनुपायत्वादनधिकारो राद्धान्तितः तदीया भगवत्समाश्रयणाधिकारव्यव-
१० स्था त्रैवर्णिकानां समुद्रिक्तसत्वतया मुमुक्षूणामविप्रतिपत्तिः श्रवण-मननाद्यौपनिषद्ब्रह्मविद्यामहापथेन प्रसिद्धोधिकारः तेष्वेव रजस्तमः-संभेदसितासितसत्वतया फलकामतया विप्रलब्धानां तादृशो यथा-योगमुपासनेषु स्त्रीशूद्रतिरश्चाञ्च प्राचीनभवपरंपराप्रचितसंस्कारपटिम्ना सुप्तप्रबुद्धन्यायेन प्रत्युत्पन्नज्ञानानां विदुरधर्मव्याधप्रभृतीनां प्रारब्ध-
१५ कर्मानुशयलेशानृण्यानुज्ञातजुगुप्सितजातिसंसर्गाणामपि तत्तज्जात्यप्र-तिषिद्धसामान्यधर्माङ्गकेषूपासनेषु दुर्वारोधिकारः अनुत्पाद्यविद्यत्वात्. न्यदर्शि च भगवता शौनकेन "धर्मव्याधादयोप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्ताःसंसिद्धिं श्रमणी यथा" [ विष्णुधर्मे अध्यायः १०० ] इति.

२० अनुत्पन्नज्ञानानामपि क्रमभाविन्या मुख्यभक्तेरुपक्रमभूतस्मरणसङ्कीर्तनश्रवणादिरप्रतिषिद्धःधर्मस्मर्तारोपि हि अहिंसासत्यशौचपरोपकार-मातापितृशुश्रूषणश्रेष्ठदैवतानुकूल्यादिकंसामान्यधर्ममाचण्डालमनुम-न्यन्ते.

सदा ॥ ८ ॥

स्वयं सङ्कीर्तननिषेधेपि कीर्तयितृपुरुषानुवर्तनानुमोदनमर्पणाविरोधमात्रेण सुदूरेपि सम्बन्धसम्भवः, स्मर्यते हि, "धर्मश्श्रुतो वा दृष्टो वा कथितो वा कृतोपि वा । अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा" ५ [ तालपुटे भारते आश्वमेधिकपर्व० अध्यायः ९४ श्लोकः २९ ] इति "प्रयोजयितानुमन्ता कर्ता" । इति च विशेषतो भगवद्धर्मस्य स्पर्शवेधित्वम्" उद्घोषितः पूजितो वा दृष्टो वा नमितोपि वा । प्रसह्य हरते पापं को न सेवेद्धरिं ततः " " कीर्तितः संस्मृतो ध्यातः पूजितः संस्कृतस्तथा । ऐहिकामुष्मिकीं रक्षां करोति १० भगवान् हरिः " " शृण्वन्ति ये वै पठतस्तथान्येपश्यन्ति ये मामीरयन्ति" [ विष्णुधर्मे अध्यायः ९४ ] इत्यादि. अपि च इतिहासपुराणादिषु श्वपाकादेरपि भगवद्भजनानुमतिः, वैष्णवे धर्मे " नम इत्येव यो ब्रूयात् मद्भक्तः श्रद्धयान्वितः । तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद " [ विष्णुधर्मे अध्यायः ७० ] इत्यादि १५ वचनानि तद्बहुमन्तव्यत्वनिःश्रेयसप्राप्त्यादिवृत्तान्ताश्च सालम्बनाः एवं न किंचिदपि शास्त्रं कुप्येत् व्यवस्थितविषयत्वात्.

## ❋ध्यानार्चनादेः कालदेशाधिकारिनियमानपेक्षत्वम्❋

(सदा) इति कालविशेषानपेक्षत्वं देशशौचादिविशेषानपेक्षाया अपि प्रदर्शनमेतत् तेन अयनर्तुमासपक्षनक्षत्रमुहूर्तविशेषसव्यपेक्षेभ्यः प्रकर्षः. २०

अत्र च, "चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्तने तस्य पवित्रं भगवान् हरिः"॥[ विष्णुधर्मे ] "मातर्देवेति कृष्णेति गोविन्देति च जल्पताम् । मध्यान्हे चापराण्हे च योवसादः स उच्यताम् " [ विष्णुधर्मे अध्यायः ८९ श्लोकः ७७ ] २५ इत्येतानि ऋषिवचनानि द्रष्टव्यानि नहि भगवतः प्रयताप्रयताधिकारिसंसर्गादुपघातः तच्छौचादिसहकारिविरहात् तदनुग्रहासामर्थ्यं वा प्रत्युतस्वसम्बन्धायोग्यमपि–

पुनानः स्वोचितं विधाय स्वीकरोति परमपावनत्वात् अतोहीदमुदीर्यते " नाशौचं कीर्तने " [ विष्णुधर्मे ] इत्यादि.

सदसदधिकारितारतम्यशास्त्राणि तु " उच्चावचानामधिकारिणां परस्पर-
५ सङ्करेण धर्मसंप्लवो मा प्रसाङ्क्षीत् " इति,

स्वरूपतोल्पीयानपि सङ्कीर्तनादिः फलतो महीयान् यदाह " स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् " [ गीता—अध्यायः २ श्लोकः ४० ] इति न चास्य धर्मान्तरवदभिक्रमनाशः " नेहाभिक्रमनाशोस्ति " [ गीता—अध्यायः २ श्लोकः ४० ] इति वचनात् " न
१० मेभक्तः प्रणश्यति " [गीता—अध्यायः ९ श्लोकः ३१] " यंप्रणम्य न सीदति " [ विष्णुधर्मे अध्यायः ९७ ] " न वासुदेवं प्रणिपत्य सीदति " [ विष्णुधर्मे अध्यायः ७० ] " जनार्दनं प्रणिपतितो नसीदति " न चायथाविध्यनुष्ठानात् प्रबलप्रतिपक्षाद्वा प्रत्यवायः " प्रत्यवायो न विद्यते " [ गीताअध्यायः २ श्लोकः
१५ ४० इति. ]

नचैतेषामर्थवादत्वं शक्यशङ्कम् अनतिवादित्वात्.

इह भगवत्तत्वज्ञानभक्तिप्रतिबन्धकपापनिर्हरणसत्वसमुद्धचादिक्रमेण तत्प्राप्त्युपक्रमउच्यते " बद्धः परिकरस्तेन मोक्षाय गमनं प्रति " । [विष्णुधर्मे अध्यायः ७० ] " यस्मिन् न्यस्तमतिर्न याति नरकं
२० स्वर्गोपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोपि लोकोल्पकः । मुक्तिं चेतसि यः स्थितोमलधियां पुंसां ददात्यव्ययः किंचित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते " ॥ इत्यादौ च नचैषः [ मीमांसा १—२—१८—विषयवाक्यम् ] पूर्णाहुतिन्यायस्याविषयः तस्यातिवादविषयत्वात् संकीर्तनादिप्रकरणेषु प्रायेण वाक्य-
२५ शेषस्तरप्रार्थनाद्यर्थवादलिङ्गादर्शनाच.

किञ्च प्रबलप्रमाणविरोधाभावे अर्थवादपदानामपि स्वतः प्रामाण्यतः स्वार्थपरित्यागश्च गार्हम्य अन्याय्यत्वात्.

## *गुरुतरतपःसमाधिसाध्यतत्त्वज्ञानस्य लघुतरवाङ्मात्रसाध्यता *

ननु गुरुदीर्घदुष्करतपस्समाधिविशेषरूपमहाधर्मसाध्यतत्त्वज्ञानोपक्रमस्य वाङ्मात्रसाध्यत्ववादोऽप्यतिवादः, गुरुशास्त्रवैय्यर्थ्यप्रसङ्गेन प्रमाणविरुद्धं च. ५

तदिदमविदितभगवत्प्रभावस्य च्छान्दसस्य पैशाचं लघीयोपि भगवत्सङ्कीर्तनं दुर्वहामपि धुरन्धारयत्येव. न गुरुशास्त्रानर्थक्यं तस्य समर्थाधिकारत्वात्, अस्य तु सत्यसति वा सामर्थ्ये भगवदसाधारणरुचिसमुचितभाग्यवदधिकारत्वाच गरीयसोपि भगवत्प्रसाद एव फलहेतुः, लघीयसि किं दण्डवारितः? यथा च गरीयसि प्रयोगवैपुल्याद्देवः प्रसीदति, तथा लघीयस्यपि भावशुद्धिविशेषात् प्रसीदेत्. १०

यथोक्तं, " सम्यग्व्यवसितो हि सः " [ गीता अध्यायः ९ श्लोकः ३० ] "पत्रं पुष्पं फलं तोयम्" [गी०अ०९श्लोकः २६] "यो न वित्तैर्न विन्नैर्न वासोभिर्न भूषणैः। तोष्यते हृदयेनैव करतमीशं न पूजयेत्" ॥ [ विष्णुधर्मे अ०८९ श्लोकः७० ] [व्यासस्मृतौ] १५

" दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वञ्चराचरम् " वैष्णवे धर्मे " पृथिवीं रत्नसम्पूर्णां यः कृष्णाय प्रयच्छति । तस्याप्यन्यमनस्कस्य सुलभो न जनार्दनः"॥[ विष्णुधर्मे अध्यायः ७४ ] इत्यादि. २०

भावभेद एव हि धर्माधर्मनिदानम्? न क्रियाविशेषः;यथा[श्रीविष्णुतत्त्वे]"भावशुद्धिर्मनुष्याणां प्रमाणं सर्ववस्तुषु । अन्यथा लिङ्ग्यते कान्ता स्नेहेन दुहितान्यथा"॥तथा"तपो न कल्कोध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः। प्रसह्य चित्ताहरणं न कल्कस्तान्येव भावोपहितानि कल्कः॥" [ भारते आ०अध्यायः१ श्लोकः२७९ ] २५

पा० ११ निवारितः ।

अन्यत्र "गङ्गादितीर्थेषु वसन्ति मत्स्या देवालये पक्षिसङ्घाश्च नित्यम् । भावोज्झितास्ते न फलं लभन्ते तीर्थानि पुण्यायतनाश्च मुख्याः"॥ इति.

५ उपपन्नञ्चैतत्, सर्वज्ञस्यावाप्तसमस्तकामस्यानपेक्षस्य भगवतो भावशुद्ध्याराध्यत्वं न द्रविणकणार्पणादिना, "याथातथ्येन पण्डितः" इति न्यायात् देशकालसहकार्यादिवैकल्येपि स्वल्पादपि समग्रादिव देवः प्रसीदेत्; तदुक्तम् "ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्" ॥ [वि० पु० अं० ६ अ०
१० २ श्लो० १७ ] इति; तथा "विनिन्दां प्रथमे पादे करिष्यन्ति हरेर्नराः । युगान्ते च हरेर्नाम नैव कश्चिद्ग्रहीष्यति ॥ धन्यास्ते पुरुषव्याघ्र भवाम्भोधावमायिनः । यत्नेनापि कलौ विष्णोर्नाम ग्रहीष्यन्त्यक्षयात्मनः" ॥ [ विष्णुधर्मे अ० १०८ ]

युज्यते चैतत्, सुशीलो हि नृपतिः पितराविव कृच्छ्रेषु किञ्चिन्मा-
१५ यवचमपि बहूपकारिणमिवानुगृह्णाति अत एव दैवपित्र्यप्रायश्चित्तादिषु देशकालोपपत्त्यादिवशेनातिनिम्नोन्नतानामपि प्रयोगाणां तुल्यकक्ष्यत्वेन विधिः, शिष्टैस्तथानुष्ठानं च अत एव यथा सर्वस्वसाध्यप्रयोगविस्तारस्य स्थाने स्वानुपपत्तिख्यापनमेव आपदि श्राद्धमत्याम्नानम् यथा वा" तत्तत्कर्मदौष्कर्ये तत्तन्मन्त्रजपः " इत्यादि.

२० तदेवं प्रियतमविषयतया सुखक्रियत्वात्, व्यायासरहिततया सुकरत्वात् अनन्यपरोक्षात्मनाथप्रीणनभावेनाकर्षकत्वात्, अतिलाघवेप्यतिगुरुदुर्वहभवभयोन्मूलनमहाफलत्वात्, अप्रत्यवायवत्त्वात् सुभिक्षाधिकारितया विश्वजनीनत्वात्—

पाठान्तरम्—१ पण्डितमिति । २ सौकर्यादि । ३ भावबोधाभिमानिनः । पापाम्भोधा० ।

## परमं यो महत्तेजः—

देशकालदशाविशेषादिविक्षेपवर्जनेन निर्व्याजत्वात्, विषयप्रभावेन निष्प्रत्यूहत्वाच्चेत्येवंप्रकारेभ्यो हेतुभ्यो भगवदसाधारणसङ्कीर्तनादिधर्मः अधिकतमः भीष्ममतः. अन्येषामपि परमर्षीणाम् " सर्वेषामपि ५ धर्माणामुत्तमो वैष्णवो विधिः " " रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत्" " गोविन्दभक्त्यभ्यधिकं श्रेयश्चान्यन्न विद्यते " इत्यादिरुदाहार्यः. ८

## ❀ भगवतः आदित्याद्यवभासकतेजोरूपता ❀

अथोपेयप्रश्नं प्रतिवदन् श्रीमन्नामसहस्रश्रवणाय धर्मराजो नियु- १० ज्यते (परमं यः) इतिचतुर्भिः तत्र प्रथमेन सार्धेन ( किं वाप्येकं परायणम् ) इति द्वितीयं प्रत्याह ( तेज ) आदिभिः नपुंसकलिङ्गैः ( यः ) इति समभिव्याहारेण लिङ्गवैरूप्यन्न शङ्क्यम् लिङ्गसंख्याभ्यां पूर्वविशेषितस्य पदस्य पदान्तरसमभिव्याहारात् तल्लिङ्गसंख्याविशेषेणाविशेष्यत्वाच्च विशेष्यस्य, " वेदाः प्रमाणम् " [ विष्णुधर्मे अध्यायः७६] १५ " तत्त्वन्नारायणः परः " [ तै०ना०६—११ ] इतिवत्.

सर्वथा स्पृहणीयतमत्वेन परमपुरुषार्थख्यापकानि परमतेजस्त्वादीनि षड्विशेषणानि (तेजः) स्वभावत एव भास्वरम्, अन्यावभासकञ्च "परं ज्योतिरुपसंपद्य " [ च्छा०उ०८—१२ ]" तस्यादित्यो भामुपयुज्य भाति "इति भास्वरत्वस्य निःसीमत्वं (महत्) इति( परमम् ) इति च २० समातिशाय्यसम्भवः एवमुत्तरत्रापि यथाविशेष्यम्.

पा० १ ण विशेषि ।

परमं यो महत्तपः ।
परमं यो महद्ब्रह्म–

ईष्टे सर्वस्येति( तपः ) यथा, "यो देवेभ्य आतपति " [ आर०३–
५ प्र० १२–अ० ] तमीश्वराणां परमं महेश्वरम् " [ श्वे०उ०
६ ] " एष सर्वेश्वरः " [ बृ०उ० ६–४–२२ ] इत्यादि.
अनवच्छिन्नकल्याणस्वरूपगुणत्वेन बृहत्वात्, सर्वशक्तित्वेन
सर्वबृंहणत्वाच्च ( ब्रह्म ). १

## ❋भगवत्सम्बन्धस्य चेतनाचेतनदोषनिवारकता❋

१० ( पवित्राणां ) मध्ये ( परमं ) ( महत् ) ( पवित्रम् )पवित्रं शुद्धिविशेष-
हेतुः शुद्धिश्च दोषविशेषनिर्मोकः दोषश्च रजस्तमःप्रायपरिणामभेदा-
स्पदत्वमचेतनस्य, चेतनस्य तु तत्परिरम्भसंभवः अविद्या भगवदपराध-
रागद्वेषादिः तं भगवानेव समूलकापं कषति तस्यैव सर्वथा तद्विरो-
धिस्वभावत्वात्.

१५ क्रोशन्ति च शास्त्राणि " एत ह वा वन तपति " [ तै०आन०९ ]
" तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते " [ छा०उ० ४–
१४–३ ] " यद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत " [ छा०उ०५–
२४–३ ] " तत्सुकृतदुष्कृते धूनुते " " तदा विद्वान् पुण्यपापे वि-
धूय " [ मुण्डकोप०३–१–३ ] " क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः
२० परमा मता " [ याज्ञ०स्मृ०प्रा०श्लो०३४ ] " ध्यायेन्नारायणं
देवं स्नानादिषु च कर्मसु । प्रायश्चित्तिर्हि सर्वस्य दुष्कृतस्येति वै
श्रुतिः " "यो मामजमनादिं च"[ गी०अध्यायः १० श्लोकः ३ ]
" पावनः सर्वलोकानां त्वमेव रघुनन्दन " [ रामायणे ] " प्रायश्चि-
त्तान्यशेषाणि"[ विष्णुपुराणे–अंशः २अध्यायः ६ श्लोकः२९]

पा० १ अविद्यादिदोषभग ।

इत्यादि प्रायश्चित्तप्रकरणम् कात्स्न्र्येन "यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्" ॥इति [ वि० पु० अं० ६ अ० ७ श्लोकः ७४ ]

## ❋ भगवत्सम्बन्धेनैव तीर्थादीनां पवित्रता ❋ ५

अन्यस्यापि तीर्थादेः पवित्रत्वं तत्संश्लेषायत्तन्दर्शयति ( परमं ) (महत्) इति विशेषणाभ्यां न खलु स्वभावमलिनानां चेतनानां तदुपहतानां देवादीनां स्वसदृशवस्त्वन्तरशोधकत्वं युक्तिमत् अत एव पराशरशौनकादिभिः शुभाश्रयप्रकरणादिषु तत्संशीलनं निषिध्यते" अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" । [ वि०पु०अं० ६ अ०७ १० श्लो० ७७ ] "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनिताः संसारवशवर्तिनः"। [ वि०ध०अ०७६ ] इत्यादिषु तत्र देवतानां पावनत्वं तदुपासनार्चनपादोदकसेवादिना प्रसिद्धम्; तीर्थायतनादेः तत्सामीप्यात्, यथा गङ्गायाः वैष्णवे "विष्णुवामपदाङ्गुष्ठविनिसृतस्य जलस्यैतन्माहात्म्यम्" [ वि० पु० अं० ४ अ० ४ १५ श्लो०३० ] इति, "विष्णोरायतनं ह्यापः स ह्यपां पतिरुच्यते" इति जन्मान्तस्य च कालस्य च तदवतारतद्दैवत्यतच्छयनोत्थानवत्त्वाद्द्वादशीजयन्तीश्रवणादिवत् तत्सम्बन्धात् आत्मगुणानां शमादीनां तज्ज्ञानानुगुण्यात् क्रियाणां च यज्ञदानतपःश्राद्धप्रभृतीनां तदाराधनत्वात् ब्राह्मणादिजातेः तत्परवेदाध्ययनादौ साक्षादधिकारात्. यथा "विष्णुं क्रान्तं २० वासुदेवं विजानन् विप्रो विप्रत्वमाप्नुयात् तत्त्वदर्शी" इति.

श्रुतिस्मृत्यादेः तत्परत्वात् तच्छासनत्वाच्च" नारायणपरा वेदाः" [ भाग० स्कन्ध० २ अ० ५ श्लो० १५ ] "श्रुतिस्मृती ममैवाज्ञे" इति. आरण्यके तीर्थयात्रायाम् "पुण्या द्वारवतीत्युपक्रम्य, आस्ते हरिरचिन्त्यात्मा–

परमं यः परायणम् ॥ ९ ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥
५ यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।

---

तत्रैव मधुसूदनः । तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम्" ॥ इति [ आरण्यके अध्यायः ८८श्लोकः २४ ] तत्सम्बन्धहेतुकं देशस्य पावनत्वमभिधाय "पवित्राणां हि गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योसौ" [ आरण्यके अध्यायः८८ श्लोकः २६ ]
१० इत्येवमेव स्पष्टं निगम्यते.

### ❀ भगवतः स्रगादिप्रत्यगात्मभ्यामभिलषणीयता ❀

सुरभिस्रगङ्गरागसुरसुन्दरीसुधारसादिभ्यो निरस्तसमस्तसंसारनिर्मलनिर्मर्यादस्वरससंविदानन्दसान्द्रात् प्रत्यगात्मनश्चात्यन्तमभिलषणीयत्वात् ( मङ्गलानां च मङ्गलम् ) अतः ( परमं यः परायणम् ) प्राप्यं
१५ प्रपञ्चयिष्यते चैतत्.

( यः ) एवं सः ( परमं ) ( परायणम् ) इति विधाय प्रतिवक्तव्ये (यः परायणम् ) इति सिद्धवदनुवादः शास्त्रप्रसिद्धयतिशयप्रदर्शनार्थः.

### ❀ ब्रह्मादीनामपि परब्रह्मनिमित्तकत्वोपपादनम् ❀

अथ (किमेकं दैवतम्) इति प्रथमं प्रश्नं प्रति ब्रूते ( दैवतम् )इति सा-
२० धेन स एव ( देवतानां ) विधिशिवशतमखादीनां महादैवतं तत्त्वम्,कुतः तेषामेव ( भूतानां ) सद्भावभाजां ( पिता ) यतस्तस्यार्वाचीनपितृभ्यो विशेषः(अव्ययः) इति नहि तेनसनातनेनपितृमन्तः कदाचिदनाथाः१० पितृत्वमुपपादयति ( यतः सर्वाणि ) इति ( यतः ) निमित्तकारणात् ( सर्वाणि ) द्रुहिणद्रुमावधीनि ( भूतानि भवन्ति )' जायन्ते यद्यपि
२५ महासर्गादुपरि अवान्तरसर्गे च ब्रह्मादिमुखेन सृजति, अथापि प्रथमसृष्टौ न तथेति सूचयति ( आदियुगागमे ) इति.

---

पा० १ विधया प्रति ।

**यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥**

## ❋ परब्रह्मणः उपादानसहकारिकारणत्वोपपादनम् ❋

उपादानकारणमपि तमेवाह अन्तिमे ( युगक्षये ) ( पुनः ) ( यस्मिन्नेव ) तानि ( प्रलयं यान्ति ) प्रलीयन्ते, लयः खलूपादाने एव कार्यस्य, यथोर्णनाभितन्त्वादेर्लालादौ. स्थितिप्रवृत्त्यादिहेतुत्वं सहकारिकारणत्वं च चकारेण द्योत्यते, एवंलक्षणकं हि परतत्त्वं श्रूयते, " यतो वा इमानि " [ तै०भृ०१ ] इत्यादौ सूत्र्यते च " जन्माद्यस्य यतः " [ ब्र०सू० १-१-१ ] इति अस्य चैव त्रिविधकारणत्वञ्च " ब्रह्मवनं ब्रह्मसवृक्ष आसीत् " [ २ अष्ट० ८ प्र० ७ अ० ] इत्युदाहृत्य " प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात् " [ ब्र०सू० १-४-२३ ] इत्यधिकरणे निरणायि.

एतेन " उपादानं तु भगवान् निमित्तं तु महेश्वरः " इति कारणभेदेनाभिमतमहेश्वरवादो न वैदिकः.

नच जगदुपादानत्वात् भगवति विकारादिदोषप्रसक्तिः, स्वशरीरतया परिगृहीतप्रकृत्याद्येकदेशद्वारकत्वं परिणामादेरूर्णनाभिदृष्टान्तावष्टम्भेनोपपादयन्ती तत्रभवती श्रुतिरेव पर्यहार्षीत्.

अत्रापि विधातव्ये ( यो देवतम् ) इत्यनुवादः शास्त्रप्रसिद्धिप्रदर्शनपरः तथाहि उपनिषदादिषु परतत्त्वस्य लक्षणतत्त्वस्थित्युपायनप्रतिपादनैदंपर्यपर्यवसायिषु सदसद्ब्रह्माक्षरादिपदैः निरुपपदैः परमाद्युपपदसनाथैश्च सामान्यवाचिभिः निर्दिश्यमानस्य विधिहरिशिवादिविशेषपर्यवसानाकाङ्क्षायां "नारायणः परं ब्रह्म, तत्त्वं नारायणः परः" [ तै०ना०११ ] " तद्विष्णोः परमं पदम् " [ कठोप०-३-९ ] "यस्मात्परं नापरमस्ति किञ्चित् " [ श्वे०उ०३ ]

तस्य—

" पुरुषान्न परं किञ्चित् " [ कठोप० ३—११ ] " मत्तः परतरं नान्यत् किञ्चित् " [ गी०अ० ७ श्लोकः ७ ] " उत्तमः पुरु-
५ षस्त्वन्यः "[ गी० अ०१५ श्लोकः १७ ]इत्यादिभिः कण्ठोक्तिभिः सृष्टिवाक्यगतिसामान्यात्, तत्त्वपरपुरुषसूक्तोत्तरनारायणप्रभृतिप्रबलप्रदेशान्तरतात्पर्यात्, सुबालमैत्रायणीयमहोपनिषच्छान्दोग्यतैत्तिरीयैतरेयकठवल्लीप्रभृतिबहूपनिषदुद्घोषेण सात्त्विकेतिहासपुराणप्राचुर्येण देवतापारमार्थ्यज्ञपराशरपाराशर्यप्राचेतसादिपरमर्षिमतैरस्यैव
१० वेदसिद्धान्तत्वे स्वपरमागमसंप्रतिपत्त्या रूपायुधवाहनचारित्रविशेषादिसामर्थ्यतश्च खलु भगवतो निरङ्कुशैश्वर्यं, तदितरनिकर्षश्च, बुद्धिमतां स्वध्यवसानम्. दहरवैश्वानराद्यधिकरणैः समन्वयाध्याय एव चैवमध्यवससुरस्मदाचार्या इति नातिविस्तृणीमहे.

तथाच सञ्चिक्षिपुर्यामुनाचार्याः, " त्वां शीलरूपचरितैः " [ स्तोत्र
१५ रत्ने—१५ ] इत्यादिना तातपादाश्च " तत्त्वार्थतत्परपरश्शतवेदवाक्यैः सामर्थ्यतः स्मृतिभिरप्यथ तादृशीभिः । त्वामेव तत्त्वपरसात्त्विकसत्पुराणैर्देवत्रयीमिरपि निश्चिनुमः परेशम् " [ वै०स्त० १५ ]
" रूपश्रिया परमया परमेण धाम्ना चिह्नैश्च कैश्चिदुचितैर्भवतश्चरित्रैः । चिह्नैरनिह्नवपदैरपरैश्च कैश्चिन्निश्चिन्वते त्वयि विपश्चित ईशितृत्वम्"॥
२०[ वै०स्त०२६ ] इति.

एवं सुनिर्णीतयोः मर्वपरयोः तत्त्वहितयोः सर्वयोग्यं हितविशेषमवधारयन् श्रोतॄन् निमन्त्रयते ( तस्य ) इति. ( तस्य ) यथोक्तमहामहिम्नः.

पा० १ भगवता । २. परतत्त्वयोः ।

लोकप्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम्॥ १२॥
यानि नामानि गौणानि विख्यातानि–

(लोकप्रधानस्य) अशेषशेषिणः (जगन्नाथस्य) सर्वनियन्तुः (विष्णोः) सम्बन्धिषु सत्स्वपि बहुषु तदावर्जनोपायान्तरेषु, (नामसहस्र)मेव सर्वं (पापभयापहम्) सर्वप्रकारं पापं तद्धेतुकं भयञ्च समूलघातं हन्यादित्याशंसनार्हं यत्तत् (मे) मत्तः मदर्थं वा (शृणु) स्वयमेव शृण्वतः पुनः श्रवणनिमन्त्रणम् (भूपते) इति सम्बोधनं च वक्तुः श्रोतृलाभमस्मिन् विषये श्लाघ्यं सूचयतः. १२　५　१०

अथ वक्तुं प्रतिजानीते (यानि) इति इह चतुष्टयी हि शब्दानां प्रवृत्तिः द्रव्यजातिगुणक्रियाविषयभेदेन तत्र द्रव्योपाधित्वेन साधारण्येन च द्रव्यजातिनिमित्तत्वात् प्रकृष्टगुणकर्मनिमित्तत्वमेव भगवन्नाम्नां ब्रवीति (गौणानि) इति गुणेभ्यः कर्मभ्यश्च निमित्तभूतेभ्यः आगतानि यौगिकानीत्यर्थः. १५

गुणशब्दः कर्मणोपि प्रदर्शकः "प्रवदन्त्यात्मनो नाम्नां निरुक्तं गुणकर्मणाम्" [भारते शान्तिपर्व० अध्यायः ३४२ श्लोकः ३] भगवान् "गौणानि मम नामानि कीर्तितानि च कानिचित्" [भारते शान्तिपर्व० अध्यायः ३४२ श्लोकः १०] "नामकर्मार्थवित्तान" [भारते उद्योगपर्व० अध्यायः ६९ श्लोकः १] "निरुक्तं कर्मजानां च शृणुष्व प्रयतोनघ" [भारते शान्तिपर्व० अध्यायः ३४२ श्लोकः १०] इत्यादिवचनात्. २०

न चैषां यदृच्छाशब्दत्वम् विवक्षितावयवार्थत्वात्साङ्केतिकत्वाच्च.

(विख्यातानि) छन्दोभाषयोः प्रवृत्त्यादीनां प्रयोगभूयस्त्वात् तदसाधारण्येन प्रसिद्धानि रूढानीत्यर्थः। २५

पा० १ आह यतत्। २ तमाद्रव्यो। ३ नामाथा। ४ चाद्रव्य। ५ ब्रवीमि। ६ ममनाम्ना। ७ कर्मजम्। ८ तरसाधा।

महात्मनः। ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये॥१३॥

योगादिनाऽर्थान्तरवृत्तिसंभवेपि एकत्र नियतत्वं हि नामत्वम् (ऋषिभिः) अशेषवस्तुदर्शिभिः सनकसनत्कुमारनारदप्रभृतिभिः (परिगीतानि) एवंरूपाणि एवन्निमित्तानि एतद्वाचकानीति परितः परितोद्गुणबन्धुव-
५ दभिनिविशमानैः भीत्या प्रयुक्तानि यानि नामानि, तेभ्यः एकैकस्मा-देकैकं मधुकरक्रमेण समाहृत्य भगवता व्यासेन स्तोत्ररूपेण कीर्ति-तानि संप्रदायपारम्पर्येणास्मत्पर्यन्तं संप्रातानि तुभ्यम् (वक्ष्यामि) कि-मर्थम् (भूतये) भूतिः भवनं सत्ता अनादिसंसारदृष्टिविनष्टात्मनः पुन-
१० रुज्जीवनायेत्यर्थः.

श्रूयते ह्येवमात्मनः सदसद्भावौ "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः" [तै० आन०—६] इति अपरिमितमाहात्म्यतया अपरिमिताभिन्नत्वात् भगवतो य-द्यपि कृत्स्ननामग्रहणासंभवः "श्रुतमेतस्य देवस्य नामनिर्वचनं शुभम्।
१५ यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः"॥ इति प्रकारेण बुभूषतान्तु वि-ष्णुनामसहस्रेणात्मलाभो भवतीति ध्वनयति (महात्मनः) इति एवमेषां गुणनिमित्तत्वादेतदधिकारिभिः भगवद्गुणतस्करा न व्यवहार्याः.

## ※ सगुणनिर्गुणवाक्यविचारः ※

"अस्त्वियं सगुणब्रह्मविद्या अर्वाचीनफलार्थिकारिणाम् निर्गुणविद्या
२० तु मुमुक्षूणामेव हि" इतिचेत धिक्त्वां बधिरम् यः अस्या एव (मुच्यंत जन्तुर्जन्मसंसारबन्धनात) (याति ब्रह्मसनातनम्) इत्युपा-यत्वं श्रूयमाणं न शृणोषि.

पा० १ एवंरूपाण । २ पूर्णांदु । ३ निर्गुणाम । गद्दनदिद्ममात्रेण नाम ।
४ ऋषिभिरिप ।

किंच "सगुणनिर्गुणे द्वे ब्रह्मणी प्रसज्येयाताम्" इत्यद्वैतं विपद्येत (परमोमतः)इति(अधिकतमो मतः)इति सर्वशास्त्रार्थाधिकतरसारसमुद्धारैकप्रयोजनताधिकृतस्यार्वाचीनविषयत्वोक्तौ क्वान्यत्रानर्वाचीनासिद्धिरनयोर्विषयोः सगुणा निर्गुणार्थेति मा च वाचाल वोचथाः । न ९ विरुद्धार्थयोर्यस्मादुपायोपेयता द्वयोः ॥.

अपिच निर्गुणस्य किं मूलं, गुणप्रतीतिः सा विद्येति चेत् जनिमृतिमोहादिभवदोषविषमूर्च्छितस्य मुमूर्षोः परमभेजषं ब्रह्मैव अविद्याभ्रमाद्यशेषदोषास्पदमनाघ्रातगुणकणिकं चेति मनोहरमिदं वेदरहस्यं. ब्रह्मदोषो मृषा चेत्ते नैर्गुण्यं च मृषा मतम् । नैर्दोष्यसगुणत्वे ते सत्ये १० स्यातां न चेच्छसि ॥.

को वा ब्रह्मविद्यामिमामुपहन्यात्, अद्वैतविद्यानिष्ठइति चेत्, इदं ततोपि मनोहरम् "यत्परं ब्रह्म चम्कमीति संसारी तदुत्तारयति" इति.

अपिच सगुणवाक्यं कस्य हेतोर्निरर्थकं ? निर्गुणवाक्यबाध्यत्वादितिचेत्, विपरीतं कस्मान्न स्यात् ? सममेव ह्युभयोः प्रामाण्यं विरोधश्च ? ११

अन्यच्च गुणाश्चेन्निषेद्धव्याः किं तपस्विन्या गुणश्रुत्या प्रतिपद्य गुणप्रसञ्जिका मेति चेत् माचभूत् प्रतिषेध्यम् नह्यप्रसक्तं प्रसज्य तदेव प्रतिषेधनु शास्त्रमिति काचिल्ललाटपट्टे लिपिः "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" [भारते आर० अध्यायः २ श्लोकः ४८] न च "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत" [पू० मी० सू०—६-५- १२ १९] इतिमार्वत्रिको न्यायः नहि प्राक्तनमिहाम्नीनि ज्ञानं नास्तीति पश्चात्तनभ्रो हिनस्ति पवमानाय—

---

पा० १ अपिच ।

च्छेदे प्राकृतधर्मप्राप्तौ च पूर्वदौर्बल्यं पूर्वमनुपमृद्यपरस्योत्पत्त्यसंभवात् इह तु संभवो वक्ष्यते.

यदि परत्वात् निर्गुणवचनं गुणांशं निह्नुते ब्रह्मस्वरूपांशमपि [ पा-
५ तञ्जलसूत्रम्–१–१–४४] शून्यमेव तत्वमिति वाक्यं वाधतां पर-
त्वात् तद्बुद्धभ्रममूलत्वात् न वैदिकं वस्तु बाधत इतिचेन्न वेदो-
पिहि ते ब्रह्मभ्रममूल एवेति को विशेषोनयोः ?

किंच प्रत्युत गुणशास्त्रमेव परं दृष्टं देहात्मदुर्गुणनिषेधपरनिर्गुणवचन-
पूर्वं भगवति हेयगुणान् प्रतिषिध्य कल्याणगुणविधिपरत्वस्य "अप-
१० हतपाप्मा विजरः" [ च्छा० उ० ८–१–५ ] इत्यादावुपलम्भात्.
अपिच तथ्यमिथ्याविषयव्यवस्थया सगुणनिर्गुणश्रुत्योः परित्राणमिति
विप्रलम्भः, भङ्ग एव हि मिथ्याविषयत्वे प्रमाणस्य, यथा अलीक-
कलधौतग्रहस्य सगुणनिषेधोपि मिथ्याविषय एव त्वन्मत इति तस्य
वा कथं तत्वविषयत्वमित्यलमसंभाप्यसंभाषणेन.

अत्रेयं तत्वविदां व्यवस्था ज्ञानशक्त्यादिश्रुतिः कल्याणगुणविषया
१५ निर्गुणश्रुतिः रागद्वेषादिविषयेति "सत्यकामः सत्यसंकल्पः" [च्छा०
उ० ८–१–५ ] इत्यादेः मङ्गलविषयत्वदर्शनात् निर्गुणमिति सा-
मान्यनिषेधस्य तदन्यविषयत्वेन कार्तार्थ्यसंभवाच्च एवमेव पदाहवनी-
यब्राह्मणपरिव्राजकब्राह्मणकौण्डिन्यगोबलीवर्दप्रभृतिन्यायो निरङ्कुशः
तथा गलेपादिकया दोषविषयो निषेधः गुणविषयो विधिश्च एकस्मिन्
२० वाक्ये "अपहतपाप्मा" इत्यादिः "सत्यकामः सत्यसंकल्पः"
[च्छा० उ० ८–१–५ ] इत्यन्तः "यत्तदद्रेश्यमित्यारभ्य' नित्यं
विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" [ मु-
ण्डकोप०–१–१–६ ] इत्यन्तश्च.

---

पा० १ यदिपदा । २ वादिक ।

नचैवंविधे न्यायापेक्षया विषयव्यवस्था स्तम्भोऽस्ति कुम्भो नास्तीतिवत्, दृश्यत्वादिनिषेधं च तद्विरुद्धमङ्गलगुणपरं सूत्रकारो विवव्रे "अदृश्यत्वादिगुणको धर्मोक्तेः" १ [ ब्रह्मसू० १-२-२२ ] इति गुणोपसंहारपादे च शाण्डिल्योपकोसलदहरपुरुषपर्यङ्कादिविद्यावेद्यानां ५ गुणप्रबन्धानां बुद्धिमात्रसारत्वमाशङ्क्य च पर्यहार्षीत् "आदरादलोपः" [ ब्र० सू० ३-३-३९ ] इति स्पष्टं च भगवान् पराशरः "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" [ वि० पु० अं० १ अ० ९ श्लो० ४४ ] "समस्तकल्याणगुणात्मकोऽसौ" [ वि० पु० अं० ६ अ० ५ श्लोकः ५४ ] इत्यादौ. १०

इमामेव च व्यवस्थामातस्थे तथाच दोषाविध्युपधासंख्याविरुद्धैर्मङ्गलैर्गुणैः। परिपूर्णं परं ब्रह्म शास्त्रैर्जोघुष्यतेतराम् "एतं हि सर्वाणि कामान्यभिसंविशन्ति" "सर्वस्य वशी सर्वस्येशानः" [ बृ० उ० ६-४-२२ ] "सत्यकामः सत्यसंकल्पः" [ छ्छा० उ० ८-१-५ ] "यः सर्वज्ञः सर्ववित्" [ मुण्डकोप०-१-१-१० ] १५ "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [ श्वे० उ० ६ ] "माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः" [ सुबालोप० ६ ] "सर्वकर्मा सर्वगन्धः सर्वरसः" [ छ्छा० उ० ३-१४ ] आनन्दवल्यां च ज्ञानबलवीर्यनादीनामियत्ताराहित्येन तद्विषयानन्दवाङ्मनसनिवृत्तिर्मीमांसिता वैष्णवे च भगवच्छब्दनिर्वचन- २० प्रकरणे "शुद्धे महाविभूत्याख्ये" [ वि० पु० अं० ६ अध्यायः ५ श्लोकः ७२ ] इत्यादि च साकल्येन महाभारते भीष्मः "ज्ञानवृद्धा मया राजन् बहवः पर्युपासिताः । तेषां गुणवतां शौरेरहं गुणवतो गुणान् ॥ समागतानामश्रौषं बहून् बहुमतान् स-

तां। गुणैरन्यानतिक्रम्य हरिरर्च्यतमो मतः॥"] भार० सभाप० अ० ३७ श्लो० १२] कर्णपर्वणि सः "वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः। महात्मनः शङ्खचक्रासिपाणेः विष्णोर्जिष्णोर्वसुदेवात्मजस्य"॥ [भार० कर्णप० अ० ८० श्लो० ५६] [श्रीवाराहे] "चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः। स ते गुणानामयुतैकमंशं वदेन्न वा देववर प्रसीद"॥ [मात्स्ये] "यथा रत्नानि जलधेरसंख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः"॥ [वैष्णवे धर्मे] "नहि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि। वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः"॥ इत्यादिभिः प्रायेण श्रीमद्रामायणभारताभ्यां च.

"उपाधिना स्वरूपपरिणामेन वा ब्रह्मैव संसरति" इति वादिभ्यां तु ब्रह्मण्यशेषदोषाभ्युपगमात् (पवित्रं मङ्गलं परम्) इत्यादीनि नामानि कुप्येयुः.

न च "यतो वाचो निवर्तन्ते" [तै० आन० ४] इत्यादि ब्रह्मणोऽप्रामाणिकत्वपरं तस्य तुच्छत्वप्रसङ्गात् "यतो वाचः" [तै० आन० ४] "आनन्दं ब्रह्मणः" [तै० आन० ४] इत्यादि धर्मनिर्देशविरोधात् तदा वाङ्मनसनिवृत्तिवचनस्यानुपपत्तेः ब्रह्मप्रमापकशास्त्रवैयर्थ्यप्रसक्तेः "अथातो ब्रह्मजिज्ञासा" [ब्र० सू० १-१-१] इति ब्रह्ममीमांसानारम्भणीयत्वप्रसङ्गात् (वचसां वाच्यमुत्तमम्) "नावेदविन्मनुते तं बृहन्तम्" [काठ० ३ प्र० ९ अ०] "शास्त्रयोनित्वात्" [ब्र० सू० १-१-३] इत्यादिवाक्यन्यायव्याकोपप्रसङ्गात् "सैषानन्दस्य मीमांसा भवति" इत्युपक्रमेण "ते ये शतम्" [तै० आन० ८-१] इत्यादिना चतुर्मुखानन्दाऽनुक्रमसंख्याविरोधाच्च—

अतः "प्रकृतैतावत्त्वं हि" [ब्र० सू० ३-२-२१] इतिसूत्रन्यायेनानन्त्यैयत्ताराहित्यपरमेव मतम्.

व्याजह्रिरे चैवमेतत्तातपादाः "श्रुतिस्तवानन्दमुखान्हरेर्गुणानियत्तया मातुमिवोद्यता सती। उवाच वाचा मनसा सहोचितां निवृत्तिमेवत्ववधेरसम्भवात्" इति अतः "न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः" इत्यपि व्याख्यातम्. ५

किञ्च नामजात्यादीनां कल्पनानिषेधे अकाल्पनिकपारमार्थिकनामत्वं च भगवतः प्रतिपादितं स्यादिति त्वं निगलपाशं त्वमेव प्रयच्छमि कथंच नाथेति नामग्रहणं नाम ब्रूयात् अशब्दगोचरता १० प्येतेन गता अतो विश्वविलक्षणस्वानुरूपरूपनामकतया परिमितवाच्यवाचकप्रतिषेधपरं स्पष्टं चैतत् प्रदेशान्तरे "नामकर्मस्वरूपाणि नपरिच्छेदगोचरे। यस्याखिलप्रमाणानि स विष्णुर्गर्भगस्तव"॥ [वि० पु० अं०५ अध्यायः २ श्लोकः १९] इति.

आह "नामस्ववयवार्थानां न प्रवृत्तिनिमित्तत्वं निमित्तत्वेपि न तत्र १५ प्रामाण्यं तात्पर्याभावात्" इति तदतिस्थवीयः तदर्थप्रतीतेः स्वतःप्रामाण्यात् अनपवादत्वात् (यानि नामानि गौणानि) "आस्य जानन्तो नामचिद्विवक्तन" [वि० सूक्ते] इत्यादिना भगवद्गुणज्ञापनतात्पर्यावगमाच्च.

मन्त्रवत् शास्त्रान्तरप्रमितभगवद्गुणस्मारकत्वेपि न गुणापहारः सुदृ- २० ढप्रमाणसिद्धत्वात् अत एव ह्यत्रोपोद्घातनिगमनयोः गुणादिप्रकर्षं प्रतिपाद्य सुदृढय्य च मध्ये तत्स्मरणाय नामानि विधीयन्ते अमीषु नाम त्वन्यतममपि सर्वस्मै फलाय.

पा० १ न्वंच।

विष्णोर्नामसहस्रस्य वेदव्यासो महानृषिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥ १४ ॥
अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
५ त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥ १५ ॥

---

कल्पते एकनरस्य भगवच्छास्त्रादिषु द्वादशाष्टषडक्षरादिषु मूलमूलिमन्त्ररूपेण परिणमय्य स्वानन्त्येण सर्वार्थेषु विनियोगात् " नाम-चिद्विवक्षन " इत्येकवचनसामञ्जस्याच्च उच्चारणमात्रेणोपकारिणामपि निर्वचनेन गुणप्रकाशने झटिति मनःप्रसादनत्वं पावनत्वं १० च नामनिर्वचनाध्यायेषु "अस्तौषीन्नामभिर्व्यासस्तशिष्यो मधुसूदनम्। एषां निरुक्तं भगवन् परमं वक्तुमर्हसि ॥ शुश्रूषोः श्रद्दधानस्य प्रजापतिपतेर्हरेः। श्रुत्वा भवेयं यत् पूतः शरच्चन्द्र इवामलः" ॥ [भार० शान्तिप० अ० ३४२ श्लो०१] धृतराष्ट्रः " भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छते। नामकर्मार्थवित्तात प्राप्नुयां पुरुषो-१५ त्तमम् ,, [भार० उद्योगप०अ०६९ श्लो०१] इत्यादौ द्रष्टव्यम् विनियोगश्चैषां लिङ्गतः उद्योगमोक्षधर्मवैष्णवधर्मनिर्वचनाध्यायेषु तत्तन्मन्त्रकल्पेषु वचनेभ्यश्चावगन्तव्यः.

इतिश्री हारितकुलतिलकश्रीवत्साङ्कमिश्रसूनोःश्रीरङ्गराजदिव्याज्ञालब्धश्रीपराशरापरनामधेयस्य श्रीरङ्गनाथस्य कृतौ श्रीमन्नामसहस्र-२० विवरणे भगवद्गुणदर्पणे उपोद्घातः.

उपोद्घातप्रकरणं समाप्तम्।

॥ श्रीः ॥

# श्रीमते लक्ष्मीवेङ्कटेशाय नमः ।



श्रीविष्णुसहस्रनामभाष्यानुसारिणि नामनिर्वचने उपोद्घातनाम्नः ।

करिसुधरजानपाङ्गिजानः रङ्गिनाथनिरावकान्दंपवः ।
कमलाकुचगुच्छचञ्चरीकः कमलाक्षो मम कामितं विधत्ताम् ॥

प्रणाममिममाचार्याः पत्न्या श्रीरङ्गिकाः ।
तथा मत्रं च गुरवः प्रतिगृह्णन्तु मामकम् ॥
भट्टार्यज्ञापिते श्रीमद्भगवद्गुणदर्पणे ।
सहस्रनामभाष्येऽस्मन्नामनिर्वचनक्रमः ॥

अथ, उपोद्घातश्लोकाः- भाष्ये प्रत्यञ्जितार्थाः, तैरेव मुद्रितपूर्वत्वा ?.०
इति–

## इह नामान्येव निरुच्यन्ते ।

श्रीविष्णुसहस्रनामनिर्वचने उपोद्घातः समाप्तः ।

॥ श्रीः ॥

श्लोकः ॥ १ ॥ (१) विश्वं

ॐ विश्वाय नमः ।

## श्रीविष्णुसहस्रनामभाष्ये प्रथमशतकप्रारम्भः ।

५ अथ पञ्चसिद्धान्तनिष्ठानिर्णयेन, पर व्यूह विभवविशेषेषु स्वनाम, अर्थप्रकरणौचित्यापौनरुक्त्यप्रभृतिभिः न्यायैर्व्यवस्थाप्य, व्याकरणनिरुक्तार्षनिर्वचनप्रस्थानेन नामानि निरुच्यन्ते. तत्र. पूर्वं सर्वतोमुखं भगवतः पूर्णत्वमाह—

(विश्वम्) इति. 'विशत्यवयवानित्यर्थे'

१० (१) "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" ॥ उणादौ प्रथमपादे कौमुदीपृष्ठम् ६१७ इति क्वन् प्रत्ययः.

यथा मोक्षधर्मे संयमाय पञ्चशिखः—

(२) "वेशनाद्विश्वमित्याहुर्लोकानां काशिसत्तम ।
लोकांश्च विश्वमेवेति प्रवदन्ति नराधिप" ॥ इति.

१५ निर्वचनम्—तत्र तावत् भगवतः सर्वतोमुखं पूर्णत्वं प्रथममुच्यते (विशत्यवयवान्) इति. (स्वाभाविकानवधिकातिशयानन्तमाङ्गल्यैकतानस्वरूपरूपगुणविभवैः परिपूर्णो) भवतीति—

(विश्वम्)

(१) "विश, प्रवेशने" धातुः तुदादिः कौमुदीपृष्ठाङ्कः ४६९

२० अस्मात्,

(२) "भूवादयो धातवः" प्रथमाध्याये—तृतीयपादे—प्रथमसूत्रम् ॥ कौ० पृ० ५ इति धातुसंज्ञायाम्,

(३) "धातोः" ३ । १ । ९१ कौ० पृ० ५५५
इत्यधिकृत्य विधीयमानः,

२५ श्रीविष्णुसहस्रनामनिरुक्तिः ।

१ (विश्वम्) सर्वत्रपूर्णत्वात् स्वरूपगुणवैभवैः ।

१ वन्यादिनधाने ।

भाष्यम्—स्वाभाविकानवधिकातिशयमाङ्गल्यैकतानैः स्वरूपरूपगुणविभवैः परिपूर्ण इत्यर्थः, कार्त्स्न्यवचनत्वादस्य, आदौ अनवच्छेद्यमहाविभूतित्वस्य संकीर्तनयोग्यत्वाच्च.

(३) "तदशिष्यं, संज्ञाप्रमाणत्वात्" १ । २ । ५३ ॥ कौं० ५
पृ०२४२ इति, यथोपलम्भं सर्वत्रलिङ्गनियमः.

(४) कार्यवाचिविश्वशब्दःकारणेवर्तते ॥ शङ्करभाष्यम् ॥
इतिकेचित्. तन्नातं; सर्वेषां नाम्नाम्, योगरूढिभ्यां भगवति स्वशब्दत्वोपपादनात्, जघन्यवृत्तेरयुक्तत्वाच्च.

---

निर्वचने—(४) "कृदतिङ्" ३ । १ । ९३ ॥ कौ०पृ०६८ १०
इति कृत्संज्ञः,

(५) "उणादयो बहुलम्,, ३ । ३ । १ ॥कौ० पृ०६४५
इत्यौणादिकः,

(६) "कर्तरिकृत्", ३ । ४ । ६७ ॥ कौ० पृ० ५५५

(७) "ताभ्यामन्यत्रोणादयः" ३ ।४।७५॥ कौ० पृ०६४५ १५
इति इह कर्तरि,

(८) "अशूप्रुषिलटिकणिखटिविशिभ्यःक्वन्" उणादौ प्रथमपादः
कौ० पृ० ६१७ इति क्वन्,

(९) "प्रत्ययः"३ । १ । १ ॥ कौ०पृ० ३०
इतिप्रत्ययसंज्ञः, २०

(१०) "परश्च" ३ । १ । २ ॥ कौ० पृ० ३० इति परः.
एवमेवान्यत्रापि ( विष्णुः वषट्कारः साक्षी निष्ठा) इत्यादावुणादौ
कृत्प्रत्यये, प्रातिपदिकात्
तद्धितादौ च. अवधेयम् तत्र,

(११) "हलन्त्यम्" १ । ३ । ३ ॥ कौ० पृ० १ २५

(१२) "लशक तद्धिते" १ । ३ । ८ ॥ कौं० पृ० ३२

भा०—(५)अन्ये, (विश्वम्) इति, ब्रह्मप्रपञ्चयोरभेदपरं प्रपञ्चितवन्तः. तत् वञ्चनमात्रम् ॥ शङ्करभाष्यम ॥

तथाहि— न तावत् विश्वपदम् अभेदवाचि. नच,

५ (६) ❋ छा०३०६—८—७॥तत्त्वमस्यादिवत्. सामानाधिकरण्येनैक्यपरम्,संज्ञानां स्वातन्त्र्येण ऐक्यपरत्वाविवक्षणात्.अतएव हि(विश्वम्—विष्णुः)इति अविशेष्यलिङ्गत्वम् निरस्तंश्चायमर्वागेव पक्षःअन्यत्र चानेकत्र.इदमेव पूर्णत्वम्,सर्वैर्नामभिः(विष्णुरित्यादिभिः)विशिष्यते.

---

निर्वचनम्—इनिमृत्राभ्यां नकारककारयोरित्संज्ञायाम्,

१० (१३) "अदर्शनंलोपः" १।१।६०॥ कौ० पृ० ९

इति कृतसंज्ञः,

(१४) "तस्य लोपः" १।३।९॥ कौ० पृ० १०

इतितयोर्लोपः.

(१५) "तिङ्शित्सार्वधातुकम्" ३।४।११३॥ कौ० पृ० ३६८

१५ (१६) "आर्धधातुकंशेषः" ३।४।११४॥ कौ० पृ०-३७०

इतिकृतसनयोः सार्वधातुकार्धधातुकयोः विधीयमानः,

(१७) "अदेङ्गुणः" १।१।२॥ कौ० पृ० ५

इति गुणसंज्ञायाम्,

(१८) "इकोगुणवृद्धी" १।१।३॥ कौ० पृ० ६

२० इति परिभाषया,

(१९) "ह्रस्वंलघु" १।४।१०॥ कौ० पृ० ६

(२०) "अलोन्त्यात्पूर्वउपधा" १।१।६५॥ कौ० पृ०४१

(२१) "यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेङ्गम्" १।४।१३॥ कौ० पृ० ३२

२५ इति सूत्रैर्लघूपधाङ्गसंज्ञासु,

(२२) "पुगन्तलघूपधस्य च" ७।३।८६॥ कौ० पृ० ३७०

इति लघूपधाङ्गस्य इको गुणो न भवति,

---

१ निर्वृतिश्च ।

निर्व०—( २३ ) "क्क्ङिति च" १।१।५ ॥ कौ० पृ० ३७४.

इति किति तत्प्रतिषेधात्.

( २४ ) "आर्धधातुकस्येड्वलादेः" ७।२।३५॥ कौ०पृ०३७०

इतीटि प्राप्ते, 5

( २५ ) "एकाच उपदेशेऽनुदात्तात्" ७।२।१०॥ कौ०पृ०३७८

इति तन्निषेधः, अस्य निहतत्वात्.

( २६ ) "कृत्तद्धितसमासाश्च" १।२।४६॥ कौ० पृ० २९

इतिकृदन्ततया प्रातिपदिकसंज्ञायाम्,

( २७ ) "ङ्याप्प्रातिपदिकात्" ४।१।१॥ कौ० पृ० ३० 10

इत्यधिकृत्य विधीयमानः,

( २८ ) "स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्य स्ङसोसाम्ङ्योस्सुप्" ४।१।२॥ कौ० पृ० ३०

इतिसुप्. तत्र च,

( २९ ) "तान्येकवचनद्विवचनबहुवचनान्येकशः" १।४।१०२॥ 15 कौ०पृ० ३६७

इत्येकवचनसंज्ञायाम्,

( ३० ) "द्व्येकयोर्द्विवचनैकवचने" १।४।२२॥ कौ०पृ०३०

इतिप्रथमैकवचनम् सुः.

( ३१ ) "लिङ्गमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्य" ॥ महाभाष्ये ॥ २०

( ३२ ) "तदशिष्यं संज्ञाप्रमाणत्वात्" १।२।५३॥ कौ०पृ० २४२

इति, ब्रह्मादिविशेष्याभिप्रायकं वा क्लीबत्वम्.

इत्यमन्यत्र (स्तोत्रमित्यादौ) अनः क्लीबत्वात्,

( ३३ ) "स्वमोर्नपुंसकात्" ७।१।२३॥ कौ० पृ० ५७ 25

इति लुकोपवादः,

( ३४ ) "अतोऽम्" ७।१।२४॥ कौ०पृ०५५

इति सोरमादेशः. ततः.

{२५९ / ६६३} (२) विष्णुर्

ॐ विष्णवे नमः ।

५ भा०—विभवानुप्रवेशेन तावद्विशिनष्टि—
(विष्णुः) इति—स्वविभूतिभूतं चिदचिदात्मकं सर्वं विशतीति.
(१) यथा "विवेशभूतानि चराचराणि" तै० ना०६—१—४.
(२) "तदेवानुप्राविशत्" इत्यादि. तै० आ० २—६—२.

निर्व०-(३५) "अमिपूर्वः" ६।१।१०७॥ कौ० पृ० ३१
१० इति पूर्वरूपमेकादेशः. एवमन्यत्राप्येतादृशे प्रदेशे (स्तोत्रमित्यादौ).
(३६) "सर्वादीनिसर्वनामानि" १।१।२७॥ कौ० पृ० ३४
इति महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात्,
इहच संज्ञात्वेनासर्वनामत्वात्, नतत्कार्यं स्मायादिकम्.
(इदमेव पूर्णत्वं सर्वनामभिर्विशेष्यते)
१५ तत्र 'विभवानुप्रवेशेन तावद्विशिष्यते पूर्णश्चायम्' ❋
स्वविभूतिभूतं सर्वं विशति अनुप्रविशति व्याप्नोतीति—[विष्णुः]
पूर्ववदेवधातुः.धात्वन्तराद्युत्पत्तिस्तु प्रकरणान्तरेवक्ष्यते.आर्षनिर्वचनात्.
(१) "संज्ञासुधातुरूपाणिप्रत्ययाश्चततःपरे। कार्याद्विद्यादनूबन्धमेत-च्छास्त्रमुणादिषु" ३।३।१ कौ० पृ० ६४५
२० इत्यभिप्रायकम् क्नुःष्णुञ्चा पूर्वत्र,क इत्.
(२) "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशांषः" ८।२।३६ कौ० पृ० ९१.
इति झलि पदान्तेच षत्वम् किस्वाद्गुणः अनिट्.
अपरत्र तु अकित्त्वाद्बाहुलकाद्गुणः शंपमागवत.
२५ यद्वा क्नुःकल्प्यः अथवा. बाहुलकात.
(३) "त्रसिगृधिधृषिक्षिपेःक्नुः" ३।२।१४० कौ० पृ० ६०२

निरु० २ चराचरेषु भूतेषु वशनात् [विष्णुरुच्यते] ॥ १ ॥

निरं०—अन्यतोपि भवति शस्य षत्वम्. पृषोदरादित्वाद्बाहुल कात्, अगुणः ६ । ३ । १०९ ॥ कौ० पृ० ११७

(४) "रषाभ्यान्नोणः समानपदे" ८ । ४ । १ कौ०पृ० ३९ इति नस्य णः. ५

(५) "पूर्वत्रासिद्धम्" ८ । २ । १ ॥ कौ० पृ० ३

इतिष्टुत्वस्यासिद्धत्वात्. अपिवा, ततएव बाहुलकात्.

(६) "दाभाभ्यांनुः" उणादिः तृतीयपादः कौ० पृ० ६२६

इतरतोपीति नुः शस्य षत्वम् अगुणश्च. प्राग्वदितरत् ततएव वा,

(७) "स्थाणुः" उणादिः तृतीयपादः कौ० पृ० ६२६ १०

अन्यतोपीत्यादि. उताहो,

(८) "ग्लाजिस्थश्चग्स्नुः" ३ । २ । १३९ ॥ कौ०पृ० ६०१

इति चकारात्. अन्यत्रापिग्स्नुः गिदयं नकित्. येनस्थास्नुरित्यत्र,

(९) "घुमास्थागापाजहातिसांहलि" ६।४।६६॥कौ०पृ० ४४२

इतीत्वं स्यात् अथापि न गुणः १५

(१०) "क्ङिति च" १ । १ । ५ ॥ कौ० पृ० ३७४

इति अत्र चर्त्वं प्राप्तस्य गकारस्यापि प्रश्लेषात्, शस्य षत्वम्,

(११) "षढोः कः सि" ८ । २ । ४१ ॥ कौ० पृ० ७२

इति षस्य कः—

(१२) "इण्कोः" ८ । ३ । ५७ ॥ कौ० पृ० ३४ २०

इत्यधिकृत्य.

(१३) "आदेशप्रत्यययोः" ८ । ३ । ५९ ॥ कौ० पृ० ३४

इति सस्य षः णत्वम् पृषोदरादित्वात्कलोपः.

आहोस्वित् आदौ शस्यैव लोपः लाघवात् अन्यत्समम् अथवा,

(१४) "भुवश्च" ३ । २ । १३८ ॥ कौ० पृ० ६०१ २५

इति चकारादन्यतोपिष्णुच् धातोर्लोपः पृषोदरादिलक्षणइति-दिक्. सर्वमपि तादृशवचनबलात् आत्यादिविशेष्याभिधायम्,

भा—० श्रीहरिवंशे,

(३) "व्याप्य सर्वानिमाँल्लोकान् स्थितः सर्वत्र केशवः । ततश्च विष्णुनामासि विशेर्धातोः प्रवेशनात्" ॥

५ (४) "विश, प्रवेशने" इति धातुः तुदादिः को० पृ० ४६९

तत्र नुप्रत्ययात् विष्णुरिति

श्रीवराहे ताच्छील्यादिविषयेण नुप्रत्ययेन अस्य महिम्नः स्वाभाविकत्वमुच्यते.

पूर्णत्वव्याप्तिविषयत्वेन नाम्नोरपुनरुक्तिः

१० निर्व०—रुत्वम् एवम् अन्यत्रापि. ( भूतभव्यभवत्प्रभुरित्यादौ )

(१५) "ससजुषोरुः" ८।२।६६॥ कौ० पृ० २६

इतिसोः रुत्वम्.

(१६) "उपदेशेऽजनुनासिक इत्" १।३।२॥ कौ० पृ० १

इत्युकारस्य इत्संज्ञा,

१५ (१७) "विरामोऽवसानम्" १।४।११०॥ कौ० पृ० ६

इत्यवसानसंज्ञायाम्,

(१८) "खरवसानयोर्विसर्जनीयः" ८।३।१५॥ कौ० पृ० १३

इतिरेफस्य विसर्गः संहितायां तु न, एवमुत्तरत्राप्येतादृशे.

प्रदेशे( स्थाणुर्भूतादिरित्यादौ ) अवसेयम्, ( पूर्णत्वव्याप्तिविषयत्वेन

२० नाम्नोरपुनरुक्तिः ) तत्र संहितायाम्,

(१९) "मोऽनुस्वारः" ८।३।२३॥ कौ० पृ० २०

इति मस्यानुस्वारः तस्य,

(२०) "वा पदान्तस्य" ८।४।५९॥ कौ० पृ० २०

इतिपाक्षिकः परसवर्णः तत्रचानुस्वारस्य नासिकास्थानीयस्य आन्त-

२५ रतम्यात्,

( ३ ) वषट्कारो,

ॐ वषट्काराय नमः ।

भा०—आकाशादिवैलक्षण्येन एतद्याम्नः प्रयोजनमुच्यते.
(वषट्कारः) सर्वं. वशं स्वेच्छानुवर्ति, करोतीति ५
करोतेः कर्मण्यण्.
( १ ) "वश, कान्तौ" धा० अदादिः कौ० पृ० ४४८
इत्यस्मात् धातोः,
निर्व०—( ७१ ) "स्थानेन्तरतमः" १ । १ । ५० ॥ कौ० पृ० ७
इति. तादृशोनुनासिको वः. १०
अनुनासिकाननुनासिकभेदेन हि द्वैधम् यवलाः.
एवं तत्रतत्र यथायोगं(मुक्तानांपरमागतिः किं यदित्यादौ.)द्रष्टव्यम्.
( आकाशादिवैलक्षण्येन एतद्याम्नः प्रयोजनमुच्यते )
सर्वं. वषट् वशं स्वेच्छावर्ति करोतीति—
( वषट्कारः ). १५
( १ )"डुकृञ्, करणे" धा० तनादौ कौ० पृ० ४७३
वशार्थे वषट्शब्दकर्मणि,
( २ ) "तत्रोपपदं सप्तमीस्थम्" ३।१।९२॥ कौ० पृ० १५१
इत्युपपदसंज्ञके,
( ३ ) "कर्मण्यण्" ३ । २ । १ ॥ कौ० पृ० ५७० २०
इत्यण्.
( ४ ) "आदिर्ञिटुडवः" १ । ३ । ५ ॥ कौ० पृ० ३८७
इति, डाऽित्त्वे.
( ५ ) "तस्यलोपः" १ । ३ । ९ ॥ कौ० पृ० १०
( ६ ) "वृद्धिरादैच्" १ । १ । १ ॥ कौ० पृ० ५ २५

निरु०—३ स्वेच्छया यो वशे सर्वं ( वषट्कारः ) करोति सः ।

भा०—(२) "प्रच्छि" } ३।२।१७८ ॥ वार्तिकम्. कौ० पृ० ६०७
"दंसः०" } उणा० ५ पा० कौ० पृ० ६४२
इति, अत्र बाहुलकाऽनुवृत्तेः अट्प्रत्ययः, वशेः पादेशश्च.
५ (३) "सर्वस्य वशी सर्वस्येशानः" बृ० उ०—६—४—२२ ।
(४) "जगद्वशे वर्ततेदम्" इति. भा० आनु० १४९,—१३७ ।

निर्व०—इति वृद्धिसंज्ञायाम्ः
(७) "अचोञ्णिति" ७।२।११५॥ कौ० पृ० ४२
इति, वृद्धिराकारः.
१० (८) "उरण्रपरः" १।१।५१॥ कौ० पृ० ११
इति, रपरत्वम्. उपपदे,
(९) "वश, कान्तौ" धा० अदा० कौ० पृ० ४४८ कान्तिःइच्छा.
(१०) "प्रच्छि" } ३।२।१७८॥ वार्तिकम्. कौ० पृ० ६०७
"दंसः०" } उणा० ५ पा० कौ० पृ० ६४२
१५ इति, अत्रबाहुलकाऽनुवृत्त्या अट्,वशेर्वपादेशश्च. शस्यपोवा,लाघवात. यद्वा.
(११) "उच्चैस्तरांवावषट्कारः" १।२।३५॥ कौ० पृ० ७२२
(१२) "नमःस्वस्तिस्वाहास्वधालंवषट्योगाच्च" २।३।१६॥ कौ० पृ० ११६ इत्यादि निपाननादयं साधुः. हविर्दानवाचिनोप्यस्य, प्रकृते
२० तादर्थ्यलक्षणयाक्तार्थोपपत्तिः. उभयत्राप्यस्य,
(१३) "चादयोऽसत्वे" १।४।५७॥ कौ० पृ० ७,
इति, निपातसंज्ञायाम्ः
(१४) "स्वरादिनिपातमव्ययम्" १।१।३७॥ कौ० पृ० ८६
इति, निपातत्वादव्ययत्वम्, स्वरादित्वाद्वा. स्वरार्थः.
२५ स्वरादिचार्थोभयोरप्याकृतिगणयोरस्य पाठः
माधवमतम्, एवम्. (स्वस्तिदःसाक्षी इत्यादौ ) उभयत्राप्यव्ययम्,
मति मुलोपलम्भ व्युत्पादम्. तथाचक्वचित् किंचिद्युत्पादयिष्यते.
निष्ठत्यवहि सर्वत्राप्युत्पत्तिपक्षः उपपदसमासः.

१ मस्तीति सिध्यं मतेऽनुपयोगात ।

## ( ४ ) भूतभव्यभवत्प्रभुः ।

ॐभूतभव्यभवत्प्रभवे नमः ।

भा०—अतः ( भूतभव्यभवत्प्रभुः ) कालत्रयवर्त्तिनां प्रभुः ५
स्वामी शेषीति यावत.

( १ ) "विप्रसंभ्योड्वसंज्ञायाम्" ३।२।१८०॥ कौ० पृ० ६०७

नैवं०—एवम्( क्षेत्रज्ञ इत्यादौ )उत्तरत्रापि यथायथं तत्रतत्र समासोऽवसेयः

( १५ ) " झलांजशोन्ते" ८।२।३९॥ कौ० पृ० १४

इति, पदान्ते, जश्त्वेन टस्य डः तस्य. १०

( १६ ) " खरिच" ८।४।५५॥ कौ० पृ० २०

इति,चर्त्वेनान्तरतम्यात टः

इत्थम् (भवत्प्रभुरित्यादौ) उत्तरत्रापि तत्रतत्र यथायथमवधातव्यम्

अतः, भूतभव्यभवताम् अतीतागामिवर्तमानकालत्रयवर्तिनां पदार्थानां, प्रभुःस्वामी शेषीति— १५

( भूतभव्यभवत्प्रभुः )

( १ ) " भू, सत्तायाम् " धा० भ्वादिः कौ० पृ० ३६८

प्रपूर्वः.

( २ ) " विप्रसंभ्योड्वसंज्ञायाम्"३।२।१८०॥कौ० पृ०६०७

इति समुदायस्य संज्ञात्वेन एकदेशस्यातथाभावाडुः २०

( ३ ) "चुटू" १।३।७॥ कौ० पृ० ३१

इतीत्संज्ञायाम् डलोपः.

( ४ ) "अचोन्त्यादिटि" १।१।६४॥ कौ० पृ० १३

इति. टिसंज्ञायाम्

( ५ ) "टेः" ६।४।१४३॥ कौ० पृ०५६ २५

इति डित्वसामर्थ्यादभस्यापिटिलोपः

निरु०—४ त्रिकालवर्तिनां शेषी ( भूतभव्यभवत्प्रभुः ) ॥ ॥

भा०—इति,द्वः समुदायस्य संज्ञात्वात् प्रत्ययाविरोधः.
घुष्यन्ति हि शास्त्राणि,
( २ ) " पतिंविश्वस्य.. तै०ना०—६—११।
५ ( ३ ) " पतिं पतीनाम्" श्वे०—६—७।
( ४ ) " भूतस्य जातः पतिरेक आसीत्,, ४ का० १—८।
( ५ ) " तदनुरूपस्य विश्वम् " नै०—ब्रह्म०—१।
( ६ ) " यस्येमाः प्रदिशः " ४—का० १ — ८।
( ७ ) " कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्" भा०स० ३८
१० अ०श्लो०२३।
( ८ ) " भूतभव्यभवन्नाथःकेशवः केशिसूदनः "भार०स०३१अ०
श्लो०११।
( ९ ) "जगन्नाथस्यभूपते" भार०आनु०१४९—१२। इत्यादीनि.

१५ निर्व०—पूर्ववदेव अयमेव धातुर्विगृहीतः. एकत्र,
( ६ ) " वर्तमानेलट्" ३।२।१२३॥ कौ०पृ० ३६६
( ७ ) " लटःशतृशानचावप्रथमासमानाधिकरणे" ३।२।१२४॥
कौ०पृ० ५९९
इति, शतृप्रत्ययः तस्य शित्वात्—
२० ( ८ ) " तिङ्शित् सार्वधातुकम्" ३।४।११३॥कौ०पृ०३६८
इति, सार्वधातुकसंज्ञायाम् तत्र परतः
( ९ ) " कर्तरि शप्" ३।१।६८॥ कौ०पृ० ३६८
इति, शप् तस्य, सार्वधातुकत्वेपि.
( १० ) " सार्वधातुकमपित् " १।२।४॥ कौ०पृ० ३७६
२५ इति, प्रतिषेधेन ङित्त्वाभावात्,
( ११ ) " क्ङिति च" १।१।५॥ कौ०पृ ३७४
इति, निषेधः न गुणः
( १२ ) " एचोऽयवायावः" इति ६।१।७८॥ कौ०पृ० १०
( १३ ),, " यथासंख्यमनुदेशः समानाम्" १।३।१०॥कौ०पृ० २१

निर्व०—इति. यथासंख्यपरिभाषया, ओतोऽव्
(१४) "अतोगुणे" ६ । १ । ९७ ॥ कौ० पृ० ३१
इति. पररूपमेकादेशः.
अपरत्र,
(१५) "अचोयत्" ३ । १ । ९७ ॥ कौ० पृ० ५५७
इति, यत् इह भविष्यति. तस्य,
(१६) "कृत्याः" ३ । १ । ९५ ॥ कौ० पृ० ५५५
इति, कृत्यसंज्ञायाम्.
(१७) "तयोरेवकृत्यक्तखलर्थाः" ३।४।७०॥कौ०पृ०५५५ १०
इति, भवतेरकर्मकात् भावे प्राप्तौ,
(१८) "भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्यावा"
३ । ४ । ६८ कौ० पृ० ५६५
इति, कर्तरि पाक्षिको निपातः. आर्धधातुकत्वात्,
(१९) "सार्वधातुकार्धधातुकयोः" ७।३।८४॥कौ०पृ०३६८ १५
इति, उकारस्य गुणः
(२०) "स्थानेन्तरतमः" १ । १ । ५० ॥ कौ० पृ० ७
इति, आन्तरतम्यादोकारः, तस्य,
(२१) "वान्तोयिप्रत्यये" ६ । १ । ७९ ॥ कौ० पृ० १०
इति, वान्तादेशः अव्. अन्यत्र, २०
(२२) "क्तक्तवतूनिष्ठा" १ । १ । २६ ॥ कौ० पृ० ५८६
इति, निष्ठासंज्ञायाम्.
(२३) "निष्ठा" ३ । २ । १०२ ॥ कौ० पृ० ५८६
इति, भूते क्तः.
(२४) "तयोरेवकृत्यक्तखलर्थाः" ३।४।७०॥कौ० पृ० ५५५ २५
इति. भावकर्मणोः प्राप्तौ.

(५) भूतकृत्,

ॐ भूतकृते नमः ।

भा०—पुनः शेषित्वोपपादकानि पञ्च नामानि.

५ सर्वाणि भूतानि स्वतन्त्रः सृजतीति—

(भूतकृत)

(१) यथा "सर्वं ह्येदं ब्रह्मणा हैव सृष्टम्"

(२) "यतो वा इमानि" तै० भृ०—१ ।

इत्यादि.

१० निर्व०—(२५) "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" ३ । ४ । ७२ ॥ कौ० पृ० ५९६

इति, अकर्मकात् कर्तरि भवति

(२६) "श्युकः किति" ७ । २ । ११ ॥ कौ० पृ० ४२५

इति, नेट् अगुणः द्वन्द्वगर्भःषष्ठीसमासः

१५ समासत्वात् प्रातिपदिकसंज्ञायाम्,

(२७) "सुपोधातुप्रातिपदिकयोः" २ । ४ । ७१ ॥ कौ० पृ० १२८

इति, सुपोलुक्. ततः समुदायात्सुप्. एवमुत्तरत्रापि ( भूतभृदित्यादौ ) तत्रतत्र यथायथमवधेयम्. जश्त्वचर्त्वे.

अनन्तरयोर्नाम्नोः संहितापाठे,

२० (२८) "हशिच" ६ । १ । ११४ ॥ कौ० पृ० २७

इति, रोरुत्वम्.

(२९) "आद्गुणः" ६ । १ । ८७ ॥ कौ० पृ० ११

एवमन्यत्रापि ( योगोयोगेत्यादौ ) यथायोगमवसेयम्.

अथ शेषित्वोपपादकानि पञ्च नामानिः

२५ सर्वत्र विशेषविशिष्टक्रमाणि. एवं तत्र तत्र ज्ञेयम्.

भूतानि समस्तानि करोति स्वतन्त्रः सृजतीति—( भूतकृत, )

नि०८०—५ भूतानि योसौ सृजति स्वातन्त्र्येण स-( भूतकृत ) ।

निर्व०—( १ ) "डुकृञ्, करणे" धा०तनादिः कौ० पृ० ४७३
( २ ) "वासरूपोऽस्त्रियाम्" ३।२। १४।। कौ० पृ० ५५५
इति वासरूपविधिना,
( ३ ) "सुकर्मपापमन्त्रपुण्येषुकृञः" ३।२।८९।।कौ०पृ०५८४ ५
इत्युपपदनियमाभावात्, अन्यत्राप्युपपदे क्विप्.
( ४ ) "क्विप्च" ३ । २ । ७६ ।। कौ० पृ० ५८१
इति वा.
तत्तत्सूत्रैः प्रागुक्तैः कृतां त्रयाणां क्विपां
( ५ ) "तस्यलोपः" १ । ३ । ९ ।। कौ० पृ० १० १०
इति, लोपे,
( ६ ) "अपृक्तएकाल्प्रत्ययः" १।२।४१।। कौ० पृ० ४१
इत्यपृक्तसंज्ञायाम्,
( ७ ) "वेरपृक्तस्य" ६ । १ । ६७।। कौ पृ० ६८
इति, वलोपे च, क्विपः सर्वापहारको लोपः. १५
एवं क्विन्नादावपि. ( दिवस्पृगित्यादौ )
( ८ ) "ह्रस्वस्यपितिकृतितुक्" ६। १।७१।। कौ० पृ०५५९
इति. तुक्. उकावितौ.
( ९ ) "आद्यन्तौटकितौ" । १ । १ । ४६ ।। कौ० पृ० ७
इति, किदयमन्तावयवः. तत्स्तयोर्लोपः. २०
कित्त्वान्न गुणः.
( १० ) "झलाजशोन्ते" ८ । २ । ३९ ।। कौ० पृ० १४
इति जश्त्वेन दः. तस्य
( ११ ) "वावसाने" ८ । ४ । ५६ ।।कौ० पृ० ३३
इति, पाक्षिकेण चर्त्वेन तः. पुनश्शब्दो ध्युत्पादितः. २५
एवमुत्तरत्रापि. ( पुनःपुनरित्यत्र )

( ६ ) भूतभृद्, ( ७ ) भावो,

ॐ भूतभृते नमः। ॐ भावाय नमः।

भा०—भूतानि बिभर्तीति—
५ ( भूतभृत् )
( १ ) "विश्वं बिभर्ति भुवनस्य नाभिः" तै० ना० १—२।
( २ ) "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः"
एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः—
प्रज्ञामात्राः प्राणेष्वर्पिताः" इति कौषीतकि० ३—९।
१० ( ३ ) "सदाधारपृथिवीम्" ४ का० १—८।
( ४ ) "बिभर्त्यव्यय ईश्वरः" इति. गी० १५—१७।
उक्तवक्ष्यमाणसर्वविभूतिभिः कलापीव प्रचलाकेन
विशिष्टतया भवतीति—
( भावः )

१५ निर्व०—तानि भूतानि बिभर्ति भरति वा धारयतीति—
( भूतभृत् )
( १ ) "डुभृञ्,धारणपोषणयोः" धा० जुहोत्यादिः कौ०पृ० ४५०
( २ ) "भृञ्,भरणे" धा० भ्वादिः कौ० पृ० ४११
( ३ ) "क्विप् च" ३।२।७६॥ कौ० पृ० ५८१
२० इति, क्विप्, अन्यत्पूर्ववत् नाम्नः महिनापाठे,
( ४ ) "झलाजशोऽन्ते" ८।४।५३॥ कौ० पृ० ९
इति, जश्त्वेन तस्य दः एवं ( भूतभृदित्यादौ ) ततस्तत ज्ञेयम्
सर्वविभूतिभिर्विशिष्टतया विभूतिमान् भवतीति वा—
ततएव तैस्तैः तैः भावयते प्राप्नोतीति वा—
२५ ( भावः )

निरु०—६ ( भूतभृद् ) भूतभरणात् ७ विभूतत्वाद् ( भाव ) इतिः॥३॥

भा०—" भवतेश्चेति वक्तव्यम् " ३ । १ । १४३ ॥ काशिकावृत्तौ कौ०पृ० ५६९
इति, णप्रत्ययः. तस्मिन् भगवति प्रकारतया अन्तर्भावादेव हि सर्वस्य तद्विभूतित्वव्यपदेशः ❀ ५

निर्व०—पूर्वत्र,
( १ ) "भू, सत्तायाम् " धा० भ्वादिः कौ० पृ० ३६८
( २ ) "ज्वलतिकसन्तेभ्यो णः " ३ । १ । १४० ॥ कौ०पृ०५६८
इति, प्रकरणे,
( ३ ) " विभाषा ग्रहः" ३ । १ । १४३ ॥ कौ०पृ०५६९ १०
इति, सूत्रे,
( ४ ) " भवतेश्चेति वक्तव्यम्" काशिकावृत्तौ कौ०पृ०५६९
इति काशिकानुरोधात् णः. ण इत्.
( ५ ) " अचोञ्णिति " ७ । २ । ११५ ॥ कौ० पृ०४२ १५
इति, वृद्धिरौकारः.
( ६ ) " एचोयवायावः " ६ । १ । ७८ ॥ कौ० पृ०१०
इत्याव्.
( ७ ) " भू, प्राप्तौ " आत्मनेपदी, धा०चुरादिः कौ०पृ० ४८८
आधृषीयः. ततः,
( ८ ) "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् " ३ । १ । २५ ॥ कौ० पृ०४७९ २०
इति, चुरादिलक्षणो णिच्. वृद्ध्यावादेशौ.
( ९ ) " सनाद्यन्ता धातवः" ३ । १ । ३२ ॥ कौ०पृ० ३९७
इति, धातुसंज्ञायाम्,
( १० ) " नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः " ३ । १ । १३४ ॥ २५
कौ० पृ० ५६७
इति, यथासंख्यपरिभाषया,
( ११ ) " शिवशमरिष्टस्य करे " ४ । ४ । १४३ ॥ कौ०पृ०६९२

(८) भूतात्मा,

ॐ भूतात्मने नमः।

भा०—इमम् विभूतिविभूतिमद्भावं शरीरात्मभावलक्षणम् विशिनष्टि—
५ (भूतात्मा) इति..
सर्वेषां भूतानाम् आत्मा, अवरात्मनोपि इदमेव स्वशरीरं प्रत्यात्मत्वम्
यद्व्याप्य साक्षात्प्रवृत्त्यादिषु नियच्छति;
एवं परस्सर्वमिति विशेषः, दारागारकेदारादिविलक्षणेन अत्यन्तपारत-
न्त्र्येण अन्तरङ्गो हि देहस्यात्मविभूतिभावः.
१० (१) "यः पृथिव्यां तिष्ठन्" बृ०उ० ५–७–३।
(२) "य आत्मनि तिष्ठन्" ॥ माध्यन्दिनशाखायाम् ॥
(३) "यस्य पृथिवी शरीरम्" बृ०उ० ५–७–३।
(४) "यस्यात्मा शरीरम्" ॥ माध्यन्दिनशाखायाम् ॥

निर्व०—(१२) "कर्मणि घटोऽठच्" ५।२।३५॥कौ०पृ० ३१८
१५ इत्यादिनिर्देशात्,
(१३) "यङोऽचि च" २।४।७४॥ कौ० पृ०५०७
इति, लुग्विधानाच्च, पचादेराकृतिगणत्वादच्.
(१४) "णेरनिटि" ६।४।५१॥ कौ०पृ० ३९९
इति, णेर्लोपः. ❀
२० अयं च विभूतिविभूतिमद्भावः शरीरात्मभावलक्षणो विशेष्यते. उक्त-
लक्षणेन संबन्धेन भूतानामात्मेति—
(भूतात्मा).
(१) "अत, सातत्यगमने" धा० भ्वादिः कौ० पृ०३८३
(२) "सातिभ्यां मनिन्मनिणौ" उणादिचतुर्थपादः कौ०पृ०६३९
२५ इति, मनिण्.
(३) "अलोन्त्यात्पूर्व उपधा" १।१।६५॥ कौ०पृ०४१
इत्युपधाभिन्नायाम्,

निरु०—८शरीरभृतभूतानां (भूतात्मा) ऽऽत्मतया स्थितः

(९) भूतभावनः ॥

ॐ भूतभावनाय नमः ।

भा०—(५) "एष सर्वभूतान्तरात्मा" मु०उ०७।
(६) "जगत्सर्वं शरीरं ते" रामा०यु० १२०—२६ । ५
(७) "तानि सर्वाणि तद्वपुः" वि०पु०१—२२—८५।
(८) "तत्सर्वं वै हरेस्तनुः" इत्याद्युदाहार्यं.वि०पु०१-२२-३८।
तानि धारकपोषकभोग्यप्रदानेन वर्धयतीति—(भूतभावनः).

निर्व०—(४) "अत उपधायाः" ७।२।११६॥कौ०पृ०३८६
इत्युपधावृद्धिः. १०
(५) "नेड्वशिकृति" इति, नेट्. ७।२।८॥ कौ०पृ०५८१
एवमेवायमुत्तरत्रापि(त्रिलोकात्मेत्यादौ)सर्वत्र. तत्पुरुषः.संहितायाम्,
(६) "अकः सवर्णे दीर्घः" ६।१।१०१॥ कौ०पृ०१४
इति, दीर्घ एकादेशः.
(७) "सुडनपुंसकस्य" १।१।४३॥ कौ०पृ०३८ १५
इति, सर्वनामस्थानसंज्ञायाम्.
(८) "एकवचनं संबुद्धिः" २।३।४९॥ कौ०पृ०३१
इति, संबुद्धिसंज्ञायां च,
(९) "सर्वनामस्थाने चासंबुद्धौ" ६।४।८॥कौ०पृ०४१
इति, नान्तलक्षण उपधादीर्घः. २०
(१०) "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" ६।१।६८॥
कौ०पृ०४२ इति, सुलोपः.
(११)"नलोपः प्रातिपदिकान्तस्य"इति,नलोपः.८।२।७॥कौ.पृ. ३९
एवमुत्तरत्रापि (त्रिलोकात्मेत्यादौ) तत्र तत्र यथायथमवधेयम्. ❋
तानि भूतानि भावयति, धारकपोषकभोग्यप्रदानेन वर्धयतीति— २५
(भूतभावनः).

निरु०—९ धारकादिप्रदानेन यश्च वर्द्धयति स्वयम् ॥ ४ ॥
भूतानि नित्यं झटिति स तु स्याद् (भूतभावनः)।

भा०–(१) " नन्द्यादिभ्यो ल्युः "३।१।१३४॥कौ०पृ०५६७
(२) " कृत्यल्युटो बहुलम् " ३ । ३ । ११३॥ कौ०पृ०६६२
इति, वा कर्तरि ल्युट्.
५ एवं, भावनः, प्रतर्दनः, इत्यादयोपि ल्युट्प्रत्ययान्ताः. यथा,
(३) " भूतभावन भूतेश " गी० १०–१५।
(४) " एष भूतपालः " इति. बृ०उ०६–४–२२ ।
एवं, स्वरूपस्थितिप्रवृत्तिपालनैः शेषित्वमुपपादितम्.
"उत्पादनपोषणादिभिरुपादीयमानं प्रत्युद्देश्यं हि शेषी" इति.
१० (५) " शेषः परार्थत्वात् "पूर्वमीमां० ३–१–१ ।
इति, समर्थितम्.

---

निर्व०–(१) " भू, सत्तायाम् " धा०भ्वादिः कौ०पृ०३६८
(२) " हेतुमति च " ३ । १ ।२६ ॥ कौ०पृ०४१२
इति; णिच्. वृद्ध्यावादेशौ.
१५(३)"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"३।१।१३४॥कौ०पृ०५६७
इत्यादिना नन्द्यादित्वाल्ल्युः. यद्वा,
(४) " कृत्यल्युटो बहुलम् " ३।३।११३ ॥ कौ०पृ०६६२
इति, बाहुलकात् कर्तरि ल्युट्. ल इत् अन्यत्र,
(५) " अश्च बहुलमन्यत्रापि " ॥
२० इति युज्वा. च इत्,
(६) " युवोरनाकौ " ७।१। १॥ कौ०पृ०२३३
इति, यथासंख्यपरिभाषया योरनः.
(७) " णेरनिटि " ६ । ४ । ५१ ॥ कौ०पृ०३९९
इति, णेर्लोपः.
२५ तदात्मत्वेपि तद्दोषाननुषङ्गात्, पूतः शुद्धः, आत्मा स्वभावः
यस्य, स इति–

श्लो०॥ २॥ ( १० ) पूतात्मा,

ॐ पूतात्मने नमः ।

भा०—आत्मत्वेपि संसारिवत्, अस्य शरीरभूतचिदचिद्दोषाननु- ५
षङ्गात् ( पूतात्मा ) शुद्धस्वभावः.
परावरयोस्तुल्यत्वेपि शरीरसंबन्धे अवर एवात्मा कर्म-
फलानि भुञ्जानः क्लिश्यते;
( १ ) " जहात्येनां भुक्तभोगामजोऽन्यः " तै०ना०६—१०—५।
भोजयिता तु परः स्वातन्त्र्येण न भुङ्क्ते, चकास्ति च परम्.
यथा शिष्यशासित्रोरविशेषेपि कशास्पर्शे,कर्मकर्तृभावभेदेन शिष्य १०
एक एव कशया पीड्यते न शासिता. विज्ञायते च
( २ ) " अनश्नन्नन्यो अभिचाकशीति " मु०उ० ३—१—१।
( ३ ) " एष सर्वभूतान्तरात्मा अपहतपाप्मा " सु०उ०७।
( ४ ) " न मां कर्माणि लिम्पन्ति " गी० ४—१४ ।
( ५ ) "पश्य देवस्य माहात्म्यं महिमानं च नारद। शुभाशुभैः कर्म- १५
भिर्यो न लिप्यति कदाचन " भार०शान्ति० ३४०—२६ ।
इत्यादि. सूत्रितं च,
( ६ ) " संभोगप्राप्तिरिति चेन्न वैशेष्यात् "इति ※ ब्र०सू०१-२-८।

निर्व०—( पूतात्मा ).
( १ ) " अत, सातत्यगमने " धा०भ्वादिः कौ०पृ०३८३ २०
ततो मनिणन्तोयम् व्युत्पादितः.इत्थमयमुत्तरत्रापि (पूतात्मेत्यादौ),
( २ ) " पूञ्, पवने " धा०क्र्यादिः कौ०पृ०४७५
( ३ ) " गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च "
३ । ४ । ७२ ॥ कौ०पृ०५९६
इत्यादिनाऽकर्मकात् कर्तरि क्तः भवन्ति ह्यविवक्षितकर्माणोप्यकर्माणः. २५
( ४ ) " श्र्युकः किति " ७ । २ । ११ ॥ कौ०पृ०४२५

निरु०—१० शरीरत्वाच्च जगतस्तद्दोषैर्न कदाचन ॥ ५ ॥
लिप्यते यः स ( पूतात्मा ) न भुङ्क्ते च फलानि यः ।

( ११ ) परमात्मा, च,

ॐ परमात्मने नमः ।

भा०—यथा, सर्वाणि भूतानि अनेनात्मवन्ति, नैवमयमन्येन केनचित्,
५ अतः ( परमात्मा ) परो मा अस्येति परमः, पृषोदरादित्वेन साधुत्वम्, परमश्चासावात्मा चेति. अनन्येश्वरः; यथा,
( १ ) " आत्मेश्वरम् " तै० ना० ६—११ ।
( २ ) " तस्माद्धान्यं न परः किञ्च नास " २ अष्ट०८प्र०९अ०
( ३ ) " न तत्समश्चाप्यधिकश्च दृश्यते " श्वे० उ०६—८ ।
१० ( ४ ) " यस्मात्परं नापरमस्ति किञ्चित् " श्वे०उ०३—९ ।
( ५ ) " न परं पुण्डरीकाक्षात् दृश्यते भरतर्षभ "
( ६ ) " परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति "
( ७ ) " न दैवं केशवात्परम् " भार०आश्व०शेष० २—२१ ।
( ८ ) " यस्मात्परस्मात्पुरुषादनन्तादनादिमध्यादधिकं न किञ्चित् "
१५ ( ९ ) " मत्तः परतरं नान्यत् किञ्चिदस्ति " गी० ७—७ ।
( १० ) " परं ह्यमृतमेतस्माद्विश्वरूपान्न विद्यते "
(११)"परः पराणां परमः परमात्मा" इति ❋ वि०पु०१—२—१०।

निर्व०—इति, नेट्. बहुव्रीहिः संहितायां सवर्णदीर्घ इत्यादि ❋ यथा, अन्यान्यनेनात्मवन्ति, नैवमयमन्येनेति, अतः परो मा अस्येति
२० परमः उत्कृष्टः, स चासावात्मा चेति—
( परमात्मा ).
आत्मशब्दो हि अततेर्व्युदपादि.
( १ ) " पृ, पालनपूरणयोः " धा०जुहोत्यादिः कौ० पृ० ४४९
( २ ) " भावे " ३ । ३ । १८ ॥ कौ०पृ० ६४७
२५ (३)"अकर्तरि च कारके संज्ञायाम्" ३ । ३ । १९॥ कौ०पृ०६४७

निरु०—११ येन भूतान्यात्मवन्ति नायमन्येन चात्मवान् ॥ ६ ॥
अतो ह्यात्मेश्वरत्वाच ( परमात्मा ) प्रकीर्तितः ।

## ( १२ ) मुक्तानां परमागतिः ।

ॐ मुक्तानां परमागतये नमः ।

भा०—एवं सर्वशेषिणमेव परमप्राप्यमाह-( मुक्तानां परमागतिः ).
प्रकृतिबन्धाविद्याकर्मसंस्काररुचिविपाकेभ्यः आवरणेभ्य एकान्ततोऽ—५
त्यन्ततश्च वि[1]श्लिष्टा मुक्ताः. आम्नायते हि;
( १ ) " तत्सुकृतदुष्कृते विधूनुते " कौषीतकी उ० १—४ ।

निर्व०—इत्यनुवृत्तौ,
( ४ ) " ऋदोरप् " ३ । ३ । ५७ ॥ कौ०पृ०६५३
इत्यप्. गुणो रपरः. मेत्यव्युत्पन्नमव्ययम्. १०
(५)"अर्थवदधातुरप्रत्ययः प्रातिपदिकम् "१।२।४५॥कौ०पृ०२९
( ६ ) " कृत्तद्धितसमासाश्च " १ । २ । ४६ ॥ कौ०पृ०२९
इति. यथायथं प्रातिपदिकम्. ततो बहुव्रीहिः. परमशब्दः,
( ७ ) "पृषोदरादीनि यथोपदिष्टम् " ६।३।१०९॥कौ०पृ०१९७
इति, ह्रस्वान्तः साधुः. ततः, कर्मधारयः. संहितायाम् दीर्घ इ- १५
त्यादि. चरतमुच्चये.
सर्वशेषित्वात् मुक्तानां पुरुषाणाम्, परमा अनर्वाचीना, गतिः
प्राप्य इति—
( मुक्तानां परमागतिः ).
( १ ) " गम्लृ, गतौ " धा० भ्वादिः कौ०पृ०४३० २०
( २ ) " भावे " ३ । ३ । १८ ॥ कौ०पृ०६४७
( ३ ) " अकर्तरि च कारके संज्ञायाम्"३।३।१९॥कौ०पृ०६४७
इत्यनुवृत्तौ,
( ४ ) " स्त्रियां क्तिन् " ३ । ३ । ९४ ॥ कौ०पृ०६५८

निरु०—१२ ब्रह्मसाधर्म्यमापन्ना मुक्तास्तेषां परा गतिः ॥ ७॥ २५
मुख्यप्राप्यस्ततः शेषी ( मुक्तानां परमागतिः ) ।

१ अविशिष्टाः मुक्ताः ।

भा०—(२) "अश्व इव रोमाणि विधूय पापम्" छा०उ०८—१३।
( ३ ) "नामरूपे विहाय" मु०उ०३—२८।
( ४ ) "तदा विद्वान् पुण्यपापाद्विमुक्तः"
५ ( ५ ) "ज्ञात्वा देवं मुच्यते सर्वपाशैः" श्वे०उ०४—१६।
( ६ ) "भिद्यते हृदयग्रन्थिः" मु०उ०२—२—९।
( ७ ) "मायामेतां तरन्ति ते" गी०७—१४।
श्रीनारायणीये,
( ८ ) "ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च। कलाः पञ्चदश
१० त्यक्त्वा ते मुक्ता इति निश्चयः"॥ भा०शान्ति०३३५—४०।
इत्यादि.
एवम्, त्रस्तसमस्तसंसारनिगलानाम्, अनन्तसंविदानन्दघनेन स्वरूपेण अपहतपाप्मत्वादिसत्यसंकल्पत्वावधिना गुणाष्टकेन भोगेन च परेणात्मना साम्यं च सिद्धान्तितम्.
१५ (९) "दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते"
छा०उ० ८—१२—५।
(१०) "निरञ्जनः परमं साम्यमुपैति" मु०उ०३—१—३।
( ११ ) "मम साधर्म्यमागताः" गी०१४—२।
( १२ ) "एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः" ब्र०
२० सू० ४—४—७।
इत्यत्र, प्रकृष्टसत्त्वोपादानेन रूपेण साम्यं च.
(१३) "स एकधा भवति द्विधा भवति" छा०उ०७—२४—२।
( १४ ) "जक्षत्क्रीडन् रममाणः" छा०उ०८—१२—३।
( १५ ) "कामान्नीकामरूप्यनुसंचरन्" तै०भृ० १०—५।
२५ ( १६ ) "तं ब्रह्मगन्धः प्रविशति" कौषीतकी, उ० १—५।
( १७ ) "तं ब्रह्मरसः प्रविशति" कौषीतकी, उ० १—५।
( १८ ) "तं ब्रह्मालंकारेणालंकुर्वन्ति" कौषीतकी, उ०१—४।
(१९) "द्वादशाहवदुभयविधं बादरायणः" इति, ब्र०सू०४-४-१२।

भाष्यम्—अत्र ( मुक्तानाम् ) इतिबहुवचनेन, तेषां भेदो बहुत्वं च स्पष्टम्, तथा च,

( २० ) " परामृतात्परिमुच्यन्ति सर्वे " मु० उ० ३—२—६।

( २१ ) " महिमानस्सचन्ते " पु० सू० १८। ५

( २२ ) " साधर्म्यमागताः " गी० १४—२।

( २३ ) " मामुपयान्तिते "

इत्यादिच.

( साक्षी ) (मुक्तानां गतिः) इत्युक्त्या भगवता च भेदः; तथाच,

( २४ ) " जुष्टं यथापश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः" १० मु० उ० ३—१—२।

( २५ ) " पृथगात्मानं प्रेरितारञ्च मत्वा " श्वे० उ० १—६।

( २६ ) " पुरुषमुपैति दिव्यम् " मु० उ० ३—२—८।

( २७ ) " सहब्रह्मणा विपश्चिता " तै० आ० २—१—२।

( २८ ) " परंज्योतिरुपसंपद्य " छा० उ० ८—१२—२। १५

( २९ ) " मुक्तोपसृप्यव्यपदेशाच " ब्र० सू० १—३—२।

इत्यादि. स्पष्टं च मोक्षधर्मे.

( ३० ) " सहि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः । नलिप्यते मलैश्चापि पद्मपत्रमिवाम्भसा ॥ कर्मात्मा त्वपरो योसौ मोक्षबन्धैस्स युज्यते। स सप्तदशकेनापि राशिना युज्यते तु सः" ॥ इति. भार० शा० २० ३५२—१४। अतस्त्वेन मिथ्याभूतेन वोपाधिना कुम्भादिनेव नभोवच्छिन्ने ब्रह्मेव संसरति मुक्तौ तु भेद एव नास्तीति मतम्

ॐ शास्त्रेणैव पर्युदस्तं साङ्ख्य—सू० १—१५०।

अमुष्मादेव परमात् साम्यात् भिन्नानामपि,

( ३१ ) " ब्रह्मैवब्रह्माप्यप्येति " मु० उ० ३—२—९। २५

इत्यादिरवाचश्च मुख्या एव यथा सोयं गोपिनि ग्वण्डमुण्डादिषु.

भाष्यम्—अभेदवादिनां तु मुक्तिविषयाभेदसाम्यवादाः भज्येरन्. औपाधिकभेदवादिनां च मुक्तस्वरूपभङ्गोपगमात् मुक्तेरपुरुषार्थत्वम्, भेदवादासामञ्जस्यं च स्याताम् इदमेव साम्यं मुक्तावभेदो व्याख्यातः,

५ ( ३२ ) "तद्भावभावमापन्नस्तदासौ परमात्मना । भवत्यभेदी" वि० पु० ६–७–९५।

इति, तस्य परस्य ब्रह्मणः भावाः ज्ञानशक्त्यादयः स्वभावाः, तेषां भावः आविर्भावः, गुणैस्सादृश्यम् अन्येषां द्वितीयो भावशब्दो व्यर्थः, मुक्तौ भेदनिषेधश्च देवाद्युपाधिविषयो व्यञ्जितः,

१० ( ३३ ) "देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः" वि० पु० २–१४–३३।

इति. ( गति ) शब्दश्चैषः कर्मणिक्तिन्नन्तः ( गतिः ) भाविः,ईप्सिततमं कर्मोद्दिश्यम्"

एतेन, मुक्ततत्प्राप्ययोः शेषशेषिभावो दर्शितः. श्रूयते च,

१५ ( ३४ ) "एतमानन्दमयमात्मानमुपसंक्रम्य" तै० आ० २–८–६।

( ३५ ) "अनुसञ्चरन्" तै० भृ० १०–५।

( ३६ ) "येन येन धाता गच्छति, तेन तेन सह गच्छति, तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरम्"

( ३७ ) "छायावासत्वमनुगच्छेत्"

२० ( ३८ ) "तथा प्रकारम्" इति.

धर्मिग्राहकप्रमाणसिद्धञ्च अवरस्यात्मनस्स्वाभाविकं शेषत्वम्, ज्ञानादिवन्मोक्षे न तिरस्क्रियते; किन्तु निवारकवारणादाविर्भवति; उक्तं हि,

( ३९ ) "स्वेन रूपेणाभिनिष्पद्यते" छा० उ० ८–१२–२।

वैष्णवे धर्मे,

२५ ( ४० ) "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
तथा हेयगु[illegible] नैसा[illegible] व[illegible]य[illegible]ये गुणाः ॥ प्रकाश्यन्ते न जन्यन्ते—

१ नित्यवरणस्वादुर्गवि।

भाष्यम्—नित्या एवात्मनो हि ते ॥ ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर ॥ आत्मनो ब्रह्मभूतस्य नित्यमेतच्चतुष्टयम्, वि० ध० ।

( ४१ ) "संपद्याविर्भावस्स्वेन शब्दात्" ब्र० सू० ४–४–१। इति च. ननु, 5

( ४२ ) "आप्नोति स्वाराज्यं" तै० शी० ६–२ ।

( ४३ ) "स स्वराड् भवति" छा० उ० ७–२५–२ ।

इत्युदाहृत्य,

( ४४ ) "अतएव चानन्याधिपतिः" ब्र० सू० ४–४–९ ।

इति स्वातन्त्र्यन्निर्णीतम् कथमस्य पारैदमर्थ्यमपुरुषार्थत्वं च परतन्त्रस्य स्यात्. 10

मन्द, मैवं परिशृः; आत्माधिपतिम् भगवन्तमन्तरेणान्येनक्लेशकर्मादिना परवश्वनिवृत्तिरनन्याधिपतित्वम्, न पुनरनाथत्वम्, तथासत्यनधिपतिरित्येतावदुच्येत, नत्वनन्याधिपतिरिति.

न च प्रियतमस्वपतिपारतन्त्र्यमपुरुषार्थः राज्ञो[1] दारादौ प्रियंकरतमत्वोपलम्भात्, सूचितश्च[2] बहुधा गुणप्रधानभावः, 20

( ४५ ) "जगद्व्यापारवर्ज्यम्" ब्र० सू० ४–४–१७ ।

( ४६ ) "भोगमात्रसाम्यलिङ्गाच्च" ब्र० सू० ४–४–२१ ।

इति, ईश्वरेशितव्यभाववर्जम् भोगमात्रेण तयोस्साम्यमिति, श्रीविष्णुतत्त्वे. 25

( ४७ ) "पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः। स्वातन्त्र्यमतुलं लब्ध्वा तेनैव सह मोदते[3]"॥ तत्रैवान्यत्र, वि० त०

( ४८ ) "स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम्।उभयोरेष संबन्धो न परोऽभिमतो मम" वि० तत्त्वे० ।

१ राजदारादौ । २ सूचितश्चगुण । ३ लभते सिद्धिमुत्तमां । १

भाष्यम्—श्रीनारायणीये—

(४९) "व्रतावसाने सुशुभान्नरान्ददृशिमो वयम्। श्वेतांश्चन्द्रप्रतीकाशान् सर्वलक्षणलक्षितान् ॥नित्याञ्जलिकृतान् ब्रह्म जपतः प्रागुदङ्मु-
५ खान्" भा० मो० ३३७—३४।

(५०) "कृताञ्जलिपुटाहृष्टा नम इत्येव वादिनः" भा० मो० ३३७—४०।

(५१) "अतीन्द्रिया अनाहारा अनिष्यन्दास्सुगन्धिनः" भा० मो० ३३७—२८।

इत्यादिना श्वेतद्वीपवासिनान्दिव्यरूपाद्युपेतत्वम् भगवद्दास्यपरिचरणैक-
१० प्रियत्वं च प्रपञ्च्य तदेव मुक्तानां लक्षणमुक्तम्,

(५२) "येपि मुक्ता भवन्तीह नरा भरतसत्तम। तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम्" इति.

परमेतिविशेषणेन मुक्तानामेव केषांचिदर्वाचीना गतिर्गम्यते. गृह्यते च निर्मुक्तजरामरणात्मककैवल्यलक्षणा,

१५ (५३) "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये" इति.॥ गी० ७—२९।

संसारपरमपदयोर्मध्ये तेषां स्थानं च,

(५४) "योगिनाममृतं स्थानं स्वात्मसंतोषकारिणाम्" इति. वि० पु० १—६—३८।

एवं मुक्तानां परमागतिः,

२० (५५) "सा काष्ठा सा परागतिः" कठोप० ३—११।

(५६) "विश्वात्मानं परायणम्" तै० ना० ६—११।

(५७) "मामेवानुत्तमां गतिम्" गी० ७—१८।

(५८) "सोऽध्वनः पारमाप्नोति" कठोप० ३—९।

(५९) "आत्मलाभान्न परं विद्यते" इत्यादि सुलभम्, ❀

---

२५ निर्व०—टनि कर्मणि क्तिन्. निहतत्वान्नेट्,

(५) "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" ६।४।३७.॥ कौ० पृ० ४३५

इत्यनुनासिकस्य मस्य लोपः परमशब्दो व्युत्पादितः.ततः,

( १३ ) अव्ययः

ॐ अव्ययाय नमः।

भाष्यम्—इदमेव पञ्चभिर्नामभिरुपपादयति.

न वीयते न व्यपगम्यतेऽस्मादिति, ५

( अव्ययः) ❀ एरच्, एवं प्रत्ययैः विनयैः जयै इत्येवमादयः.नहि भगवान् कथंचित् संसारमहार्णवादुत्तीर्णं स्वचरणारविन्दं प्राप्तवन्तं पुनरावर्त्तयति. अत एवाम्नासिषुः,

निर्व०—( ६ ) " स्त्रियाम् " ४।१।२ ॥ कौ० पृ०८८

( ७ ) " अजाद्यतष्टाप् " ४।१।४ ॥ कौ० पृ० ८८ १०

इति टाप् सवर्णदीर्घ इत्यादि.

( ८ ) " मुच्लृ, मोक्षणे" धा०तुदादिः कौ० पृ० ४७०

कर्मणि क्तः. अनिट्.

( ९ )"चोः कुः " ८।२।३० ॥ कौ० पृ० ६८

इति, झलि कुत्वेन चस्य कः. तत आमि अङ्गसंज्ञायाम्, १५

( १० ) " ह्रस्वनद्यापोनुट् " ७।१।५४ ॥ कौ० पृ०३३

इति नुट्.

( ११ ) " नामि " ६।४।३ ॥ कौ० पृ० ३३

इति दीर्घः. संहितायाम्,

( १२ ) " मोऽनुस्वारः" ८।३।२३ ॥ कौ० पृ० २० २०

इत्यनुस्वारः तस्य,

( १३ ) " वापदान्तस्य " ८।४।५९ ॥ कौ० पृ० २०

इति पाक्षिकः परसवर्णः.

❀

एतदुपपादकान्येवपञ्च नामानि,प्राग्वत् विशिष्टक्रमाणि'वीयते व्यपगम्यते चेतनोऽस्मादिति व्ययः न सञ्ति ( अव्ययः ) २५

निरु०—न वीयते च वैकुण्ठान्मुक्ताऽयस्तादतो ( ऽव्ययः )॥ ८ ॥

भाष्यम्–(१) "एतेन प्रतिपद्यमाना इमं मानवमावर्तन्नावर्तन्ते"
(२) "नच पुनरावर्तते, नच पुनरावर्तते" छा० उ० ८–१५–१।
(३) अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इति. ब्र० सू० ४–४–४।
५ यमस्मृतौ,
(४) "सत्त्वं वहति सूक्ष्मत्वात्परं नारायणं प्रभुम्। परमात्मानमासाद्य परं वैकुण्ठमीश्वरम्॥अमृतत्वाय कल्पेत न निवर्तेत वै पुनः" इति;[यमस्मृतौ] हारीते यतिधर्मे,
(५) "यतिधर्मगतश्शान्तः सर्वभूतसमो वशी।प्राप्नोति परमं
१० स्थानं यत्प्राप्य न निवर्तते" इतिच. [ हारीतः ]

---

निर्व०–(१) "इण्,गतौ" धा० अदादिः कौ० पृ० ४४१
विपूर्वः
(२) "भावे" ३।३।१८ ॥ कौ० पृ० ६४७
(३) "अकर्तरिचकारकेसंज्ञायाम्" ३।३।१९ ॥ कौ० पृ० ६४७
१५ इत्यनुवृत्तौ,
(४) "एरच्" ३।३।५६ ॥ कौ० पृ० ६५३
इत्यपादानेऽच्,
(५) "सार्वधातुकार्धधातुकयोः" ७।३।८४ ॥ कौ० पृ० ३६८
इति गुणः अय्.
२० (६) "इकोयणचि" ६।१।७७ ॥ कौ० पृ० ८
इति वेरिकारस्य यण्,
(७) "स्थानेन्तरतमः" १।१।५० ॥ कौ० पृ० ७
इति स्थानत आन्तर्यात्यकारः नञ्समासः.
(८) "नलोपोनञः" ६।३।७३ ॥ कौ० पृ० ९४७
२५ इति नञो नस्य लोपः ॥

{ १४ / ४०७ } पुरुषस्,

ॐ पुरुषाय नमः।

भाष्यम्—पुरु बहु, सनोतीति—

(पुरुषः) सनोतेः दानकर्मणः, ५

(१) "अन्येष्वपिदृश्यते" इतिडः ३।२।१०१॥कौ०पृ० ५८५

मुक्तेभ्योपि वाङ्मनसाऽपरिच्छेद्यगुणविभवस्वानुभवम् ददाति हि भगवान्; यथा,

(२) "एषत्वेवानन्दयाति" तै० आ० ७—१।

(३) "सोऽश्नुते सर्वान्कामान् सहब्रह्मणाविपश्चिता" तै०आ०१—२।१०

(४) "दिव्येन चक्षुषा मनसैतान् कामान्पश्यन् रमते" छा० उ० ८—१२—५।

(५) "जक्षत्क्रीडन् रममाणः" छा० उ० ८—१२—३।

(६) "सतत्रपर्येति" छा० उ० ८—१२—३।

(७) "कामान्नीकामरूपी" तै० भृ० १०—५। १५

निर्व०—तेभ्यो वाङ्मनसागोचरगुणविभवस्वानुभवरूपः, पुरु, बहु सनोति ददातीति— (पुरुषः)

(१) "षणु,दाने" धा०तनादिः कौ० पृ० ४७२।

(२) "धात्वादेःषःसः" ६।१।६४॥ कौ० पृ० ३८३

इति षस्य सः टवर्गस्तवर्गजः.

(३) "अन्येष्वपिदृश्यते" ३।२।१०१॥कौ० पृ० ५८५ २०

इतिडः डित्वात्,

(४) "टेः" ६।४।१४३॥कौ० पृ०५६ इत्यभत्वेपि टिलोपः.

(५) "पृ,पालनपूरणयोः" धा० जुहोत्यादिः कौ०पृ० ४४९

"कुर्भश्च" उणादिः प्रथमपादः कौ० पृ० ६१० २५

निरु०—१४ मुक्तेभ्यस्स्वात्मपर्यन्तदानात्(पुरुष)ईरितः॥

{ १९ / ८१७ } साक्षी

ॐ साक्षिणे नमः।

भाष्यम्–( ८ )"रसो वै सः रसं ह्येवायं लब्ध्वा नन्दी भवति" तै० ९ आ० ७–१।

( ९ ) "अस्मिन्नस्य च तद्योगं शास्ति" ब्र० सू० १–१–२०।

( १० ) "तद्धेतुव्यपदेशाच्च" इति. ❀ ब्र० सू० १–१–१५।

एवं तानानन्दयन्,स्वयमपि तृप्यन् साक्षात्करोतीति– ( साक्षी )

निर्व०–इति प्रस्तावे,

१० ( ६ ) "पृभिदिव्यधिगृधिधृषिभ्यश्च" उणादिः प्रथमपादः कौ० पृ० ६१०
(इति कुः.

( ७ ) "उदोष्ठ्यपूर्वस्य" ७।१।१०२॥ कौ० पृ० ४४९
इति उत्वम्. रपरत्वम्.कित्वान्न गुणः. ततः,

( ८ ) "इण्कोः" ८।३।५७ कौ० पृ० ३४ [ इत्यधिकृत्य,

१५ ( ९ ) "आदेशप्रत्यययोः" ८।३।५९॥ कौ० पृ० ३४
इति षः,

( १० ) "सात्पदाद्योः" ८।३।१११॥ कौ० पृ० ३५८
इति प्रतिषिद्धः,

( ११ ) "सुषामादिषु च" ८।३।९८॥ कौ० पृ० ११५

२० इति प्रतिप्रसूयते. ग्रह्याकृतिगणः. ( नाम्नोस्संहितायाम्, )

( १२ ) "कुप्वोः ꣵक ꣶपौ च" ८।३।३७॥ कौ० पृ० २३
इत्युपध्मानीयः. ❀

एवं तानानन्दयन् स्वयमपि तृप्यन् तान्साक्षात्करोतीति.–
( साक्षी ) साक्षादित्यव्ययात्.

निरु०–१९ स्वयमानन्दयन् तृप्यन् ( साक्षी ) साक्षात्करोति सः॥ ९॥

( १६ ) क्षेत्रज्ञो,

ॐ क्षेत्रज्ञाय नमः ।

भा०—(१) "साक्षाद्द्रष्टरिसंज्ञायाम्" ५।२।९१॥कौ०पृ०३२४
इति इनिः. विशिनष्टि हि मुक्तप्राप्यम्, ५
( २ ) "ब्रह्मणाविपश्चिता" इति. तै० आ० १—१—२।
विविधं पश्यद्धित्वं हि विपश्चित्वम्. ❀
इत्थं तेभ्यः स्वानुभवं दातुं तदेकान्तं क्षेत्रं जानातीति—( क्षेत्रज्ञः ).

निर्व०—( १ ) "साक्षाद्द्रष्टरिसंज्ञायाम्" ५।२। ९१ ॥कौ०पृ०
३२४ इति इनिः. १०
( २ ) "तद्धिताः" इति तद्धितसंज्ञः.४।१।७६॥कौ०पृ०१०६
( ३ ) "यचिभम्" १।४। १८॥ कौ०पृ० ३८
इति भसंज्ञायाम्,
(४) "अव्ययानांभमात्रेटिलोपः" ६।४।१४४॥कौ०पृ०१३३
इति टेर्लोपः. तद्धितान्तत्वात्प्रातिपदिकसंज्ञायाम् सुप्. एवमपरत्रा- १५
पीदृशे प्रदेशे.
( ५ ) "इन्हन्पूषार्यम्णांशौ" ६।४। १२॥कौ० पृ० ६४
इति वर्तमाने,
( ६ ) "सौच" ६।४। १३॥ कौ० पृ० ६४
इतीन्नन्तलक्षणो दीर्घ इत्यादि. संहितायाम्, २०
( ७ ) "विसर्जनीयस्यसः" ८।३।३४॥कौ० पृ० २२
इति सत्वम्. ❀
तेभ्यस्स्वानुभवं दातुं तदुचितम् क्षेत्रम् स्वभोगसमृद्धिसमुद्भवस्थानं
परमव्योम आकाशशरीरतया तादृशं वा, तज्जानातीति—( क्षेत्रज्ञः )

निरु०—१६ क्षेत्रंतु परमव्योम मुक्तेभ्यो वेत्ति नित्यशः । २५
दातुं स्वानुभवं यश्च ( क्षेत्रज्ञः ) स तु कथ्यते ॥ १० ॥

भा०—( १ ) " आतोऽनुपसर्गेकः " इति कः. ३ । २ । ३ ॥ कौ० पृ० ५७० स्वभोगसमृद्धिसमुद्भवभूमित्वात्, क्षेत्रं परमव्योम, तादृशशरीरत्वाद्वा; यथा,

५ ( २ ) " आकाशशरीरं ब्रह्म " इति. तै० शी० ६—२ ।

तथाच श्रीनारायणीये, मुक्तप्राप्यः क्षेत्रज्ञतया विशेष्यते,

( ३ ) मुक्तानां तु गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्प्यते " । इति. भा० मो० । तद्धि मुक्तानां भगवदनुभवस्थानम्,

( ४ ) " परमेव्योमन् सोऽश्नुते " तै० आ० २—१ ।

१० ( ५ ) " तेहनाकंमहिमानस्सचन्ते " तै० पु०—१८ ।

( ६ ) " नाकपृष्ठे विराजति "

( ७ ) " स मोदेत त्रिविष्टपे "

तथा,

( ८ ) " अपुनर्भवभूपोराशीर्मन्त्रः "

१५ ( ० ) " रात्रिः स्वमेतत्पुण्यान्तम् "

( १० ) " यत्पुराणमाकाशं तत्र मे स्थानं कुर्वन्न पुनर्भवाय "

( ११ ) " यद्गत्वा ननिवर्तन्ते तद्धाम परमं मम " गी० ८—२१ ।

मोक्षधर्मे,

( १२ ) " श्रुतिप्रमाणागममङ्गलैस्तु युक्ते जरामृत्युभयादतीतः ।

२० तनौ निमित्ते च फले विनष्टे अलिङ्गमाकाशमलिङ्ग एषः " ॥ भा० मो० । वैष्णवे,

( १३ ) " एकान्तिनस्सदा ब्रह्म ध्यायन्ते योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः " वि० पु० १-६-३९ ।

ब्राह्मे,

२५ ( १४ ) " यतत्र किञ्चिदित्युक्तं महाव्योम यदुच्यते " ब्राह्मे० । इत्यादि यदुक्त्वा,

भा०–(१५)"तन्मोक्षस्तत्परं तेजो विष्णोरिति विनिश्चयः "ब्रा०। श्रीवाराहे अगस्त्यम्प्रति भगवान्,

( १६ ) " पश्यलोकमिमं मह्यम् यो न वेदैस्तु दृश्यते । त्व त्प्रियार्थमयं लोको दर्शितस्ते द्विजोत्तम " ॥ वाराहे।

अगस्त्यः,

( १७ )"भगवंस्त्वन्मयो लोकः सर्वलोकवरोत्तमः।सर्वलोका मया दृष्टा ब्रह्मशक्रादिनाम्मुने ॥ अयंत्वपूर्वलोको मे प्रतिभाति तपोधन। संप- दैश्वर्यतेजोभिर्हर्म्यै रत्नमयैस्तथा ॥ अद्यापि तं लोकवरं ध्यायंस्तिष्ठामि सुव्रत । कदा प्राप्स्येत्वसौ लोकः सर्वलोकवरोत्तमः "॥ इति. वाराहे । १०

( १८ ) " इतिचिन्तापरोभवम् " । वाराहे।

इत्यादि. ऋग्विधौ,

(१९)"कार्याणांकारणंपूर्वंवचसांवाच्यमुत्तमम्।योगानां परमां सिद्धिं परमं ते पदं विदुः " ॥इति. ऋग्विधौ– जि० ७ श्लो० । आरण्यपर्व- णि आर्ष्टिषेणः, १५

( २० )" यमाहुः,सर्वभूतानां प्रकृतेःप्रकृतिं ध्रुवाम् । अनादिनिधनं देवं प्रभुं नारायणं परम् ॥ ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते "। भा० आर० ५०।

इत्यादिना तत्पदं बहुधा विशेष्य,

( २१ ) "तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत।स्थानमेतन्महा- २० राज ध्रुवमक्षरमव्ययम् ।। ईश्वरस्य सदा ह्येतत् प्राणमात्रं युधिष्ठिर "। इति. भा० आर० ५०।

श्रीहरिवंशे, वैदिकपुत्रानयने भगवान्,

( २२ )"ब्रह्मतेजोमयं दिव्यमाश्चर्यं दृष्टवानसि।अहं स भरतश्रेष्ठ मत्ते- जस्तत्सनातनम्॥प्रकृतिस्सा मम परा व्यक्ताव्यक्ता च भारत।तां प्रविश्य २५ भवन्तीह मुक्ता भरतसत्तम ॥ सा सांख्यानां गतिः पार्थ योगिनां च तप- स्विनाम् । तत्परं परमं ब्रह्म सर्वं विभजते जगत् " ॥भा० हरि०।

भा०—इत्यादि. ब्रह्मसंहितायाम्, तत्त्वक्रममुक्त्वा,

( २३ ) " हृत्पद्मकर्णिकान्तस्थः पुरुषः सर्वतोमुखः । सर्वज्ञः सर्वगः सर्वस्सर्वमावृत्य तिष्ठति ॥ तस्मात्तु परमं सूक्ष्ममाकाशं भाति निर्म-
५ लम् । शुद्धस्फटिकसंकाशं निर्वाणं परमं पदम् ॥ तत्पदं प्राप्य तत्त्वज्ञा मुच्यन्ते च शुभाशुभात् । त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः । भूयस्ते नैव जायन्ते न लीयन्ते च ते क्वचित् " । ब्रह्मसंहि० । इत्यादिप्रसिद्धेः.

अस्मिन् परमपदे अयोध्या अपराजिता पुरी, अपराजितमायतनम्,
१० सहस्रस्थूणादिपरिकरं दिव्यास्थानरत्नं, तत्र पर्यङ्के " श्रियासनाथः " इत्याद्यनन्तं मुक्तभोग्यं छान्दोग्य तैत्तिरीय कौषीतकी, प्रभृतिप्रसिद्धमनुसन्धेयम्. ❀

---

निर्व०—( १ )"ज्ञा, अवबोधने " धा० क्र्यादिः कौ० पृ० ४७७
( २ ) " आतोऽनुपसर्गे कः " ३ । २ । ३ ॥ कौ० पृ० ५७०
१५ इति कः.
( ३ ) " आतोलोप इटि च " ६ । ४ । ६४ ॥ कौ० पृ० ४२३
इति क्ङिदिटोर्विधीयमान आल्लोपः.
( ४ ) " क्षि, क्षये " धा० भ्वादिः कौ० पृ० ३९२
( ५ ) " क्षि, निवासगत्योः " धा० तुदादिः कौ०पृ० ४६८
२० इति तुदादिर्वा.
( ६ ) " सर्वधातुभ्यः ष्ट्रन् " उणादिः चतुर्थपादः कौ०पृ० ६३९
इति ष्ट्रन्.
( ७ ) "षः प्रत्ययस्य " १ । ३ । ६ ॥ कौ० पृ० ९३
इति षस्य इत्यादि. टवर्गस्तवर्गजः. इत्थमुत्तरत्रापि( स्तोत्रमित्यादौ )
२५ [illegible] अनिट्. ❀

{२६५ / ४८३} ( १७ ) अक्षरः एवच. ॥

ॐ अक्षराय नमः ।

भा०— तत्र मुक्तैस्सदानुभूयमानोपि मधूत्सवन्निस्सीमगुणोन्मज्जनेन उपर्युपरि भोग्यतयोपचीयते, नतु क्षरतीति— ५
( अक्षरः). पचाद्यच्.विक्रमः, सुरानन्दः इत्यादयोऽजन्ताः
( १ )" निरवद्याः परप्राप्तेः निरविष्ठोक्षरक्रमः।इति.शारीरके चतुर्थाध्याये अनेनैव क्रमेण मोक्षो निरणायि. नचैषोध्यायः अर्वाचीनफलविषयःकल्प्यः, तत्साधनादिविषयाणां पूर्वेषामपि त्रयाणामध्यायानांतदुदाहृतानामुपनिषदां स्मृतीतिहासादीनां च अर्वाचीनविषयत्वेन बहिः १० शास्त्रं मोक्षनिर्णयप्रसङ्गात्, इत्थं ( मुक्तानांपरमागतिः ). ❋

निर्व०— तत्र, मुक्तैस्सदानुभूयमानोपि निस्सीमगुणोन्मज्जनादुपचीयते, नतु क्षरतीति—
( अक्षरः ).
( १ ) " क्षर, संचलने " धा० भ्वादिः कौ० पृ० ४११ १५
" पचाद्यच्.नञ्समासः. ❋ नञो नलोपः . संहितायाम्,
( २ ) अतोरोरप्लुतादप्लुते " ६।१। ११३॥ कौ० पृ० २७
इति रोरुत्वम्.
( ३ ) " आद्गुणः " ६।१। ८७॥कौ० पृ० ११
( ४ ) " एङः पदान्तादति " ६।१। १०९॥कौ०पृ०१५ २०

निरु०—१७ सदानुभूयमानोपि निस्सीमगुणगौरवात्।
मुक्तैः कचिन्नक्षरती ( त्यक्षरः ) परिकीर्तितः ॥११॥

१ नैवमेपमोक्षो।

भा०—इत्यादि. ब्रह्मसंहितायाम्, तत्त्वक्रममुक्त्वा,

( २३ ) " हृत्पद्मकर्णिकान्तरस्थः पुरुषः सर्वतोमुखः । सर्वज्ञः सर्वगः सर्वस्सर्वमावृत्य तिष्ठति ॥ तस्मात्तु परमं सूक्ष्ममाकाशं भाति निर्म-
५ लम् । शुद्धस्फटिकसंकाशं निर्वाणं परमं पदम् ॥ तत्पदं प्राप्य तत्त्वज्ञा मुच्यन्ते च शुभाशुभात् । त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः । भूयस्ते नैव जायन्ते न लीयन्ते च ते कचित् " । ब्रह्मसंहि० ।
इत्यादिप्रसिद्धेः.

अस्मिन् परमपदे अयोध्या अपराजिता पुरी, अपराजितमायतनम्,
१० सहस्रस्थूणादिपरिकरं दिव्यास्थानरत्नं, तत्र पर्यङ्के " श्रियासनाथः " इत्याद्यनन्तं मुक्तभोग्यं छान्दोग्य तैत्तिरीय कौषीतकी, प्रभृतिप्रसिद्धमनुसन्धेयम्. ❀

---

निर्व०—( १ ) "ज्ञा, अवबोधने " धा० क्र्यादिः कौ० पृ० ४७७

( २ ) " आतोऽनुपसर्गेकः " ३ । २ । ३ ॥ कौ० पृ० ५७०
१५ इति कः.

( ३ ) " आतोलोपइटि च " ६ । ४ । ६४ ॥ कौ० पृ० ४२३
इति क्ङिदिटोर्विधीयमान आल्लोपः.

( ४ ) " क्षि, क्षये " धा० भ्वादिः कौ० पृ० ३९२

( ५ ) " क्षि, निवासगत्योः " धा० तुदादिः कौ०पृ० ४६८
२० इति तुदादिर्वा.

( ६ ) " सर्वधातुभ्यःष्ट्रन् " उणादिः चतुर्थपादः कौ०पृ० ६३९
इति ष्ट्रन्.

( ७ ) " षःप्रत्ययस्य " १ । ३ । ६ ॥ कौ० पृ० ९३
इति ष इत्, इत्यादि. टवर्गस्तवर्गजः. इत्थमुत्तरत्रापि( स्तोत्रमित्यादौ )
२५ तप्रतनः गुणः. अनिट्. ❀

{३६५ / ४८३} ( १७ ) अक्षरः एवच. ॥

ॐ अक्षराय नमः ।

भा०—तत्र मुक्तैस्सदानुभूयमानोपि मधूत्सवन्निस्सीमगुणोन्मज्जनेन उपर्युपरि भोग्यतयोपचीयते, नतु क्षरतीति— ५

( अक्षरः ). पचाद्यच्.विक्रमः, सुरानन्दः इत्यादयोऽजन्ताः

( १ )" निरवद्याः परप्राप्तेः निरविष्ठोक्षरक्रमः।इति.शारीरके चतुर्थाध्याये अनेनैव क्रमेण मोक्षो निरणायि. नचैषोध्यायः अर्वाचीनफलविषयःकल्प्यः, तत्साधनादिविषयाणां पूर्वेषामपि त्रयाणामध्यायानांतदुदाहृतानामुपनिषदां स्मृतीतिहासादीनां च अर्वाचीनविषयत्वेन बहिः १० शास्त्रं मोक्षनिर्णयप्रसङ्गात्, इत्थं ( मुक्तानांपरमागतिः ). ❋

निर्व०— तत्र, मुक्तैस्सदानुभूयमानोपि निस्सीमगुणोन्मज्जनादुपचीयते, नतु क्षरतीति—

( अक्षरः ).

( १ ) " क्षर, संचलने" धा० भ्वादिः कौ० पृ० ४१९ १५

" पचाद्यच्.नञ्समासः. ❋ नञो नलोपः . संहितायाम्,

( २ ) अतोरोरप्लुतादप्लुते " ६।१।११३॥ कौ० पृ० २७ इति रोरुत्वम्.

( ३ ) " आद्गुणः " ६।१।८७॥कौ० पृ० ११

( ४ ) " एङः पदान्तादति " ६।१।१०९॥कौ०पृ०१५. २०

निरु०—१७ सदानुभूयमानोपि निस्सीमगुणगौरवात् ।
मुक्तैः कचिन्नक्षरतो ( त्यक्षरः ) परिकीर्तितः ॥११॥

¹ नैवमेषमोसौ।

श्लोकः ॥ ३ ॥ ( १८ ) योगो,

ॐ योगाय नमः ।

भा०— अस्यैव निरुपाधिकमुक्त्युपायत्वमपि वक्ति ;—

५ ( योगः )— युज्यते प्राप्यते अनेनेति,

( १ ) " अकर्तरिचकारकेसंज्ञायाम् " ३।३।१९॥ कौ० पृ०६४७

इति घञ्, एवम् अमोघ[१६६]:, [१६७]सर्गः इत्यादीनि घञन्तानि.सायुज्यस्यानन्यापेक्षः, साक्षाद्धेतुरित्यर्थः . ❀

निर्व०— इति पूर्वरूपमेकादेशः . ( एवे )त्यवधारणे . ( चः ) समुच्चये-

१० एवमन्यत्रापि ( अन्नादएवचेत्यादौ ) दार्ढ्याय. संहितायाम्, सोरुत्वे,

( ५ ) " भोभगोअघोअपूर्वस्ययोऽशि " ८।३।१७॥ कौ० पृ०२७

इति रोर्यत्वम् . आवसानिके विसर्गे ततः संहितायां तु,

( ६ ) " रोरि " ८।३। १४॥ कौ० पृ० २८

इति समुदायाश्रयस्य तस्य अनल्विधित्वेन'

१५ ( ७ ) " स्थानिवदादेशोनल्विधौ " १।१। ५६॥ कौ पृ० ८

इति स्थानिवत्त्वाद्वा,

( ८ ) " लोपः शाकल्यस्य " ८।३। १९॥ कौ० पृ० ११

इति पाक्षिको यलोपः.तस्यासिद्धत्वान्नस्वरसन्धिः.एवं तत्रतत्राप्यूह्यम्.

स्यस्यैव निरुपाधिकमुक्त्युपायत्वात्, युज्यते. प्राप्यते अनेनेति—

२० ( योगः ).

( ९ ) " युजिर्, योगे " धा० रुधादिः कौ० पृ० ४७१

( १० ) " अकर्तरिचकारकेसंज्ञायाम " ३।३।१९॥कौ०पृ०६४७

नि०—१८ उक्तं हि मुक्तप्राप्यत्वमथोपायत्वमुच्यते।

साक्षान्मोक्षैकहेतुत्वात् ( योग ) इत्यभिधीयते ॥१२॥

( १९ ) योगविदांनेता,

ॐ योगविदांनेत्रे नमः.

भा०—( १ ) " एषह्येवानन्दयाति " तै०आ० २—७—१।
( २ ) " तद्धेतुव्यपदेशाच्च " ब्र० सू० १—१—१५। ५
( ३ ) "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि " गी० १८—६६।
इति. व्यवहितोपायनिष्ठानामपि—
( योगविदांनेता ),
नयतेस्तृच्,
भर्ता, धाता" इत्यादयोपि तृजन्ताः. फलपर्यन्तनिर्वाहकः. १०
( ४ ) " तेषामेवानुकम्पार्थम् " गी० १०—११।
( ५ ) तेषामहंसमुद्धर्ता " गी० १२—७।

निर्व०— इति करणे घञ्.नच ल्युटा बाधः, बाहुलकात्. यद्वा,
( ११ )"करणाधिकरणयोश्च " ३। ३। ११७॥कौ०पृ०६६२
इत्यनुवृत्तौ, १५
( १२ " हलश्च " ३। ३। १२१॥ कौ० पृ० ६६३
इति घञ्. गुणः.
( १३ )"चजोः कुघिण्यतोः" ७। ३।५२ ॥कौ०पृ० ५६०
इति घिति कुत्वेन जस्य गः. ❋
व्यवहितोपायनिष्ठानामपि योगविदां,नेता.फलपर्यन्तनिर्वाहकइति— २०
( योगविदांनेता ).
( १ ) " णीञ्, प्रापणे " धा०भ्वादिः कौ० पृ० ४२३
( २ ) " णोनः " ६। १। ६५॥ कौ०पृ० ३८६
इति णस्य नः,

निरु०—१९ उपायशक्तिनिष्ठा ये ते च योगविदः स्मृताः। २५
तेषां च फलपर्यन्ते नेता निर्वाहकश्च यः ॥ १४ ॥

## (२०) प्रधानपुरुषेश्वरः।

ॐ प्रधानपुरुषेश्वराय नमः।

भा०—(६) " संसारपारंपरमीप्समानैराराधनीयो हरिरेक एव "
५ (७) " परामृतात्परिमुच्यन्ति सर्वे " मु० उ० ३–२–६।
(८) " जुष्टस्ततस्तेनामृतत्वमेति " इति श्वे० उ० १–६। ❋
इदमेवोपपाद्यते. (प्रधानपुरुषेश्वरः),-
प्रधानस्य- बन्धहेतोः, पुरुषाणां च

निर्व०—(३) " ण्वुल्तृचौ " ३।१।१३३॥कौ पृ० ५६६
१० इति तृच्. अनिट्. गुणः. सौ,
(४) " ऋदुशनस्पुरुदंसोऽनेहसांच " ७।१।९४॥कौ० पृ० ४७
इत्यनङ्.
(५) " अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् "
६।४।११॥कौ० पृ० ४७
१५ इत्युपधादीर्घ इत्यादि.
(६) " विद, ज्ञाने' धा० अदादिः कौ० पृ० ४४३
(७) " सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेपिक्विप् "
३।२।६१॥ कौ० पृ० ५८०
इति; अस्य प्रपञ्चार्थत्वात्,
२० (८) " क्विप्च " ३।२।७६॥ कौ० पृ० ५८१
इतिवा क्विप्.योगशब्दो ध्युत्पादितः.इह परमचेतनःकर्मेति विशेषः.
ततः.आम्. संहितायामनुस्वारे पाक्षिकः परसवर्णः ❋ इदमेवोपपाद्यते.
प्रधानस्य-बन्धहेतोःप्रकृतेः,पुरुषाणां च बध्यमानानां जीवानामीश्वरः-
सर्वथा नियामक इति–
२५ (प्रधानपुरुषेश्वरः).

निरु०—२० बन्धहेतोः प्रधानस्य बध्यमाननृणां च यः।
नियामकस्सर्वदा स (प्रधानपुरुषेश्वरः)॥ १५॥

भा०—वध्यमानानां, सर्वथा नियामकः.
(१) " स्थेशभास० " ३।२।१७५॥ कौ० पृ० ६०६
इत्यादिना वरच्. एवं स्थाविरः; यथा,
(२) " संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः। ५
अनीशश्चात्मा वध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः " ॥
श्वे० उ० १—८।
(३) " प्रधानक्षेत्रज्ञपतिर्गुणेशः " श्वे० उ० ६—१६।
(४) " क्षरात्मानावीशते देव एकः " इति.श्वे०उ० १—१०।
एवम्, ईश्वरो हि स्वमायया जीवानपराध्यतो वध्नन्, प्रपद्यमानांश्च मु- १०
ञ्चन् क्रीडितुं प्रभवति,
(५) " ईश्वरस्सर्वभूतानाम् " याज्ञिकोप०—नारा०—अनु०—२१।
(६) " दैवीह्येषा गुणमयी " गी० ७—१४।
(७) " दैवी देवस्य क्रीडतः "
(८) " क्रीडनकम् " १५
(९) " संसारमोक्षस्थितिबन्धहेतुः "

---

निर्व०—(१) " ईश, ऐश्वर्ये " धा० अदादिः कौ०पृ० ४३८
(२) " आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु " ३।२।१३४॥
कौ०पृ० ६०१ इत्यधिकारे,
(३) " स्थेशभासपिसकसोवरच् " ३।२।१७५॥ कौ०पृ० २०
६०६ इति ताच्छील्ये वरच्.
(४) " नेड्वशि " ७।२।८॥ कौ० पृ० ५८१
इति नेट्.
(५) " पुर, अग्रगमने " धा० तुदादिः कौ० पृ० ४६६
(६) " पुरः कुषन् " उणादिः चतुर्थपादः कौ० पृ० ६३५ २५
इति कुषन् कित्वादगुणः.

(२१) नारसिंहवपुश्,

ॐ नारसिंहवपुषे नमः।

भा०— श्रीविष्णुतत्त्वे,
५ (१०) "तत्कृतायास्तु मायायास्तत्प्रसादं विना क्वचित् । नास्ति निर्णाशने हेतुः संक्षिप्यैतत्प्रभाषितम्" इति. ॥ वि० त० ।
(११) "पराभिध्यानात्तु तिरोहितम् ततो ह्यस्य बन्धविपर्ययौ" ब्र० सू० ३—२—४।
(१२) "देहयोगाद्वासोपि" ब्र० सू० ३—२—५।
१० इतिच सूत्रे ताच्छील्यविषयेण वरचा तत्त्वत्रयभेदः ईश्वरेशितव्यभावश्च अनौपाधिको ज्ञाप्यते. ❀ स्वभक्त्यन्तरायनिवारणमपि प्रदर्शयति; (नारसिंहवपुः)—भक्तभयापहनदपेक्षासमक्षणप्रतिपन्नयथाकामदिव्यमहान्नृसिंहसंहननः. ❀

निर्व०— (७) "डुधाञ्, धारणपोषणयोः" धा० जुहोत्यादिः कौ० १५ पृ० ४५१ प्रवृत्तः.
(८) "करणाधिकरणयोश्च" ३।३।११७॥ कौ० पृ० ६६२ इति ल्युट्,ल इत.
(९) "युवोरनाकौ" ७।१।१॥ कौ० पृ० २३३ इति योग्नः. दीर्घः. संहितायाम् ,❀ आद्गुणः ❀स्वभक्त्यन्तरा-
२० यनिवारणमपि प्रदर्श्यते. नारसिंह—नरसिंहसंबन्धि,वपुः—शरीरम्,अ-स्येति— (नारसिंहवपुः.)
(१) "टुवपु, बीजसंताने" धा० भ्वादिः कौ० पृ० ४३२

निरु०— २१ नरवत् सिंहवद्यो नित्यर्त्तमपरम्।
यथाकामं तु भक्तानां (नारसिंहवपु) श्च सः॥ १६॥

निर्व०—( २ ) " जनेरुसिः " उणादिः द्वितीयपादः कौ० पृ० ६२४ इति वर्तमाने,

( ३ ) " अर्तिपृवपियजितनिधनितपिभ्योनित् " उणादिः द्वितीयपादः कौ० पृ० ६२४ इत्युसिर्नित्. नित्त्वात्, ५

( ४ ) "ञ्नित्यादिर्नित्यम्" ६। १। १९७॥ कौ० पृ० ७२५ इत्याद्युदात्तत्वम्.

( ५ ) " पिच, क्षरणे " धा० तुदा० कौ० पृ० ४७०

( ६ ) धात्वादेः षस्सः " ६। १। ६४॥ कौ० पृ० ३८३ इति षस्य सः. सिचेः संज्ञायाम्, १०

( ७ ) " हनुमौकश्च " उणादिः पा० ५ कौ० पृ० ६४४ इति कः. कित्त्वान्न गुणः. होन्तादेशः. नुम्च,

( ८ ) " मिदचोन्त्यात्परः " १। १। ४७॥ कौ० पृ० ७ इति मित्त्वादन्त्यादचः परः. नुमा चानुस्वारो लक्ष्यते.

( ९ ) " रीङ्, श्रवणे " धा० दिवादिः कौ० पृ० ४५४ १५
"रि, क्षि, हिंसायाम्" धा० स्वादिः कौ० पृ० ४६३
"री, गतिरेषणयोः " धा० क्र्यादिः कौ० पृ० ४७६

(१० "अन्येष्वपि दृश्यते "३। २। १०१॥ कौ० पृ० ५८५ इत्यपिशब्दात् सर्वोपाधिव्यभिचारार्थात् डः. डित्त्वाट्टिलोपः. नञो नशब्दस्य वा समासः. पूर्वत्र, २०

( ११ )" नभ्राणनपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषुप्रकृत्या " ६। ३। ७५॥ कौ० पृ० १४८ इत्यस्योपलक्षणत्वान्नलोपाभावः.अपरत्रतु,नयत्नःअप्राप्तेः.द्वन्द्वः.ततः,

( १२ ) " तस्येदम् " ४। ३। १२०॥कौ० पृ० २७१इत्यण्.

( १३ ) " तद्धितेष्वचामादेः " ७। २। ११७॥ कौ० पृ० २०४ इत्यादिवृद्धिः. २५

( १४ ) " यस्येतिच " ६। ४। १४८॥ कौ० पृ० ५६ इति लोपः ततः, बहुव्रीहिरित्यादि. ❋

{१८०
२२२} (२२) श्रीमान्,

ॐ श्रीमते नमः।

भा०— अतः परस्परदुर्घटापूर्वविकृतरूपपरिग्रहादपि ( श्रीमान् ) —सौ-
५ न्दर्यलावण्यादिभिरतिमनोहरदिव्यरूपः. तत्र, नृसिंहत्वयोः सुघटित-
त्वम् पश्यताम्, शुद्धिमदन्यन्नृमात्रं सिंहमात्रं वा दृष्ट्वा जुगुप्सा जाये-
तापि, तादृग्रूपपरिग्रहमात्रेणैव हि जगत् त्रातम्;
( १ )"दंष्ट्राकरालं सुरभीतिनाशनं कृत्वा वपुर्दिव्यनृसिंहरूपिणा। त्रा-
तं जगद्येन" इति. ❀

१० निर्व०—विकृतरूपपरिग्रहेपि दिव्यरूपतया, श्रीः लक्ष्मीरस्यास्ति, अस्मि
न्वेति–( श्रीमान् ).
( १ ) " श्रिञ्,सेवायाम्" धा० भ्वादिः कौ० पृ० ४२२
( २ ) "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणाम्दीर्घोऽसंप्रसारणंच"
३।२। १७८॥ कौ० पृ० ६०७
१५ इति क्विपि दीर्घे च निष्पन्नात् श्रीशब्दात्,
( ३ ) " तदस्यास्त्यस्मिन्निति मतुप्"५।२।९४॥कौ०पृ० ३२५
इति मतुप्.
( ४ ) " अत्वसन्तस्यचाधातोः" ६।४।१४॥ कौ० पृ०७८
इत्यत्वन्तत्वात्, असम्बुद्धौ सौ उपधादीर्घः.
२० ( ५ ) " उगिदचांसर्वनामस्थानेऽधातोः"७।१। ७०॥कौ० पृ०६५
इतिनुम्.
( ६ ) " संयोगान्तस्यलोपः" ८।२। २३॥ कौ० पृ० ९
इति तलोपः. तस्यासिद्धत्वात् नलोपो न. नाम्नोरसंहितायाम्,
( ७ ) " स्तोःश्चुना श्चुः" ८।४। ४०॥ कौ० पृ० १८
२५ इति श्चुत्वेन सस्य शः. ❀

निरु०—२२ विरुद्धाकारवत्त्वेपि ( श्रीमान् ) सर्वमनोहरः।

१शुद्धमन्यन्नृमात्रम्।

२३ } केशवः,(२४ ) पुरुषोत्तमः,॥
६५४ }

ॐ केशवाय नमः। ॐ पुरुषोत्तमाय नमः।

भा०– एवंविधैश्वर्यसौन्दर्यैकान्तलक्षणान्युपलक्षयति,(केशवः). ५
शस्तस्निग्धनीलकुटिलकुन्तलः.

( १ ) "केशाद्वोऽन्यतरस्याम्"५।२।१०९॥कौ०पृ० ३२८

इति प्रशंसायां वः.॥ सालक्षण्यप्रसक्त्या परमं वैलक्षण्यमाह;
पुरुषोत्तमः ) पुरुषेभ्यः उत्कृष्टतमः.(पुरुष )शब्देन चेतनवाचिना, अ
वेतयमाना व्यक्ताव्यक्तरूपा प्रकृतिः व्यावर्त्यते. (उत्) इत्युत्कृष्टवाचि-
या बद्धाः. साम– १०

निर्व०–एवं विश्वसौन्दर्यैश्वर्योपलक्षका लक्ष्यन्ते.तत्र सौन्दर्योपलक्ष-
काः प्रशस्ताः केशाः अस्य सन्ति अस्मिन्वेति–( केशवः ).

( १ ) " क्लिश,उपतापे" धा० दिवादिः कौ० पृ० ४५५

( २ )"क्लिशू,विबाधनेवा" धा० क्र्यादिः कौ० पृ० ४७८

( ३ )"क्लिशेरन्लोलोपश्च"उणादिःपञ्चमपादःकौ० पृ० ६४३ १५

इति अन्, ललोपश्च.लघूपधगुणः.इत्थं परिनिष्ठितात् केशशब्दात्,

( ४ ) "केशाद्वोऽन्यतरस्याम्"५।२।१०९॥कौ० पृ० ३२८

इति मत्वर्थे प्रशंसायां वः.॥ अथ, ऐश्वर्यसूचकं प्रकृतिबद्धमुक्त-
नित्यवैलक्षण्यं विविच्यते. पुरुषेषु, तेभ्यो वा, उत्तमः उत्कृष्टतम इति
( पुरुषोत्तमः ).उच्छब्दादुत्कृष्टवाचिनः, २०

निरु०–२३ प्रशस्तनीलकेशत्वात्( केशवः )परिकीर्तितः॥१७॥
२४ बद्धादिपुरुषेभ्यो यो ह्युत्कृष्टः ( पुरुषोत्तमः )।

भा०—र्थ्यप्रतेन तरसा मुक्ताः. (तम ) वा नित्यमुक्ताः सूरयोनन्त-
वैनतेयादयःइदं च तेभ्यो वैलक्षण्यम् अवव्यप्रतिभटतया व्यापनभरणाद्यु
पकारैः स्वाम्येन च स्वभावत एवोत्कर्षात्.इदं हि बहुभिस्तात्पर्यलिङ्गैः
५ परमं गुह्यमगीयत,

( १ ) " द्वाविमौ पुरुषौ लोके" गी० १५—१६।

इत्यत्र,

( २ ) " भूमिरापो नलो वायुः" गी० ७—४।

( ३ ) " यो मामजमनादिं च" गी०१०—३।

१० ( ४ ) " अविकाराय शुद्धाय" ॥ सहस्रनाम्नि.॥

( ५ ) " परःपराणांपरमः" वि० पु० १—२—१०।

इत्यादि बह्विद परं द्रष्टव्यम्.अत्रापि भोक्तृभोग्यनियन्तॄणामत्यन्तभेद-
स्स्पष्टः; अतः ब्रह्मपरिणामपक्षश्च प्रतिक्षिप्तः, ब्रह्मणः सर्वविकारस्य
ब्रह्मसंसारस्येश्वरातिरिक्तब्रह्मसद्भावस्याव्यक्तमुक्तेश्वराणां ब्रह्मणि प्रल-
१५ योत्पत्त्योश्चाभ्युपगमो हि यथोक्तपुरुषोत्तमत्वेन सर्वेण वेदसिद्धान्तेन
च विरुध्यते. ❀

---

निर्व०—( १ )"अतिशायनेतमबिष्ठनौ"५।३।५५॥कौ०पृ०३४०
इत्यातिशायनिकस्तमप्.

( २ ) " खरिच" ८।४।५५॥ कौ० पृ० २०

२० इति चर्त्वम्. दस्य तः. व्युत्पत्तितोहि पुरुषशब्दः. सहितायाम्,

( ३ ) " आद्गुणः" ६।१।८७॥ कौ० पृ० ११

भाव्यमपुन नागोत्तमादिवत् समासः. ❀

---

१नित्यास्सूरयो।

श्लोकः ॥ ४ ॥ ( २५ ) सर्वश्,

ॐ सर्वाय नमः ।

भा०—एवं सर्वनिर्व्यपेक्षोप्यनुपेक्षमाणः सर्वं स्वरूपस्थित्यादिभिः स्वनिर्वाह्यतया शरीरमिवात्माऽनुसन्धत्ते; अतः ( सर्वः ) सरतेः, ५

( १ ) "इण् शीभ्यांवन्" उणादिः प्रथमपादः कौ० पृ० ६१७

( २ ) "सर्वनिघृष्व" उणादिः प्रथमपादः कौ० पृ० ६१७

इत्यादिना, सरत्यवयवानित्यर्थे वन्प्रत्ययः सरतिः गत्यर्थत्वादत्र-बुध्यर्थः,

( ३ ) "असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः । सर्वस्यच सदा-ज्ञानात् सर्वमेनं प्रचक्षते" भा०उ० ७०—१३ । १०

इति निर्वचनात्.ईदृशी व्याप्तिरेव सर्वसामानाधिकरण्यनिबन्धनमुक्तम्,

( ४ ) "येनसर्वमिदं प्रोतम्" तै० ना० ६—५० ।

इत्यारभ्य,

( ५ ) "सर्वैसर्वमिदम्" तै० ना० ६—५० । १५

इति श्रुतेः;

( ६ ) "सर्वं समाप्नोषि ततोसि सर्वः" इतिच ❀

निर्व०— एवं सर्वनिर्व्यपेक्षोपि अनुपेक्षमाणः स्वनिर्वाह्यतया शरीरमिवात्मा अवयवान् सरति गच्छति अनुसन्धत्ते इति—

(सर्वः ). २०

( १ ) "सृ,गतौ" धा०भ्वादिः कौ० पृ० ४२५

( २ ) "सर्वेगत्यर्थाः ज्ञानार्थाः" इति,अत्रायं बुध्यर्थः.

( ३ ) "शीङिण्सृकृगृशृदृभ्योवन्" सर्वनिघृष्व०उणादिः प्रथम-पादः कौ० पृ० ६१७ इति वन्.अनिट्.गुणः रपरः, ❀

निरु०—२५ चराचरशरीरेषु व्याप्तिमान् ( सर्व )ईरितः ॥१८॥ २

( २६ ) शर्वः, { २७ / ६०७ } शिवम्

ॐ शर्वाय नमः । ॐ शिवाय नमः।

भा०—स्वशरीरभूतानम् अशुभमपि शृणातीति—
५ ( शर्वः ).
पूर्ववत्वः. ❀
शुभावहश्च, ( शिवः );
शीङः शुभार्थत्वात्.
( १ )"सर्वनिघृष्वरिष्वलष्वशिव०"उणादिःप्रथमपादःकौ०पृ०६१७
१० इत्यादिना वन्प्रत्ययः, ह्रस्वत्वम, गुणाभावश्च निपात्यते; यथा,

निर्व०—स्वशरीरभूतानामशुभं शृणाति. हिनस्तीति—
( शर्वः ).
( १ ) "शृ,हिंसायाम" धा०क्र्यादिः कौ० पृ०४७६
पूर्ववत.पूर्वोक्तसूत्रेण वनादि."कॄगॄशॄद्भ्योवः"उणा०पादः१कौ०पृ०
१५ ६१८
( २ ) " नेड्वशिकृति" ७।२।८॥ कौ० पृ० ५८१
इति नेट्.नाम्नोस्संहितायां सस्य रुत्वे,खरि,विसर्गस्य,
( ३ ) " वाशरि" ८।३।३६॥ कौ० पृ० २४
इति पाक्षिको विसर्गः. तदभावे, ❀ विसर्जनीयस्य सः. श्चुत्वम्-एवम-
२० न्यत्रापीदृशे ( स्वयंभूश्शम्भुरित्यादौ ) प्रदेशेऽवधेयम्. ❀ तेषां शुभा-
वहतया शेरते ते अस्मिन्निति—( शिवः ).
( ४ ) " शीङ्,स्वप्ने" धा०अदादिः कौ०पृ० ४३८
धातूनामनेकार्थतया,शीङत्र शुभार्थः.नङीजंच,

निरु०—२६ स्वशरीरजगद्दुःखं ( शर्व ) स्स स्याच्छृणाति यः।
२५ २७ शुभावहत्वाद्भक्तानां ( शिव ) इत्यभिधीयते ॥ १९ ॥

{ २८ / ४२८ } स्थाणु-

ॐ स्थाणवे नमः ।

भा०—( २ ) " शाश्वतं शिवमच्युतम् " तै० ना० ११-३

( ३ ) " स्मृते सकलकल्याणभाजनम् " वि० ध० ।

( ४ ) मङ्गलं भगवान् विष्णुः

( ५ ) " मङ्गलायतनं हरिः "

( ६ ) " मङ्गलानां च मङ्गलम् " भा० आनु० १४९—१० ।

( ७ ) " मङ्गल्यं मङ्गलं विष्णुम् " इत्यादिना. ❀ तत्रच,

( स्थाणुः ) तिष्ठतेः, १०

( १ ) " स्थोणुः " उणादिः तृतीयपादः कौ० पृ० ६२६

---

निर्व०—( ५ ) " कुर्द-खुर्द-गुर्द-गुद-क्रीडायामेव " धा० भ्वादिः कौ० पृ० ३८३

इत्येवकारकरणमित्याद्यवधेयम्.

(६) " सर्वनिघृष्वरिष्वलिष्वशिवपद्मप्रह्वेष्वातन्त्रे " उणादिः प्रथम- १५ पादः कौ० पृ० ६३५

इति धन्,धातोर्ह्रस्वः,गुणाभावश्च,निपात्यते. ह्रस्वविधिसामर्थ्यादेव वा न गुणः,लाघवानादरेणाकृते वा गुणे ह्रस्वो निपात्यः;यतः तदानीमेव ह्रस्वादेश इति एकार इकार एव हि भवति.

( ७ ) " नेड्वशिकृति " ७। २। ८॥ कौ० पृ० ५८१ २०

इति नेट्. ❀ तत्रच दृढानुग्रहस्तिष्ठतीति —( स्थाणुः ).

---

निरु०—२८ संशमय्याशिवं सर्वं विश्राण्यापि शिवं बहु।

स्वयं न विश्राम्यति यः स ( स्थाणुः ) परिकीर्तितः॥२०॥

भा०—इति णुः; दृढानुग्रह इतिभावः. नहि भगवतः स्पर्शः, प्रायश्चित्तादि-
सामान्यधर्मवत्, उपात्तदुरितक्षेपेण, कारीरी, चित्रा, दर्शपूर्णमासादिवत्,
देवतान्तरवद्वा, काम्यमानैककामप्रदानेन वानृणो विरमति; प्रबलैर्वान्त-
५ रायैः प्रतिबध्येत हीयेत अवहियेत वा! किंतु अशेषमाशिवं संशमय्य
अखिलमभिलषितं च बहुमुखं विश्राण्यापि, न जातुचित् विश्राम्यति;
यथा,

( २ ) " एको बहूनां यो विदधाति कामान्" श्वे०उ०६—१३।
( ३ ) " एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्"
१० ( ४ ) " तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम्"
( ५ ) " सकलफलप्रदो हि विष्णुः"
( ६ ) " रत्नपर्वतमारुह्य यथारत्नं नरो मुने। सत्त्वानुरूपमादत्ते यथा
कृष्णान्मनोरथान्"वि०ध०७—३।
( ७ ) " भौमं मनोरथं स्वर्गं स्वर्गिवन्द्यं च यत्पदम्। प्राप्नोत्याराधिते
१५ विष्णौ मुक्तिमप्यतिदुर्लभाम्" ॥ वि०पु० ३—८—६ ।
( ८ ) " यद्दुर्लभं यदप्राप्यं मनसो यदगोचरम् ।तदप्यप्रार्थितं ध्यातो द-
दाति मधुसूदनः"इति. ❁

---

निर्व०—( ८ ) " ष्ठा,गतिनिवृत्तौ"धा०भ्वादिः कौ०पृ० ४२४
षत्त्वः.टवर्गः तवर्गजः.
२० ( ९ ) " स्थाणुः" उणादिः तृतीयपादः कौ० पृ० ६२६
इति णुः.अनिट्. संहितायाम्,
( १० ) "खर्परेशरिवाविसर्गलोपोवक्तव्यः"८।३।३६॥कौ०पृ०२४
इति वा विसर्गलोपः. पक्षे,
( ११ ) " वाशरि" ८।३।३६॥कौ०पृ०२४
२५ इति पाक्षिको विसर्गस्यैव विसर्गः. तदभावे च,
( १२ ) " विसर्जनीयस्यसः "८।३।३४॥कौ०पृ०२२
इत्यमुत्तरत्राप्यनादृत्ये प्रक्रमे ( स्थविष्ठः स्थविर इत्यादौ ) अवधान-
म्यम्. ❁

## (२९) भूतादिः,

ॐ भूतादये नमः ।

भा०—अपिच, स्पृहणीयतमत्वात् भूतैरुपादीयते इति—(भूतादिः).

(१) " उपसर्गेघोः किः" ३।३।९२॥ कौ० पृ० ६५८ एवं सर्वादिः निधिः इत्यादयः.

(२) " किं प्रजया करिष्यामो येषां नोयमात्मा" बृ० उ० ६—४—२२। उपबृंह्यते च,

(३) " एते वयं सर्वसमृद्धकामाः एषामयं नो भविता प्रशास्ता" १० इत्यादिभिः. ❀

निर्व०—अपिच, स्पृहणीयतमत्वात् भूतैरादीयते-उपादीयते इति—(भूतादिः).

(१) " डुदाञ् दाने" धा० जुहोत्यादिः कौ० पृ० ४५१ आङ्पूर्वः. १५

(२) " दाधाघ्वदाप्" १।१।२०॥ कौ० पृ० ४२३ इति घुसंज्ञायाम्;

(३) " उपसर्गेघोः किः" ३।३।९२॥ कौ० पृ० ६५८ इति किः. ❀

(४) " आतोलोपः" ।६।४। ६४॥ कौ० पृ० ४२३ २० भूतशब्दो व्युत्पादितः. संहितायां सवर्णदीर्घः. ❀

निरु०—२९ भूतैर्यः प्राणिभिर्नित्यं स्पृहणीयतमत्वतः ।
उपादानाद्धि (भूतादि) रुच्यते सुन्दराकृतिः ॥२१॥

( ३० ) निधिरव्ययः, ।

ॐ अव्ययाय निधये नमः ।

भा०—अतः, ( निधिरव्ययः ); महालोकेनापद्धनवन्निधेयत्वात्.य-
५ था च,

( १ )" तद्यथा हिरण्यनिधिं निहितम् "इत्यादि. छा०उ०८—३—२।
सर्वदा सर्वथोपजीव्यमानत्वेपि कल्यापि अनुपक्षयात्

( अव्ययः ); निधिविशेषणमेतत् न स्वतन्त्रं नाम; अन्यथा
( अव्ययः,पुरुषः ) इति पौनरुक्त्यात्. ❋

१० निर्व०—अतः,अव्ययः—सर्वदोपजीव्यमानत्वेपि अनुपक्षीणः,अपिघन-
वत्, निधेयतया निधीयत इति निधिः, इति—
( निधिरव्ययः ). सविशेषणमेकं नाम.

( १ )" डुधाञ्, धारणपोषणयोः " धा०जुहोत्यादिः कौ०पृ०४५१
निपूर्वः. प्राग्वत् किप्रत्ययादि. विशेषणे तु,

१५ ( २ )" इण्, गतौ " धा०अदादिः कौ०पृ० ४४१
विपूर्वः.

( ३ )" एरच् " ३। ३। ५६॥ कौ०पृ० ६७३
इतिभावे अच्.अन्यत्तूक्तमेव. ❋

एवं निहितस्याप्यात्मनः, तत्संश्लेषत्वरया अर्थिभ्यः संप्रकाशनाय,
२० समन्तात्, तत्र तत्र देशकालादिषु, भवः मत्स्यकूर्मादिरूपैरभीक्ष्णमावि-
र्भावोस्येति—

निरु०—३० यः सदापद्धनमिव निधेयत्वान्निधिः स्मृतः ।
सदोपभुज्यमानोपि कल्याप्यनुपक्षयात् ॥ २२ ॥

अव्ययः स्यान्निधेस्तद्विशेषणमुदाहृतम् ।
२५ अतो ( ऽव्ययनिधि ) रिति त्वेकनाम प्रकीर्तितम् ॥ २३ ॥

## ( ३१ ) संभवो,

ॐ संभवाय नमः।

भा०—एवं निहितमप्यात्मानं तत्संश्लेष त्वरया अर्थिभ्यःप्रकाशयन्; ( संभवः ); समन्तात् भवो यस्येति, तत्रतत्र सर्वदेशकालादिषु म- ५ त्स्य,कूर्म,वराह,नृसिंह,वामन,राम,कृष्णादिभिः रूपैः एकैकं पुनरु- क्तैरसंख्येयैः अभीक्ष्णमाविर्भवतीत्यर्थः.।यथा,

( १ ) "बहुधा विजायते" पु०सू०२१।

( २ ) "बहूनि मे व्यतीतानि" गी०४—५।

( ३ ) "यदा यदा हि धर्मस्य" गी०४—७। १०

इत्यादि. ❋

एवं संभूयानिष्टनिवारणादिना उज्जीवयतीति—

---

निर्व०—( संभवः ).

( १ ) "भू,सत्तायाम्"धा०भ्वादिः कौ०पृ० ३६८

( २ ) "भावे" ३।३।१८।। कौ०पृ० ६४७ १५

( ३ ) "अकर्तरिचकारकेसंज्ञायाम्" ३।३।१९।।कौ०पृ०६४७

इत्यनुवृत्तौ,

( ४ ) "ऋदोरप्" ३।३।५७।।कौ०पृ०६५३

इतीहभावे अप्.गुणावादेशौ. संपूर्वो बहुव्रीहिः. ❋

एवं संभूयानिष्टनिवारणादिना तान्भावयति उज्जीवयतीति— २५

---

निरु०—३१निधिवच्चातिगूढोपि रामकृष्णादिभिर्यतः।
समन्ताद्बहुधा जातः ( संभवः ) परिकीर्तितः ॥२४ ॥

{ ३६ / ७५ } रीश्वरः, ॥

ॐ ईश्वराय नमः ।

भा०—इति संज्ञायामपि डुः देवाद्यसुकरपदैश्वर्यानुगुणभोगापवर्गादि-
५ फलसमर्पणसमर्थः. स्पष्टं चैतदवदानं चिन्तयन्ती शिशुपालसा
युज्यादिषु ❀
अतः पारमेष्ठ्यादपि जन्मस्वधिकतमप्रयोजनैश्वर्यात्,
( ईश्वरः ); यथा,
( १ ) " मानुषीं तनुमाश्रितम् । परं भावमजानन्तः " गी० ९—११।
१० ( २ ) " भूतानामीश्वरोपि सन् " गी० ४—६ ।
इत्यादि. ❀
निर्व०—इत्यादिना,
( २ ) " कृत्यल्युटः " ३।३।११३॥कौ०पृ०६६२
इत्येव सिद्धि, बहुलवचनात् सर्वेषामपि कृतां धात्वर्थव्यभिचारचिह्नात्
१५ संज्ञायामपि डुः. टिलोपः. ❀
जन्मसु पारमेष्ठ्यादपि अधिकतमप्रयोजनैश्वर्यवत्तया ईष्ट इति—
( ईश्वरः ).
( १ ) " ईश,ऐश्वर्ये " धा०अदादिः कौ०पृ०४३८
( २ ) " स्थेशभास "३।२।१७५॥कौ०पृ०६०६
२० इत्यादिना वरच्.
( ३ ) " नेड्वशिकृति " ७।२।८॥कौ०पृ०५८१
इति नेट्. ❀

निरु०—३६ म[illegible] . प्रभावीश्च प्रयोजने ।
२१ नियन्ता ( त्वी[illegible]
॥२८॥

{ ३५ / ३०० } प्रभु–,

ॐ प्रभवे नमः ।

भा०–( १ ) " अजायमानः " पु० सू० २१ ।

( २ ) "तस्य धीराः परिजानन्ति योनिम्" पु० सू० २१ । ५

( ३ ) " नैपगर्भत्वमापेदे न योन्यामवसत्प्रभुः । आत्मनस्तेजसा कृष्णः सर्वेषां कुरुते गतिम्॥ " भा० सभा० ६२–३५ ।

( ४ ) " अप्रमेयमनाद्यन्तं कामाज्जातमजं नृपु । पाण्डवस्तर्कयामास कर्मभिर्देवसम्मितैः " भा० ।

( ५ ) " जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा १० देहं पुनर्जन्म नैति मामेति सोऽर्जुन " गी० ४–९ । इत्यादि. ❀

एवममन्दपरतन्त्रमनुष्यादिसाम्येनावतरन्नपि, ( प्रभुः ). भवतेः,

( १ ) " बहुलवचनादन्येपि कृतः प्राप्तमभिधेयं व्यभिचरन्ति "

निर्व०–( १ ) " भू, सत्तायाम् " धा० भ्वादिः कौ० पृ० ३६८

( २ ) " ऋदोरप्"३ । ३ । ५७ ॥कौ० पृ० स्वयमेवभवतीति– १५

इत्यादि. प्रपूर्वः. बहुव्रीहिः. ❀

इत्थममन्दपरतन्त्रमनुष्यादिसाधर्म्येण अवतरन्नपि,भोगापवर्गादिफलसमर्पणसमर्थतया प्रभवतीति–( प्रभुः ). प्राग्वत् धातुः.प्रपूर्वः.

( १ ) " विप्रसंभ्यः"३ । २ । १८०॥ कौ पृ० ६०७

निरु०–३५ ब्रह्मादीनां च स्वत्वाद्व्यं

समर्थः ( प्रभु )रित्युक्तः संख्या योसौ भोगमोक्षसमर्पणे। २०

( ३२ ) भावनो, ( ३३ ) भर्त्ता, ( ३४ ) प्रभवः,

ॐ भावनाय नमः। ॐ भर्त्रे नमः। ॐ प्रभवाय नमः।

भा०— ( भावनः ); यथा,

५ ( १ ) " परित्राणाय साधूनाम्" गी० ४—८। इत्यादि. ❋ किंच, तानात्मदानेन तच्छीलः पुष्णातीति—( भर्त्ता ). ❋ अयम्; अस्य भवः प्रकृष्ट इति—( प्रभवः ).

प्रकर्षश्च जन्मनः, अनाघ्रातदोषगन्धत्वेन, स्ववेदनमात्रेण सकलजन्मनिगलनिर्मूलनहेतुत्वेन च देवादिजन्मवैजात्यात्. यथा,

१० निर्व०—( भावनः ). भाग्वत्भातुः. णिच्. वृद्ध्यावादेशौ ❋ नन्यादिल्युः, ल्युड्वा, बाहुलकादित्यादि. योरनः णिलोपः ❋ किंच, तानात्मदानेन, बिभर्ति—तच्छीलः पुष्णातीति—( भर्त्ता ).

( १ ) "डुभृञ्, धारणपोषणयोः" धा० जुहोत्यादिः कौ० पृ० ४५०

( २ ) " तृन्" उणादिः द्वितीयपादः कौ० पृ० ६२३

१५ इति ताच्छीलिकस्तृन्. अनिट्. गुणः रपरः. ततः, ❋ अनडित्यादि ❋ एवं प्रकृष्टो भवः जन्म यस्येति—( प्रभवः ).

निरु०—३२ जनित्वोज्जीवयति यो जनान् स्यात् (भावन) स्तु सः।
३३ यस्मान् पुष्णात्यात्मदानात् स ( भर्त्ता ) परिकीर्तितः ॥२५॥
३४ देवादिजन्मवैजात्यात् प्रकृष्टोत्पत्तिमत्त्वतः।
२० अविद्यादोषवैधुर्यात् ( प्रभवः ) परिकीर्तितः ॥२६॥

१८ निकटीन्दः।

{ ३५ / ३०० } प्रभु–,

ॐ प्रभवे नमः ।

भा०–( १ ) " अजायमानः " पु० सू० २१ ।
( २ ) "तस्य धीराः परिजानन्ति योनिम्" पु० सू० २१ । ५
( ३ ) " नैषगर्भत्वमापेदे न योन्यामवसत्प्रभुः । आत्मनस्तेजसा
कृष्णः सर्वेषां कुरुते गतिम्॥ " भा० सभा० ६२–३५ ।
( ४ ) " अप्रमेयमनाद्यन्तं कामाज्जातमजं नृपु । पाण्डवस्तर्क-
यामास कर्मभिर्देवसम्मितैः " भा० ।
( ५ ) " जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा १०
देहं पुनर्जन्म नैति मामेति सोर्जुन " गी० ४–९ । इत्यादि. ❀
एवममन्दपरतन्त्रमनुष्यादिसाम्येनावतरन्नपि, ( प्रभुः ). भवतेः,
( १ ) " बहुलवचनादन्येपि कृतः प्राप्तमभिधेयं व्यभिचरन्ति "

निर्व०–( १ ) " भू, सत्तायाम् " धा० भ्वादिः कौ० पृ० ३६८
( २ ) " ऋदोरप्" ३ । ३ । ५७ ॥ कौ० पृ० ... १५
इत्यादि. प्रपूर्वः. बहुव्रीहिः. ❀
इत्थममन्दपरतन्त्रमनुष्यादिसाधर्म्येण [illegible]तरन्नपि, भोगापवर्गादिफ-
लसमर्पणसमर्थतया प्रभवतीति–( प्रभुः ). प्राग्वत् धातुः. प्रपूर्वः.
( १ ) " विप्रसंभ्यः " ३ । २ । १८० ॥ कौ पृ० ६०७

निरु०–३५ ब्रह्मादीनां च सर्[illegible]षां भोगमोक्षसमर्पणे । २०
समर्थः ( प्रभु )रित्युक्तः स[illegible]ष्टफलदो मनुः ॥२७ ॥

{३६ / ७५} रीश्वरः, ॥

ॐ ईश्वराय नमः ।

भा०—इति संज्ञायामपि डुः देवाद्यसुकरपदैश्वर्यानुगुणभोगापवर्गादि-
५ फलसमर्पणसमर्थः. स्पष्टं चैतदपदानं चिन्तयन्ती शिशुपालसा
युज्यादिषु ❀
अतः पारमेष्ठ्यादपि जन्मस्वधिकतमप्रयोजनैश्वर्यात्,
( ईश्वरः ); यथा,
( १ ) " मानुषीं तनुमाश्रितम् । परं भावमजानन्तः " गी० ९—११।
१० ( २ ) " भूतानामीश्वरोपि सन् " गी० ४—६ ।
इत्यादि. ❀
निर्व०—इत्यादिना,
( २ ) " कृत्यल्युटः " ३।३।११३॥कौ०पृ०६६२
इत्येव सिद्धे, बहुलवचनात् सर्वेषामपि कृतां भातार्थव्यभिचारचिह्नात्
१५ संज्ञायामपि डुः. टिलोपः. ❀
जन्मसु पारमे[illegible]धिकतमप्रयोजनैश्वर्यवत्तया ईष्ट इति—
( ई[illegible] ) " [illegible] " ३[illegible]
( [illegible] ) " स्थेशभास " [illegible]
( २ ) [illegible] ७।२।[illegible] कौ०पृ०४३८
२० इत्यादिना वरच्.
( ३ ) " नेड्वशिकृति " [illegible] " [illegible]०पृ०६०६

श्लो० ॥८॥ ( ३७ ) स्वयंभूश्च,

ॐ स्वयंभुवे नमः।

भा०—कुतः इदं सर्वं वैभवम्? यतः,

( स्वयंभूः ). ५

( १ ) " भुवःसंज्ञान्तरयोः"३।२।१७९॥कौ०पृ०६०७

इति क्विप्.स्वलीलादिप्रयोजनाय स्वेच्छयास्वासाधारणीम् परमसत्त्वमयीं प्रकृतिमेव सुरनरसजातीयसन्निवेशामधिष्ठाय, स्वयमेव भवतीति; न चतुर्मुखादिवत् ईश्वरान्तरेण कर्मादिभिर्वा परवत्तयेत्यर्थः. यथा,

( २ ) " स्वयंभूर्ब्रह्मपरमं कवीनाम् " १०

( ३ ) " प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया" गी० ४—६।

त्रिगुणजीवप्रकृत्योरपि स्वत्वेपि स्वभोगविभूतित्वासाधारण्याद्विशिनष्टि,

( ४ ) " प्रकृतिं स्वाम्"इति.गी० ४—६ ।

निर्व०—अस्य सर्वस्यापि वैभवस्य निदानमुच्यते. चतुर्मुखादिवत्, १५ ईश्वरान्तरेण कर्मादिभिर्वा परवत्तामन्तरेण स्वेच्छया स्वयमेवभवतीति—

( स्वयंभूः ).

( १ ) " भू.सत्तायाम्" धा०भ्वादिः कौ०पृ० ३६८

( २ ) " भुवःसंज्ञान्तरयोः" ३।२।१७९॥ कौ०पृ०६०७

इति संज्ञायां भुवः क्विप्. तस्य सर्वस्यापि लोपः २०

( स्वय ) मिति ❋ स्वरादित्वादव्ययम्. ❋

निरु०—३७ भवति स्वेच्छया योसौ ( स्वयंभूः ) परिकीर्तितः।

( ३८ ) शम्भु,

ॐ शंभवे नमः।

भा०—तथाच श्रीहरिवंशे,वैदिकपुत्रानयने, लीलोपकरणप्रकृतिद्वयोप-
५ न्यासोपरि,

( ५ ) " ब्रह्मतेजोमयं दिव्यमाश्चर्यं दृष्टवानसि।अहं स भरतश्रेष्ठ मत्तेज-
स्तत् सनातनम् ॥प्रकृतिः सा मम परा व्यक्ताव्यक्ता च भारत । तां प्र
विश्य भवन्तीह मुक्ता भरतसत्तम" ॥इतिभा०हरि०। व्यक्तं हि श्रीवि
ष्णुतत्त्वे, पञ्चशक्तिमुक्त्वा,

१० ( ६ ) " मत्स्यकूर्मवराहाणामाविर्भावो महात्मनः । अनयैव
द्विजश्रेष्ठ नान्यथा तद्विरोधतः"वि०त० ।इति.वैष्णवे,

( ७ ) " समस्ताश्शक्तयश्चैताः"वि० पु० ६—७—७० ।

इत्यादिना प्रादुर्भावप्रयोजननिमित्तोपादानकालसंख्यादिवैलक्षण्यं सुव्य-
ञ्जितम्. श्रीमति रामायणे,

१५ ( ८ ) " सर्वलोकेश्वरः साक्षाल्लोकानां हितकाम्यया"।

( ९ ) " सहि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो
मानुषे लोके जज्ञे विष्णुः सनातनः"रा०अ० १—७।

( १० ) " स एष स्वयमुद्भवो"

इत्यादौ च. ❀

२० एवं स्वसौन्दर्यसौशील्यादिगुणाविष्कारेण, शं-सुखं,भावयतीति—
( शंभुः ).

निर्व०—एवं स्वसौन्दर्यसौशील्यादिगुणाविष्कारेण, शं- सुखं,भवति,
अन्तर्भावितण्यर्थात्र भवतिः. भावयतीति,—
( शंभुः ).भाग्वत्धातुः.

२१ निरु०—३८सौन्दर्यादिगुणानां यो ह्याविष्कारेण शं सुखम् ॥२९॥
पुंसां सम्यग्भावयति स( शंभुः ) परिकीर्त्यते।

{ ३९ / ५६८ } रादित्यः,

ॐ आदित्याय नमः।

भा०— ( १ ) "डुप्रकरणेमितद्र्वादिभ्यउपसंख्यानम्" ३। २।
१८०॥कौ० पृ०६०७ ५
इति डुः.यथा,
( २ ) "विश्वाश्वं विश्वशंभुवम्" तै०ना०६—११।
उपबृंहितं च,
( ३ ) "रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्" रा०अ०३
—२९। १०
( ४ ) "चन्द्रकान्ताननं राममतीवप्रियदर्शनम्" रा०अ०३-२८।
इत्यादिभिः. ❋
अथैषां प्रादुर्भावानामुदाहरणं पूष्णि पुरुषमाह,( आदित्यः ); आदि
त्यो अस्य निवास इति.
( ५ ) "दित्यदित्यादित्य" ४। १।८५॥कौ०पृ०२०५ १९
इत्यादिना ण्यः.एवंहि ब्रह्म मीमांसितम्,
( ६ ) "अन्तस्तद्धर्मोपदेशात्" इति.ब्र०सू०१—१—२१।

निर्व०—( १ ) "मितद्र्वादिभ्यउपसंख्यानम्" ३।२।१८०॥कौ०
पृ० ६०७
इति तस्याकृतिगणत्वाड्डुः. टिलोपः. शमितिमान्तं स्वरादित्वादव्य २०
यम्. अनुस्वारपरसवर्णौ. ❋अथ एतत्प्रादुर्भावोदाहरणम् पूष्णि पुरुषो
व्यपदिश्यते. आदित्यः- पूषा, निवासोऽस्येति—
( आदित्यः ).
( १ ) "दो,अवखण्डने" ततःधा०दिवादिः कौ०पृ०४५४
( २ ) "भावे"३।३।१८॥कौ०पृ०६४७ २५

निरु०-३९निवासस्सविता यस्य स(आदित्यः)प्रकीर्तितः॥३०॥

भा०—(७) " एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" छा०उ०१–६–६।

(८) " सयश्चायं पुरुषे यश्चासावादित्ये" तै०आ०२–८–५।

५ (९) " ध्येयः सदा सवितृमण्डलमध्यवर्ती " बृहत्पाराशरीये। इत्युदाहृत्य आदित्यान्तरस्य,

(१०) " तस्य यथाकप्यासंपुण्डरीकमेवमक्षिणी " छा०उ०१–६–७। इत्याम्नातम्. ❋

---

निर्व०—(३) " अकर्तरिचकारकेसंज्ञायाम्" ३।३।१९॥कौ०पृ०

१० ६४७ इत्यनुवृत्तौ,

(४) " स्त्रियांक्तिन्" ३।३।९४॥कौ०पृ०६५८

इति क्तिन्.अनैमित्तिकः,

(५) " आदेचः" ६।१।४५॥कौ०पृ०४२३

इत्येचआत्वम्. अनिट्.

१५ (६) " द्यतिस्यतिमास्थामित्तिकिति" ७।४।४०॥कौ० पृ०५९४

इति इत्वम्. कित्वान्न गुणः. ततः, नञ्पूर्वो बहुव्रीहिः. नञो नलोपः.यद्वा,

(७) " इण्,गतौ" धा०अदादिः कौ०पृ० ४४१

अदितिदान्ताव्ययपूर्वः.ततः,क्तिन्. अनिट्.अगुणः, अथवा,

२० (८) " अद,भक्षणे" धा०अदादिःकौ०पृ०४३५

(९) " हसृरुहियुषिभ्य इतिः" उणादिः. प्रथमपादः कौ०पृ०६१५ बाहुलकादन्यतोपीति इतिः ततएव बाहुलकात्, कचिदन्त्योपकारोनेव ततः, अदितिशब्दात्,

(१०) " दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ४।१।८५॥ कौ० पृ०

२५ २०५ इति ण्यः. आदिवृद्धिः.

$\left\{\begin{matrix} ४० \\ ५६१ \end{matrix}\right\}$ पुष्कराक्षो,

ॐ पुष्कराक्षाय नमः ।

भा०—सर्वैश्वर्यासाधारणलक्षणं पुण्डरीकाक्षत्वं संगमयति— ५

(पुष्कराक्षः),

(१) "अक्ष्णोऽदर्शनात्"५।४।७६॥कौ०पृ०१८३

इत्यच् समासान्तः. ❀

निर्व०—(११) "यस्येतिच"६।४।१४८॥कौ०पृ०५६

इति लोपः.इत्थं निष्पन्नादादित्यशब्दात्,सोस्यनिवास इत्यर्थे,तेनैव,

(१२) "दित्यदित्यादित्य" ४।१।८५॥कौ०पृ०२०५ १०

इत्यादिसूत्रेण ण्यः.

(१३) "तद्धितेष्वचामादेः"७।२।११७॥कौ०पृ०२०४.

इत्यादिवृद्धिः.

(१४) "यस्य" ६।४।१४८॥कौ०पृ०५६ १५

इत्यलोपः.

(१५) "हलोयमांयमिलोपः"८।४।६४॥कौ०पृ०१०

इति प्रथमस्य यस्य लोपः. ❀

तस्यैव सर्वैश्वर्यासाधारणलक्षणपुण्डरीकाक्षताकतया,पुष्करं- पुण्डरीकम्, अर्थात् तद्वत्, अक्षिणी अस्येति—

(पुष्कराक्षः).

निरु०—४०अक्षिणी पुण्डरीके व भक्तानुग्रहकारिणी यस्यासौ (पुष्कराक्षः) स्यादष्टवर्णस्तु पावकः ॥ ३१



निर्व॰—(१) "अश्,व्याप्तौ" धा०स्वादिः कौ०पृ०४६३.
(२) "अश,भोजने" वा धा०क्र्यादिः कौ०पृ०४७८.
(३) "प्लुषिकुषिशुषिभ्यः क्सिः" उणादिः तृतीयपादः कौ०पृ०६३२
५ इति वर्तमाने,
(४) "अशेर्नित्" उणादिः तृतीयपादः कौ०पृ०६३२
इति क्सिः नित्,क इत्.
(५) "तितुत्रतथसिसुसरकसेषुच" ७।२।९।कौ० पृ०६०८
इति नेट्.
१० (६) "व्रश्च" ८।२।३६।कौ०पृ०५१
इति झलि शस्य षः.
(७) "षढोः कः सि" ८।२।४१।कौ० पृ०५२
इति कः.
(८) "इण्कोः" ८।३।५७।कौ०पृ०३४
१५ इत्यधिकृत्य,
(९) "आदेशप्रत्यययोः" ८।३।५९।कौ०पृ०३४
इति षः.
(१०) "पुष,पुष्टौ" धा०दिवादिः कौ०पृ०४५६
(११) "श्रः करन्" उणादिः चतुर्थपादः कौ०पृ०६३२
२० इति वर्तमाने,
(१२) "पुषः कित्" उणादिः चतुर्थपादः कौ०पृ०६३२
इति करन् कित् कित्त्वविधानसामर्थ्यात् न कइत्.कित्त्वाद्गुणः. निष्ठत्वान्नेट्. बहुव्रीहिः. संहितायाम् सवर्णदीर्घः. तत्र,
(१३) "बहुव्रीहौसक्थ्यक्ष्णोस्स्वाङ्गात्षच्" ५।४।११३।कौ०
२५ पृ०१६६

(४१) महास्वनः, ।

ॐ महास्वनाय नमः ।

भा०—तस्यैव चिह्नान्तरं च सूचयति—

( महास्वनः ),महान्-पूज्यः, स्वनः-शब्दः यस्येति. ५

निर्व०—इति विद्यमानेपि, प्रतिपदोक्ते षचि, भगवतस्सर्वाधिकस्याप्राणित्वेन तदक्ष्णोऽप्राणिस्थतया, तथापीदृशस्य प्राणिन्यदृष्टतया, अनौचित्यात् प्राणिसादृश्याविवक्षमाणादतथायुततया च,

(१४) " अद्रवम् " ४।१।५४ ॥ कौ०पृ० १०१

इत्यादिपारिभाषिकस्वाङ्गत्वाभावादप्राप्ते, १०

(१५) " पश्यत्यचक्षुः " श्वेता०उ० ३।

इत्यादिप्रक्रियया दर्शनसाधनचक्षुः पर्यायत्वाभावेन,

(१६) " अक्ष्णोऽदर्शनात् " ५।४।७६॥ कौ०पृ० १८३

इत्यच् सर्वसमाससाधारणस्समासान्तः तद्धितसंज्ञायाम्,

(१७) " यस्य " ६।४।१४८॥ कौ० पृ० ५६ १५

इति इलोपः ❋

तस्यैव चिह्नान्तरमपि सूच्यते. महान्-पूज्यः, स्वनः-शब्दः,

(१) " उत् " छा० उ० १-६-७।

इति नाम वा, त्रयीसारसावित्रीप्रतिपाद्यम्, प्रसिद्धं त्रयीरूपं वा अस्येति— २०

( महास्वनः ).

निरु०—४१ महान् पूज्यस्त्रयीरूपः स्वनो यस्य ( महास्वनः )।

भा०—( १ ) " आन्महतः" ६।३।४६॥कौ०पृ०१५५
इत्यादिना आत्वम्, आमनन्ति हि,
( २ ) "तस्योदितिनाम" छा०उ०१—६—७।
५ इति, तस्यैतस्य नामरूपं सशब्दम्,
( ३ ) " सैषा त्रय्येवविद्या तपति यएषोऽन्तरादित्ये हिरण्मयः पुरुषः" तै०ना०६—१३।
इति त्रयीरूपं वा.पूज्यतमं सावित्रीप्रतिपाद्यतया वा.अतो हि मोक्षधर्मेषु,
( ४ ) " विद्यासहायवन्तं माम् आदित्यस्थं सनातनम्" भा०मो०।
१० इति. ❋

---

निर्व०—( २ ) " स्वन,शब्दे" धा०भ्वादिः कौ०पृ०४१८
( ३ )) " स्वनहसोर्वा" ३।३।६२॥कौ०पृ०६५४
इति पाक्षिकोऽप्
( ४ ) " मह, पूजायाम्" धा०भ्वादिः कौ०पृ०४११
१५ ( ५ )" वर्तमानेपृषद्बृहन्महज्जगच्छतृवच्च"उणादिःद्वितीयपादः कौ०पृ०६२२
इत्यतिः.कचित् गुणाभावः,शतृवद्भावश्च निपात्यते;ततः, यथायोगमुगित्कार्यम्. यदा तु कतिः,न तदागुणाभावे भयतितव्यम्. बहुव्रीहिः.
( ६ ) " आन्महतस्समानाधिकरणजातीययोः"६।३।४६॥कौ०
२० पृ०१५५
इति महत आकारः,
( ७ ) " अलोऽन्त्यस्य,, १।१।५२॥कौ०पृ०७
इत्यन्तादेशः. सवर्णदीर्घः. ❋

(४२) अनादिनिधनो,

ॐ अनादिनिधनाय नमः ।

भा०—एतद्दिव्यनामरूपविशिष्ट एव—
( अनादिनिधनः ); नित्ययौवनतया जनिजरादिदुरितदूरनित्य- ५
विग्रहः. नैतत्स्वरूपनित्यत्वपरमेतत्, तस्य, चतुर्मुखादीनामपि तुल्य-
त्वात्.

(१) " भारूपस्सत्यसंकल्पः " छा० उ० ३-१४-२।

निर्व०—एतद्दिव्यनामरूपविशिष्ट एव, नित्ययौवनजनिजरादिदुरित
दूरनित्यविग्रहतया, न विद्येते, आदिनिधने आद्यन्तौ अस्येति— १०
( अनादिनिधनः ).
(१) " डुधाञ्, धारणपोषणयोः " धा० जुहोत्यादिः कौ० पृ०
४५१ निपूर्वः
(२) " कृपृवृजिमन्दिनिधाञःक्युः " उणादिः द्वितीयपादः कौ०
पृ० ६२२ इति क्युः. योरनः. आतो लोपः. १५
(३) " डुदाञ्, दाने " धा० जुहोत्यादिः कौ० पृ० ४५१
आङ्पूर्वः.
(४) " दाधाघ्वदाप् " १।१।२०॥ कौ० पृ० ४२३
इति घुसंज्ञायाम्,
(५) " उपसर्गेघोःकिः " ३।३।९२॥ कौ० पृ० ६५८ २०
इति किः. आतोलोपइत्युक्तम्. द्वन्द्वः ततः, नञ्पूर्वो बहुव्रीहिः
नञो नलोपः.
(६) " तस्मान्नुडचि " ६।३।७४॥ कौ० पृ० १४७
इति नुट्. ❀

निरु०—४२ यस्यादिनिधनं नास्ति(अनादिनिधन) श्च सः॥३२॥ २५
अनादिनिधनोपास्यो नित्ययौवनविग्रहः ।

१ नचस्वरूप. ।

भा०—(२) " हिरण्मयः पुरुषः" तै०ना०६—१३।
(३) " विद्युतःपुरुषादधि" तै०ना० ६—१—८।
(४) " आदित्यवर्णं तमसः परस्तात्"पु०सू०२०।
५ (५) " सर्वकर्मासर्वगन्धस्सर्वरसः" छा०उ० ३—१४—२।
(६) " रुक्माभं स्वमधीगम्यं विद्यात्तु पुरुषं परम्"मनुस्मृतिः१२—
—१२२।
(७) " पुरुषः पुण्डरीकाक्षः" वराहपु०।
इत्यादिश्रुतिस्मृतिसहस्रैः, अमलनीलोज्ज्वलनीलतोयदमध्यस्थविद्युल्ले-
१० खाभरम्यम्,अतिसौन्दर्यलावण्ययौवनाद्यसिमतगुणकतया स्वस्यापि
नित्यमिच्छागृहीतम् रूपं तावत् समर्थ्यते. अस्यच,
(८) " सदैकरूपरूपाय"वि०पु०१—२—१।
(९) " श्रीवत्सवक्षा नित्यश्रीः"रा०यु०११४—१५।
पाराशर्ये,
१५ (१०) " सएव भगवान्कालस्सर्वमात्मवशं नयेत्" पाराशर्ये।
(११) "नास्ति विष्णोः परंतत्वं तस्य कालात्परा तनुः" इत्यादि
कण्ठोक्तेः, महाकारणत्वात्, ज्ञानादिवत् स्वरूपनिरूपणानुप्रवेशात्,
तमसः परत्वेन जन्मादिविकारानिवर्तित्वात्, अक्षरत्वकालातीतत्वादि
विशेषणात्, तत्क्रतुन्यायाच्च, नित्यत्वं च सुदृढम्. ईदृक्प्रबलवदागमन्या
२० यविरोधदोषप्रपीडितमानमस्यरूपस्य काल्पनिकागन्तुकत्वानुमानं न प्ररो
हेत्. अत एव निरूपवादा अपि भौतिकंहेयदेहनिषेधका नतस्याः.नीताश्च,
(१२) ' नभूतसंघसंस्थानो देहोस्य परमात्मनः। न तस्य प्राकृता
मूर्तिः मांसमेदोस्थिसंभवा ॥

{४३ / १५१} धाता.

ॐ धात्रे नमः ।

भा०—इत्यादिभिः शास्त्रैरेव. सूत्रकारवत्, वाक्यतद्भाष्यकाराभ्यामपि, आदित्यान्तरं परंब्रह्म नित्यरूपं न्यरूपि, ५
(१३) "रूपम् वातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्"। वाक्ये।
(१४) "अञ्जसैव विश्वसृजो रूपम्" ॥द्रमिडभाष्ये॥इति. अत्र, अवतारेषु च नास्याद्यन्तौ, यथालौकिकम्. किंतु यवनिकाया इव परमव्योम्नः निर्गमप्रवेशमात्रमेव.—
(१५) "भुजैश्चतुर्भिः समुपेतं ममेदं रूपं विशिष्टं दिवि संस्थितं च। भूमौगतं पूजयताप्रमेयं सदापि तस्मिन् निवसामि देवाः" ॥ १०
(१६) "स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकिल्बिषम्" रा० बा० १५—३३।
(१७) "विवेश वैष्णवं तेजस्सशरीरस्सहानुगः" रा० उ० ११० १२। इति हि मुनिगृह्यम्. ❋ १५
कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमाह—
(धाता), तृन्. एवं भर्ता इत्यादयः.

निर्व०—कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमुच्यते. अचित्समष्टिभूतायां प्रकृतौ, चित्समष्टिभूतं विरिञ्चाख्यं गर्भं दधातीति—(धाता). २०

निरु०—४३ अचित्समष्टिभूतायां प्रकृतौ चित्समष्टिकम्॥३३॥
गर्भं वेधात्मकं धत्ते यस्तु (धाते)ति चक्षते।

१ यथालोके; किंतु। २ सहित।

भा०—( २ ) " हिरण्मयः पुरुषः" तै०ना०६—१३।

( ३ ) " विद्युतः पुरुषादधि" तै०ना० ६—१—८।

( ४ ) " आदित्यवर्णं तमसः परस्तात्" पु०सू०२०।

५ ( ५ ) " सर्वकर्मा सर्वगन्धस्सर्वरसः" छा०उ० ३—१४—२।

( ६ ) " रुक्माभं स्वमधीगम्यं विद्यात्तु पुरुषं परम्" मनुस्मृतिः १२—१२२।

( ७ ) " पुरुषः पुण्डरीकाक्षः" वराहपु०।

इत्यादिश्रुतिस्मृतिसहस्रैः, अमलनीलोज्ज्वलनीलतोयदमध्यस्थविद्युल्ले-

१० खाभरूपम्, अतिसौन्दर्यलावण्ययौवनाद्यभिमतगुणकतया स्वस्यापि नित्यमिच्छागृहीतम् रूपं तावत् समर्थ्यते. अस्यच,

( ८ ) " सदैकरूपरूपाय" वि०पु० १—२—१।

( ९ ) " श्रीवत्सवक्षा नित्यश्रीः" रा०यु० ११४—१५।

पाराशर्य,

१५ ( १० ) " सएव भगवान्कालस्सर्वमात्मवशं नयेत्" पाराशर्यं।

( ११ ) " नास्ति विष्णोः परंतत्वं तस्य कालात्परा तनुः" इत्यादि कण्ठोक्तेः, सदाकारणत्वात. ज्ञानादिवत स्वरूपनिरूपणानुप्रवेशाव, तमसः परत्वेन जन्मादिविकारानिवर्तित्वात्, अक्षरत्वकालातीतत्वादि विशेषणात्. तत्कनुन्यायाच्च, नित्यत्वं च सुदृढम्. इदक्वलवदागमन्या

२० यविरोधदोषप्रापिकाद्यानमस्यरूपस्य काल्पनिकागन्तुकत्वानुमानं न प्ररो हनः अत एव निरूपवादा अपि भौतिकदेहनिषेधका नतव्याः नीताश्च,

( १२ ) " नभूतसंघसंस्थानो देहोस्य परमात्मनः। न तस्य प्राकृता मूर्तिः मांसमेदोस्थिसंभवा" ॥

{४३ / ५५१} धाता.

ॐ धात्रे नमः ।

भा०—इत्यादिभिः शास्त्रैरेव, सूत्रकारवत्, वाक्यतद्भाष्यकाराभ्यामपि, आदित्यान्तरं परंब्रह्म नित्यरूपं न्यरूपि, ५

(१३) "रूपम् वातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्"। वाक्ये।

(१४) "अञ्जसैव विश्वसृजो रूपम्" ॥द्रमिडभाष्ये॥इति. अत्र, अवतारेषु च नास्त्याद्यन्तौ, यथालौकिकम्; किंतु यवनिकाया इव परमव्योम्नः निर्गमप्रवेशमात्रमेव.—

(१५) "भुजैश्चतुर्भिः समुपेतं ममेदं रूपं विशिष्टं दिवि संस्थितं १० च। भूमौगतं पूजयताप्रमेयं सदापि तस्मिन् निवसामि देवाः" ॥

(१६) "स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकिल्बिषम्" रा० बा० १५—३३।

(१७) "विवेश वैष्णवं तेजस्सशरीरस्सहानुगः" रा० उ० ११० १२। इति हि मुनिगुह्यम्. ❀

कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमाह— १५

(धाता); तृन्. एवं नेता इत्यादयः.

निर्व०—कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमुच्यते. अचित्समष्टिभूतायां प्रकृतौ, चित्समष्टिभूतं विरिञ्चाख्यं गर्भं दधातीति— (धाता).

निरु०—४३ अचित्समष्टिभूतायां प्रकृतौ चित्समष्टिकम्॥ २० गर्भं वेधात्मकं धत्ते यस्तु (धाते)ति चक्षते। ३३॥

१ यथालोके; किंतु। २ सहितं।

गा०—( २ ) "हिरण्मयः पुरुषः" तै०ना०६—१३।

( ३ ) "विद्युतःपुरुषादधि" तै०ना० ६—१—८।

( ४ ) "आदित्यवर्णं तमसः परस्तात्"पु०सू०२०।

५ ( ५ ) "सर्वकर्मासर्वगन्धस्सर्वरसः" छा०उ० ३—१४—२।

( ६ ) "रुक्माभं स्वमधीगम्यं विद्यात्तु पुरुषं परम्"मनुस्मृतिः१२—१२२।

( ७ ) "पुरुषः पुण्डरीकाक्षः" वराहपु०।

इत्यादिश्रुतिस्मृतिसहस्रैः, अमलनीलोज्ज्वलनीलतोयदमध्यस्थविद्युल्ले-

१० खामध्यम्,अतिसौन्दर्यलावण्ययौवनाद्यभिमतगुणकतया स्वस्यापि नित्यमिच्छागृहीतम् रूपं तावत् समर्थ्यते. अस्यच,

( ८ ) "सदैकरूपरूपाय"वि०पु०१—२—१।

( ९ ) "श्रीवत्सवक्षा नित्यश्रीः"रा०यु०११४—१५।

पाराशर्ये,

१५ ( १० ) "सएव भगवान्कालस्सर्वमात्मवशं नयेत्" पाराशर्ये।

( ११ ) "नास्ति विष्णोः परतत्वं तस्य कालात्परा तनुः" इत्यादि कण्ठोक्तेः, महाकारणत्वात्. ज्ञानादिवत् स्वरूपनिरूपणानुप्रवेशात्, तमसः परत्वेन जन्मादिविकारानिवर्तित्वात्, अक्षरत्वकालातीतत्वादि विशेषणात्. तत्कृन्न्यायाच्च, नित्यत्वं च सुदृढम्. इदक्बलवदागमन्या

२० यविरोधशंपर्पिकामानमस्यरूपस्य काल्पनिकागन्तुकत्वानुमानं न प्ररो हतः अत एव निरूपवादा अपि भौतिकदेहदेहनिषेधका नेतव्याः.नीताश्च,

( १२ ) "न भूतसंघसंस्थानो देहोस्य परमात्मनः। न तस्य प्राकृता मूर्तिः मांसमेदोस्थिसंभवा"॥

(४५) धातुरुत्तमः, ॥

ॐ धातुरुत्तमाय नमः।

भा०—(६) "तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" म० ५
स्मृ० १—९।
इत्यादिवचनेभ्यः. ❀
अतः,(धातुरुत्तमः)-
स्रष्टुरुत्कृष्टतमः, ❀
दण्डापूपिकया तत्सृष्टेभ्यः प्रजापतिप्रभृतिभ्यश्च; यथा,
(१) "तत्त्वं नारायणः परः" तै०ना०६—११। १०
(२) "एतेषां कतमो देवः परः कोवाथवापरः"
वाराहे। इति पृष्टे,
(३) "परो नारायणो देवः तस्माज्जातश्चतुर्मुखः" वाराहे।
इत्यादि ब्रह्मरुद्रसंवादयज्ञाग्रहरणादाविदम् स्पष्टम्- ❀

निर्व०— अतः, धातुः- स्रष्टुः, उत्तमः- उत्कृष्टतमः,किंपुनस्तत्सृष्टे-१५
भ्य इति-
(धातुरुत्तमः).
उच्छब्दात् उत्कृष्टवाचिनः, आतिशायनिकस्तमप्. चत्वम्.
(१) "डुधाञ्, धारणपोषणयोः" धा० जुहोत्यादिःकौ०पृ०४५१
तृन्. अनिट्. ङसौ, २०
(२) "ऋतउत्" ६।१।१११॥कौ०पृ० ४७
इति उकार एकादेशः, रपरः.
(३) "रात्सस्य" ८।२।२४॥कौ०पृ०४७
इति सलोप इत्यादि. ❀

निरु०—४५. यो वै स्याद्धातुरुत्कृष्टः स च स्यात् (धातुरु- २५
त्तमः) ॥ ३५. ॥

१ अग्रहराग्यापार्श्वः। यज्ञहरणादौ।

{ ४४ / ४८६ } विधाता,

ॐ विधात्रे नमः ।

भा०— अनिरुद्धस्वरूपः, सर्वयोनावचित्समष्टिभूतायां
५ प्रकृतौ चित्समष्टिभूतं विरिञ्च्यात्मकं गर्भं दधातीति; यथा,
( १ ) " मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् " गी० १४—३। मौलसंहितायाम्,
( २ ) " धाता क्षेत्रे कर्मबीजभूतं गर्भं दधाति " इति.
( ३ ) "अप एव ससर्जादौ तासु वीर्यमपासृजत्"म०स्मृ० १—८।
१० इत्यादि. ❀

तं गर्भं परिणमय्य आविर्भावयतीति च—
( विधाता ).
( १ ) " यो ब्रह्माणं विदधाति पूर्वम् " इति; श्वे०उ०६—१८।
( २ ) " अथ पुनरेव नारायणः "
१५ इत्युपक्रमे,
( ३ ) " तत्र ब्रह्मा चतुर्मुखोऽजायत "
( ४ ) " हिरण्यगर्भं पश्यत जायमानम् "
( ५ ) " तस्माद्विराडजायत " पु०सू०५।

निर्व०—( १ ) " डुधाञ्, धारणपोषणयोः " धा० जुहोत्यादिः
२० कौ०पृ०४५.१ तृन्नादि. अनिट्. ❀

तं गर्भं परिणमय्य विदधाति आविर्भावयतीति च—( विधाता ).
पूर्ववद् धातुः; विपूर्वः तद्वत् तृन्नादि. ❀

निरु०—४४ तद्गर्भपरिणामे स्यादाविर्भावयिता स्वयम् ॥ ३४॥
धारणाद्यीत्या यस्माद् ( विधाता ) स प्रकीर्तितः ।

## ( ४७ ) हृषीकेशः,

ॐ हृषीकेशाय नमः।

भा०–(५) "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोसौ न ग्राह्यः केनचित्कचित्" भा०मो० १७९-४। इति अती ५
न्द्रियत्वात्, अकृत्स्नग्रहणत्वाच,
( अप्रमेय ) त्वमप्येव वचनेषु स्फुटम्. ❋
तत्करणानामपि नियामकत्वात्.–
( हृषीकेशः. ) यथा, श्रीहरिवंशे,
( १ ) " हृषीकाणीन्द्रियाण्याहुः तेषामीशो यतो भवान् । हृषी- १०
केशस्ततो विष्णुः ख्यातो देवेषु केशवः " इति; भा० हरि० ।
( २ ) " हर्षात्सौख्यात् सुखैश्वर्यात् हृषीकेशत्वमश्नुते " ।
इति वा. ❋

निर्व०–तत्कारणानां हृषीकाणाम् इन्द्रियाणाम् ईशः नियामक १५
इतिवा हर्षसौख्यसुखैश्वर्ययोगाद्वा–
( हृषीकेशः. )
पूर्वत्र,
( १ ) " ईश, ऐश्वर्ये " धा० अदादिः कौ० पृ० ४३८
( २ ) " इगुपधज्ञाप्रीकिरःकः " ३।१।१३५।कौ०पृ०५६७ २०
इति कः.
( ३ ) " हृषु, अलीके " धा० भ्वादिः कौ० पृ० ४१०
( ४ ) "हृष, तुष्टौवा" धा० दिवादिः कौ० पृ० ४६०
( ५ ) " कपिदूषिभ्यामीकन् " उणादिः चतुर्थपादः कौ०
पृ०६३२ इति वर्तमाने,

निरु०–४७ इन्द्रियाणां नियन्तृत्वात् (हृषीकेशः) प्रकीर्तितः। २५

१ अराप्रहा।

श्लो० ॥ ६ ॥ ( ४६ ) अप्रमेयो,

ॐ अप्रमेयाय नमः ।

भा०— तेषां करणैः प्रमातुमशक्यः—( अप्रमेयः ).
५ ( १ ) " ईद्यति " ६।४।६५॥कौ०पृ०५५७
इति ईकारः; यथा,
( २ ) " यं नायं भगवान् ब्रह्मा जानाति पुरुषोत्तमम् "
स्वयं च ब्रह्मा,
( ३ ) " ब्रह्मादिभिःपान्तमजस्य यस्य विश्वो वयं सर्वमयस्य
१० धातोः। न च स्वरूपं न परप्रभावं न चैव सारं परमेश्वरस्य "
ब्रह्मरुद्रसंवादे च,
( ४ ) " न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम । सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः " ॥

निर्व०—तेषां करणैः प्रमातुं- परिच्छेत्तुं,शक्यः प्रमेयः, स नेति—
१५ ( अप्रमेयः ).
( १ ) " माङ्, माने" धा० जुहोत्यादिः कौ०पृ ०४५०
प्रपूर्वः.
( २ ) " अचोयत्"३।१।९७॥कौ०पृ०५५७
इति यत्. कृत्यश्चायम्,
२० ( ३ ) " शकिलिङ्च"३।३।१७२॥कौ०पृ०५५२
इति चात् शक्यार्थे.
( ४ ) "ईद्यति"६।४।६५॥कौ०पृ०५५७
इति आत ईत्वम्. तस्य,
( ५ ) " सार्वधातुकार्धधातुकयोः " ७।३।८४॥ कौ० पृ० ३६८
२५ इति गुणः. नञ्समासः नञो नलोपः. ❀

निरु०—४६ब्रह्मादीनां च करणैर्नामातुमपि शक्यते ।
द्रष्टुं त्वमा ( अप्रमेयः ) वचसामप्यगोचरः ॥३६॥

( ४९ ) अमरप्रभुः।

ॐ अमरप्रभवे नमः।

भा०—( ४ )" अजस्यनाभावध्येकमर्पितम्"य०वे०४का०६ प्र०२ अ०। ५

(५) "अजस्यनाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम्"इत्यादि. ❀ तेषाममराणां सृष्ट्याद्यधिकारदानेन निर्वाहकश्च— ( अमरप्रभुः );-

निर्व०-(५)"अतः"इत्युपधावृद्धिः.७।२।११६॥कौ०पृ०३८६

( ६ ) " पद,गतौ"धा० दिवादिः कौ०पृ०४५५

( ७ )"अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्"इतिमन्. १० निहतत्वात् नेट्.बहुव्रीहिः.[उणादिःप्रथमपादः कौ०पृ०६१६यद्यपि,

( ८ ) "शेषोबहुव्रीहिः" २।२।२३॥कौ०पृ०१६०

इति समानाधिकरणानामेव बहुव्रीहिः. तथापि,

( ९ ) "सप्तमीविशेषणेबहुव्रीहौ" २।२।३५॥कौ०पृ०१७३

इति सप्तम्याः प्राक्प्रयोगविधानात्, १५

( १० ) " अल्पाख्यायाम्"५।४।१३६॥ कौ०पृ०१७०

इतिवा ज्ञापकात्,स हि व्यधिकरणानामपि भवति. नच,तेनैवात्र तस्याः प्राङ्निपातशङ्क्यः,

( ११ ) " गड्वादिभ्यःपरा"२।२।३५॥कौ०पृ०१७३

इति तस्याः परनिपातात्; गड्वादेराकृतिगणत्वात्. २०

(१२)"अच्प्रत्यन्ववपूर्वात्सामलोम्नः"५।४।७५॥कौ०पृ०१८३

इत्यत्र अजिति योगविभागादच् समासान्तः.

( १३ ) " यस्य" इति लोपः.❀६।४।१४८॥कौ०पृ०५६

तेषां पद्मप्रभृतीनाममराणां सृष्ट्याद्यधिकारदानेन,प्रभुः निर्वाहक इति ( अमरप्रभुः ). २५

निरु०—४९सृष्ट्यादिष्वपि देवानामधिकारप्रदानतः॥३८॥

( अमरप्रभु )रित्युक्तो नवार्णः सर्वदो मनुः।

१ मर्पितम् यस्मिन्निदं विश्वं भुवनमधिश्रितम्।

{ १९८ / ३४८ } (४८) पद्मनाभो,

ॐ पद्मनाभाय नमः ।

भा०—उक्तं हि सर्वं व्यनक्ति,—(पद्मनाभः),—
५ पद्मभुवः प्रभवः पद्मो नाभावस्येति.
(१) "अच्प्रत्यन्ववपूर्वात्"५।४।७५॥कौ०पृ०१८३
इत्यत्र योगविभागात् अच्; यथा,
(२)"धातोत्तानः संविशति पञ्चवर्पशतानि तु"
(३)"धातुर्नाभ्यां पुष्करं प्रादुर्भवति पुष्करं पुण्डरीकं च
१० पद्मं चर्कोमित्येप कालः"

निर्व०—(६)"अनिहपिभ्यांकिच"उणा०चतुर्थपादः कौ०पृ०६३२
इति ईकन्; कित्. कित्वान्नगुणः. संहितायाम् आद्गुणः.अन्यत्र,
निरुक्तस्वातन्त्र्याद्रुपपत्तिः ❋ पृषोदरादिः—, ❋
उक्तं सर्वं व्यज्यते.
१५ पद्मभुवः प्रभवः पद्मः नाभौ अस्येति—
(पद्मनाभः)
(१) " णह,बन्धने"धा०दिवादिः कौ०पृ० ४५५
(२) "णोनः" ६।१।६५॥ कौ०पृ० ३८६
(३) " वसिवपियुजिराजिव्रजिसदिहनिवाशिवादिवारिभ्यइञ्"उ-
२० णादिः चतुर्थपादः कौ०पृ० ६३८
इति वर्तमाने,
(४) " नहोभश्च" उणादिःचतुर्थपादः कौ०पृ०६३८
इति इञ्,भश्च अन्तादेशः.

निरु०—४८ कालात्मकं तु यत्पद्मं नाभौ यस्य स उच्यते ॥३७॥
२५ (पद्मनाभ) श्चाष्टवर्णो महासन्तानदो मनुः ।

१ मत्स्यपकान्ः ।

भा०—( १ ) " विश्वकर्मणस्समवर्तताधि"पु०११।
( २ ) " पुरुषं विश्वकर्माणमादिदेवमजं विभुम्"
सर्वं चैतत्,
( ३ ) " य इमा विश्वा भुवनानि जुह्वत"४का०६प्र०२अ०। ५
इत्युपक्रमे, विश्वकर्मसूक्ते स्पष्टं द्रष्टव्यमिति. विश्वकर्मत्वं च,
( ४ ) "तदैक्षतबहुस्यां प्रजायेयेति"छा०उ०६—२—३।
( ५ ) " सईक्षतलोकान्नुसृजा इति " ऐ०उ०१—१।
( ६ ) " सोकामयत बहुस्यां प्रजायेयेति"तै०आ०२—६—२।
( ७ )"अथ पुनरेव नारायणः सोन्यं कामं मनसा ध्यायीत"॥महो- १०
पनिषदि ॥
( ८ ) " तदसदेवसन्मनो कुरुत स्यामिति"२अ०२प्र०९अ०।
( ९ ) "सोभिध्यायशरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः " म०
स्मृ०१—८।
( १० ) " स सिसृक्षुः सहस्रांशादसृजत् पुरुषं द्विधा" १५
( ११ ) " कामाच्च नानुमानापेक्षा"ब्र०सू०१—१—१९।
इति. ❀

---

निर्व०—( १ ) " डुकृञ्,करणे" धा०तनादिः कौ०पृ०४७३
( २ ) " सर्वधातुभ्योमनिन्"उणादिः चतुर्थपादः कौ०पृ०६३९
इति मनिन्. गुणो रपरः. अनिट्. २०
( ३ ) " विश,प्रवेशने" धा०तुदादिः कौ०पृ०४६९
( ४ ) " अशूप्रुषि"उणादिः प्रथमपादः कौ०पृ०६१७
इत्यादिना क्वन्, कित्त्वादगुणः. अनिडित्युक्तम्. बहुव्रीहिः. नान्त-
लक्षणः उपधादीर्घइत्यादि. ❀

---

१प्रथमं।

## ( ५० ) विश्वकर्मा,

ॐ विश्वकर्मणे नमः ।

भा०—श्रीमति रामायणे ब्रह्मा,

५ ( १ ) " महार्णवे शयानोप्सु मां त्वं पूर्वमजीजनः । प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितम्" रा०उ० १०४—४ ।

महाभारते,

(२) " एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ" भा०मो० १६९—१९ ।

१० इत्यादि. ❋

अतः,

( विश्वकर्मा ),—

ब्रह्मसृष्टेः प्राक् ऊर्ध्वं च विद्यमानं विश्वं कर्म जगद्व्यापारोऽस्यैवेति; यथा,

१५ निर्व०—(१) " भू, सत्तायाम्" धा०भ्वादिः कौ०पृ० ३६८ प्रपूर्वः

(२) " विप्रसंभ्यः" ३।२।१८०॥ कौ०पृ० ६०७

इति समुदायस्य संज्ञात्वेन डुरित्यादि.

(३) " मृङ्, प्राणत्यागे" धा० तुदादिः कौ०पृ० ४६८

पचाद्यच्; बाहुलकादयं भावे वा गुणो रपरः नञ्पूर्वः, पूर्वत्र,

२० तत्पुरुषः, अन्यत्र, बहुव्रीहिः. नलोपः ततः तत्पुरुषः. ❋

अतः, (ब्रह्मसृष्टेः प्राक् ऊर्ध्वं च विद्यमानं विश्वं कर्म जगद्व्यापारः अस्येति )—

( विश्वकर्मा ).

निरु०—५० विश्वस्य जगतः कर्म व्यापारो यस्य लक्षणम् ॥३९॥

२५ [ प्राक् ब्रह्मसृष्टेरूर्ध्वं च ( विश्वकर्म ) ति कथ्यते । ]

[ इदमाधुनिककृतम् एवमन्यत्राप्यूह्यम् ]

भा०–( १ ) " स्कोस्संयोगाद्योरन्तेच" ८।२।२९॥ कौ०
पृ०६९
इति ककारलोपः.तनूकरणं व्यक्तावयवीकरणम्.त्विषेर्वा दीप्तिकर्मणः, ५
( २ ) "नप्तृनेष्टृ" उणादिःद्वितीयपादःकौ०पृ०६२३
इत्यादिना तृन्, उपधायाः अत्वं च निपात्यते;"त्विषेर्देवतायामका
रश्चोपधाया अनिट्त्वम् च"३।२।१३५॥कौ०पृ०इतिवा निपातः.दी
पनं प्रकाशनम्, अवयवोन्मीलनमित्यर्थः; यथा,
(३)"त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम्"आर०३प्र०११अनु०।.
(४)"वेदे नरूपे व्यकरोत् सतासतीप्रजापतिः"२अष्ट०६प्र०२अ०१०
( ५ ) " सर्वाणि रूपाणि विचित्य धीरः"पु०सू०१६।
( ६ ) "नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्"इत्यादि. वि०
पु०–१–५–६३ ❋

निर्व०–( १ ) " त्वक्षू,तनूकरणे"धा०भ्वादिः कौ०पृ०४०८
( २ )"तृन्तृचौशंसिक्षदादिभ्यःसंज्ञायांचानिटौ"उणादिः द्वितीय १५
पादः कौ०पृ०६२३
इति तृच्. सच अनिट्.
( ३ ) " स्कोस्संयोगाद्योरन्तेच"८।२।२९॥कौ०पृ०६९
इति झलि कलोपः.तस्य, ष्टुत्वेन टः.अनङ् इत्यादि.अन्यत्र, २०
( ४ ) " त्विष,दीप्तौ"धा०भ्वादिः कौ०पृ०४३२
इह,अवयवोन्मीलनरूपप्रकाशनपर्यायदीपनकर्मा चायम्.
( ५ ) " नप्तृनेष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ"
उणादिः द्वितीयपादः कौ०पृ०६२३
इति तृन्, इतोत्वंच निपात्यते. निहतत्वान्नेट्.
" त्विषेर्देवतायामकारश्चोपधायाअनिट्त्वंच"३।२।१३५॥कौ०पृ० २५
इति वा तृनि निपातः. शेषं प्राग्वत्. ❋

(५१) मनु, (५२) स्त्वष्टा,

ॐ मनवे नमः।ॐ त्वष्ट्रे नमः।

भा०—प्रसिद्धात् संकल्पलवमात्रात् मननादेवेति—
५ (मनुः),—
(१) "मन,ज्ञाने" धा०दिवादिः कौ०पृ०४५६
(२) "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यउः" उणादिः प्रथमपादः कौ०पृ०६०९ ❀
एवं निर्मितं नामरूपव्याकरणेन सुरनरादिवैचित्र्यविभक्तं व्यनक्ति;अतः,
१० (त्वष्टा). त्वक्षतेस्तनूकरणकर्मणस्तृच्.

निर्व०—विश्वकर्मत्वं च, प्रसिद्धतत्संकल्पलवमात्रात् मननादेव. ततः मन्यते मनुतेवेति—
(मनुः).
(१) "मन,ज्ञाने"धा०दिवादिः कौ०पृ०४५६
१५ (२) "मनु,अवबोधने" वा, धा०तनादिःकौ०पृ०४७३
उभयतोपि,
(३) "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च"
उणादिःप्रथमपादः कौ०पृ०६०९
इति उः. ❀
२० एवं निर्मितं त्वक्षति-तनूकरोति; त्वेषति दीपयति नामरूपव्याकरणेन व्यक्तावयवं करोतीति वा—
(त्वष्टा). पूर्वत्र,

निरु०— संकल्पलवमात्राच्च मननाद (मनु) रुच्यते ॥४०॥
५२. नामरूपव्याकरणाद (त्वष्टा) सृष्टस्य गद्यते।

## (५४) स्थविरो,

ॐ स्थविराय नमः।

भा०—(५) "विस्तारः सर्वभूतस्य विष्णोस्सर्वमिदं जगत्" वि० ५
पु०१—१७—८४।
(६) "त्वद्विस्तारो यतो देव"
इत्यादि. ❀
एवं संकल्पमूलकरत्वेपि लौकिकमृदादिकारणवैलक्षण्यं विवक्षति-
(स्थविरः). तिष्ठतेः,
(१) "अजिरशिशिर" उणादिः प्रथमपादः कौ०पृ०६१२ १०
इत्यादिना किरच् प्रत्ययः, ह्रस्वत्वं, वुगागमश्च निपात्यते. सकलं कालं स्थास्नुःलीलया कालमपेक्षमाणोपि अतत्तन्त्रः; अनेन कालविशेषापेक्षपरिणामदुग्धदध्यादिवैलक्षण्यं विवक्षितम्, कालस्यापि सर्वात्मना तादधीन्यात्; यथा,

निर्व०—(३) "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणांयणादिपरंपूर्वस्य १५
चगुणः"६।४।१५६॥कौ०पृ०३४२
इति यणादि परस्य लस्य लोपः, पूर्वस्य च गुणः ओकारः.
अव्. ❀
एवं कारणत्वेपि. लौकिकमृदादिवैलक्षण्यं विवक्ष्यते. लीलया कालापेक्षोपि, अतत्तन्त्रतया कालविशेषापेक्षपरिणामदुग्धदध्यादिविलक्ष २०
णः सर्वं कालं तिष्ठतीति—
(स्थविरः).

निरु०—५४ [कालातन्त्रतया दुग्धदध्यादिभ्यो विलक्षणः॥४२॥
विद्यते यस्सर्वकाल (स्थविरः) परिकीर्तितः।]

१सकलस्य मूल।सकलमूल।

{ ५३ / ४३८ } स्थविष्ठः,

ॐ स्थविष्ठाय नमः।

भा०—अतः,

५ ( स्थविष्ठः )-स्थूलतमः. स्थूलशब्दात् इष्ठन्.

( १ ) " स्थूलदूर"६।४।१५६॥कौ०पृ०३४२

इत्यादिना यणादिपरलोपः,पूर्वस्य च गुणः.

( २ ) " बहुस्यां" तै०आ०२—६—२।

इति यथासंकल्पं बहूभवन् सूक्ष्माव्यक्तसमष्टिकारणपर्वणो भोक्तृरनसु-

१० रतिर्यक्स्थावरकरणकलेवरतद्गोचरशब्दस्पर्शादितदास्पदचतुर्दशभुवनब्र-

ह्माण्डतदावरणरूपस्थूलव्यक्तव्यष्टिकार्यविस्तारवान् जायत इत्यर्थः.

यथा,

( ३ ) " नास्त्यन्तो विस्तरस्य मे" गी०१०—१९।

( ४ ) " व्योमाम्बुवाय्वग्निमहीस्वरूपैः विस्तारवान् योणुतरो-

१५ णुभावात्"

निर्व०—अतः, यथासंकल्पं बहूभवन् सूक्ष्मावस्थस्य स्थूलावस्थतया विस्तारवत्वादतिशयेन स्थूल इति—

( स्थविष्ठः ).

( १ ) " स्थूल,परिबृंहणे"धा०चुरादिः कौ०पृ०४९०

२० चुरादौ,कथादिः. णिच्,अतोलोपः. ततः, पचाद्यच्.

णिलोपः. इत्थं निष्पन्नात् स्थूलशब्दात्,

( २ ) " अतिशायने"५।३।५५॥कौ०पृ०३४०

इति इष्ठन्.

निरु०—५३[ बहूभवैश्च सूक्ष्माणां स्थूलावस्थतया च सः॥४१॥

२५ विस्तारवत्वाच्च स्थूलः ] ( स्थविष्ठः ) परिकीर्तितः।

श्लोक० ॥ ७ ॥ ( ५६ ) अग्राह्यश्,

ॐ अग्राह्याय नमः ।

भा०–(१) " ध्रु, गतिस्थैर्ययोः " धा० तुदादिःकौ०पृ० ४६७
( २ ) " तुदादिभ्यो णल्कौ " ५
इति, कः. एवं गुहैः, वृषैः, नि मिषैः.
इत्यादयोपि कप्रत्ययान्ताः; यथा,
( ३ ) " अजय्यश्शाश्वतो ध्रुवः "
( ४ ) " अविकाराय शुद्धाय " वि० पु० १–२–१ ।
( ५ ) " अपक्षयविनाशाभ्याम् " इति. ❀ वि० पु० १०,
१–२–११ ।
मृतन्त्वादिरिव कुलालकुविन्दादिना अनधिष्ठेयः–(अग्राह्यः ).

निर्व०– ( ३ ) " तुदादिभ्यो णल्कौ "
इति, कः. कित्त्वान्नगुणः पूर्वपाठे,
( ४ ) "अचिश्नुधातुभ्रुवांय्वोरियङुवङौ " ६ । ४ । ७७ ॥ १५
कौ० पृ० ४५
इत्योरुवङ्; पाठान्तरेतु न. यद्वा, ❀ पचाद्यच्.
( ५ )"गाङ्कुटादिभ्योञ्णिन्ङित्"१ ।२।१ ॥ कौ०पृ०४४२
इति, कुटादिलक्षणमचो ङित्त्वम्. ङित्त्वा न्नगुण इत्यादि.
पाठान्तरे, इगुपधलक्षणो वा कः. ❀ २०
कुविन्दादिना तन्त्वादिरिव ग्रहीतुं–अधिष्ठातुं शक्यः ग्राह्यः,
स नेति–( अग्राह्यः ).
( १ ) " ग्रह, उपादाने " धा० क्र्यादिः कौ० पृ० ४७८

निरु०– ५६ ( अग्राह्यो ) योऽनधिष्ठेयो मृत्तिकेव कुलालकैः ॥

१ तुदा । २ अनिमिषः । विमिसः । ३ अजेयः ।

{ ५५ / ३९० } ध्रुवः,॥

ॐ ध्रुवाय नमः ।

भा०—( २ )"कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च । ईशिता
५ भगवानेकः सत्यमेतद्ब्रवीमि ते"
( ३ ) " कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।आत्मयोगेन भगवान् परिवर्तयतेऽनिशम्"
( ४ ) " कालं स पचते तत्र न कालस्तत्र वै प्रभुः "
इत्यादि. ❀
१० अनन्तपरिणामादप्यविकुर्वाणतया स्वरूपादप्रच्याव्यः—
( ध्रुवः ).

निर्व०—( १ ) " ष्ठा,गतिनिवृत्तौ"धा०भ्वादिः कौ०पृ०४२४
( २ ) " पःसः"६।१।६४॥कौ०पृ०३८३
इत्यादि.
१५ ( ३ ) " अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरशिबिराः"
उणादिः प्रथमपादः कौ०पृ०६१२
इति किरच् पक्षे धातोर्वुक्, ह्रस्वत्वं च निपात्यते. ❀
अनन्तपरिणामादपि अविकुर्वाणतया, ध्रुवति—स्वरूपादप्रच्याव्यो भवतीति—
२० ( ध्रुवः )
( १ )" ध्रु,गतिस्थैर्ययोः"धा०तुदादिः कौ०पृ०४६७
( २ ) "ध्रुव"धा०तुदादिः इतिवा पाठः.कौ०पृ०४६७

निरु०—५५अप्रच्याव्यस्वस्वरूपात् सदा योसौ.(ध्रुवः)स्मृतः॥४३॥

१अप्रच्याव्यात्ध्रुवः ।

{ ५८ / ५५४ } कृष्णो,( ५९ )लोहिताक्षः,

**ॐ कृष्णाय नमः।ॐ लोहिताक्षाय नमः।**

भा०—एवंविधलीलारसेन नितान्तनिर्वृतः—( कृष्णः ).आर्षं निरुक्तम्,
( १ ) " कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः।कृष्णस्तद्भाव- ५
योगाच्च",इति. ❋भार०उ०६९—५।
ईदृङ्निर्वृतिपिशुनरम्यराजीवताम्रनयनः— ( लोहिताक्षः ). ❋

निर्व०—एवंविधलीलारसेन कर्षति कृषति वा नितान्तनिर्वृतो भव-
तीति—( कृष्णः ).
(१) "कृष,विलेखने"निर्वृतिकर्मेहार्यं,धा०तुदादिःकौ०पृ०४६४ १०
( २ ) "इणसिञ्जिदीङुष्यविभ्योनक्" उणादिः तृतीयपादः
कौ० पृ०,६२५
( ३ ) " कृषेर्वर्णे " उणा० तृतीयपादः कौ० पृ०६२६
इति कृषेर्निहतात् नक्प्रत्यये,किस्वात् गुणाभावे,णत्वेच, कृष्णश
ब्दस्य निष्पादत्वेपि, प्रकृतेचार्पनिर्वचनानुसारात् उक्तार्थनिष्पत्तिः. १५
❋पृषोदरादिः. यद्वा,तेनैव सूत्रेण बाहुलकादन्यत्रापि नक्. अगुणः.
अनिट्. णत्वम्. ❋
ईदृशनिर्वृतिपिशुनरम्यराजीवताम्रनयनतया लोहिते अक्षिणी अ-
स्येति—
( लोहिताक्षः ). ❋अशेःक्सौव्युत्पादितो हि अक्षिशब्दः. २०
( १ )" रुह, बीजजन्मनिप्रादुर्भावेच"धा०भ्वादिःकौ०पृ०४२०
( २ )"हृश्याभ्यामितन्"इति वर्तमाने, उणा०पा०३कौ०पृ०६२९

निरु०—५८एकान्तलीलारसतो निर्वृतः ( कृष्ण )उच्यते।।४५।।
कृषिर्भूवाचकःशब्दो.णश्च निर्वृतिवाचकः।
५९ रक्तराजीवनयनो ( लोहिताक्षः ) प्रकीर्तितः॥४६॥ २५

( ५७ ) शाश्वतः,

ॐ शाश्वताय नमः ।

भा०—( १ ) " ऋहलोर्ण्यत् " ३ । १ । १२४ ॥ कौ० पृ० ५६२
५ इति ण्यदन्तः. एवं, वेर्द्यः, मान्यः इत्यादयोऽपि. यथा,
(२)" नैनमूर्ध्वं न तिर्यञ्चन्न मध्ये परिजग्रभत् " तै० ना० ६—१—९।
( ३ ) " ब्रह्माध्यतिष्ठत् " २ अ० ८ प्र० २ अ० ।
( ४ ) " अधितिष्ठत्येकः " इत्यादि. ❀ श्वे० उ० ४—११ ।
एवम्, ( शाश्वतः ),— अनवरतजगद्व्यापारप्रवाहत्वेन नित्यः; यथा,
१० ( १ ) " अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः " वि० पु० १—२—२६ । इत्यादि. ❀

निर्व०—"( २ ) ऋहलोर्ण्यत् " इति हलन्ताण्ण्यत्. ३।१।१२४॥ कौ० पृ० ५६२
( ३ ) " शकिलिङ्च " इति चात् शक्यार्थे अयं कृत्यः. ३ । ३ ।
१५ १७२ ॥ कौ० पृ० ५५२
( ४ ) " अतः " इत्युपधावृद्धिः. ७।२।११६॥ कौ० पृ० ३८६।
नञ्तत्पुरुषः नलोपः. ❀
एवम्, अनवरतजगद्व्यापारप्रवाहत्वेन, शश्वत् भवः—नित्य इति— ( शाश्वतः ). शश्वदित्यव्युत्पन्नम् प्रातिपदिकमव्ययम्. ततः,
२० ( १ ) " तत्रभवः " इति, अण्. आदिवृद्धिः. ४ । ३ ।५३ ॥ कौ० पृ० २६१
( २ ) " अव्ययानां भमात्रेटिलोपः " इत्यस्य,६।४।१४४ कौ० पृ०
( ३ ) " येषां च विरोधश्शाश्वतिकः " २।४।९॥ कौ० पृ० १७६
इति निर्देशेन, अनित्यत्वज्ञापनात्, न टिलोपः. ❀

२५ निरु०— ५७ अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥४४॥
अतस्तत्र प्रवाहत्वात् नित्यः ( शाश्वत ) उच्यते ।

[ ६२—६३ ]
( ६२ ) त्रिककु{द्/ब्}धामा,

ॐ त्रिककु{द्/ब्}धाम्ने नमः।

भा०— तत्र परमाणुमात्रं हि सृष्टिसंहारगोचरमिदं विश्वम्. तदेतत् ५
स्पष्टयति—
( त्रिककुद्धामा ) इति; ( त्रिककुब्धामा ) इतिके चित;
उभयथापि अवयवा लक्ष्यन्ते (त्रिककुप् )त्रिपाद्विभूतिलक्षणं,परमं
( धाम ) यस्य, सः ( त्रिककुद्धामा ). आम्नायते हि,
(१)"पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि"पु०सू० ३। १०
इति " त्रिपात्, पादः "
इति परममहत्परमाणुपरिमाणौ व्याख्यातौ.
(२)"यस्यायुतायुतांशांशेविश्वशक्तिरियं स्थिता"वि०पु०१-९-५३
( ३ ) " मेरोरिवाणुर्यस्यैतत् " इति.

निर्व०—(१)"भू,सत्तायाम्"प्रपूर्वःधा०भ्वादिः कौ०पृ० ३६८ १५
( २ ) " गत्यर्थ " इत्यादिना, अकर्मकात् कर्तरि क्तः. ३।
४।७२ ॥कौ०पृ० ५९६
( ३ ) " श्युकः " इतिनेट्. ❀ ७।२।११॥कौ०पृ०४२५
तदेतत् स्पष्टीक्रियते. अवयवलक्षणया त्रिककुत्, त्रिककुप् वा.
त्र्यवयवं त्रिपाद्विभूतिलक्षणं, धाम स्थानमस्येति वा, २०
पूर्वपदेन, ज्ञानादि युगत्रिकावयवगुणषट्कं लक्षयित्वा, तस्य धा-
मस्थानं धर्मी तद्विशिष्ट इतिवा—(त्रिककुब्धामा),(त्रिककुद्धामा)वा.
(१) "डुधाञ्,धारणपोषणयोः" धा०जुहोत्यादिःकौ०पृ०४५१

निरु०— ६२ त्रिपाद्विभूतिस्त्रिककुत् सैवस्थानं विशेषतः।
यस्य स ( त्रिककुद्धामा ) २५

१ रमाण्वणुपरि।

( ६० )प्रतर्दनः,। ( ६१ ) प्रभूतस्,

ॐ प्रतर्दनाय नमः। ॐ प्रभूताय नमः।

भा०—सर्वेषां संहर्तृत्वं चाह—
५ ( प्रतर्दनः ).तर्दिः हिंसाकर्मा; यथा,
( १ ) " यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः" कठोप० २—२४।
( २ ) "अत्ता चराचरग्रहणात्" इति. ❀ ब्र०सू० १—२—९ ।
सर्वसंहारेपि—
( प्रभूतः )—समृद्धः,नित्यनिर्मर्यादभोगोपकरणपरमपदत्वात्. ❀

१० निर्व०—(३)"रुहेरश्वलोवा" इति इतन्,उणा०पा० ३कौ०पृ०६२९ पाक्षिको रस्य लश्च. गुणः.बहुव्रीहिः.सवर्णदीर्घः.तत्रोक्तरीत्या पचोऽप्रामौ,
( ४ ) " अक्ष्णोऽदर्शनात्"५।४।७६॥कौ०पृ० १८३
इत्यच् समासान्तः. इलोपः. ❀
१५ अथ,सर्वसंहर्तृत्वं चोच्यते.
अयमेव सर्वं प्रतर्दयति- हिनस्ति संहरतीति—
( प्रतर्दनः ).
( १ ) " तर्द,हिंसायाम्"भा०भ्वादिः कौ०पृ० ३८७
प्रपूर्वः,णिच्,द्वित्वम्. ❀नन्द्यादित्वात् ल्युः ल्युड्वा बाहुलकादित्यादि. यो
२० रनः. णिलोपः. ❀
सर्वसंहारेपि नित्यनिर्मर्यादभोगोपकरणपरमपदतया प्रभूतःसमृद्ध इति—
( प्रभूतः ).

निरु०—६० यस्य च ब्रह्म क्षत्रं च ह्योदनं भवतस्सदा।
( प्रतर्दनः ) स विज्ञेयस्संहर्तृत्वपदो मनुः॥४७॥
२५ ६१ भोगोपकरणं नित्यं निर्मर्यादं परं पदम्।
यस्य तेन समृद्धत्वात् ( प्रभूत ) इति कथ्यते॥४८॥

निर्व०—( ६ ) " कै, शब्दे " धा० भ्वादिः कौ०पृ०४२४
( ७ ) " आदेच उपदेशेऽशिति " इत्यात्वम् ६।१।४५॥कौ०
पृ०४२३
( ८ ) " अन्येष्वपि " ३।२।१०१॥कौ०पृ०५८५ ५
इति, डः. टिलोपः. जश्त्वचर्त्वे; तत्र सांहितिकः भान्तेजश्त्वेन
भस्य बः. नचात्र चर्त्वम् करिष्यते. कृते तु पस्यबः.
दान्तेतु अकृते चावसानिके वा चर्त्वे कृते तु तस्यापि जश्त्वेवा
दइति विवेकः.
( ९ ) " तॄ, प्लवनतरणयोः " धा०भ्वादिः कौ०पृ०४२७ १०
(१०)"तरतेर्ड्रिः" इतिड्रिः.टिलोपः.उणा०पा०५कौ०पृ०६४४
( ११ ) " नेड्वशि " ७।२।८॥कौ०पृ०५८१
इति, नेट्. ततः, पूर्वत्र, बहुव्रीहिगर्भो वहुव्रीहिः.
( १२ )"लिङ्गमशिष्यम्"॥"महाभाष्ये"इतितत्वबोधिन्याम् ॥
इत्यादि. अन्यत्र, तद्गर्भस्तत्पुरुषः. तत्र नकोपि यत्नः. १५
यद्वा, पूर्वपाठानुसार्यर्थनिरुक्तानुरोधात्,
लोकत्रयव्यापिवराहरूपः ( त्रिककुत् ); वहुव्रीहिः. प्रतिपादितो
ऽयं शब्दः.
यद्वा, ककुदेति, व्युत्पादितात् ककुच्छब्दात्,
(१३)"ककुदस्यावस्थायांलोपः"५।४।१४६॥कौ०पृ०१७१ २०
इति निपातनात्, अन्तावयवोऽकारः.
( १४ )"अवाधकान्यपि निपातनानि भवन्ति"॥ परिभाषा. ॥
इति, न दान्तस्यापि वाधः. प्रकृते च तेनैव सूत्रेण वहुव्रीहौ
अन्तलोपस्समासान्तः. पाक्षिकमवसानचर्त्वम्. अत्र च,
( धाम ) नामान्तरं, ज्योतिरिति च तस्यार्थः. अयं च धाञो २५
मनिनि व्युत्पादितश्शब्दः. अनिट् आविष्टलिङ्गोयमित्यादि.

भा०— अथवा, ( त्रिककुप् ) शब्दः, ज्ञानादिगुणषट्कयुगल
त्रिकलक्षकः, तस्य ( धाम ) धर्मी, पूर्णषाड्गुण्य इत्यर्थः.
अतो ह्येनं त्रियुगमाहुः; यद्वा, आर्षनिरुक्तं त्रिककुत्;
५ यथा, मोक्षधर्मे स्वयम्,
( ४ ) " तथैवासं त्रिककुदो वाराहं रूपमास्थितः। 'त्रिककुत्'
तेन विख्यातश्शरीरस्य प्रमापणात् " भा०मो०ना०३४३–६३।
इति; अस्मिन् पक्षे,
( धाम ) इति नामान्तरम्, ज्योतिरिति चार्थः. ❀

१० निर्व०— ( २ ) " सर्वधातुभ्यः " उणा० पा०४ कौ०पृ०६३९
इति, मनिन् अनिट्. पूर्वपाठे,
( ३ ) " कक, लौल्ये " धा०भ्वादिः कौ०पृ०३८८
( ४ ) " मृग्रोरुतिः " बाहुलकादन्यतोपीति उतिः॥ उणा० पा०१
कौ०पृ०६१५
१५ यवादिगणे दकारनिपातनात् तस्य दः. पाठान्तरेतु,
❀ स्कुन्भुरुदित् सौत्रः रोधनार्थः धारणार्थो वा. ततः क्विप्.
( ५ ) " अनिदिताम् " ६।४।२४॥कौ०पृ०७६
इत्यादिना नलोपः; पृषोदरादिलक्षणस्सलोपश्च.

निरु०— यद्वात्रियुगधर्मवान ॥ ४९ ॥ आर्षं निरुक्तमाश्रित्य त्रि-
२० ककुत्स्यात् त्रिलक्षणः। अस्मिन् पक्षे भिन्ननाम धाम ज्योतिस्स्व-
रूपवान ॥ ५० ॥ व्याख्यातॄणामभिप्रायो नामैकत्वेपि कीर्तितः।
तथैवासं त्रिककुदो वाराहं रूपमास्थितः ॥ ५१ ॥ त्रिककुत्तेन
विख्यातः शरीरस्य प्रमापणात्।

१ ज्योतिर्धी। "अयवादिभ्यः कन्" इत्यत्र यवादिगणे दकार निपातनात
तस्यदः. "वावसाने" इतिवाचर्त्वम् दस्यतः।पाठान्तरे तु,
[ तालपत्र श्रीकोशे एवं पाठः. ]

निर्व०—( ६ ) " कै, शब्दे " धा० भ्वादिः कौ०पृ०४२४
( ७ ) " आदेच उपदेशेऽशिति " इत्यात्वम् ६।१।४५॥कौ० पृ०४२३
( ८ ) " अन्येष्वपि " ३।२।१०१॥कौ०पृ०५८५ ५
इति, डः. टिलोपः. जश्त्वचर्त्वे; तत्र सांहितिकः भ्रान्तेजश्त्वेन भस्य बः. नचात्र चर्त्वम् करिष्यते. कृते तु पस्यबः.
दान्तेतु अकृते चावसानिके वा चर्त्वे कृते तु तस्यापि जश्त्वेवा दइति विवेकः.
( ९ ) " तॄ, प्लवनतरणयोः " धा०भ्वादिः कौ०पृ०४२७ १०
(१०)"तरतेर्डिः" इतिड्रिः.टिलोपः.उणा०पा०५कौ०पृ०६४४
( ११ ) " नेड्वशि " ७।२।८॥कौ०पृ०५८१
इति, नेट्. ततः, पूर्वत्र, बहुव्रीहिगर्भो बहुव्रीहिः.
( १२ )"लिङ्गमशिष्यम्"॥"महाभाष्ये"इतितत्वबोधिन्याम् ॥
इत्यादि. अन्यत्र, तद्गर्भस्तत्पुरुषः. तत्र नकोपि यत्नः. १५
यद्वा, पूर्वपाठानुसार्यार्षनिरुक्तानुरोधात्,
लोकत्रयव्यापिवराहरूपः ( त्रिककुत् ); बहुव्रीहिः. प्रतिपादितो ऽयं शब्दः.
यद्वा, ककुदेति, व्युत्पादितात् ककुच्छब्दात्,
(१३)"ककुदस्यावस्थायांलोपः"५।४।१४६॥कौ०पृ०१७१ २०
इति निपातनात्, अन्तावयवोऽकारः.
( १४ )"अबाधकान्यपि निपातनानि भवन्ति"॥परिभाषा.॥
इति, न दान्तस्यापि बाधः. प्रकृते च तेनैव सूत्रेण बहुव्रीहौ अन्तलोपस्समासान्तः. पाक्षिकमवसानचर्त्वम्. अत्र च,
( धाम ) नामान्तरं, ज्योतिरिति च तस्यार्थः. अयं च धाम्नो २५
मनिनि व्युत्पादितःकः. अनिट् आविष्टलिङ्गोयमित्यादि.

( ६३ ) पवित्रम्, ( ६४ ) मङ्गलंपरम्, ॥

ॐ पवित्राय नमः । ॐ परस्मै मङ्गलाय नमः ।

भा०—ईदृक्गुणविभवरूपविरूपकसोपानेन तन्निरूप्यम् स्वरूपमनुभ-
५ विशति–
( पवित्रम् ); ❀ पुंवः,
( १ ) " अशित्रादिभ्यइत्रोत्रौ " इतीत्रप्रत्ययः. उणा० पा० ४ कौ०
पृ० ६४०
( २ ) " कर्तरिचर्षिदेवतयोः " इतिवा. ❀ ३।२।१८६ ॥ कौ०
१० पृ० ६०८
समस्तहेयप्रत्यनीकं–( मङ्गलंपरम् ),

निर्व०— एवं, गुणविभवरूपनिरूपकसोपानेन तन्निरूप्यम् स्वरूपमनु
प्रविश्यते. अखिलहेयप्रत्यनीकस्वरूपतया पूतो भवतीति–(पवित्रम्).
( १ ) " पूञ्, पवने " धा०क्र्यादिः कौ०पृ० ४७५
१५ ( २ ) "अशित्रादिभ्यइत्रोत्रौ" इति वा; उणा०पा० ४कौ०पृ० ६४०
( ३ ) " कर्तरिचर्षिदेवतयोः " ३।२।१८६॥कौ०पृ० ६०८
इति, देवतायां वा इत्रः गुणावादेशौ लिङ्गं पूर्ववत्. ❀
स्वयंप्रभावानुभवनिबन्धननिरङ्कुशानन्दन्यक्कृतनिस्तरङ्गामृतमहोदधिद-
शम्, नित्यनिर्मर्यादकल्याणैकतानम् परम् अनन्त, मङ्गलमिति–
२० ( मङ्गलंपरम् ), एकंनाम.

निरु०— ६३ गुणस्य विभवानां च रूपस्य च निरन्तरम् ॥ ५२ ॥
निरूपकस्य सर्वस्य तन्निरूप्यम् स्वरूपकम् ।
अनुप्रविश्य वसति तत् ( पवित्र ) मिति स्मृतम् ॥ ५३ ॥
६४ सर्वहेयप्रत्यनीकमनन्तानन्दलक्षणम् ।
२५ वेदान्तपारगैर्नित्यमुच्यते ( मङ्गल परम् ) ॥ ५४ ॥

[1] पूञ् ।

भा०—मङ्गिगत्यर्थः. ❀ "मङ्गेरलच्."उणा०पा०५कौ०पृ०६४४ स्वयंप्रभानन्दतया कल्याणैकतानम्. ( परम् ) इति आनन्त्यपरम्. सत्यपि.नैसर्गिकनित्यनिरवधिकनिस्सीमनिस्संख्यस्वगुणविभवानुभववैभवे सनातने, स्वतएव अशेषदोषपरिपन्थिशान्तानन्तानुपमानुकूलतमस्वयंप्रभात्मानुभवनिबन्धननिरङ्कुशानन्दन्यक्कृतनिस्तरङ्गस्तिमितामृतमहोदधिन्यायया परावस्थयैव सर्वनिरपेक्षो नित्यतृप्तश्चेति शक्यनिरूपणो भगवान्. न्यरूपिच,

(१) "आनन्दमयोभ्यासात्" ब्र० सू० १–१–१३।
(२) "आनन्दादयः प्रधानस्य" ब्र० सू०३–३–११। १०
(३) "अक्षरधियान्त्ववरोधः"ब्र०सू०३–३–३३।
इत्यादौ. अवादिच,
(४) "सत्यं ज्ञानमनन्तम्" तै० आ० ७–१–१।
(५) "आनन्दो ब्रह्म" तै०भृ०६।
(६) "शान्तिसमृद्धममृतम्" तै०शी०६–२।
(७) "यत्र लक्षयेच्छान्तमनुद्वातमतरङ्गन्तुतमभुतम् परं ब्रह्म तत्र धारयेदित्येषा नैष्ठिकी धारणा" १५
(८) "अतरङ्गमनिर्देश्यमर्पदानन्दलक्षणम्"

इत्यादिभिः. ज्ञप्तिमात्रैकरसत्वादस्तु, ❀ अवगतखण्डेन भगवः स्वणिद्धनः संविदानन्दशक्त्यैश्वर्यादिगुणकोपि, अतिनिर्वल्यानुकूल्येन स्वयं स्वस्मै प्र- २० काशत इति अस्य ज्ञानानन्दव्यपदेशः, ननु ज्ञानसुखयोरन्यथा; यथा, मणि तरणिदीपादिकं स्वप्रभाविषयं प्रकाशयति, स्वयं च स्वतेजसः प्रकाशते, तनः, तेजः तेजस्वीनि च व्यपदिश्यते; एवम्, अर्थं, स्वगुणेन ज्ञानेन सर्वमपरोक्षयति, तदनपेक्षश्च स्वयं प्रकाशते, ज्ञानं ज्ञानमिव व्यपदिश्यते. २५

१ अनुभवे वैभवे। २ स्वतन्त्र एव।। ३ [illegible]। ४ मरणहा ५ स्वप्रभाविषयम्।

श्लो० ॥ ८ ॥ (६५) ईशानः,

ॐ ईशानाय नमः ।

भा०— (९) " तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत् " ब्र०सू०
५ २—३—२९।
इति न्यायेन वा, ज्ञानादिव्यपदेशः एवञ्च,
(१०) " सत्यं ज्ञानम् " तै०आ०२—१—१।
(११) " यस्सर्वज्ञस्सर्ववित् " मुण्ड०उ०१—१—१०।
इत्यादयो न परस्परमुपरुन्ध्युः. तथा वार्ष्णेयाध्यात्मे जीवप्रसङ्गे,
१० (१२) " यथा जीवः प्रशान्तात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥ सोत्र वेदयते वेद्यम् "
इति. ❀
निमीलदुन्मीलदीदशस्वरूपेभ्यो बद्धमुक्तनित्येभ्योऽस्य
व्यावृत्तिः कीर्त्यते.—( ईशानः ),—

१५ निर्व०— (१) " मगि, सर्पणे " धा०भ्वादिः कौ०पृ० ❀
(२) " इदितोनुम्धातोः " इति, नुम्.७।१।५८॥कौ०पृ०३८२
(३) " नश्चापदान्तस्य झलि " इति, नस्यानुस्वारः; ८।३।२४॥
कौ०पृ०२०
(४) " अनुस्वारस्य ययि परसवर्णः " ८।४।५८॥कौ०पृ०२०
२० इति, परसवर्णो ङः,
(५)" मङ्गेरलच्"इत्यलच्.लळयोरभेदः.उणा०पा०५कौ०पृ०६४४
परशब्दो व्याकृतः. लिङ्गन्तूभयत्रापि प्राग्वत्. ❀
निमीलदुन्मीलदीदशस्वरूपबद्धमुक्तादिवैलक्षण्यं कीर्त्यते.
सर्वावस्थस्वपरसमस्तवस्तुव्यवस्थापनशीलतया ईष्ट इति—( ईशानः ).

२५ निरु०— ६५ सर्वावस्थासु सर्वेषां व्यवस्थापनशीलनः ।
वस्तूनां भगवान् साक्षात् ( ईशानः ) परिकीर्तितः ॥ ५५ ॥

भा०-(१)" ताच्छील्य " ३।२।१२९॥ कौ०पृ० ६००
इत्यादिना चानश्. सर्वावस्थस्वपरसमस्तवस्तुव्यवस्थापनस्वभाव इत्यर्थः. यथा,
(२) " तमीश्वराणां परमम्महेश्वरम् " श्वे०उ०६—७। ५
(३) " स्वाभाविकीज्ञानबलक्रिया च " श्वे०उ०६—८।
(४) " न तस्य कश्चित् पतिरस्ति लोके, न चेशितानैवतस्य लिङ्गम्। सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः " श्वे०उ०६—९।
(५) " सर्वस्यवशी सर्वस्येशानः सर्वस्याधिपतिः सनसाधुना कर्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपति १० रेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" बृ०उ०६-४-२२।
(६) " स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा " बृ०उ०४—५—१५।
(७) " एकइद्राजा जगतो बभूव " ४का१प्र०८अ०।
(८) " सईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय " श्वे०उ०६—१७। १५
(९) " ईश्वरस्सर्वभूतानाम् " गी०१८—६१।
(१०) " ईशते भगवानेकस्सत्यमेतद्ब्रवीमि ते " भार० उद्यो० ६७—१३।
(११)"परमात्मा च सर्वेषामाधारःपरमेश्वरः" वि०पु०६-४—४०।२०
इत्यादि. अतः, कल्पनोपाधिपरिणामसत्याजैश्वर्यसार्वज्ञादिकं जल्पन्त्यः निरिखलजलाञ्जलिः. ❀

निर्व०—(१) " ईश, ऐश्वर्य " धा०अदादिः को०पृ०४३८
(२) " ताच्छील्यवयो वचनशक्तिषु चानश् " ३।२।१२९॥ को०पृ०६०० इति. ताच्छील्ये चानश्. ❀ २५

१ स्वानिस्वाज्ञानिः।

{ ६६–३२३ / ४०९–९५६ } प्राणदः,

ॐ प्राणदाय नमः ।

भा०—अस्यैश्वर्यस्य प्रथमं विषयं विवक्षति.—

५ ( प्राणदः ),—

प्राणं ददातीति कः. सूरिभ्यस्सदा दर्शनरूपस्वानुभवपरिचरणानुकूलबलद इति भावः. यथा,

( १ ) " य आत्मदा बलदाः " ४का० १प्र०८अ० ।

( २ ) "सदेवः प्राण आविशति" इत्यादि. ❋ बृ०उ० ३–५–२० ।

१० निर्व०—अस्यैश्वर्यस्य प्रथमो विषयो विवक्ष्यते.

सूरिभ्यः सदादर्शनरूपस्वानुभवपरिचरणानुकूलम्,प्राणम्, बलम्, ददातीति—( प्राणदः ).

( १ ) " डुदाञ्,दाने" धा०जुहोत्यादिः कौ०पृ०४५१

( २ )"आतोऽनुपसर्गे"इति.कः. आल्लोपः.३।२।३॥कौ०पृ०५७०

१५ ( ३ ) " अनच"इतिधातुः.धा०अदादिः कौ०पृ०४४६

( ४ ) " श्वस,प्राणने,अनच"धा०अदादिः कौ०पृ०४४६

इति,पठ्यते.चात, ❋ अनिरपिप्राणने. प्रपूर्वः.

( ५ ) " पुंसि संज्ञायां घःप्रायेण"३।३।११८॥कौ०पृ०६६३

इति,घापवादः,

२०( ६ ) " हलश्च"इति,करणेघञ्.३।३।१२१॥कौ०पृ०६६३

(७)"अतः"इत्युपधावृद्धिः.सवर्णदीर्घः.७।२।११६॥कौ०पृ०३८६

( ८ ) "पूर्वपदात्संज्ञायामगः"इति णत्वम्,८।४।३॥कौ० पृ०१६७

( ९ ) " अनितेः " इत्यस्यासिद्धत्वात्. ८।४।१९॥कौ० पृ०४४६

तस्यतु,प्राण्यादित्यादिरवकाशः. ❋

२५ निरु०—६६ सूरिभ्यः परिचर्यार्थं बलदः ( प्राणदः ) स्मृतः ।

{३२२ / ४०८} (६७) प्राणो

ॐ प्राणाय नमः।

भा०—तेषाम्,—

(प्राणः)—उज्जीवनहेतुश्च. यथा, ५

(१) "ततोदेवानांनिरवर्ततासुरेकः" ४ का०१प्र० ८अ०।

(२) "कोह्यो वान्यात् कःप्राण्यात्" तै०आ०२—७—१।

(३) "प्राणो रक्षति विश्वमेजत्" २—अ०५ प्र०१ अ०।

(४) "प्राणस्तथानुगमात्"ब्र०सू०१—१—२९।

अत्रोभयत्र निपुणोत्प्रेयान्युदाहरणानि. १०

(५) "अथैनमेते देवाः प्राणा अमृता आविशन्ति"

(६) "तदेतदक्षरं ब्रह्म सप्राणस्तदुवाङ्मनः"मु०उ०२—२—२।

(७) "सत्यात्मप्राणारामं मन आनन्दम्" तै०शी०६—२।

(८) "मनोमयः प्राणशरीरो भारूपस्सत्यसंकल्पः"छा०उ०३—१४—२। श्रीपौष्करे,

(९) "अथोपकरणं दिव्यं पञ्चशक्त्युपलक्षितम्। कालज्ञानक्रिये—च्छाख्यप्राणसंज्ञं महामते॥ प्राणशक्तेस्तुचाख्यातं षाड्गुण्यमखिलं हि यत्। अधिदैवतमब्जाक्षः वासुदेवस्सनातनः"॥ इति.॥ श्रीपाञ्चरात्रे-पौष्करसंहितायाम्. १५

निर्व०—तेषामुज्जीवनहेतुतया प्राणिति अनेन तदुज्जीविजानमिति—२०

(प्राणः)

(१) "अन च" चात् प्राणने, प्रपूर्वः वा०अदादिःकौ०पृ०४४६.

घापवादे,

(२) "हलश्च" इति, घञ्, ३।३।१२१॥ कौ०पृ०६६२

निरु—०६७ उज्जीवनस्य हेतुत्वात् वगणां (प्राण) इतिः॥७६॥

(६८) ज्येष्ठः,

ॐ ज्येष्ठाय नमः।

भा०—(१०) "ज्ञानक्रियेच्छाप्राणाख्यं शक्तिव्यूहं द्विजाच्युतम्।"
५ इतिच. ❀ ॥ श्रीपाञ्चरात्रे- पौ०सं० ॥
(ज्येष्ठः),-प्रशस्यशब्दादिष्ठनि,
(१) "ज्यच"५।३।६१॥कौ०पृ०३४२
इति,ज्यादेशः. स्वेन सूरिभिश्च सर्वदा सर्वथानुभवेपि अदृष्टपारमहावि-
भूतित्वेन प्रशस्यतमः. यथा,
१० (२) "भगवान् वासुदेवो ज्यायसी विभूतिः" इति.
(३) "ब्रह्मैव भूतानां ज्येष्ठम्" २अ०८प्र०।
वृद्धतमो वा, सर्वेभ्यः पूर्वभावित्वात्.
(४) "वृद्धस्यच" इति,ज्यादेशः.५।३।६२॥कौ०पृ०३४२
सभापर्वणि,
१५ (५) "एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः। परश्च सर्वभूतेभ्यः
तस्माद्वृद्धतमोऽच्युतः" ॥ इति. ❀ भा०स०३८—२४।

निर्व०— उपधावृद्धौ, दीर्घे, उक्तन्यायात्,
(३) "पूर्वपदात्" ८।४।३॥ कौ० पृ० १६७
इति,णत्वेच, व्युत्पादि ह्यय शब्दः. ❀
२० स्वात्मना सूरिभिश्च, सदानुभवेपि अदृष्टपारमहाविभूतितया अतिशये
न प्रशस्य इति वा,—
सर्वेभ्यः पूर्वभावितया अतिशयेन वृद्ध इति वा,—
(ज्येष्ठः).
(१) "शंसु,स्तुतौ" प्रपूर्वः.धा०भ्वादिः कौ०पृ०५११

२५ निरु०—६८ सर्वदानुभवेप्यन्यैरदृष्टपारभूतिनः। (ज्येष्ठः)

( ६९ ) श्रेष्ठः,

ॐ श्रेष्ठाय नमः।

भा०—तैस्सदानुभवप्रीत्या स्तोत्रैः परिचर्यमाणः— ( श्रेष्ठः ).

निर्व०—( २ ) " प्रशस्यस्य श्रः" इति सौत्रनिर्देशात् क्यप्.५। ५
३।६०॥ कौ० पृ० ३४१

( ३ ) " अनिदिताम्" इति,नलोपः. ६।४।२४॥कौ०पृ०७६
एवं निष्पन्नात् प्रशस्यशब्दात्;—

( ४ ) " वृधु,वृद्धौ" धा०भ्वादिः कौ०पृ० ४१२

( ५ ) " गत्यर्थ" ३।४।७२॥ कौ०पृ० ५९६ १०
इत्यादिना, अकर्मकात् कर्तरि क्तः, किस्वाद्गुणः.

( ६ ) "उदितोवा" इति क्त्वायामिड्विकल्पात्,७।२।५६॥कौ०
पृ०६६८

(७)"यस्यविभाषा"इति निष्ठायाम् नेट्.७।२।१५॥कौ०पृ०५८७

(८)"झषस्तथोर्धोधः"इति,तस्य धः.८।२।४०॥ कौ०पृ० ३८५ १५

( ९ ) " झलांजश्"इति,जश्त्वेन पूर्वस्य ८।४।५३॥कौ०पृ०९
धस्य दः. इत्थं निष्पन्नात् वृद्धशब्दात् वा. आतिशायनिके इष्ठनि,

(१०)"प्रशस्यस्यश्रः"इति वर्तमाने,५।३।६०॥कौ०पृ०३४१

( ११ ) " ज्यच" ५।३।६१॥ कौ० पृ० ३४२

( १२ ) " वृद्धस्यच" ५।३।६२॥कौ०पृ०३४२ २०
इति सूत्राभ्यां, यथाक्रममुभयत्रापि ज्यादेशः.

( १३ ) " प्रकृत्यैकाच्" ६।४।१६३॥ कौ०पृ०३४१
इति, प्रकृतिभावात्, न टिलोपः. ❀ आद्गुणः. ❀
तैस्सदाऽनुभवप्रीत्या स्तुतिभिः परिचर्यमाणः प्रशस्यतम इति—
( श्रेष्ठः ).प्रागिव व्युत्पादितात् प्रशस्यशब्दात् इष्ठनि, २५

निरु०—६९ ( श्रेष्ठ ) श्र तैर्नित्यं स्तुतत्वादभिधीयते॥ ५७

{ ७० / १९९ } प्रजापतिः, ।

ॐ प्रजापतये नमः ।

भा०—( १ ) " प्रशस्यस्यश्रः " यथा, ५।३।६०॥कौ०पृ०३४१
५ ( २ ) " तद्विप्रासोविपन्यवोजागृवांसस्समिन्धते । विष्णोर्यत्परमं पदम् " इति, सुबा०उ०८ ।

" विपन्यवः "-स्तुतिशीलाः; सर्वदास्योपलक्षणं चैतत्.

( ३ ) " तस्मै देवा उपासते " " तस्मै "तच्छेषभूतास्सन्तः, तमुपासते सेवन्त इत्यर्थः. ❀ केन कश्च तैस्संबन्धः तत्राह—

१० (प्रजापतिः),-बद्धमुक्तेभ्यः प्रकृष्टतया जायन्ते भवन्तीति प्रजाः,सूरयः, यथा,

( १ ) " रश्मिं रश्मीनां मध्ये तपन्तम् ऋतस्य पदे कवयो निपान्ति " आर०३ प्र० ११अ० ।

( २ ) " यमन्तस्समुद्रे कवयो वयन्ति तदक्षरे परमे प्रजाः "तै० १५ ना०६—१—३ ।

निर्व०—( १ ) " प्रशस्यस्य श्रः " ५।३।६॥कौ०पृ०३४१ इति,श्रादेशः. प्रकृतिभावः प्राग्वत्.गुणः. ❀

तेषां च तेन नाथवत्तया बद्धमुक्तापेक्षया, प्रकर्षेण जायमानानां—प्रजानां प्रादुर्भवतां सूरीणाम्, पतिः- स्वामी, नित्यपरिचरणीय इति—

२० ( प्रजापतिः ).

( १ ) " पा, रक्षणे " धा०अदादिः कौ०पृ०४४३

निरु०—७० बद्धादुत्कृष्टतो ये च जायन्ते सूरयः प्रजाः ।
तेषां यो नित्यसूरीणाम् पतिस्स स्यात् ( प्रजापतिः )॥ ५८ ॥

१ के ते कश्च ।

भा०–( ३ ) " यस्मिन् देवा अधिविश्वे निषेदुः" तै०ना० ६–१–२।

( ४ ) " अधिरीश्वरे" १।४।९७॥ कौ०पृ०१२७

( ५ ) " यस्मादधिकं यस्य चेश्वरवचनं तत्रसप्तमी" २।३।९॥ ५ कौ०पृ०१२७

( ६ ) " अधिब्रह्मदत्तेपाञ्चालाः" इतिवत्, तेन नाथवन्तस्सन्ती त्यर्थः.

( ७ ) " यो देवेष्वधिदेव एक आसीत्" ४का० १प्र०८अ०।

( ८ ) " यत्र पूर्वे साध्यास्सन्ति देवाः"३का०५प्र०११अ०। १०

( ९ ) " यत्र ऋषयः प्रथमजा ये पुराणाः"।।अच्छिद्रे॥

( १० ) " सदा पश्यन्ति सूरयः" पु०सू० १४।

(११)"मध्ये वामनमासीनं विश्वेदेवा उपासते"कठोप० २–५-३।

इत्यादिभिः श्रूयमाणाः–;तेषां पतिः-स्वामी, नित्यपरिचरणीयः.-❀ उचितेन देशेन विशिनष्टि.– १५

---

निर्व०–(२)"पातेर्डतिः"इति,डतिः. टिलोपः. उणा०पा०५कौ० पृ०६४२.

( ३ ) " जनी,प्रादुर्भावे"प्रपूर्वः.धा० दिवादिः कौ० पृ०४५४

( ४ ) " उपसर्गेचसंज्ञायाम्" ३।२।९९॥कौ०पृ०५८५ इति, जनेर्डः; डित्वाट्टिलोपः- २०

( ५ ) " स्त्रियाम्" ४।१।३॥ कौ०पृ०८८

( ६ ) " अजाद्यतष्टाप्"इति,अदन्तलक्षणटाप्-४।१।४॥कौ० पृ०८८ सवर्णदीर्घः. ❀ स चोचितदेशेन विशेष्यते.

नित्यनिर्दोषपरममत्त्वमयत्वादिना, हिततया, रामणीयकेन च,हिर ण्यमाप्याद्वा, हिरण्यस्य परमस्य धाम्नः, गर्भः. तन्नित्यनिवासात् त- २५ द्गुणक इति–

{ ७१ / ४१२ } हिरण्यगर्भो,

ॐ हिरण्यगर्भाय नमः।

भा०— ( हिरण्यगर्भः ); —निर्दोषनिरवधनित्यपरमसत्त्वात्मकद्रव्यविशे-
५ षत्वेन हिरण्यसाम्यात्, हितं, रमणीयमिति वा, ( हिरण्यम् )- परमं धाम- तस्य गर्भभूतः, तत्र नित्यवासात्. तद्विषये हि श्रूयते—
( १ ) " हिरण्मये परे लोके विरजं ब्रह्मनिष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ न तत्र सूर्यो भाति" इत्यादि.मु० उ०२—२—१०।
१० (२)"देवानां पूरयोध्या तस्यां हिरण्मयः कोशः"आर० १प्र०२७अ०।
(३)"पुरं हिरण्मयीं ब्रह्मा विवेशापराजिता"इत्यादि. ❀ आ० १-२७।

निर्व०— ( हिरण्यगर्भः ).
( १ ) " गॄ,निगरणे" धा० तुदादिः कौ०पृ०४६८
( २ ) " अर्तिगॄभ्यांभन्" इति,भन्.उणा०पा० ३ कौ० पृ०६३१
१५ गुणो रपरः.
( ३ ) " नेड्वशिकृति" इति,नेट्.७।२।८॥कौ०पृ०५८१
( ४ ) " हर्य,गतिकान्त्योः"धा०भ्वादिः कौ०पृ०४०४
( ५ ) " हर्यतेःकन्यन्हिरच"उणा०पा०५कौ०पृ०६४४
इति, कन्यन्, धातोः हिरादेशश्च. आदेशे अकार इत्, उच्चारणार्थो वा.
२० कित्त्वादगुणः.
( ६ ) अट्कुप्वाङ्नुम्व्यवायेपि" ८।४।२॥कौ०पृ०३२
इति, णत्वम्. ❀

निरु०— ७१ [ हिरण्यं परमं धाम हिरण्यस्य समानतः ।
( हिरण्यगर्भः ) स प्रोक्तस्तस्मिन् वसति यस्सदा॥५९॥ ]

१ निरवद्य । २ हिरमणीय ।

## (७२) भूगर्भो, {१६९ / ७४१} (७३) माधवो,

ॐ भूगर्भाय नमः। ॐ माधवाय नमः।

भा०— अथ, तत्र दिव्यमहिषीकत्वम्.—
(भूगर्भः) भूः—भूमिः, भगवती ह्रीक्षमाद्यपरपर्याया, सदानुभवेन ५
भरणीया गर्भभूताऽस्येति. आमनन्ति हि ताम्,
(१) "महीं देवीं विष्णुपत्नीमजूर्याम्" ३ अष्ट० १प्र० २अ०।
(२) "उद्धृतासि वराहेण" इत्यादौ-तै०ना०६—१—२८।
श्रीविष्णुस्मृतौ विस्तरः. ❀
(माधवः),–मायाः- श्रियः, धवः- स्वामी, श्रियःपतिः. यथा, १०
(१) "अस्येशाना जगतो विष्णुपत्नी" नीला०सू०।

निर्व०— अथ, तत्र दिव्यमहिषीकत्वं प्रतिपाद्यते तत्र,
(१) "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" पु०सू०९।
इति प्रथमोपात्तह्रीशब्दाद्यपरपर्याया भूःभूमिः, गर्भः-
सदानुभवेन भरणीयतया गर्भभूता,अस्येति— १५
(भूगर्भः). पूर्ववत् धातुः; भनादि च. भुवः,
(२) "संपदादिभ्यः क्विप्" इति, स्त्रियाम् वा, ३।३।१०८॥कौ०पृ०६५८
(३) "भुवःसंज्ञान्तरयोः" ३।२।१७९॥कौ०पृ०६०७
इतिवा, क्विप्. बहुव्रीहिः- ❀
स्वरूपनिरूपकभूतायाः लोकमातुः श्रद्धाद्यपरनामधेयायाः २०
मायाः- श्रियः, धवः- पतिरिति—
(माधवः)-"धविर्गत्यर्थः." धा० भ्वादिः कौ०पृ०४०६
अस्मात् पचाद्यचि, इदित्वात् नुम्, पृषोदरादित्वाल्लोपे च, कथं-
चित् च्युतार्थोऽयम् शब्दः. यद्वा,

निरु०— ७२ [ यस्य भूर्भरणीयाभूत् (भूगर्भो)ऽनुभवेन सः। २५
७३ श्रियः श्रद्धादिनाम्न्याश्च पतिर् (माधव) इष्यते ॥६०॥]

भा०-( २ ) "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" पु०सू० ।
अस्याः स्वरूपवत्, नित्यनिर्मलरूपत्वम्, निरुपाधिकपरमैश्वर्यादि, जगन्मातृत्वम्, औत्पत्तिको भगवत्संबन्धो नित्यानपायश्च इत्यादि, त-
५ त्त्वपरेषु शास्त्रेष्वमर्यादं. वेदेषु तावत्, श्रीसूक्तम्, श्रद्धासूक्तम्, मेधासूक्तम्, उत्तरनारायणम्, कौषीतकी ब्राह्मणम्, इत्यादौ वैष्णवे,
( ३ ) "नित्यैवैषा जगन्माता विष्णोःश्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम" वि० पु० १-८-१७ ।
इत्युपक्रम्य, अमृतमन्थने इन्द्रस्तवादिर्विस्तीर्णः, ब्राह्मे,-
१० ( ४ ) "तच्छक्तिर्दुर्जया भीमा विष्णुशक्तिरिति स्मृता । सर्वभूतहृदब्जस्था नानारूपधरापरा ॥ प्राणाख्या मन्त्रमाता च विश्वस्य जननी ध्रुवा" इत्युपक्रम्य; ॥ ब्राह्मे ॥
(५) "देवी भिन्नाञ्जनश्यामा निर्गुणा व्योम[1] एवहि" ॥ ब्राह्मेइत्युक्तम्. ॥
( ६ ) "तथैवैका पराशक्तिः श्रीस्तस्य करुणाश्रया । ज्ञानादिषाड्गुण्य
१५ मयी या प्रोक्ता प्रकृतिः परा॥एकैव शक्तिः श्रीस्तस्य द्वितीया परिवर्तते । परावरेण रूपेण सर्वाकारा सनातनी ॥ अनन्तनामधेया च शक्तिचक्रस्य नायिका । जगच्चराचरमिदं सर्वं व्याप्य व्यवस्थिता" ॥ लक्ष्मीसहस्रफल० १० ॥
( ७ ) "महाविभूतेः संपूर्णषाड्गुण्यवपुषः प्रभोः । भगवद्वासुदेवस्य नि-
२० त्यैवैषानपायिनी ॥ एकैव वर्तते भिन्ना ज्योत्स्नेव हिमदीधितेः । सर्वशक्त्यात्मिका चैव विश्वं व्याप्य व्यवस्थिता ॥ सर्वैश्वर्यगुणोपेता नित्यं तद्धर्मधर्मिणी । प्राणशक्तिः परा ह्येषा सर्वेषां प्राणिनां भुवि ॥ शक्तीनां चैव सर्वासां योनिभूता परा कला" ॥ लक्ष्मीसहस्र०उपो० १९ ॥
इत्यादि लक्ष्मीसहस्रादि च द्रष्टव्यम्. तत्रैव,
२५ ( ८ ) "यस्माल्लक्ष्म्यंशसंभूताःशक्तयो विश्वगाः सदा । कारण-

---
१ व्योमविग्रहा ।

( ७४ ) मधुसूदनः, ॥

ॐ मधुसूदनाय नमः।

भा०— त्वेन तिष्ठन्ति जगत्यस्मिंस्तदाज्ञया॥ तस्मात्प्रीता जगन्माता श्रीरस्याच्युतवल्लभा॥ सुप्रीताश्शक्तयस्तस्य सिद्धिमिष्टां दिशन्ति च"॥ ५ लक्ष्मीसहस्रफल०७।

वैष्णवस्मृतिधर्मेषु चैतद्विषयमशेषम् ।श्रीरामायणं च कार्त्स्न्येन;यथा,

(९)"काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्"इति.रा०बा०४-७।

( १० ) " श्रद्धया देवो देवत्वमश्नुते" काठ०३ प्र०३ आ०

इत्येतदस्यास्तत्त्वरहस्यम्. ❀ १०

एवं, सर्वनिर्वाहकत्वात्, असुरनिरसनादिना निष्प्रतिपक्षलक्ष्मीकत्वाच,—

( मधुसूदनः ). नन्द्यादित्वाल्युः. एवं, नन्दनः, वर्धनः,

निर्व०—( १ ) " धुञ्,कम्पने " धा०क्र्यादिः कौ०पृ० ४७६ पचाद्यच्. गुणावादेशौ. १५

( २ ) " मन, ज्ञाने"धा०दिवादिः कौ०पृ० ४५६

( ३ ) " अन्येष्वपिदृश्यते" ३।२।१०१॥कौ०पृ०५८५

इत्यपिशब्दात् सर्वोपाधिव्यभिचारार्थात्, निरुपपदादन्यतोपि डः. टिलोपः. ततः, ❀ स्त्रियामदन्तलक्षणटाप्. सवर्णदीर्घः. ❀

एवं, सर्वनिर्वाहकत्वात्, असुरनिरसनादिना निष्प्रतिपक्षलक्ष्मीकत्वाच, २०

मधुम्— असुरं, सूदते सूदयति—हन्तीति वा;-। आर्षनिरुक्तानुसारात्, मधुम्—इन्द्रियं सूरिजनकरणं,सूदते सूदयति-आत्मन्युपसंहरतीति वा;— ( मधुसूदनः ).

निरु०—७४ मध्वाख्यमसुरं हन्ति सूरीणां करण च वा। उपसंहरति स्वस्मिन्। ( मधुसूदन ) इष्यते॥६१॥ २

श्लो० ॥९॥ { ७५ / ३६ } ईश्वरोः,

ॐ ईश्वराय नमः ।

भा०—मदनः, संकर्षणः, जनार्दनः, इत्यादयो ल्युप्रत्ययान्ताः.
५ ( १ ) " सर्वतत्त्वनयनाच्चैव मधुहा मधुसूदनः "भा०उ०६९—४ ।
इत्यार्षं निरुक्तम्.
आत्मनि नित्यानन्तरायतया सूरिजनकरणोपसंहर्तृत्वात् वा.
( २ ) " मधुरिन्द्रियनामा स ततो मधुनिषूदनः "इत्यादि. ❀
अपारेपि परभोगभूमौ अप्रतिहतस्वेच्छः—
१० ( ईश्वरः ). यथा,

निर्व०— ( १ ) "षूद,क्षरणे"धा भ्वादिः कौ० पृ० ३८३
भ्वादिः, चुरादिर्वा. षःसः. नन्द्यादिल्युः. बाहुलकात् ल्युडित्यादि.
योरनः. चुरादेस्तु णिलोपो विशेषः.
( २ ) " मन,ज्ञाने"उप्रकरणे, धा०दिवादिः कौ०पृ०४५६
१५ ( ३ ) " फलिपाटिनमिमनिजनांगुक्पटिनाकिधतश्च "उणा०पा०१
कौ०पृ०६१०
इति,उः,धोन्तादेशश्च.
( ४ ) " इण्कोः" इत्यधिकृत्य,८।३।५७।कौ०पृ०३४
( ५ )"आदेशप्रत्यययोः" इति षत्वे प्राप्ते ८।३।५९।कौ०पृ०३४
२० ( ६ ) "सात्पदाद्योः" ८।३।१११॥कौ०पृ० ३५८
इति, पदादित्वात्, न षत्वम्. ❀
अपारेपि परभोगस्थाने इष्टे—अप्रतिहतस्वेच्छो भवतीति— ( ईश्वरः ).

निरु०—७५ [ ईशानाद्रमणाच्चापि ( ईश्वरः ) परिकीर्तितः । ]

१ मपत्नाय-मुक्तिनकेतनयार्थेव । २ नित्यान्तराय। नितान्तकान्त ।

{७६ / ९०९} विक्रमी,

ॐ विक्रमिणे नमः।

भा०— ( १ ) " सत्यकामस्सत्यसंकल्पः" छां०उ०८—१—५।
( २ ) " यत्र कामगमो वशी" इत्यादि. ❀ ५
इच्छाप्रतिहन्तृप्रसक्तिपरिपन्थिस्वभावं चाह—
( विक्रमी ) इति. भूमप्रशंसानित्ययोगाद्यर्थ इनिः यथा,
( १ )"मनसैव जगत्सृष्टिं संहारं च करोति यः। तस्यारिपक्षक्षपणे
कियानुद्यमविस्तरः"॥ इत्यादि. ❀ वि०पु०५—२२—१५।
अथ, ईदृशनिरतिशयपौरुषानुरूपं दिव्यं शार्ङ्गं धनुः नित्यमस्येति— १०

निर्व०— ( १ ) " ईश, ऐश्वर्ये" धा०अदादिः कौ० पृ०४३८
( २ )"स्थेशभास"इत्यादिना वरच्.३।२।१७५॥कौ०पृ०६०६
( ३ ) " नेड्वशिकृति"इति,नेट्. ❀ ७।२।८॥ कौ०पृ०५८१
इच्छाप्रतिहन्तृप्रसक्तिपरिपन्थिस्वभावतया, विक्रमः पौरुषम्,
अस्यास्ति अस्मिन्वेति— १५
( विक्रमी ).
( १ ) " क्रमु,पादविक्षेपे"विपूर्वः. धा०भ्वादिः कौ० पृ०४०१
( २ ) " भावे" इति,घञ्.३।३।१८॥कौ०पृ०६४७
( ३ ) " नोदात्तोपदेशस्यमान्तस्यानाचमेः"७।३।३४॥ कौ०
पृ०५४१ २०
इति,ञ्णितिकृति, उपधावृद्धिप्रतिषेधः. इत्थं निष्पन्नात् विक्रमश-
ब्दात्, भूमप्रशंसानित्ययोगादौ मत्वर्थे यथायथम्.
( ४ ) " संज्ञायांमन्माभ्याम् "५।२।१३७॥कौ०पृ० ३३३
इति.इनिः. ठनोमभावेशार्थः.

निरु०—७६ विक्रमः पौरुषं प्रोक्तः तद्वत्त्वाद(विक्रमी)बुधैः॥६२॥ २५

(७७) धन्वी,

ॐ धन्विने नमः।

भा०–( धन्वी ). ❀ ब्रीह्यादित्वात् यथोक्तार्थे इनिः. सर्वदिव्यायुध-
५ प्रदर्शनं चैतत्. यथा,

( १ ) " शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरु॰.नमः।अजितः खड्गधृग्वि-
ष्णुः कृष्णश्चैव बृहद्बलः" रा० यु० १२०–१५।

( २ ) "शरा नानाविधाकाराः धनुरायतविग्रहम्। अनुव्रजन्ति काकु-
त्स्थं सर्वे पुरुषविग्रहाः"

१० ( ३ ) " ततो राजन् भगवानुग्रधन्वा नारायणः प्रभवश्चाप्ययश्च"

निर्व०–( ५ ) " यस्य" इति लोपः ६।४।१४८॥कौ०पृ०५६
इन्नन्तलक्षणो दीर्घइत्यादि. ❀
अथ, ईदृशनिरतिशयपौरुषानुरूपं दिव्यं सर्वदिव्यायुधोपलक्षकं शार्ङ्गं
धनुः धन्व वा शरासनं नित्यमस्यास्तीति–
१५ ( धन्वी ). आद्ये कल्पे,

( १ ) " धन,धान्ये" छान्दसोयम्. धा०जुहोत्यादिः कौ०पृ०४५२
अस्त्येव चात्र च्छन्दस्त्वम्. अथवा, वक्ष्यमाणन्यायात्, छान्दसस्या
प्यस्य भाषायां प्रयोगः.

( २ )" तॄचरित्सरितनिधनिनिमिमस्जिभ्यउः"उणा० पा० १कौ०
२० पृ० ❀ इत्युः.ततः,अदन्तादस्मात्,

( ३ ) " व्रीह्यादिभ्यश्च" ५।२।११६॥कौ० पृ०३३०
इनि, उक्तार्थे इनिः.नच,

( ४ ) " ओर्गुणः" इति,गुणः,६।४।१४६॥कौ०पृ०१६५

निरु०–७७ पौरुषानुगुणं शार्ङ्गं यस्य ( धन्वी ) स कथ्यते। ]

## (७८) मेधावी,

ॐ मेधाविने नमः ।

भा०– (४) " भूतादिमिन्द्रियादिं च द्विधाहंकारमीश्वरः।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्" ॥ इत्यादि. ❀ वि० ५
पु०१–२२–७०। (मेधावी).
निस्सीमनित्यभूमानुगुणसहजसार्वज्ञः–
(१) "अस्मायामेधास्रजोविनिः" ५।२।१२१॥कौ०पृ०३३१
इत्युक्तार्थे विनिः. ❀

निर्व०–तत्रहि ❀ ओरोदिति वक्तव्ये, गुणोक्त्या, संज्ञापूर्वको १०
विधिरनित्य इति ज्ञापनात्. ततः,
(५) " इकोयणचि" इति,यण्वकारः.६।१।७७॥कौ०पृ०८
द्वितीये,धविः गत्यर्थः; इदित्.ततोनुम्. नच,
(६) "अनिदितांहलउपधायाःक्ङिति"६।४।२४॥कौ०पृ०७६
इति,किदादौ नलोपः, तत्रैव, १५
(७) "अनिदिताम्"इतिप्रतिषेधात्.ततः,६।४।२४॥कौ०पृ०७६
(८) "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" उणा० पा० १
कौ०पृ०६१८
इति,कनिन्. आविष्टलिङ्गोयम्. मरौ पुमान्, शरासने क्लीबम्.
ततः,अत्रापि प्राग्वदेव इनिः. २०
(९) "नस्तद्धिते"इति,टेर्लोपो विशेषः.६।४।१४४॥कौ०पृ०१३३
उभयत्रापीनन्तलक्षणो दीर्घ इत्यादि. ❀
निस्सीमनित्यभूमानुगुणसहजसार्वज्ञलक्षणा मेधा नित्य-
मस्यास्तीति–(मेधावी).

निरु०–७८ [ निस्सीमभूमानुगुणनित्यसार्वज्ञलक्षणा ॥६३॥ २५
मेधा यस्यास्ति स प्रोक्तः (मेधावी) ति विचक्षणैः। ]

## ( ७९ ) विक्रमः,

ॐ विक्रमाय नमः ।

भा०—विना-पतगपतिना, त्रयीमयेन, क्रमणं-तत्र तत्र स्वेच्छाविहारगतागतम्, अस्येति—
५ ( विक्रमः ). यथा,
(१)"तत्पुरुषायविद्महे सुवर्णपक्षाय धीमहि। तन्नो गरुडः प्रचोदयात्" ॥ तै०ना०६—१—२४ ।
( २ ) " तस्य"-महापुरुषस्य, "पुरुषः" शेषइत्यर्थः.
१० सौवर्णसूक्तादिषु चास्य तत्त्वं द्रष्टव्यम्. ❀

निर्व०—( १ ) " मिदमेद,मेधाहिंसनयोः " धा०भ्वादिः कौ०पृ०४२१
( २ ) " पिद्भिदादिभ्योऽङ्"३।३।१०४॥कौ०पृ०६६०
इति,स्त्रियामङ्,अदन्तलक्षणटाप्. दीर्घः. इत्थं निष्पन्नात् मेधाशब्दात्,
( ३ ) " अस्मायामेधास्रजोविनिः" ५।२।१२१॥कौ० पृ०३३१
१५ इति,उक्तार्थे विनिःप्राग्वत् दीर्घः. ❀ १५
ततः, विना-पतगपतिना, त्रयीमयेन सुपर्णेन, क्रमः-क्रमणम्, सार्वज्ञानुगुणं, तत्र तत्र स्वेच्छाविहारगतागतम्, अस्येति—
( विक्रमः ).
( १ )" क्रमु,पादविक्षेपे"भावेघञ्. धा०भ्वादिः कौ०पृ०४०१
२० (२)"नोदात्त" इत्यादिना वृद्धिप्रतिषेधः.७।३।३४॥कौ०पृ०५४१
( ३ ) " वा,गतिगन्धनयोः"धा०अदादिः कौ०पृ०४३३
(४) "जनिघसिभ्यामिण्"इनिवर्तमाने, उणा०पा० ४कौ०पृ०६३८
( ५ ) " वातेर्डिच" उणा० पा० ४कौ०पृ०६३८
इति,इण्,डित्,टिलोपः,बहुव्रीहिः. ❀

२५ निरु०—७९ [ गमनं पक्षिराजेन यस्य (विक्रम) उच्यते ॥ ६४ ॥ ]

१शेषभूतइ। २ सूक्तं द्रष्टव्यम् ।

( ८० ) क्रमः, । ( ८१ ) अनुत्तमो,

ॐ क्रमाय नमः ।ॐ अनुत्तमाय नमः ।

भा०— ईदृश्या नित्यविभूत्या अत्यन्तस्फीतः—
( क्रमः ). [1]क्रमिरात्मनेपदित्वात् तायनार्थः तायनं-स्फीतता. ❀ ५
अतः,—
( अनुत्तमः ).यथा,
( १ ) "तस्मात् धान्यं नपरः किञ्चनास" २अष्ट०८प्र०९—अ०।
( २ ) " तेनार्हतिब्रह्मणास्पर्धितुम् कः" २अष्ट०७प्र०।
( ३ ) " तेन कोऽर्हति स्पर्धितुम्" २अष्ट०७प्र०। १०
( ४ ) "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय" गी०७—७।
( ५ ) " परं ह्यपरमेतस्मात् विश्वरूपान्न विद्यते "
इत्यादि. ❀
अतः,—

निर्व०—ईदृश्या नित्यविभूत्या, क्रमते-स्फीतो भवतीति— १५
( क्रमः ).
( १ ) " वृत्तिसर्गतायनेषुक्रमः" १।३।३८॥कौ०पृ०५२९
इति, स्फीतता लक्षणे तायने अर्थे हि आत्मने पदेनेह विग्रहः
प्राग्वत् धातुः. पचाद्यच्. नाम्नोः सांहितिकः,
(२) "कुप्वोःकःपौच" इति,जिह्वामूलीयः.❀८।३।३७॥कौ० २०
पृ०२३ अतः निरत्यधिकतया, नास्त्युत्तमः, अस्मादिति—
( अनुत्तमः ). उच्छब्दादुत्कृष्टवाचिनः आतिशायनिकस्तमप्.
चर्त्वम्. नञ्पूर्वो बहुव्रीहिः. नञो नलोपे नुट्. ❀

निरु०—८० क्रमणात् क्रमहेतुत्वात् ( क्रम ) एव उदाहृतः।
८१ [ उत्तमो नास्ति यस्मात् स ( अनुत्तम ) उदाहृतः॥६५॥ ] २५

१ क्रमेरात्मनेपदित्वात् तायनार्थता।

( ८२ ) दुराधर्षः,

ॐ दुराधर्षाय नमः।

भा०—(दुराधर्षः);—गाम्भीर्यातिशयेनाम्भोधिवदनभिभवनीयः यथा,
५ ( १ )"मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति. छां० उ० ३–१४–२।
( २ ) "गम्भीरः परमो देवः"
( ३ ) "महोदधिमिवाक्षोभ्यम्"
१० ( ४ ) "गाम्भीर्यात्सागरोपमम्" इत्यादिच.
तदनेन प्रघट्टकेन,
( ५ ) "तद्विष्णोः परमं पदम्"पु०सू०१४।
( ६ ) "तदक्षरे परमे व्योमन् " तै०ना०६–१–२।
( ७ ) "तेहनाकम्"पु०सू०१८।

१५ निर्व०—अतः, गाम्भीर्यातिशयेन अम्भोधिवत् अनभिभवनीयतया आधर्षितुं—प्रधर्षितुमशक्यः अक्षोभ्य इति—
( दुराधर्षः ).
( १ ) "ञिधृषा, प्रागल्भ्ये" धा०स्वादिः कौ०पृ०४६३
आङ्पूर्वः. दुःशब्देऽव्ययउपपदे,
२० (२)"ईषद्दुःसुकृच्छ्राकृच्छ्रार्थेषुखल्" ३।३।१२६॥ कौ०पृ०६६४
इति,खल्. कृत्याप्रसक्तिस्तु निपुणतरमुपपादयिष्यते.
लघूपधगुणः,रपरः. दुरस्सोरुत्वम्. ❀

निरु०—८२ [ अपाम्निधिवदक्षोभ्यः ( दुराधर्ष) इतीरितः । ]
दुर्विजेयगतिर्यस्माद् ( दुराधर्षः ) प्रकीर्तितः

१ इत्यर्थं।

भा०–( ८ ) "तद्धाम परमं मम" गीता।
( ९ ) "दिव्यं स्थानमजरं चाप्रमेयम्"भा०मौस०तालपत्र० ।
( १० )"स्वर्लोकमागच्छ गतज्वरश्चिरम्"रा०बा०१५–३३।
( ११ " विवेश वैष्णव तेजः"रा०उ०११०–१३। ५
( १२ " कलामुहूर्तादिमयश्च कालो नयद्विभूतेः परिणामहेतुः "
वि०पु०४–१–८४।
( १३ ) " तेषां तत्परमं स्थानम्" वि०पु०१–६–३९ ।
इत्यादिभिः,पूर्वोदाहृतैश्च, बुध्यमाणे, कालातीतत्वाक्षरत्वापरिणा-
मित्वतमोतीतत्वनित्यत्वापुनरावृत्तिस्थानत्वादिना, १०
भगवत्स्वरूपगुणादिवत्,
( १४ ) " एकमेवाद्वितीयम्" छा०उ०६–२–१।
( १५ ) " नासदासीन्नोसदासीत्तदानीम्"२अष्ट०८म०९अ०।
इत्येकत्वावधारणादिनिमित्तामनित्यत्वशङ्कामतीत्य वर्तमाने,वैष्णवे
परमपदे,श्रीभूमिभ्यां दिव्यमहिषीभ्यां सह कौषीतकीपर्यङ्कविद्या- १५
द्यवगतदिव्यास्थानरत्ने,दिव्यपर्यङ्कोपरि,अनन्तवैनतेयविष्वक्सेना-
दिभिः पूर्वोपपादितैः नित्यसिद्धैः परिचर्यमाणचरणारविन्दस्य
भगवतः सर्वैश्वर्यापरपर्यायं सार्वभौम सुराज भवमशेषवेदरहस्य-
माविष्कृतम् तथा, वायुप्रोक्तशैवे स्पष्टम्,
(१६) " वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते वि- २०
ष्णुरचिन्त्यात्मा भक्तैर्भागवतैस्सह " इति. पुराणे-वायुप्रोक्तशैवे
श्रीविष्णुतत्त्वे-
( १७ ) " पञ्चशक्तिमयो देवो वहिर्लोकेश्वरेश्वरः । आस्ते
स्वानन्दभावेन परमव्योम्नि सुस्थितः " इतिच. ❀ श्रीभाष्य०
श्रीविष्णुतत्त्वसहितायाम् । २५

{८३ / ५२६} कृतज्ञः,

ॐ कृतज्ञाय नमः ।

भा०— अथ, विस्तृत यथोक्त निरुपाधिकदास्यनिर्ममत्वानामनाद्य-
५ विद्याध्यारोपितस्वातन्त्र्य प्रवृत्तानां संसारिणां ( कृतज्ञः ),— आनु-
कूल्यलवं जानातीति.
( १ ) " आतोनुपसर्गेकः " ३।२।३॥कौ०पृ०५७०
ब्रह्मज्ञः, प्राणदः, इत्यां दयोप्येवम् यः खल्वाह,
( २ )"अपि चेत्सुदुराचारः, सम्यग्व्यवसितो हि सः" गी०९—३०।
१० इति. नच प्रत्युपकारं पश्यतीदृशे;—यथा,
( ३ ) " गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् । ऋणं प्रवृद्ध-
मिव मे हृदयान्नापसर्पति " इतिच. ❀ भा०उ०५८—२२।

निर्व०—अथ, विस्मृतयथोक्तनिरुपाधिकदास्यनिर्ममत्वानाम्, अना-
द्यविद्याध्यारोपितस्वातन्त्र्याणां संसारिणां कृतं सुकृतमानुकूल्यलवं
१५ जानातीति—
( कृतज्ञः ).
( १ ) " ज्ञा, अवबोधने " धा० क्र्यादिः कौ०पृ०४७७
( २ ) " आतोनुपसर्गेकः " इति, कः, आतोलोपः, ३।२।३॥कौ०
पृ०५७०
२० ( ३ ) " डुकृञ्, करणे " धा० तनादिः कौ०पृ०४७३
( ४ ) " निष्ठा " ३।२।१०२॥कौ०पृ०५८६
इति, क्तः; क्त्वित्वाद्गुणः, अनिट्. ❀

निरु०— ८३ प्राणिभिर्यत् कृतं कर्म तज्ज्ञात्वा फलदो यतः ॥६६॥
पत्रपुष्पादिना तुष्टः ( कृतज्ञो ) मोक्षदानतः ।

१ प्रतीपवृत्तानां । २ स्वच्छन्दमेव वा ।

(८४) कृतिर्,

ॐ कृतये नमः।

भा०—तच्च तेषां सुकृतम्, अस्मादेव प्रसन्नादिति—( कृतिः ).

(१) "अकर्तरिचकारकेसंज्ञायाम्" इत्यधिकारे, ३।३।१९॥ ५
कौ०पृ०६४७

❋ स्त्रियां क्तिन्नन्तः. एवं, [६३]भूति, सिद्धि[६४]प्रभृतयोपि. यथा,

(२) "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" ❋ कौषीतकी ब्रा० ३—९।

तस्य कर्तारोप्यात्मानः, तदायत्तस्वरूपप्रवृत्त्यादिकतया अस्य स्वभूता इति— १०

निर्व०— तच्च तेषां सुकृतं, प्रसन्नादेवास्मात् क्रियत इति—
( कृतिः ).

(१) "डुकृञ्, करणे" धा० तनादिः कौ०पृ०४७३

(२) "अकर्तरिचकारके" इत्यधिकारे, ३।३।१९॥कौ० १५
पृ०६४७

(३) "स्त्रियांक्तिन्" ३।३।९४॥ कौ०पृ०६५८

इति, स्त्रियामपादाने क्तिन्. क्त्त्वात्सगुणः. अनिट्.

(४)"लिङ्गमशिष्यम्" इत्यादि. देवताभिप्रायकं वा.॥ महाभाष्ये ॥

ब्रह्मादीनां विशेष्यत्वेपि न दोषः, यत एते नियतलिङ्गाः. इत्थमी- २०
दृशोऽन्यत्रापि ( शर्मेत्यादौ ) ध्येयम्. ❋

तदायत्तस्वरूपप्रवृत्त्यादिकतया स्वस्य स्वभूताः तत्कर्तारोप्यात्मानोऽस्य सन्तीति—

निरु०—८४ [ यस्मात्प्रसन्नात्सुकृतं तेषां स (कृति) रिष्यते॥६७॥ ]
प्रयत्नो वा क्रिया वाथ ( कृति ) रुक्ता क्रियावताम्। २

( ८५ ) आत्मवान्, ॥ श्लोकः ॥ १० ॥ ( ८६ ) सुरेशः,

ॐ आत्मवते नमः । ॐ सुरेशाय नमः ।

भा०—( आत्मवान् ). ❀

५ फल्गुपदलिप्सूनां ब्रह्मादीनामपि संविधाता—( सुरेशः ) यथा ब्रह्मा,
( १ ) " यस्य प्रसादादहमच्युतस्य भूतः प्रजासर्गकरोन्तकारी ।
क्रोधाच्च रुद्रः स्थितिहेतुभूतः " वि०पु०४–१–८५।
इत्यादि. ❀

निर्व०—( आत्मवान् ).

१० ( १ ) " अत, सातत्यगमने " धा० भ्वादिः कौ०पृ०३८३
(२)"सातिभ्यांमनिन्"इति,मनिन्.वृद्धौ,उणा०पा०४कौ०पृ०६३९
( ३ ) " नेड्वशिकृति " ७।२।८॥ कौ०पृ०५८१
इति, इडभावे च, व्युत्पादितादात्मन् शब्दात्.
( ४ ) " तदस्य " इति, मतुप्. ५।२।९४॥ कौ०पृ०३२५
१५ ( ५ ) " नलोपः प्रातिपदिकान्तस्य " इति, नलोपः. ८।२।७॥
कौ०पृ०३९
( ६ ) "मादुपधायाश्चमतोर्वोऽयवादिभ्यः"८।२।९॥ कौ०पृ०३२५
इति, मतोर्मस्य वः.
(७)"अत्वसन्तस्यचाधातोः" इति, दीर्घः. ६।४।१४॥कौ०पृ०७८
२० ( ८ )"उगिदचां"इति, नुम् इत्यादि. ❀ ७।१।७०॥कौ०पृ०६५
फल्गुपदलिप्सूनामपि ब्रह्मादीनां सुराणाम् ईशः संविधाता इति—
( सुरेशः ).

निरु०— ८५ एषामात्मशरीरादिनिरासादथवा ( ऽऽत्मवान् ) ।
स्वे महिम्नि प्रतिष्ठानात् ( आत्मवान् ) अभिधीयते ॥ ६८ ॥
८६ [ ब्रह्मादीनां फल्गुपदलिप्सूनां त्रिदिवौकसाम् ।
[illegible]ता ( सुरेश ) श्च मोच्यते विबुधोत्तमैः ॥ ६९ ॥ ]

## ( ८७ ) शरणम्,

### ॐ शरणाय नमः ।

भा०— अविशेषेण सर्वेषाम्—
( शरणम् ). शृणाते रक्षणार्थाल्ल्युट्. एवं, [४]करणम्. [५]कारणम्, ५
[६]प्रमाणम्[७] ( भावनः ) इत्यादयोऽपि निरुपाधिकः प्रापकः; यथा,
(१)"तं हदे वमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये" श्वे०उ०६-१८।
( २ ) " निवासश्शरणं सुहृद्गतिर्नारायणः " सु०उ०६।
( ३ ) "शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः" इत्यादि. ❋

निर्व०— ( १ ) " ईश, ऐश्वर्ये " इगुपधलक्षणःकः.धा० अदा- १०
दिः कौ०पृ० ४३८
( २ ) " षु, प्रसवैश्वर्ययोः " पःसःधा० भ्वादिः कौ०पृ०४२६
(३)"सुसूधागृधिभ्यःक्रन्"इति,क्रन्;उणा०पा०२कौ०पृ०६२०
कित्वाद्गुणः. अनिट्. सांहितिकः आद्गुणः. ❋
अविशेषेण सर्वेषाम्,शरण रक्षकः.निरुपाधिकप्रापक इति(शरणम्). १५
(१)"शॄ,हिंसायाम्"अयमिह रक्षणकर्मा,धा०क्र्यादिः कौ०पृ०४७६
( २ ) " कृत्यल्युटो बहुलम् " ३।३।११३।।कौ०पृ०६६२
इति, बाहुलकात् कर्तरि ल्युट्.
(३)"करणाधिकरणयोश्च"इति करणे वा.३।३।११७।।कौ०पृ०६६२
( ४ ) " लिङ्गमशिष्यम् " इत्यादि. ❋ ॥ महाभाष्ये ॥ २०

निरु०—८७ आर्तानामार्तिहन्तृत्वात् ( शरणं ) परिकीर्तितः ।
यदुपासाद्भयं दुःखं पापं बन्धो न बाधते ॥ ७० ॥
प्रतिष्ठा च सुखं ज्ञान भवेत् ( शरण ) मित्यतः ।

१ अत्र, इतः पूर्वत्र, इत उत्तरत्रच, "इत्यादयः" इति आदिपदेनसगृहीता-नि नामानि सर्वाण्यपि, ग्रन्थान्ते संकलय्य प्रदर्शयिष्यन्ते. तादृक् प्रदर्शन सौकर्याय तत्र तत्र "इत्यादयः,, इतिपदोपरितत्आवृत्तिद्योतकसंख्यामात्रं निवेश्यते ।

## ( ८८ ) शर्म, ( ८९ ) विश्वरेताः,

ॐ शर्मणे नमः । ॐ विश्वरेतसे नमः ।

भा०— शर्मसुखं, परमप्राप्यं चेति—
५ ( शर्म ). तस्मादेवसुखार्थात् मनिन्. यथा,
( १ ) " सर्वगन्धस्सर्वरसः " छा०उ० ३—१४।
( २ ) " कं ब्रह्म खं ब्रह्म " छा०उ०४—१०—५।
( ३ ) " आनन्दोब्रह्म " इति. ❋ तै०भृ०६।
( शरणं, शर्म ) प्रकारान् विवक्षति.—
१० ( विश्वरेताः ), विश्वं कार्यमस्येति. सहि, स्वज्ञानस्थानपरिचरणै-
दमर्थ्येन प्रजानां ज्ञानकर्मेन्द्रियादिकं विश्वं करोति. यथा,
( १ ) "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योति-
रापः पृथिवी विश्वस्य धारिणी " ॥ मुण्ड०उ०२—१—३।

निर्व०— शर्म—सुखं, परमप्राप्य इति—
१५ ( शर्म ) पूर्ववदेवधातुः; इह सुखार्थः
( १ ) " सर्वधातुभ्यो मनिन् " उणा०पा०४कौ०पृ०६३९
इति, मनिन्. गुणोरपरः.
(२)" नेड्वशिकृति " इति, नेट्. लिङ्गं प्राग्वत्. ❋ ७।२।८॥कौ०
पृ०५८१
२० अथ, शरणशर्मप्रकाराः विशिष्टक्रमाःउपपाद्यन्ते.ज्ञानपरिचरणैदमर्थ्येन
प्रजानांज्ञानकर्मेन्द्रियादिक विश्वम्,रेतः-वीर्यं कार्यमस्येति (विश्वरेताः)
( १ ) " रीङ्, श्रवणे " धा० दिवादिः कौ०पृ०४५४
( २ ) "सर्वधातुभ्योऽसुन्" इतिवर्तमाने,उणा०पा०४कौ०पृ०६४०

निरु०— ८८ परमानन्दरूपत्वात् ( शर्म ) हिंसादिमन्थनात् ॥ ७१ ॥
२५ ८९ विश्वं रेतो भगवतो ( विश्वरेता ) हरिः स्मृतः ।
ज्ञानेन्द्रियादिकं विश्वं परिचर्यार्थमेव हि ॥ ७२ ॥
यः प्रजानां करोतीति ( विश्वरेता ) स्म स स्मृतः ।

१ शं-सुखम् । २ त्रसयति ।

## ( ९० ) प्रजाभवः ।

**ॐ प्रजाभवाय नमः ।**

भा०—( २ ) " सप्त प्राणाः प्रभवन्ति तस्मात् " मुण्ड०उ० २–१–८।
( ३ ) "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः " गी० १०–५।
श्रीविष्णुतत्वे,
( ४ ) " विचित्रा देहसंपत्तिः ईश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता, " इति. ❋ श्रीपाञ्च० वि० त्वे० ।
सर्वाः प्रजाः तद्दत्तैस्तैरेवोपकरणैः तस्मिन् भवन्ति तदाभिमुख्य- १० योग्या भवन्तीति–( प्रजाभवः ). अधिकरणे,
( १ )" पुंसिसंज्ञायांघः प्रायेण" ३।३।११८॥कौ०पृ०६६२

निर्व०—( ३ ) "स्रुरिभ्यांतुट्च" उणा०पा०४कौ०पृ०६४१ इति, असुन्, तस्य तुट्च; टित्वात्,
( ४ ) " आद्यन्तौ टकितौ " इत्याद्यवयवः. गुणः अनिट्. १५ १।१।४६॥कौ०पृ०७
( ५ ) " विश, प्रवेशने " धा० तुदादिः कौ०पृ०४६९
(६)"अशूप्रुषि०"इत्यादिनाक्वन्; उणा०पा०१कौ०पृ०६१७ कित्वाद्गुणः, अनिडित्युक्तम्. ततो बहुव्रीहिः. सौ,
( ७ ) " अत्वसन्तस्य " इति, दीर्घ इत्यादि. ❋ ६।४।१४॥ २० कौ०पृ०७८
एवं, सर्वा अपि प्रजाः तद्दत्तैरेवोपकरणैस्तदाभिमुख्ययोग्या भव- न्त्यस्मिन्निति–( प्रजाभवः ).
( १ ) " भू, सत्तायाम् " धा० भ्वादिः कौ०पृ०३६८.

निरु०— ९० तद्दत्तैरेवकरणैस्तस्मिन्नभिमुखाः प्रजाः ॥ ७३ ॥ २५ सर्वाश्चैव भवन्तीति ( प्रजाभव ) उदाहृतः ।

( ९१ ) अहस्,

ॐ अर्हं नमः ।

भा०— इति, घः. एवम्, अधिमः, नियमः (यमः) इत्यादयः
५ न हीनोस्यास्तीति—
( अहः ).
( १ ) " अहरहीनम् " इतिमौलं निरुक्तम् । मूलसं० ।
(२) "नहि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति" गी० ६—४०।
इति. अनाद्यविद्यानिद्रावधौ स्वावबोधहेतुत्वाद्वा,
१० अहरिवेति— ( अहः ). ❀

निर्व०— ( २ ) " करणाधिकरणयोश्च" इतिवर्तमाने, ३।३।११७ ॥ कौ०पृ०६६२
( ३ ) " पुंसिसंज्ञायाम् " ३।३।११८ ॥ कौ० पृ०६६३
इति, अधिकरणे घः. यद्वा,
१५ ( ४ ) " अकर्तरिचकारकेसंज्ञायाम् " ३।३।१९ ॥ कौ० पृ०६४७
इत्यनुवृत्तौ,
( ५ ) " ऋदोरप् " ३।३।५७॥ कौ०पृ०६५३
इति, उवर्णान्ताद्धक्तेऽर्थे अप्. गुणावादेशौ.
( ६ ) " जनी,प्रादुर्भावे" प्रपूर्वः. धा० दिवादिः कौ०पृ० ४५४
२० ( ७ ) " उपसर्गेचसंज्ञायाम् " इति, डः. ३।२।९९॥ कौ० पृ०५८५
टिलोपः. ततः, स्त्रियामदन्तलक्षणटाप्. दीर्घः. तत्पुरुषः. ❀
मौलनिरुक्तानुसारात् न हीनोऽस्येति वा,—अनाद्यविद्यानिद्रावधौ स्वावबोधहेतुत्वात्, अहः— दिवम इवेति वा,—
( अहः ).

२५ निरु०—९१ न सन्ति हीना यस्येति ( अह ) स्स परिकीर्तितः ॥७४॥
अनाद्यविद्यानिद्रायां स्वबोधहेतुतया ( ह्यहः )।

{ ९२ / ४२३ } संवत्सरो,

ॐ संवत्सराय नमः ।

भा०— एवम्,प्रबुद्धेपु समुद्धरणाय संवसतीति-(संवत्सरः). वसेः,
(१)"संपूर्वाचित्"इति सरन्प्रत्ययः.उणा०पा०३कौ०पृ०६२८ ५
(२)"सस्यार्धधातुके"इति,तकारः.यथा,७४।४९॥कौ०पृ०४ १०
(३)"ददामि बुद्धियोगं तं येन मामुपयान्ति ते"गी०१०—१०।

निर्व०—(१)"ओहाक्,त्यागे" नञ्पूर्वः. धा० जुहोत्यादिः
कौ०पृ०४५०
(२)"कनिन्युवृपितक्षिराजिधन्विद्युप्रतिदिवः"उणा०पा०१ १०
कौ० पृ० ६१८ इति वर्तमाने,
(३)"नञिजहातेः"उणा०पा०१कौ०पृ०६१८
इति, कनिन्. आलोपः. नञो नलोपः.
(४)"अहन्" इति,रुत्वम्. विसर्गः.८।२।६८॥कौ०पृ०८४
(५)"लिङ्गमशिष्यम्"इत्यादि ❀. ॥ महाभाष्ये ॥ १५
इत्थं, प्रबुद्धेपु समुद्धरणार्थं संवसतीति—( संवत्सरः ).
(१)"वस,निवासे"संपूर्वःधा०भ्वादिः कौ०पृ०४३२
(२)"अशेस्सरः"उणा०पा०३कौ०पृ०६२८
(३)"वसेश्च"इतिवर्तमाने,उणा०पा०३कौ०पृ०६२८
(४)"संपूर्वाचित्" उणा०पा० ३ कौ० पृ० ६२८ २०
इति, सरः चित्;चित्वात्
(५)"चितः" इति,अन्तोदात्तः. अनिट् ६।१।१६३॥ कौ०
पृ०७३३

निरु०—९२इत्थं तेपु प्रबुद्धेपु वसत्युद्धरणाय यः ॥ ७५ ॥
( संवत्सरस् ) २५

१ संपरि पूर्वात् ।

( ९३ ) व्यालः, ( ९४ ) प्रत्ययः,

ॐ व्यालाय नमः। ॐ प्रत्ययाय नमः।

भा०—( ४ ) " तेषामहं समुद्धर्ता " इति.गी० १२—७।

५ (५) " आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया" इति. ❀ रा० यु० १८—३४।

अभयप्रदानप्रस्थानेन, तानात्मसात्करोतीति—

( व्यालः ).

( १ ) " ला,आदाने" धा०अदादिः कौ०पृ०४४३

१०(२)"आतश्चोपसर्गे" इतिकप्रत्ययः. ❀ ३।१।१३६॥कौ०पृ०५६८

प्रतीयतेऽस्मिन्निति-

( प्रत्ययः ). सहितान् प्रत्याययति,विस्रम्भयति. यथा,-

निर्व०—( ६ ) " सस्यार्धधातुके " ७।४।४९॥ कौ० पृ०४१०

इति, धातोस्सस्य तः. समः,

१५ ( ७ ) " मोऽनुस्वारः"पाक्षिकः परसवर्णः. ८।३।२३॥कौ०पृ०२० वाऽनुनासिकः. नान्नोः सांहितिकः ❀ विसर्जनीयस्य सः ❀

अभयप्रदानप्रस्थानेन, तान् व्यालाति आदत्ते आत्मसात्करोतीति—

( व्यालः )

( १ ) " ला,आदाने"व्याङ्पूर्वः धा०अदादिः ४४३

२० (२)"आतश्चोपसर्गे"इति,कः.आल्लोपः,३।१।१३६॥कौ०पृ०५६८

वैदिकाग्स्य यण् यकारः. ❀

स्वस्य तद्विस्रम्भयितृतया, प्रत्येति प्रतीयते वा—

विस्रब्धो भवति, स सर्वोऽस्मिन्निति—

( प्रत्ययः ) पूर्वत्र,

२५ निरु०—९३ तानात्मसात् (व्याल ) उक्तः करोति यः।

९४ योऽसौ प्रत्याययति तान् (प्रत्ययः) समुदाहृतः॥ ७६ ॥

## ( ९५ ) सर्वदर्शनः, ॥

ॐ सर्वदर्शनाय नमः ।

भा०—( १ ) " तं ह्देवमात्मबुद्धिप्रसादम् " श्वे०उ०६—१८।
श्रीविष्णुतत्त्वे, ५
(२) "भूयो भूयोपि ते ब्रह्मन् विश्वास्यः पुरुषोत्तमः" श्रीपाद्म—वि०।
स्वयं च सभापर्वणि,
( ३ ) " यदि ते हृदयं वेत्ति यदि ते प्रत्ययो मयि। भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे " ॥ ❋ भा०स०२०—७ ।
तेषां, सर्वं स्वमहिमानं दर्शयतीति—( सर्वदर्शनः ). यथा,
( १ )"तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्"१०
श्वे०उ०३—२०।
(२)"तस्यैष आत्मा विवृणुते तनूं स्वाम्"इति. ❋ मु०उ०३—२—३।

निर्व०—(१) "इण्, गतौ" अपरत्र, धा०अदादिः कौ०पृ०४४१
( २ )"ईङ्,गतौ"तथाप्रतिपूर्वः धा०दिवादिः कौ०पृ०४५४
उभयत्रापि,—ह्रस्वदीर्घयोः, १५
(३)"अकर्तरिचकारके" इत्यनुवृत्तौ,३।३।१९॥कौ०पृ०६४७
( ४ ) " एरच् " ३।३।५६॥ कौ०पृ०६५३ इति, अधिकरणे, अच्, गुणायादेशौ. उपसर्गेकारस्य यण् यकारः ❋
तेषां, सर्वं स्वमहिमानं दर्शयतीति—( सर्वदर्शनः ).
(१)"दृशिर्,प्रेक्षणे"णिच्,गुणोरपरः.धा०भ्वादिः कौ०पृ०४३० २०
नन्द्यादिल्युः, ल्युट्वा. बाहुलकादित्यादि. योरनः. णिलोपः.
( २ ) " सृ, गतौ " धा०भ्वादिः कौ०पृ०४२५

निरु०— ९५ महिमानं सर्वसहं तेषां दर्शयतीति सः ।
( सर्वदर्शन ) आख्यातो नवार्णो लोचनप्रदः ॥ ७७ ॥

१ मेहृदय वेत्ति । [ इति मुद्रितकोशे. ]
२ सहमहिमानं। सर्वमहिम्नात्मानम् । स्वमभिमानम् ।

श्लोकः ॥११॥ {२०६ / ५२४} (९६) अजस्,

ॐ अजाय नमः ।

भा०— तेषां, स्वप्राप्तिपरिपन्थि सर्वं स्वयमेव क्षिपतीति—( अजः ).
५ ( ३ )"अज,गतिक्षेपणयोः"अच्. यथा धा० भ्वादिः कौ०पृ०३९१
( ४ ) " तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभाव-
स्थो ज्ञानदीपेन भास्वता " गी० १०—११।
( ५ ) " अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि " गी० १८—६६
इत्यादि. ❋
१० समर्थानामसमर्थानां च सर्वेषां शरणागतानाम्, विलम्बनम्, वैक्लव्यं[1] च,
परिहर्तुमाशु तानश्नुते इति—

निर्व०—(३)"इण्शीभ्यांवन्"इति, प्रस्तावे,उणा०पा०१कौ०पृ०६१७
( ४ ) " सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वाअतन्त्रे " इति, उणा०
पा०१कौ०पृ०६१७
१५ अकर्तरि वन्नन्तो निपात्यते. गुणो स्परः. अनिट्. ❋
तेषाम्, स्वप्राप्तिपरिपन्थि सर्वं स्वयमेव अजति—क्षिपतीति—(अजः).
(१)"अज,गतिक्षेपणयोः"पचाद्यच्.इह, धा०भ्वादिःकौ०पृ०३९१
( २ ) " अजेर्व्यघञपोः " २।४।५६॥कौ०पृ०३९१
इति वीभावो न भवति, बाहुलकात्; इनजनुशिष्टः.
२० ( ३ ) "अजेरज च" इत्यजेरजादेशः, उणा०पा०२कौ०पृ०६२१
वीभावनिवर्तनार्थः. क्वचिदन्यत्रापि निषेधात् न वीभावः.
( ४ )"अजेरज च" इतिपाठेपि,प्रकृते,उणा० पा० २ कौ०पृ०६२१
बाहुलकादेव वा वीभावाभावः ❋

निरु०— ९६'प्रत्यर्थिनस्स्वसीमातो प्रजानां क्षिपती ( ह्यजः ) ।

[1] वैकल्यं च ।

( ९७ ) सर्वेश्वरस्ः,

ॐ सर्वेश्वराय नमः ।

भा०—( सर्वेश्वरः ).
( १ ) "अश्नोतेराशुकर्मणि वरट्च" इति,वरट्,उपधाया ईकारश्च. ५
उणा० पा० ५ कौ० पृ० ६४४
(२)"विज्ञीपणेनाशु जगाम संगमम्"इति. ❀ रा०यु० १८—३९।
तेषां स्वरूपेण-

निर्व०—समर्थानामसमर्थानां च सर्वेषां शरणागतानां विलम्बनम्,
वैक्लव्य च परिहर्तुम् आशु तान् सर्वानश्नुते व्याप्नोतीति— १०
( सर्वेश्वरः ).
( १ ) " अशू,व्याप्तौ"धा०स्वादिः कौ०पृ०४६३
( २ )" अश्नोतेराशुकर्मणिवरट्च" उणा०पा०५कौ०पृ०६४४
इति,वरट्.चात्,
( ३ ) " क्लिशेरीचोपधायाःकन्लोपश्चलोनां च. " उणा० पा० ५ १५
कौ०पृ०६४४
इत्यतोऽनुवर्तमानमुपधाया ईत्व च. ❀
स्वरत्यादिविकल्पोपगमात्,
( ४ ) " नेट् इति,नेट्.सर्वशब्दोहि.७२।८॥ कौ० पृ०५८१
( ५ ) " सृ,गतौ इत्यतः,धा०भ्वादिः कौ०पृ०४२५ २०
( ६ ) " सर्वनीघृष्व० " उणा० पा० १ कौ० पृ०६१७
इत्यादिना वन्नन्तो व्युत्पादितः. ❀
तेषामनुपायसाध्यः स्वरूपेण सिद्ध इति—

निरु०—९७ अशक्तानां च शक्तानां वैरूप्यं शरणेषिणाम्॥७८॥
अश्नुते परिहर्तुं यः स ( सर्वेश्वर ) ईरितः। २५

{ ९८ / ८२५ } सिद्धः, (९९) सिद्धिस्,

ॐ सिद्धाय नमः। ॐ सिद्धये नमः।

भा०–( सिद्धः ) निष्ठा. एवं, प्रथितः[१], हितः, इत्यादयोपि[२].
५ नोपायैस्साध्यः;-यथा,
( १ )"न्यासइत्याहुर्मनीपिणो ब्रह्माणम्" इति ※ तै०ना०६–५०।
उपायैरप्ययमेव सेध्यते इति–
( सिद्धिः ). यथा,
( १ ) " यदिच्छन्तो ब्रह्मचर्यं चरन्ति"
१० ( २ ) " यं पृथक् धर्मचरणाः"

निर्व०–( सिद्धः ).
( १ ) " षिधु, संराद्धौ " प: म:. धा० दिवा० कौ० पृ० ४५७
(२) "गत्यर्थ०" इत्यादिना कर्तरि क्तः. ३।४।७२॥कौ०पृ०५९६
कित्वान्न गुणः. निहतत्वान्नेट्.
१५ ( ३ ) " झषस्तथोर्धोधः " ८।२।४०॥कौ०पृ०३८५
इति, निष्ठातस्य धत्वम्.
( ४ ) " झलांजश्झशि" ८।४।५३॥कौ०पृ०९
इति, पूर्वस्य धस्य दः. ※
उपायैरपि अयमेव सेध्यते इति–
२० ( सिद्धिः ). प्राग्वत् धातुः. सत्वम्.
( १ ) " अकर्तरिच" इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७
( २ )"स्त्रियांक्तिन्" इति, कर्मणि क्तिन्.३।३।९४॥कौ०पृ०६५८

निरु०–९८ स्वरूपेणैव भक्तानां सिद्धत्वात् ( सिद्ध )उच्यते ॥७९॥
९९ अयमेव ह्युपायैश्च ( सिद्धि ) स्स्यात्साध्यते यतः ।

१ कर्तरिनिष्ठा । २ धारिणः ।

(१००) सर्वादिः,

ॐ सर्वादये नमः।

भा०—(३) "पृथक्धर्मफलैषिणः"
(४) "पृथक् धर्मैस्समर्चन्ति तस्मै धर्मात्मने नमः" इति. ❋ ५
तेषाम्, परावरसर्वपुरुषार्थमूलमिति—
(सर्वादिः). यथा,
(१) "ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम्। प्राप्नुवन्ति सदा कामानिह लोके परत्र च"॥ रा०यु० १२०—३१।
(२) "सर्वान् कामान् प्राप्नुवन्ते विशालां त्रैलोक्येऽस्मिन् १० कृष्णनामाभिधानात्" इति. ❋

---

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः,

श्रीरङ्गराजदिव्याज्ञालब्धश्रीपराशरापरनामधेयस्य,

श्रीरङ्गनाथस्य, कृतौ,

## श्रीमन्नामसहस्रविवरणे, १५

## भगवद्गुणदर्पणे,

प्रथमं शतकं समाप्तम्.

---

निर्व०— क्रित्वाद्गुणः. अनिट्. धत्वजश्त्वे प्राग्वत्.
(३) "लिङ्गमशिष्यम्" इत्यादि. ❋ ॥ महाभाष्ये ॥
तेषां परावरभूतानां सर्वेषां पुरुषार्थानाम्, २०
आदिः- मूलमिति—
(सर्वादिः).

निरु०—१०० सर्वेषां पुरुषार्थानां मूलं (सर्वादि)रीरितः॥८०॥

निर्व०– ( १ ) " डुदाञ्,दाने"आङ्पूर्वः.धा०जुहोत्यादिः कौ० पृ०४५१

( २ ) " उपसर्गेघोःकिः"३।३।९२।।कौ०पृ०६५८

५ इति,किः. ❀ आतो लोपः.

( ३ ) " सृ,गतौ" धा० भ्वादिः कौ०पृ०४२५

( ४ ) " सर्व" इत्यादिना निपात-उणा०पा०१ कौ०पृ०६१७

इत्युक्तमेव. तत्पुरुषः. सांहितिकः सवर्णदीर्घः. ❀

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज

१० वरददेशिकतनयवरदगुरुवरसूनुवरदार्यसूरिविरचिते,

श्रीपराशरभट्टार्यभाषित

## श्रीमत्सहस्रनामभाष्यानुगे, भगवन्नामसहस्रनिर्वचने,

प्रथमं शतकं सम्पूर्णम्.

द्वितीयशतकादिमुद्रणं प्रचलति अल्पकालेनैव पूर्तिर्भविष्यतीत्यालोच्य महाशयाः गृह्णीयुरित्याशास्महे.



गंगाविष्णु श्रीकृष्णदास

"लक्ष्मीवेङ्कटेश्वर" छापाखाना

कल्याण—मुंबई.

# द्वितीयशतकप्रारम्भः।

{३२० / ८५७} ( १०१ ) अच्युतः। ( १०२ ) वृषाकपिः,

ॐ अच्युताय नमः। ॐ वृषाकपये नमः।

भा०—तेभ्यः प्रपन्नेभ्यो नापगतः—( अच्युतः ). ५
( १ ) "यस्मान्न च्युतपूर्वोहमच्युतस्तेन कर्मणा"
( २ ) "तस्याहं न प्रणश्यामि"
( ३ ) "न त्यजेयं कथंचन" इति. ❀ रा० यु० १८—३।
अच्युतमेव धर्मवराहत्वेन समर्थयते—
( वृषाकपिः ). तथाच निरुक्तम्, १०
( १ ) "कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते। तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः" ॥ इति. ❀ भा० शा० ३४३—८९।

निर्व०— तेभ्यः प्रपन्नेभ्यः, च्युतः- अपगतः, नेति—( अच्युतः ).
( १ ) "च्युङ्, गतौ" धा० भ्वादिः कौ० पृ० ४२७
(२) "गत्यर्थ०" इत्यादिना कर्तरि क्तः. ३।४।७२॥ कौ० पृ० ५९६ १५
किरत्वाद्गुणः. अनिट्. नञ्समासः. नञो नलोपः. ❀
अच्युत एव धर्मवराहत्वेन समर्थ्यते.
सएव, आर्षनिरुक्तानुसारात्, वृषः-धर्मः, तद्रूपश्चासौ,
कपिः-श्रेष्ठवराहश्चेति,—( वृषाकपिः ).
( १ ) "कपि, चलने" इदित्वात् नुम्. धा० भ्वादिः कौ० पृ० ३९६ २०

निरु०—१०१ भक्तेभ्योऽच्युतपूर्वत्वात् ( अच्युतः ) परिकीर्तितः।
आश्रितानां च्युतिर्यस्मान्नास्ति सो ( ऽच्युत ) ईरितः ॥ ८१ ॥
१०२ कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।
तस्माद् ( वृषाकपिः ) प्रोक्तो वरवर्णाश्रीदयो मनुः ॥८२॥

{ १०३ / १८९ } अमेयात्मा,

ॐ अमेयात्मने नमः ।

भा०—अस्मिन् आश्रितानुग्रहस्रोतसि,—
५ (१) " अतोज्यायांश्च पूरुषः " पु० सू० ३ ।
(२) " भूयांश्चातो जनार्दनः " इति न्यायेन,
(अमेयात्मा,) इयांनित्यपरिच्छेद्यस्वरूपः. ❀

निर्व०—(२) " अचइः " इति इप्रकरणे, उणा० पा०४ कौ० पृ० ६३८
१० (३) " कुण्डिकम्प्योर्नलोपश्च " उणा० पा०४ कौ०पृ०६३९ इति, इः, नलोपश्च.
(४) " वृपु, सेचने " धा०भ्वादिः कौ०पृ०४१०
इगुपधलक्षणः कः, कर्मधारयः
(५) " अन्येषामपिदृश्यते " ६।३।१३७॥ कौ० पृ०१६५
१५ इति, पूर्वपदस्य दीर्घः. ❀
अस्मिंश्च आश्रितानुग्रहस्रोतसि, अमेयः अपरिमेयः—
इयानित्यपरिच्छेद्यः, आत्मा— स्वरूपम्, अस्येति—(अमेयात्मा.)
(१) " अत, सातत्यगमने " धा० भ्वादिः कौ०पृ०३८३
(२) "सातिभ्याम्०" इति, मनिनन्त आत्मशब्दः, उणा०पा०४
२० कौ० पृ०६३९
(३) " नेड्० " इत्यनिट्. ७।२।८॥ कौ० पृ०५८१
(४) " माङ्, माने " धा०जुहो० कौ० पृ० ४५०
(५) " अचोयत् " इति, यत्. ३।१।९७॥ कौ० पृ०५५७

निरु०—१०३ इयानित्यपरिच्छेद्यस्वभावात्सर्वतोऽधिकः ।
२५ (अमेयात्मा) समुद्दिष्टो सौजन्यफलदो मनुः ॥ ८३ ॥

१ अमेयः नित्यापरि ।

## (१०४) सर्वयोगविनिःसृतः, ॥

ॐ सर्वयोगविनिःसृताय नमः।

भा०—कथम्-(सर्वयोगविनिःसृतः)-
सर्वैरपि शास्त्रलक्षणैः स्वमनीषिकापरिकल्पितैरपि, योगैः— ५
उपायैः, (विनिःसृतः)-विशेषेण वेदपरमगुह्यैरिव (विनिःसृतः),
माप्तुं योग्यः सुग्रह इति वा. यथा,
(१) "स्वबुद्धिमात्रनिर्ज्ञातः परमात्मा जगत्प्रभुः। स्वैश्वर्यानुभवमी
तो ज्ञातारमनुसेवते" इति.
श्रीपौष्करे, १०

निर्व०—(६) "ईद्यति" इति, ईत्वम्.६।४।६५॥कौ०पृ०५५७
गुणः. नञो नलोपः. बहुव्रीहिः. सवर्णदीर्घः.
ततः, नान्तलक्षणो दीर्घ इत्यादि. ❋
एतदेव, विशिष्टक्रमतयोपपाद्यते.
सर्वे, च शास्त्रलक्षणाः, स्वबुद्धिपरिकल्पिताश्च, ये योगाः— १५
उपायाः, तैरपि वेदगुह्यैरिव विशेषेण निःसृतः—
प्राप्तुं योग्यः, सुग्रहो वेति—
(सर्वयोगविनिःसृतः).
(१) "सृ, गतौ" विनिस्पूर्वः. धा०भ्वादिः कौ०पृ०४२५
(२) "गत्यर्थ०" ३।४।७२॥कौ०पृ०५९६ २०
इति, कर्तरि क्तः. अनिट्. कित्त्वादगुणः.
(३) "युजिर्, योगे" धा०रुधादिः कौ०पृ०४७१
(४) "हलश्च" इति, करणे घञ्. गुणः. ३।३।१२१॥कौ०
पृ०६६३
(५) "चजोः०" इति, कुत्वम्. ७।३।५२॥कौ०पृ०५६० २५

निरु०—१०४सर्वैरुपायैः प्राप्यश्च (सर्वयोगविनिःसृतः)

श्लो० ॥१२॥ {२७१ / ७०१} (१०५) वसुः,

ॐ वसवे नमः ।

भा०—( २ ) " यस्मात् सद्भक्तियुक्तानां प्रपन्नानां क्रमं विना ।
५ प्रसादमेति मन्त्रेशस्त्वचिराद्भावितात्मनाम् ॥ किं पुनर्वै क्रियाज्ञानसंपूर्णानां तु पौष्कर । श्रद्धाभक्तिपराणां च बोधितानां च देशिकैः "
इति. ॥ श्रीपाञ्च० पौष्कर० ॥
श्रीविष्णुतत्त्वे,
( ३ ) " नियुक्तं मनसा वापि यदि गृह्णाति माधवः । किंतु नोन्मू-
१० लितं दुःखमेतावदिति निश्चितः. " ॥ इति. ❀ ॥ श्रीपाञ्च० वि०
तेष्वियताप्यतिभीत्या वसतीति—
( वसुः ). वसेः,
( १ ) " शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च " इति,
उः. ❀ उणा० पा० १ कौ० पृ० ६०९
१५ वसुनि—निधाविव, तेषु मनोऽस्येति—

निर्व०—( ६ ) " सृ, गतौ " धा० भ्वादिः कौ० पृ० ४२५
( ७ ) "सर्व० " इत्यादिना वन्नन्तो निपातितः. ❀ उणा० पा० १
कौ० पृ० ६१७
तेष्वियताप्यतिभीत्या वसतीति—
२० ( वसुः ).
( १ ) " वस, निवासे " धा० भ्वादिः कौ० पृ० ४३२
( २ ) " शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च "
इति, उः. ❀ उणा० पा० १ कौ० पृ० ६०९
तेषु वसुनि—निधाविव, मनोऽस्येति—

२५ निरु०—१०५. वसतीति( वसु ) स्तेषु भीत्या परमया स्वयम् ॥८४॥

{१०६ / ७०२} वसुमनास्, {२१३ / ८७३} (१०७) सत्यः,

ॐ वसुमनसे नमः । ॐ सत्याय नमः ।

भा०—( वसुमनाः )
( १ ) " स महात्मा सुदुर्लभः " इति. ❀ गी०७—१९ । . ५
तेषु सत्सु साधुरिति—( सत्यः ).
( १ ) "तत्र साधुः" इति, यत्.❀ ४।४।९८॥कौ०पृ०२८९

निर्व०—( वसुमनाः ).
( १ ) " मन, ज्ञाने " धा० दिवादिः कौ०पृ०४५६
( २ ) " सर्वधातुभ्योऽसुन् " उणा० पा०४कौ०पृ०६४० १०
इति, असुन्. व्युत्पादितो हि,
( ३ ) "वस,निवासे"इत्यतःउप्रत्यये, वसुशब्दः.धा०भ्वादिःकौ०
पृ०४३२
( ४ ) " अत्वसन्तस्य०" ६।४।१४॥ कौ० पृ० ७८
इति, असन्तलक्षण उपधादीर्घ इत्यादि. ❀ १५
तेषु सत्सु साधुरिति—( सत्यः ).
( १ ) " अस् , भुवि " धा० अदादिः कौ०पृ०४४४
( २ ) " वर्तमानेलट् " ३।२।१२३॥ कौ०पृ०३६६
( ३ ) "लटश्शतृशानचावप्रथमासमानाधिकरणे " इति, लटः
शता. तस्य, ३ । २ । १२४॥ कौ०पृ०५९९ २०
( ४ ) " तिङ्शित्० " इति, सार्वधातुकत्वे, ३।४।११३॥
कौ०पृ०३६८

निरु०—१०६ वसुनीव निधौ तेषु मनो यस्याऽस्ति सर्वदा ।
सर्वे ( वसुमनाः ) मोक्तो मातृवत् पोषको मनुः ॥८५॥
१०७ सत्सु साधुः ( सत्य ) इति—

(१०८) समात्मा, (१०९) संमितम्,

ॐ समात्मने नमः । ॐ सम्मिताय नमः ।

भा०—तेपु गुणादिभिः निम्नोन्नतेष्वपि अनालोचितविशेपमनाः
५ (समात्मा). यथा,
(१) "समोहं सर्वभूतेपु"इत्यादि. ❋गी०९—२९ ।
तैः,—(संमितः)

निर्व०—(५)"कर्तरिशप्" इति.शप्, तस्य,३।१।६८॥कौ०पृ०३६८
(६)"अदिप्रभृतिभ्यश्शपः"इति,लुक्,शतुः,२।४।७२॥कौ०पृ०४३५
१० (७) "सार्वधातुकमपित्" १।२।४॥कौ०पृ०३७६
इति, ङित्त्वात्,तत्र परतः,
(८)"श्नसोरल्लोपः"इति,अस्तेरल्लोपः,६।४। १११ ॥कौ०पृ०४४४
इत्थं निष्पन्नात् सच्छब्दात्,
(९)"तत्रसाधुः"इति, यत्.अत्वात् जश्त्वाभावः. ❋४।४।९८॥
१५ कौ०पृ०२८९
तेपु गुणादिभिः, निम्नोन्नतेष्वपि, समः-अनालोचितविशेपः, आत्मा-मनः,अस्येति—
(समात्मा). आत्मशब्दः अततेर्म्युणादितः.
(१) " षम ष्टम, अवैकल्ये" धा० भ्वादिः कौ०पृ०४१८
२० परस्मै०. पचाद्यच्. दीर्घः. ततः,
(२) " सर्वनामस्थानेचा०" ६।४।८॥ कौ पृ०४१
इति,नान्तलक्षण उपधादीर्घ इत्यादि. ❋
तैःस-सम्यक्, मितः-परिमितः, अस्मत्करस्थ इति परिछिन्न इति—
(संमितः).

२५ निरु०—१०८(समात्मा) समचित्ततः ।
१०९मितत्वाच तथा भक्तैः (संमितः) परिकीर्तितः ॥८६ ॥

( ११० ) समः,

ॐ समाय नमः

भा०–(१)"द्यतिस्यति-"इत्यादिना इकारः.७।४।४०॥कौ०पृ०५९४
अस्मद्धस्तस्थ इति सम्यक् परिच्छिन्नः. यथा, ५
(२)"ऊनषोडशवर्षो मे रामो राजीवलोचनः"।रा०बा०२०–२।
( ३ ) " ममायं तनयो निजः " इति, वि० पु ५–५–५।
दशरथवसुदेवादिभिः. ❀
तेष्वपि परिचितापरिचिततीव्रमन्दसंवेगित्वाद्यविगणय्य गौरवे सम
इति–( समः ). १०
( १ ) "षम ष्टम,अवैकल्ये" औणादिकोऽकारः. ❀ धा०भ्वादिः
कौ०पृ०४१८

निर्व०– (१) "माङ्,माने" संपूर्वः. धा०जुहो०कौ०पृ०४५०
( २ )" तयोरेवकृत्यक्तखलर्थाः" ३।४।७०॥कौ०पृ०५५५
इति, इह कर्मणि, १५
( ३ )" निष्ठा" इति, क्तः.अनिट्.३।२।१०२॥कौ०पृ०५८६
( ४ ) "द्यतिस्यतिमास्थामित्तिकिति"७।४।४०॥कौ०पृ०५९४
इति, तादौ किति, आत इत्वम्. अगुणः. समः,
( ५ ) " मोऽनुस्वारः" पाक्षिकः परसवर्णः. ❀ ८। ३। २३॥
कौ० पृ २० २०
तेष्वपिपरिचितापरिचित ❀ तीव्रमन्दसंवेदित्वाद्यविगणनेन गौरवे,
समः—समान इति–( समः ).
( १ ) " षम ष्टम,अवैकल्ये"परस्मै.धा०भ्वादिः कौ०पृ०४१८
अकारप्रत्ययं औणादिकं ऊह्यः; पचाद्यच् वा. ❀

निरु०–११०ज्ञातेऽपरिचिते चापि समत्वात्( सम ) उच्यते। २५

१ पातञ्जलसू० १–२१–२२। ("संवेगः– वैराग्यम्" इति तद्भाष्यटीकायाम्. ) २ ( संवेगित्वेति पाठस्साधुरिति प्रतिभाति.)

{१११ / १५६} अमोघः,

ॐ अमोघाय नमः।

भा०—तेषामवितथस्पर्शः—
५ (अमोघः). यथा,
(१) "अमोघं दर्शनं राम नच मोघस्तव स्तवः । अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः" इति. ❋ रा० यु० १२०—३१ ।
(१) "पुण्डरीकं परं धाम नित्यमक्षरमव्ययम् । तद्भवान् पुण्डरीकाक्षः" इति—भा० उ० ६९—६।

१० निर्व०—तेषां, मोघः—वितथस्पर्शः, नेति—
(अमोघः).
(१) "मुह,वैचित्ये"वैतथ्यकर्मेहायम्. धा० दिवादिः कौ० पृ० ४५८ अनेकार्था हि धातवः. तद्बीजं चोक्तमेव. तथैव तत्रतत्र तादृशे प्रदेशे (जनार्दनइत्यादौ) अवसेयम्. ततः, पचाद्यच् गुणः. पृषोदरादिलक्षणः,
१५ वर्णागमेन हस्य घः.यद्वा,
(२) "न्यङ्क्वादीनांच"इति,तस्याकृति-७।३।५३।।कौ० पृ० ५६० गणत्वात्, कुत्वम्. तत्रच, बाह्यप्रयत्नत आन्तरतम्यात्,
(३) "स्थानेन्तरतमः" १।१।५०।।कौ० पृ० ७
इति, घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य,हस्य तादृशो वर्गच-
२० तुर्थो घकारः.अथवा,
(४) "हलश्च" ३।३।१२१।।कौ० पृ० ६६३
इति, यथायथम् करणाधिकरणयोः घञ्. शेषंप्राग्वत्. नञ्तत्पुरुषः. नञो नलोपः. ❋

निरु०—१११ वितथस्पर्शरहितः स(ह्यमोघः) प्रकीर्तितः॥८७॥

( ११२ ) पुण्डरीकाक्षः,

ॐ पुण्डरीकाक्षाय नमः।

भा०—( पुण्डरीकाक्षः ).नित्यवैकुण्ठवासिनां दृष्टिभूत इत्यर्थः.यथा,
( २ ) " दिवीवचक्षुराततम्" इति. ❀ पु०सू०। ५

निर्व०—आर्षनिर्वचनानुसारात्, पुण्डरीकस्य– परस्य धाम्नः,
तात्स्थ्यात्, "मञ्चाः क्रोशन्ति" इतिवत्,
नित्यवैकुण्ठवासिनाम्, अक्षि- चक्षुरिवेति–( पुण्डरीकाक्षः ),
( १ ) " अशू, व्याप्तौ" धा०स्वादिः कौ०पृ०४६३
( २ ) " अशेर्नित्" इति, उणा० पा०३ कौ० पृ०६३२ १०
क्सौ, अक्षिशब्दो व्युत्पादितः.
( ३ ) "पुण, कर्मणि शुभे" धा० तुदादिः कौ० पृ०४६६
(४)"कपिदूषिभ्यामीकन्"इतिप्रकरणे,उणा०पा०४कौ०पृ०६३२
( ५ ) " पर्फरीकादयश्च" इति,उणा० पा०४ कौ०पृ०६३३
निपातनात् ईकन्, धातोः डः रुगागमश्च अगुणः. १५
पर्फरीकादिराकृतिगणः.दीर्घः.
( ६ ) "अक्ष्णोऽदर्शनात्" इति, अच् समासान्तः.५।४।७६॥
कौ०पृ०१८३
( ७ ) " यस्य०" इति, लोपः. ६।४।१४८॥ कौ० पृ०५६
( ८ ) " लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्ये ॥ २०
एवम्, अतिप्रकृष्टस्याप्यस्य पूर्वोक्तदिशा अस्मदादीनामपि श्रेय-
स्करत्वात्, वृषः-निरुक्तानुसारात् धर्मः,
तद्रूपम्;-यद्वा. ❀ वृषेस्सेचनार्थतया, वृषम्- तापत्रयनिर्वापण
सुधासेकशीतलम्, कर्म- चेष्टितम्, अस्येति–

निरु०—११२पुण्डरीकं परं धाम नित्यमक्षरमव्ययम्। २५
तद्गतानामक्षिभूतः ( पुण्डरीकाक्ष ) ईरितः॥ ८८ ॥

## (११३) वृषकर्मा, (११४) वृषाकृतिः,

ॐ वृषकर्मणे नमः। ॐ वृषाकृतये नमः।

भा०—एवम्, प्रकृष्टस्याप्यस्यास्मदादीनामपि पूर्वोक्तदिशा श्रेयस्करत्वा
५ त् धर्मरूपमस्य कर्मेति— (वृषकर्मा). ❋
तथा, आकृतिरपीति—(वृषाकृतिः). अथवा,
तापत्रयनिर्वापणसुधासेकशीतलचेष्टितचारुरूपत्वात्,—
(वृषकर्मा,वृषाकृतिः).
(१)"वृषु,सेचने"यथा,श्रीसात्वते परेध्याने,धा०भ्वादिःकौ०पृ०४१०

१० निर्व०— (वृषकर्मा).
(१) "डुकृञ्. करणे" धा०तनादिः कौ०पृ०४७३
(२) "सर्वधातुभ्योमनिन्"उणा०पा०४कौ०पृ०६३९
इति, मनिन्.गुणः. रपरः. अनिट्,
(३)"वृषु, सेचने" इगुपधलक्षणः कः धा० भ्वादिः कौ०पृ०४१०
१५ अगुणः, बहुव्रीहिः ततः, नान्तलक्षणो दीर्घ इत्यादि, ❋
तथा, वृषः-भागवत् धर्मरूपा, वृषा-शीतला वा, आकृतिः—आकारः,
चारुरूपम् अस्येति—
(वृषाकृतिः). आङ्पूर्वः पूर्ववत् धातुः.
❋ स्त्रियांक्तिन् अगुणः अनिट् वृषशब्दो व्युत्पादितः द्वितीयकल्पे
२० अदन्तलक्षणटाप्. दीर्घः.

निरु०—११३श्रेयस्करं धर्मरूपं कर्म यस्य प्रचक्षते।
(वृषकर्म) ति विख्यातः शुभकर्मप्रदो मनुः॥ ८९॥
११४ धर्मरूपाकृतिर्यस्य स (वृषाकृति) रुच्यते।
तापत्रयाग्निदग्धानां सुधेवात्यन्तशीतलम्॥ ९०॥
२५ रूपं कर्म च यस्यास्ति (वृषकर्मा,) (वृषाकृतिः)।

१ परेध्याने।

श्लो०॥१३॥ ( ११५ )रुद्रो,

ॐ रुद्राय नमः।

भा०—( २ ) " विश्वमाप्याययन् कान्त्या पूर्णेन्द्वयुततुल्यया"। श्रीपौष्करे, ॥ सात्व० ॥ ५

(३)"वपुषा सुन्दरेणैव दिव्येनाविकृतेन च।मुञ्चन्तमनिशंदेहादालोकं ज्ञानलक्षणम्" ॥ श्रीपा०पौ० ॥

( ४ )"पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये। वदनेन्दुचयोत्थेन ह्लादयन् गोगणेन तु" ॥ इति. ॥ श्रीपा०पौ० ॥ १०

राजधर्मे,

( ५ )" ततो महति पर्यङ्के मणिकाञ्चनचित्रिते। ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम्" ॥ इति. ❋भा० राज०४५—१३।

एवंविधरूपविविधचेष्टितद्रुतहृदयान् सानन्दबाष्पान् कुर्वन्, रोदयतीति— १५

( रुद्रः )

निर्व०—( १ ) " स्त्रियाःपुंवत्भापितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु"६।३।३४॥कौ०पृ०१६०

इति, पूर्वस्य पुंवत्. उभयत्रापि, पूर्वोत्तरपदसमभिव्याहारे सवर्णदीर्घः. ❋

एवंविधरूपचेष्टितद्रुतहृदयान् सानन्दबाष्पान् कुर्वन्, २०

रोदयतीति—

( रुद्रः. )

निरु०—११५ ईदृक्रूपैश्चेष्टितैश्च भक्तानानन्दबाष्ययन्॥ ९१ ॥

रोदयन् ( रुद्र ) उद्दिष्टः सर्वसंतोषदो मनुः।

## ( ११६ ) बहुशिराः,

ॐ बहुशिरसे नमः ।

भा०—( १ ) " रोदेर्णिलुक्च " उणा० पा० २कौ०पृ०६२०
५ इति,रक्प्रत्ययः, णिलोपश्च. यथा, श्रीविष्णुतत्त्वे,
( २ ) " आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः " इति. ❀ ।। श्रीपा० वि० तत्वे० ।
बहूनि शिरांसि परस्सहस्रं फणा अस्येति—( बहुशिराः ).

निर्व०—( १ ) " रुदिर्, अश्रुविमोचने " णिच्. धा०अदा० कौ०
१० पृ०४४५
( २ ) " स्थायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमद्मुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदाम्भिवासिवाशिशीङ्हसिसिधिशुभिभ्यो रक्" उणा० पा०२कौ० पृ०६१९
इति वर्तमाने,
१५ (३)" रोदेर्णिलुक्च "इति,रक्,णेर्लुक्च. उणा०पा०२कौ०पृ०६२०
( ४ )" नेड्वशि० " इति, नेट्. लुका लुप्ते,७।२।८॥कौ०पृ० ५८१
( ५ ) "नलुमताङ्गस्य" इति, प्रत्ययलक्षण-१।१।६३॥कौ०पृ०४३
प्रतिषेधाद्, न णिनिमित्तो लघूपधगुणः.ऐदमर्थ्येन हि,
( ६ ) " णेरनिटि " ६।४।५१॥कौ०पृ० ३९९
२० इत्येव सिद्धे, लुक आरम्भः; यदित्वत्रापि लोप इत्येव पाठः; तर्हि, सिद्धे पूर्वोक्तसूत्रेणैव णिलोपे, पुनरारम्भः प्रत्ययलक्षणबाधनार्थ इति ध्येयम्. ❀
अनन्तरूपतया, बहूनि-परस्सहस्राणि, शिरांसि—फणाः, अस्येति—( बहुशिराः ).

२५ निरु०—११६ फणाश्च बहवो यस्य स वै ( बहुशिरा ) मतः ॥९२॥

(११७) बभ्रुः,

ॐ बभ्रवे नमः।

भा०— तथाविधः सन् बिभर्तीति—

(बभ्रुः). भृञः, ५

(१)"कुर्भ्रश्च"इति,कुप्रत्ययः,द्वित्वं च.उणा०पा०१कौ०पृ०६१०

(२) " यस्य सा सकला पृथ्वी फणामणिशिलारुणा। बिभर्ति मालां लोकानाम्"

(३) " योऽनन्तः पृथिवीं धत्ते शेखरस्थितिसंस्थिताम्" इति. ❋

निर्व—(१) " श्रिञ्, सेवायाम् " धा०भ्वादिः कौ०पृ०४२२ १०

(२) " सर्वधातुभ्योऽसुन् " उणा० पा०४कौ०पृ०६४०

इति, वर्तमाने,

(३)"श्रयतेःस्वाङ्गे शिरःकिच्च"उणा० पा०४कौ०पृ०६४१

इति, श्रयतेः असुन्, कित्. धातोः शिरादेशश्च. आदेशे अकार-इत्, उच्चारणार्थोवा. कित्त्वाद्गुणः. १५

(४) " बृहि, वृद्धौ " धा० भ्वादिः कौ० पृ०४११

इदित्वान्नुम् कुप्रकरणे,

(५) "लङ्घिबंह्योर्नलोपश्च" इति, कुः, उणा०पा०१कौ०पृ० ६११नलोपश्च-बहुव्रीहिः. असन्तदीर्घः इत्यादि. ❋

तथाविधः सन् भरतीति—(बभ्रुः). २०

(१) "भृञ्,भरणे " धा०भ्वादिः कौ०पृ०४२२

(२) " योद्वेच " इत्यतः उणा०पा०१ कौ०पृ०६१०

द्वे इति वर्तमाने,

(३) " कुर्भ्रश्च " इति, कुः, उणा० पा०१कौ० पृ०६१०

निरु०—११७ अनन्तरूपो यो धत्ते पृथ्वीं(बभ्रु) रस ईरितः॥ २५

१ भरतीति।

( ११६ ) बहुशिराः,

ॐ बहुशिरसे नमः ।

भा०—( १ ) " रोदेर्णिलुक्च " उणा० पा० २कौ०पृ०६२०
५ इति,रक्प्रत्ययः, णिलोपश्च. यथा, श्रीविष्णुतत्त्वे,
( २ ) " आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणावि-
ष्टो द्रष्टव्यस्सर्वदेहिभिः " इति. ❀ ॥ श्रीपा० वि० तत्त्वे० ।
बहूनि शिरांसि परस्सहस्रं फणा अस्येति–( बहुशिराः ).

निर्व०—( १ ) " रुदिर्, अश्रुविमोचने " णिच्. धा०अदा० कौ०
१० पृ०४४५
( २ ) " स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-
वृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसि–
वाशिशीङ्हसिसिधिशुभिभ्यो रक्" उणा० पा०२कौ० पृ०६१९
इति वर्तमाने,
१५ (३)"रोदेर्णिलुक्च"इति,रक्,णेर्लुक्च. उणा०पा०२कौ०पृ०६२०
( ४ )" नेड्वशि०" इति, नेट्. लुका लुप्ते,७।२।८॥कौ०पृ० ५८१
( ५ ) "नलुमताङ्गस्य" इति, प्रत्ययलक्षण-१।१।६३॥कौ०पृ०४२
प्रतिषेधात्, न णिनिमित्तो लघूपधगुणः.ऐदमर्थ्येन हि,
( ६ ) " णेरनिटि " ६।४।५१॥कौ०पृ० ३९९
२० इत्येव सिद्धे, लुक आरम्भः; यदित्वत्रापि लोप इत्येव
पाठः; तर्हि, सिद्धे पूर्वोक्तसूत्रेणैव णिलोपे, पुनरारम्भः
प्रत्ययलक्षणबाधनार्थं इति ध्येयम्. ❀
अनन्तरूपतया, बहूनि-परस्सहस्राणि, शिरांसि—फणाः, अस्येति–
( बहुशिराः ).

२५ निरु०—११६ फणाश्च बहवो यस्य स वै ( बहुशिरा ) मतः ॥९२॥

( ११९ ) शुचिश्रवाः,

ॐ शुचिश्रवसे नमः ।

भा०—( १ ) " श्रु, मिश्रणे " धा०अदादिः कौ०पृ०४३९
( २ ) " वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित् " उणा० पा०४ ५
कौ०पृ०६३४ इति, नित्प्रत्ययः. ❀
तदुक्तान्यवश्यम् शृणोतीति—( शुचिश्रवाः ).
( १ ) " शुचीनि श्रावणीयानि शृणोमीह धनञ्जय । नच पापानि
गृह्णामि ततोहं वै शुचिश्रवाः"।। इति. भा०शा०मो०३४४—६१।
भक्त्युपहृतं हि शुचि; यथा, १०
( २ ) " विदुरान्नानि बुभुजे शुचीनि गुणवन्तिच " इति. भा०
उ०९०—४३।

निर्व०—( ४ ) " विश, प्रवेशने " धा० तुदादिः कौ०पृ०४६९
( ५ ) " अशूप्रुषि० " उणा० पा०१कौ०पृ०६१७
इत्यादिना क्वन्. अगुणः, अनिट्. ❀ १५
तदुक्तानि भक्तितन्त्राणि श्रावणीयानि शुचीनि, शृणोतीति—
( शुचिश्रवाः )
( १ ) " श्रु, श्रवणे " धा० भ्वादिः कौ०पृ०४२६
( २ ) " सर्वधातुभ्यः० " उणा० पा०४कौ०पृ०६४०
इत्यसुन्. गुणावादेशौ. २०
(३)"शुच, शोके"शौचकर्माचायम्.धा०भ्वादिः कौ०पृ०३९०
( ४ ) " सर्वधातुभ्य इन् " इति, वर्तमाने, उणा० पा०४कौ०
पृ०६३७
(५)"इगुपधात् कित्"इति,इन्कित्.उणा०पा०४कौ०पृ०६३७
अगुणः. ततः, असन्तत्वात् दीर्घ इत्यादि. ❀ २५

निरु०—११९ भक्तैरुक्तान्यवश्यं यश्शृणोति स ( शुचिश्रवाः ) ।

{ ११८ / १५१ } विश्वयोनिश्,

ॐ विश्वयोनये नमः।

भा०—इदमनन्तवपुषा सामान्यम् सर्वसाधारणम् भक्तसंश्लेषविशेषार्थं
५ व्यवस्थापयति—
( विश्वयोनिः ). इति.- विश्वेषां भेजुषां स्वेन मिश्रयितेति.

निर्व०—भृञो द्वित्वंच.बाहुलकप्रभावात् द्विरुक्तपूर्वखण्डस्य अभ्याससंज्ञायाम्,
( ४ ) "उरत्"इति, अभ्यासऋवर्णस्य अत्वम्, रपरत्वम्,७।४।६६॥
१० कौ० पृ०३७८
(५)"हलादिःशेषः"इति,रेफस्य निवृत्तिः.७।४।६०।।कौ०पृ०३६९
( ६ ) " अभ्यासेचर्च"८।४।५४॥कौ०पृ०३७०
इति, भस्य बः. ततः, उत्तरखण्डे कित्वात् न गुणः. इको यण्
ऋकारस्य रेफः. संहितायाम्,
१५ ( ७ ) " भोभगोअघोअपूर्वस्य योऽशि" ८।३।१७॥ कौ०पृ० २७
इति यत्वम्।
( ८ ) "हलिसर्वेषाम्"इति,यलोपः.❀ ८।३।२२॥ कौ०पृ०२८
इदं च अनन्तवपुषा सामान्यम् सर्वसाधारणम् भक्तसंश्लेषविशेषार्थं व्यवस्थाप्यते.
२० विश्वेषाम्- भेजुषाम्, योनिः- मिश्रयितेति,—( विश्वयोनिः )
( १ ) " यु,मिश्रणे" धा०अदादिः को०पृ०४३९
(२)"वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित्" उणा०पा०४कौ०पृ०६३४
इति,निः.गुणः.
( ३ ) " नेड्वशि०" इति, नेट्. ७।२।८॥कौ०पृ०५८१

२१ निरु०—११८ विश्वेषां भेजुषा स्वेन(विश्वयोनि)स्तु मिश्रणात्॥१३॥

❀विश्लेषा। विश्लेषविशेषा।

(११९) शुचिश्रवाः,

ॐ शुचिश्रवसे नमः ।

भा०-(१) " शु, मिश्रणे " धा०अदादिः कौ०पृ०४३९
(२) " वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित् " उणा० पा०४ ५
कौ०पृ०६३४ इति, नित्प्रत्ययः. ❋
तदुक्तान्यवश्यम् शृणोतीति-(शुचिश्रवाः).
(१) " शुचीनि श्रावणीयानि शृणोमीह धनञ्जय । नच पापानि
गृह्णामि ततोहं वै शुचिश्रवाः"।। इति. भा०शा०मो०३४४-६१।
भक्त्युपहृतं हि शुचि; यथा, १०
(२) " विदुरान्नानि बुभुजे शुचीनि गुणवन्तिच " इति. भा०
उ०९०-४३।

निर्व०-(४) " विश, प्रवेशने " धा० तुदादिः कौ०पृ०४६९
(५) " अशूप्रुषि० " उणा० पा०१कौ०पृ०६१७
इत्यादिना क्वन्. अगुणः. अनिट्. ❋ १५
तदुक्तानि भक्तितन्त्राणि श्रावणीयानि शुचीनि, शृणोतीति-
(शुचिश्रवाः)
(१) " श्रु, श्रवणे " धा० भ्वादिः कौ०पृ०४२६
(२) " सर्वधातुभ्यः० " उणा० पा०४कौ०पृ०६४०
इत्यसुन्. गुणावादेशौ. २०
(३)"शुच, शोके"शोचकर्माचायम्.धा०भ्वादिः कौ०पृ०३९०
(४) " सर्वधातुभ्य इन् " इति, वर्तमाने, उणा० पा०४कौ०
पृ०६३७
(५)"इगुपधात् कित्"इति,इन्कित्.उणा०पा०४कौ०पृ०६३७
अगुणः. ततः, असन्तत्वात् दीर्घ इत्यादि. ❋ २५

निरु०-११९ भक्तैरुक्तान्यवश्यं यश्शृणोति स (शुचिश्रवाः)।

(१२०)अमृतः,

ॐ अमृताय नमः।

भा०-(३) " धर्म्यारम्याश्चार्थवतीर्विचित्रार्थपदाक्षराः । शृण्वतो
५ विविधा वाचो विदुरस्य महात्मनः॥ अकामस्यैव कृष्णस्य सा व्यतीया
य शर्वरी"इति. ❀ भा०उ०९३-२।
तेषाम्;निरवधिकमाधुर्येण,जरामरणवारणेन,
सदा सेवायामप्यतृप्तिकरत्वेन वा-
(अमृतः;) यथा,
१० (१) " अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम्"इति. ❀
ईदृशशक्तिलेशेन खलु सागरसारेप्यमृतत्वमुपचर्यते;
ततो विशेषमाह.-

निर्व०-तेषाम्, निरवधिकमाधुर्येण, जरामरणनिवारणेन,
सदा सेवायामपि अतृप्तिकरत्वेन वा,नास्ति मृतं-मृतिः, अस्मादिति-
१५ (अमृतः).
(१) "मृङ्,प्राणत्यागे" धा०तुदादिः कौ०पृ०४६८
(२) " नपुंसकेभावेक्तः"इति, क्तः. ३।३।११४॥कौ०पृ०५१७
अगुणः. अनिट्. नञ्पूर्वो बहुव्रीहिः. नलोपः. ❀
यद्वा, न म्रियते अनेनेति-
२० (अमृतः).धातुः प्राग्वत्.
(१) " हसिमृग्रिण्वाऽमिदमिलूपूधूर्विभ्यस्तन्"उणा० पा० ३कौ०
पृ० ६२८ इति वर्तमाने,
(२)"तनिमृङ्भ्यांकिच्च"इति,तन् कित्.उणा०पा० ३कौ०पृ०६२९
अगुणः. अनिट् नञ्तत्पुरुषः. नलोपः प्राग्वत्. ❀

२५ निरु०-१२० जरामृत्योर्वारणेन ह्यतृप्तेर्वापि सेवनात् ॥ ९४ ॥
(अमृत) स्यान्निरतिशयमाधुर्येण च सर्वदा।

( १२१ ) शाश्वतस्थाणुः, ( १२२ ) वरारोहो,

ॐ शाश्वतस्थाणवे नमः । ॐ वरारोहाय नमः ।

भा०— ( शाश्वतस्थाणुः ) स्वयं नित्यः, भोक्तृभ्योऽनपहार्यश्च,
अपुनरावृत्तिभोग्यत्वात्; अन्यद्ध्यमृतमनित्यम्,
सकृत्सेव्यं च. ❀
तस्मात्; ( वरारोहः ) वरम्—उत्कृष्टम्, आरोहणम्—स्वप्राप्तिः,
अस्येति. अन्यद्धि सर्वमवरम्; यथा,

निर्व०— ईदृशशक्तिलेशतः सागरसारेऽपि अमृतशब्दव्यपदेशः.
अनित्यात्, सकृत्सेव्याच्च, प्रसिद्धामृतात् वैलक्षण्यमुच्यते. १०
शाश्वतः—स्वयं नित्यश्चासौ, स्थाणुः—अपुनरावर्तिनाम्
नित्यभोग्यतया स्थिरश्च, इति—
( शाश्वतस्थाणुः ). एकनाम.
( १ ) "ष्ठा, गतिनिवृत्तौ" पस्मैः. टवर्गः तवर्गजः. धा०१वादिः
कौं०पृ०४२४ १५
( २ ) "स्थोणुः" इति, णुः. उणा०पा०३कौ०पृ०६२६
अनिट् शश्वदित्यव्ययात्,
( ३ ) "तत्र भवः" इति, अणि, टिलोपाभावे, ४।३।५३॥
कौ०पृ०२६१
आदिवृद्धौ च, शाश्वतशब्दो व्युत्पादितः. कर्मधारयः. ❀ २०
तस्मात् कारणात्, वरः— उत्कृष्टः, आरोहः— आरोहणम्, त-
त्कर्तृकस्वप्राप्तिः, अस्य अस्मिन् वेति—
( वरारोहः ).

निरु०— १२१ भोग्यो ह्यपुनरावृत्त्या भोक्तृभ्यो रोचते यतः॥९५॥
स्वयं नित्यस्सदा योऽसौ ( शाश्वतस्थाणु ) रुच्यते । २५
१२२ वरमुत्कृष्टमारोहो यस्य स्वप्राप्तिलक्षणः ॥ ९६ ॥
वर्तते स ( वरारोहः ) प्रकृष्टस्थानदो मनुः ।

भा०—(१) "एते वै निरयास्तात स्थानस्य परमात्मनः"। इति.
"परव्यूह विभवात्मना त्रिविधं परं ब्रह्म"इतिभागवतसिद्धान्तः.
तत्र, परन्नाम, अकार्यम्, कार्यादनवच्छिन्नपूर्णषाड्गुण्यमहार्णवोल्क
५ लिकैकातपत्रीकृतनिस्सीम नित्यभोगविभूतिकम्, ❋ मुक्तोपसृप्यम्,
अनौपाधिकम्, अवस्थानम्.
व्यूहश्च,मुमुक्षुसिसृक्षया प्रदेयसृष्टिस्थितिलयाः, शाश्वतदर्थतत्फलानि ध्या
नाराधने, लीलाचेतीदृशकार्योपयुक्तविभक्तपरगुणरूपव्यापारशीकरव्यू
१० ह निर्वाहितलीलाविभूतिकम्, मुक्तिसाधकं चतुर्थाऽवस्थानम्. विभवश्च,
तच्छायः सुरनरतिर्यगादिःस्वविभवसजातीयः ऐच्छः प्रादुर्भाववर्गः.
तथाच श्रीसात्वते,
(२) "षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम् । सर्वतःपाणिपादं
तत्" ॥ इत्युपक्रम्य, ॥ श्रीपा०सा० ॥
१५ (३) "परमेतत्समाख्यातमेकं सर्वाश्रयं विभुम् । एतत्पूर्वं त्रयं चा-
न्यत् ज्ञानाद्यैर्भेदितं गुणैः ॥ विद्धयेतद्व्यूहसंज्ञं वै निःश्रेयसफलप्रदम् ।
मुख्यानुवृत्तिभेदेन युक्तं ज्ञानादिभिर्गुणैः ॥ नानाकृति च तद्विद्धि विभ-
वं भुक्तिमुक्तिदम्"। इति. ॥ श्रीपाञ्च०स्वात्वते० ॥
२० तत्र, प्रादुर्भावाः केचित् साक्षात्; यथा, मत्स्यकूर्मादयः.
अन्ये तु आर्ष्यादिविशिष्टपुरुषाधिष्ठानेन; यथा, भार्गवरामकृष्णद्वै-
पायनादयः. अपरेकाले शक्त्यावेशेन;
यथा पुरंजयादिषु. इतरेच व्यक्तिषु स्वयमेवावतीर्य; यथा,
अर्चावतार इति चतुर्धा.

---

१ कार्यानवच्छिन्न । २ प्रलयसृष्टिस्थितयः । उपादेयसृष्टि ।
३ ऋष्यादि । ४ कार्यकाले।

भा०—ननु, ब्रह्मादयोपि भगवत्प्रादुर्भावाः कल्प्यन्ताम्,तदभेदोप-
देशात्. तदिदं जडजल्पितम्, अस्मदादेः तृणादेश्च तत्प्रादुर्भाव-
प्रसङ्गात्. अस्ति हि सर्वस्याभेदव्यपदेशः,

(४) "सर्वंखल्विदं ब्रह्म" इत्यादि. छा०उ० ३–१४–१। ५

यमेन तेषां ब्रह्मादीनां भगवदवतारगणनास्वपरिगणनात्,
वमनुष्यादिवत्. सृष्टिप्रकरणेषु सृज्यतया परिगणनाच्च; प्रत्युत, तेषां
ादुर्भावेभ्यो भेदव्यपदेशाः, प्रादुर्भावशब्दविलक्षणेन प्रादुर्भावान्तर
ाब्देन निर्देशाः, भगवद्विभूतिलेशोद्भवत्वतत्प्रादुर्भावविशेषाधीनवृ-
त्तित्वादिव्यवहाराश्च, भगवच्छास्त्रेषु बहुलमुपलभ्यन्ते. (अतएव हि १०
ेषां प्रादुर्भावेभ्यो भेदःतद्विभूतित्वं च शास्त्रितम्.)श्रीपौष्करे तावत्,

(५) "ज्ञानोपदेष्टा भगवान् कपिलाक्षस्त्वधोक्षजः। विद्यामूर्ति
श्चतुर्वक्त्रो ब्रह्मा वै लोकपूजितः॥ तदंशभूतो वै यस्यविश्वव्यञ्जनल-
क्षणः" ॥ इति. ॥ श्रीपाञ्च. पौ० ॥

ब्रह्मणःकपिलप्रादुर्भावं प्रति," यस्य" इति षष्ठ्या शेषत्वम्, १५

"तदंशभूतस्सन्–विश्वव्यञ्जनलक्षणः"इतितत्तज्ज्ञानप्रवर्तकतया त-
द्विभूतित्वं च व्यञ्जितम्, अंशशब्देश्चैतादृशः, सविभूतिकस्य भगव-
तो विभूतिभूतैकदेशेषु मुख्यो व्याख्यातः,

(६) "अंशो नानाव्यपदेशात्"इत्यत्र. ब्रह्मसूत्र० २–३–४२। २०

तथा,अनलशायिप्रादुर्भावं प्रतीतरस्य,

(७) "युगान्तेषु च संहारं यः करोति च सर्वदा। शङ्कराख्यो
महारुद्रः प्रादुर्भावान्तरं हि तत् ॥ देवस्यानलशायेर्वै सर्वाधः
संस्थितस्य च"। इति.

---

१ कुण्डलितम्।

भा०—अत्रान्तरशब्दो भेदवचनः,

( ८ ) " इक्षुक्षीररसादीनां माधुर्यस्यान्तरं महत् "। इतिवत्.प्रादुर्भा-वप्रादुर्भावान्तरयोर्लक्षणं च वि[1]विक्तमुक्तम्,

५ ( ९ ) " प्रादुर्भावास्तु विज्ञेयाः स्वव्यापारवशात्तु वै।
प्रादुर्भावान्तरास्तद्वदंशस्य तु वशादपि " ॥
इति. अत्र, " स्वव्यापारवशात् " इतिस्वासाधारणत्वम्,
" अंशस्य तु वशादपि"इति तु शब्दात्, अंशवशाशब्दाच,
विशेषो विभूतिपारतन्त्र्यं च. पुनरपिताहशलक्षणम्,

१० ( १० ) " स्वभावमजहच्छश्वदाकारान्तरमाकृतेः । यत्तत्त्वमंशसंभूतं प्रादुर्भावान्तरं तु तत् " ॥ इति.

तथा,मुख्यौपचारिकविभागश्च.

( ११ ) " प्रादुर्भावान्तरैस्सार्धं प्रादुर्भावैर्द्विजाखिलैः । अप्ययैः प्रभवाख्यैस्तु गौणमुख्यैस्सुरेश्वरैः " ॥ इति.

१५ तथा, मुमुक्षुभिः प्रादुर्भावानामाराध्यत्वंप्रादुर्भावान्तराणामाराधन निषेधश्च.

( १२ ) " यदैवकृतदीक्षाणामधिकारस्समर्पितः। अच्युताराधनानां तु निश्श्रेयसपदाप्तये ॥ तदैवप्रतिपिद्धं च देवतान्तरपूजनम्। व्यूहाद्वा विभवाख्याद्वा ऋतेनान्यत्पुरोदितात्।स्कन्दरुद्रमहेन्द्राद्याः प्रतिषिद्धास्तु

२० पूजने। ज्ञात्वैवं भक्तिसाङ्कर्यं नकुर्यादेवमेवहि"इति.श्रीसात्वतसंहितायां तु महिषीभूषणपरिजनादेः भोगोपकरणतया भगवद्विग्रहान्तरभावः, कालविधिशिवादेः लीलोपयिकसंसारोपकरणत्वं च, स्फुटीकृतम्

( १३ ) " इत्येतद्देवताचक्रमङ्गमन्त्रगणान्वितम्। विग्रहे देवदेवस्य संलीनमवतिष्ठते ॥ वक्ष्ये भवोपकरणगीर्वाणगणमुत्तमम्। "

---

१ संविभक्तमुक्तम्।

भा०—नानाविभवमूर्तीनां योवतिष्ठेत शासने॥ कालोपि यन्नियन्ता च शास्त्रं नानाङ्गलक्षणम् । विद्याधिपतयश्चैव समुद्रस्सगणश्शिवः ॥ प्रजापतिसमूहस्तु इन्द्रः सपरिवारकः । मुनयस्सप्तपूर्वेऽन्ये ग्रहास्तारागणैर्वृताः । जीमूताश्चाखिला नागास्त्वप्सरोगण उत्तमः ॥ ओषध्यश्चैव पशवो यज्ञास्साङ्गाखिलास्तु ये । विद्या चैवापरा विद्या पावकश्चैव मारुतः ॥ चन्द्रार्कौ वारिवसुधे इत्युक्तममलेक्षण ॥ चतुर्विंशतिसंख्यं च भवोपकरणं महत् । भवस्साक्षात्प्रधानस्तु व्यापको जडलक्षणः ॥ मन्त्रमन्त्रेश्वरन्यासात्सोपि पूज्यत्वमेति च" ॥ इति. ॥ श्रीपा०सात्व० ॥

अतः,श्रीजन्मरहस्ये चतुर्मुखादिप्रसङ्गः,श्रीपौष्करे प्रादुर्भावविभूतितयाऽन्तर्भावनिबन्धनोऽनुसंधेयः. एवं च व्यामोह एव त्रिमूर्तिसाम्यपण्डितन्यायः पण्डितंमन्यानाम्. सर्वं चैतत्, तत्रतत्र स्थापयिष्यते. ❋

तत्र ( वरारोहः ) इत्येतदन्तैर्नामभिः, प्रायशः परत्वमुक्तम्.

---

निर्व०—(१)"रुह, बीजजन्मनि प्रादुर्भावेच" धा० भ्वादिः कौ० पृ०४२०

आङ्पूर्वः.

(२)"भावे"इति,भावेघञ्.लघूपधगुणः.३।३।१८॥कौ०पृ०६४७

( ३ ) " वृञ्, वरणे" धा०स्वादिः कौ०पृ०४६२

( ४ ) " वृ,वरणे" वा. पूर्वत्र, धा०क्र्यादिः कौ०पृ०४७६

( ५ ) " भावे " ३।३।१८॥कौ०पृ०६४७

(६)"अकर्तरिचकारके" इत्यनुवृत्तौ,३।३।१९॥कौ०पृ०६८

( ७ ) " ग्रहवृदृनिश्चिगमश्च"३।३।५८॥कौ०पृ०६५३

इति,अप्,अपरत्र,तदनुवृत्तौ,

(८)"ऋदोरप्" इति,ऋदन्तलक्षणोप्.३।३।५७॥कौ०पृ०६५३

गुणःरपरः. सांहितिको दीर्घः. ❋

---

१ सङ्गे ।

(१२३) महातपाः,

ॐ महातपसे नमः

भा०—(किमेकं दैवतं लोके किंवाप्येकं परायणम्) इति प्राप्यप्र-
५ श्नयोः तत्प्रतिवचनयोश्च प्रायेणामीष्वेव विश्रान्तिः अथ, (स्तुवन्तः
कंकम्) इत्यादीनामुपायप्रश्नप्रतिवचनानामधिकारे व्यूहः. तत्र
वासुदेवः परत्वेन व्याख्यातः.
इदानीं संकर्षणः— (महातपाः)
(१) "यस्यज्ञानमयं तपः" इति, मुण्डकोप० १—१।
१० महत् पूज्यम्, ज्ञानम्, अस्येति, पङ्क्तुणा व्याख्यास्यन्ते.

निर्व०— एवम्, एतावता प्रायशः परत्वमुक्तम् अथव्यूहः. तत्र,
वासुदेवस्य परत्वेन व्याख्यातत्वात्; इदानीम्, अप्ययपूर्वकत्वात्
सृष्टेः, संजिहीर्षुस्संकर्षणः प्रस्तूयते. पङ्क्तुणा व्याख्यास्यन्ते. तत्र, ज्ञा-
नबले संकर्षणस्य गुणौ व्यूढौ, तत्र, महत्—पूज्यम्, तपः— प्राची-
१५ नभवपरिश्रान्तिशान्त्यर्थं संजिहीर्षा बुद्धिलक्षणं ज्ञानम्, अस्येति—
(महातपाः).
(१) "तप, सन्तापे" ज्ञानकर्मेहायम्.धा०भ्वादिः कौ०पृ०४३०
(२) "सर्वधातुभ्यः०" इति,असुन्.उणा०पा०४कौ०पृ०६४०
महच्छब्दो व्युत्पादितः.

२० निरु०— १२३ शतोत्तरैर्द्वाविंशकैर्वरारोहान्तनामभिः ॥ ९७ ॥
किमेकं दैवतमिति किमित्येकं परायणम् ।
प्राप्यस्य प्रश्नयोश्चैव मुक्तमुत्तरमत्रतु ॥ ९८ ॥
व्यूहो यो वासुदेवोपि व्याख्यातोत्रैव संग्रहात् ।
अथ संकर्षणात्मानं वक्ष्यत्युत्तरनामभिः ॥ ९९ ॥
२५ महत्पूज्यं तपोज्ञानं यस्येति सं (महातपाः)

श्लो०॥१४॥ ( १२४ ) सर्वगस्,

ॐ सर्वगाय नमः ।

भा०—तेषु ज्ञानबले संकर्षणस्य गुणौ व्यूढौ, ज्ञानं च प्राचीनभव-
परिश्रान्तिशान्तये संजीहीर्षालक्षणमत्र. ❋ ५
धारणसामर्थ्यलक्षणेन बलेन आत्मवत् धारयन् संहतान् स-
र्वान् गच्छतीति—
( सर्वगः ). ❋ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषुडः ❋
एवं, संकर्षणाद्धि संकर्षणं नाम ( ५५६ ) निरुच्यते अथ,
संहतान् सिसृक्षुः प्रद्युम्नः सर्वकार्यम् १०
विन्दति— सृष्ट्यालभत इति—

नि०—( ३ ) " आन्महतः. " इति, आत्वम् दीर्घः, ६।३।
४॥कौ०पृ०१५५
ततः, असन्तत्वादुपधादीर्घ इत्यादि- ❋
धारणसामर्थ्यलक्षणेन बलेन, आत्मवत् धारयन्, संहतान् १५
सर्वान् गच्छतीति—( सर्वगः ).
( १ ) गम्लृ, गतौ " धा०भ्वादिः कौ०पृ०४३०
(२)"अन्तात्यन्ताध्वदूरपारसर्वानन्तेषुडः"३।२।४८॥कौ०पृ०५७८
इति, डः. डित्वाट्टिलोपः-
( ३ ) "सृ, गतौ "ततः, सर्वशब्दः, धा०भ्वादिः कौ०पृ०४२५ २०
( ४ ) " सर्वनीघृष्व० " उणा०पा०१कौ०पृ०६१७
इत्यादिना वन्नन्तो निपातितः अनिट्- ❋
अथ, संहतान् सिसृक्षुः प्रद्युम्नः, ऐश्वर्यवीर्यगुणौ प्रद्युम्नस्य व्यू-
ढौ. तत्र, जगत्क्रिया शक्त्युल्लासरूपैश्वर्यगुणकतया, स सर्वं कार्यं वि-
न्दति सृष्ट्या लभत इति— २५

निरु०— १२४ धारयन् संहतान्यो वै गच्छतीति स(सर्वगः)॥१००॥

१ तत्र ज्ञान ।

(१२५) सर्ववित्, {१२६ / २८५} भानुर,

ॐ सर्वविदे नमः। ॐ भानवे नमः।

भा०— (सर्ववित्).
५ इदमत्र जगत्क्रियाशक्त्युल्लासरूपमैश्वर्यम्. ❀
सर्वनिर्माणेप्यविकुर्वाणो भातीति—
(भानुः),—
(१) "दाभाभ्यान्नुः" इति, नुःउणा०पा०३कौ०पृ०६२६
(२) "सएष स्वयमुद्बभौ" इति.
१० इदमविकाराकारं वीर्यम्. ❀

निर्व०—(सर्ववित्).
(१) "विद्लृ, लाभे" धा० तुदादिः कौ०पृ०४७०
(२) "क्विप्च" इति, क्विप्. ३।२।७६॥कौ०पृ०५८१
(३) "सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेपि
१५ क्विप्" इति, ३।२।६१॥कौ०पृ०५८०
अयमस्यैव प्रपञ्चः. अगुणः.
(४) "वावसाने" ८।४।५६॥कौ०पृ०३३
इति, पाक्षिकं चर्त्वम्. साधितोहि सर्वशब्दः,
अविकाराकारवीर्यगुणकतया सर्वनिर्माणेप्यसावविकुर्वाणो
२० भातीति—
(भानुः).
(१) "भा, दीप्तौ" धा० अदादिः कौ०पृ०४४३
(२) "दाभाभ्यान्नुः" इति, नुः. अनिट्. ❀ उणा० पा०३
कौ०पृ०६२६

२५ निरु०— १२५ प्रद्युम्नत्वेतु कार्याणि लभते यस्स (सर्ववित्)।
१२६ (भानुः) स्सर्वस्य भातीति निर्माणेप्यविकारतः॥ १०१॥

(१२७) विष्वक्सेनो,

ॐ विष्वक्सेनाय नमः।

भा०—अथ, स्थापकोऽनिरुद्धः—
(विष्वक्सेनः),—इनेन स्वामिना सह वर्तत इति सेना, ५
※सेश्वरेति यास्कः.अनेन रक्षकवन्तो जन्तवो विष्वञ्चःअस्येति.
इयमत्र सामर्थ्यशरीरा शक्तिः. ※

निर्व०—अथ,स्थापकोऽनिरुद्धः. शक्तितेजसी गुणावनिरुद्धस्य व्यूहौ. तत्र सामर्थ्यशरीरया शक्त्या, विषूची—समन्तात् गामिनी, सेना; इनः—ईश्वरः, तेन सह वर्तत इति सेना,—सेश्वराचमूः, १०
तदुपलक्षिताः अनेन रक्षकवन्तो जन्तवः,अस्येति—(विष्वक्सेनः).
(१) "इण्,गतौ" धा०अदादिः कौ०पृ०४४१
(२)"इणूसिञ्जिदीङुष्यविभ्यो नक्"उणा०पा०३कौ०पृ०६२५
इति,नक्,अगुणः.अनिट्.ततः,
(३) "तेनसहेति तुल्ययोगे" इति, २।२।२८॥कौ०पृ०१६५ १५
सहेत्यस्य बहुव्रीहिः.
(४)"वोपसर्जनस्य"इति,सहस्य सः गुणः.६।३।८२॥कौ०पृ०१६५
स्त्रियामतष्टाप्.दीर्घः.ततः,विष्वक्पूर्वः,
(५) "अनेकमन्यपदार्थे"इति,२। २।२४ ॥ कौ०पृ०१६०
पुनर्बहुव्रीहिः. २०
(६) " अञ्चु,गतिपूजनयोः"धा०भ्वादिः कौ०पृ०३९०
विषु इत्यव्ययपूर्वः.
(७) " ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च"इति,
क्विन्.३।२।५९॥कौ०पृ०६७

निरु०—१२७ इनेन स्वामिना सार्कं वर्तते सेन इत्यतः। २५
विष्वग्रस्यो जनो यस्य (विष्वक्सेन) ईरितः॥१०२॥

१ सेश्वरा चमूः। सेश्वरयास्कः।

(१२८) जनार्दनः,।

ॐ जनार्दनाय नमः।

भा०—रक्षाप्रतिपक्षान् जनान् अनपेक्षोऽर्दयतीति—
५ (जनार्दनः).
(१) "दस्युत्राणाज्जनार्दनः" इति.भा०उ०—७१—६।
इदमनपेक्षालक्षणं तेजः. प्रतिमूर्तिगुणानां व्यवस्थेयम्;इयता-
माविष्कारात्.भगवतस्सर्वज्ञानावरणगुणत्वात्.
मूले हि श्रूयते—

१० निर्व०—(८)"अनिदिताम्०" इति.नलोपः.६।४।२४॥कौ०पृ०७६
(९) "उगिदचाम्०" इति, ७।१।७०॥कौ०पृ०६५
अञ्ग्रहणात्, धातोश्चेदुगित्कार्यम्; तर्हि, अञ्चतेरेवेति नियमादित-
रव्यावृत्त्या,अञ्चतेः
(१०) "उगितश्च" इति,ङीप् इत्यादि.४।१।६॥कौ०पृ०८९
१५ (११) "स्त्रियाःपुंवद्भाषितपुंस्कादनूङ्समानाधिकरणेस्त्रियामपूरणीप्रि-
यादिषु" इति, ६।३।३४॥कौ० पृ१६०
पुंवद्भावः.सांहितिको यण् वः.
(१२) "क्विन्प्रत्ययस्य कुः" ८।२।६२॥कौ० पृ०६८
इति, कुत्वम्; चस्य कः. ततः,
२० (१३) "गोस्त्रियोरुपसर्जनस्य" इति,१।२।४८॥कौ०पृ०१२९
आपो ह्रस्वः. ❋
अनपेक्षालक्षणेन तेजसा,जनान्—रक्षाप्रतिपक्षान्,अर्दयति—
अनपेक्षं पीडयतीति—
(जनार्दनः).

२१ निरु०—१२८भक्तविद्वेषिणां तूर्णं मर्दनाद्धि (जनार्दनः)।

( १२९ ) वेदो,

ॐ वेदाय नमः ।

भा०—(२) " ज्ञानैश्वर्येण शक्त्येति सर्वे भगवतोऽनूनाः पूर्णाः इति, एष आत्मा चतुर्विधः सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्ति- ५ स्समृद्धिमान् वा ग्रन्थिरनून आप्तो वशी स्वाधीनोऽनादिरनन्तो व्यपगत-निद्राभयक्रोधतन्द्रो व्यपगतेच्छातमःक्लमव्याधिनिर्दोषो निरनिष्टो निरवद्यो ये भगवन्तं वासुदेवमेवं विदुः, त एनं विदुः, ये. नैवं विदुः, न ते विदुः इति, भगवान् वासुदेवोनन्त एवापरिमितोनन्तत्वेनापरि-मितत्वेन भवति" इति प्रतिपर्यायम्. ❀ ॥ मूलसं० ॥ १०

पुनः सकर्षणस्य शास्त्रप्रदत्वमुच्यते.—

( वेदः ),—सृष्टिलम्भितकरणाः विन्दन्ति तस्मिन्निति.

निर्व०—( १ ) "अर्द, हिंसायाम्" धा० चुरादिः कौ०पृ०४८७ चुरादिः. णिच्. ततः, नन्द्यादिल्युः.

( २ ) " कृत्यल्युटः० " ३।३।११३॥ कौ०पृ० ६६२ १५ बाहुलकात् ल्युडित्यादि. योरनः. णिलोपः.

( ३ ) " जनी, प्रादुर्भावे " पचाद्यच्. दीर्घः. ❀ धा०दिवादिः कौ०पृ०४५४

भगवतः पूर्णषाड्गुण्यस्य सर्वत्रानूनगणत्वेपि, प्रतिमूर्तिव्यवस्था चेयम्, इयतां गुणानामाविष्काराद्, प्रतिपर्यायम् पुनः किंचिद्विव- २० क्षितम्. तत्र तावत् संकर्षणस्य शास्त्रप्रदत्वमुच्यते. सर्वे सृष्टिलम्भित-करणाः, शास्त्राणि विन्दन्ति— प्राप्नुवन्ति, अस्मिन्निति—

( वेदः ).

( १ ) " विद्लृ, लाभे " धा०तुदादिः कौ०पृ०४७०

निरु०—१२९संकर्षणत्वे शास्त्रार्थप्रदत्वाद्(वेद)ईरितः॥१०३॥ २५

१ उत एव । २ अव्याधि ।

{१३० / १३३} वेदविद्,

ॐ वेदविदे नमः।

भा०– (१) "हलश्च" इति, घञ् यथा, ३।३।१२१॥कौ०पृ०६६३

५ (२) " यो वै वेदांश्च प्रहिणोति तस्मै "

(३) अतः, "अभ्युपायः आगमः पन्थाः नेता ब्राह्मण आचार्यः" इति संकर्षणाभिज्ञाः. ❀

; वेदार्थं चाविशयविपर्यासं वेत्तीति–

( वेदवित् ). आह हि,

१० (१) " वेदविदेव चाहम् " इति. ❀ गी०१५–१।

तदङ्गैश्छन्दःकल्पादिभिः स्वकल्पितैरविहीनः–

निर्व०–(२) "हलश्च" इति, अधिकरणे घञ्, गुणः. ❀ ३।३।१२१॥. कौ०पृ०६६३

अविशयविपर्यासं वेदम्, अस्य च शब्दस्य तदर्थपरत्वात् वेदार्थम्,

१५ वेत्ति जानातीति–

( वेदवित् ).

(१) " विद, ज्ञाने " धा० अदादिः कौ०पृ०४४३

क्विप्. अगुणः. पाक्षिकमवसानचर्त्वम्. पुनरपि स एव धातुः. ततो वेदशब्दः,

२० (२) " हलश्च " इति, घञन्तो व्युत्पादितः ❀ ३।३।१२१॥कौ० पृ०६६३

विगतानि–विहीनानि, अङ्गानि– स्वकल्पितानि च्छन्दःकल्पादीनि, अस्येति–( व्यङ्गः ), तैरविहीनतया स नेति–

निरु०–१३० असंशयविपर्यासं वेदार्थं वेत्ति ( वेदवित् )।

१ णाभिज्ञाः । णाद्यभिज्ञाः ।

( १३१ ) अव्यङ्गो, ( १३२ ) वेदाङ्गो,

ॐ अव्यङ्गाय नमः । ॐ वेदाङ्गाय नमः ।

भा०— ( अव्यङ्गः ). ❀
वेदाश्चानन्तशाखाः,अस्य अङ्गं—शरीरम्,अन्तरङ्गव्यञ्जकत्वादिति ५
( वेदाङ्गः ). यथा,
( १ ) " नावेदविन्मनुते तं बृहन्तम् " काठ० ३प०१०५५
( २ ) " विधूनुते वेदमयं शरीरम् " इति.
( ३ ) " श्रुतिस्मृती ममैवाज्ञा "
( ४ ) " दैवं पित्र्यं च कर्तव्यम् " १०
(५)"इति तस्यानुशासनम् " इतितदाज्ञत्वाद्वा—( वेदाङ्गः ). ❀

निर्व०— ( अव्यङ्गः ).
( १ ) " अञ्जू, व्यक्तिश्लक्ष्णकान्तिगतिषु " धा० रुधादिः
कौ०पृ०४७२
( २ ) " हलश्च " इति, घञ्. ३।३।१२१॥कौ०पृ०६६३ १५
(३)"चजोः०"इति, कुत्वम् गः.यद्वा,७।३।५२॥कौ०पृ०५६०
( ४ ) " अगि, गतौ " धा० भ्वादिः कौ०पृ०३८८
इदित्वात् नुम्, पचाद्यच्. अनुस्वारपरसवर्णौ. विपूर्वःसमासः.
वेः यण्. ततो नञ्समासः. नलोपः.
नाम्नोस्सांहितिकम् जस्त्वम्. ❀ २०
वेदाश्चानन्तशाखाः, अङ्गं— अभिव्यञ्जकत्वात्, तदाज्ञात्वाद्वा,
शरीरम्, अस्येति—
( वेदाङ्गः ). धातुः प्राग्वत्. ततो घञित्यादि. वेदशब्दोपि,
वेत्तेः घञि व्युत्पादितः. दीर्घः. ❀

निरु०—१३१शीक्षाव्याकरणाद्यङ्गैर्न हीनो(ऽव्यङ्ग)उच्यते॥१०४॥ २५
१३२ यस्य वेदोऽनन्तशाखो ( वेदाङ्गो )ऽङ्गतया स्मृतः ।

{१३३ / १३०} वेदवित्, ( १३४ ) कविः, ॥

ॐ वेदविदे नमः । ॐ कवये नमः ।

भा०— वेदैर्वेद्यत इति वेदः, तदर्थो धर्मः, तमनुष्ठापनेन विन्दतीति-
५ प्रद्युम्नः-( वेदवित् ). अतो ह्यस्य,
( १ ) " धर्मः; प्रद्योतयिता, प्रवर्तयिता "इति च निर्देशाः ❋
स एव कान्तदर्शित्वात्-( कविः )
*( १ ) " कु, शब्दे " दर्शनकर्मणोऽस्मात् इन्. ❋ धा०अदादिः
कौ० पृ० ४४०

१० निर्व०—अथ, प्रद्युम्नस्य अनुष्ठापकत्वम्—
वेद्यते—ज्ञाप्यते, वेदैर्धर्म इति,
( वेदः ),तदर्थो धर्मः; तं विन्दति—अनुष्ठापनेन लभत इति—( वेदवित् ).
( १ ) " विद्लृ, लाभे " धा० तुदादिः कौ० पृ० ४७०
क्विप् अगुणः. पाक्षिकमवसानचर्त्वम्.
१५ ( २ ) " विद, ज्ञाने " धा० अदादिः कौ० पृ० ४४३
( ३ ) "अकर्तरिचकारके०" ३ । ३ । १९ ॥ कौ०पृ०६४७
इति, कर्मणि घञ् . गुणः ❋
स एव कान्तं कौति पश्यतीति—( कविः )
( १ ) " कु, शब्दे " धातूनामनेकार्थतया दर्शनकर्मेहायम्. धा०
२० अदादिः कौ०पृ० ४४०
( २ )"सर्वधातुभ्य इन्"इति,इनि प्राप्ते, उणा०पा०४कौ०पृ०६३७

निरु०—१३३ वेदैर्वेद्यतया वेदस्तदर्थो धर्म उच्यते ॥१०५॥
तदनुष्ठापनान्नित्यं प्रद्युम्नो ( वेदवित् ) स्मृतः ।
१३४ स एव कान्तदर्शित्वात् ( कवि )रित्युच्यते बुधैः ॥ १०६॥

१ क्रान्तदर्शित्वात् ।

श्लो० ॥ १५ ॥ (१३५) लोकाध्यक्षम्, (१३६) सुराध्यक्षो,
(१३७) धर्माध्यक्षः,

ॐ लोकाध्यक्षाय नमः । ॐ सुराध्यक्षाय नमः । ५
ॐ धर्माध्यक्षाय नमः ।

भा०— कान्तदर्शित्वमेव त्रिभिरुपपादयति.—
( लोकाध्यक्षः,सुराध्यक्षः,धर्माध्यक्षः, ) इति;
लोकाः—धर्माधिकारिणः,सुराः—तदाराध्यादेवताः, धर्मः—तत्सा-
धनं वैधं, तेषाम् अध्यक्षः—अकृताभ्यागमकृतविप्रणाशपरिहारेण १०
फलं दातुमनुसन्धाता, अनिरुद्धः.
अतो ह्यस्य, " धर्मज्ञः, उपायज्ञः, अध्यक्षः, सत्यसन्धः,
स एवास्य संविदन् ददाति " इति व्यपदेशाः ❀

निर्व०—( ३ )"अच इः" इति, इः. गुणावादेशौ, उणा० ५।०४
कौ०पृ० ६३८ सांहितिकं, नाम्नोः, १५
( ४ ) "खरि च" इति, चर्त्वम्. ❀ ८।४।५५॥ कौ०पृ० २०
अथ कान्तदर्शित्वोपपादनमुखेन त्रिभिरनिरुद्धस्य फलप्रदत्व-
मुच्यते, लोकानां—धर्माधिकारिणाम्, अध्यक्षः—स्वामी,
अकृताभ्यागमकृतविप्रणाशप्रसङ्गपरिहारेण फलं दातुम-
नुसन्धातेति— २०
( लोकाध्यक्षः )
( १ )" अक्षू, व्याप्तौ"अधिपूर्वः धा०भ्वादिः कौ०पृ० ४०८

निरु०—१३५—१३६—१३७ धर्माधिकारिणो लोकाः तदाराध्याः
सुरास्तथा। धर्मस्तत्साधनं तेषामध्यक्षः स्यात्त्रिनामवान् ॥१०७॥
(लोकाध्यक्षस्सुराध्यक्षो धर्माध्यक्ष ) इति क्रमात् । २५
अनिरुद्धस्स विज्ञेयो लोकाध्यक्षादिनामवान् ॥ १०८ ॥

(१३८) कृताकृतः, ।

ॐ कृताकृताय नमः ।

भा०— द्वौच धर्मौ— संसारस्य प्रवर्तको निवर्तकश्च, तत्र प्रवर्तकस्या-
५ नित्यफलप्रदत्वेनोपचारात् (कृतः); निवर्तकस्य नित्यफलप्रदत्वेन (अकृत) श्चेति, स एव—
(कृताकृतः). ❀

निर्व०—पचाद्यच्. संहितायाम् यण् एः यः एवमेवायम् उत्तरत्राप्यु-भयत्र.
१० (२) "लोकृ, दर्शने" धा० भ्वादिः कौ०पृ०३८७
(३) "हलश्च" इति, ३।३।१२१॥कौ०पृ०६६३
अधिकरणे घञ्. दीर्घः. ❀
सुराणाम्— तदाराध्यदेवतानाम्, अध्यक्ष इति—(सुराध्यक्षः)
(१) "षु, प्रसवैश्वर्ययोः" परस्मै., धा० अदादिः कौ०पृ०४४०
१५ (२) "सुसूधा गृधिभ्यः क्रन्" उणा०पा०२कौ०पृ०६२०
इति क्रन्, अगुणः, अनिट्, दीर्घः. ❀
धर्मस्य— तत्साधनस्य वेधस्य, अध्यक्ष इति—
(धर्माध्यक्षः)
(१) "धृञ्, धारणे" धा० भ्वादिः कौ०पृ०४२३
२० (२) "अर्तिस्तुसुहु०" इत्यादिना मन्, उणा०पा१कौ०पृ०६१६
गुणः रपरः. अनिट्. दीर्घः. ❀
स एव, कृतः-उपचारात् संसारप्रवर्तकानित्यफलप्रदधर्मश्चासौ,
अकृतः-तन्निवर्तकनित्यफलप्रदधर्मश्चेति—
(कृताकृतः).

२५ निरु०— १३८ अनित्यनित्यफलदौ प्रवर्तकनिवर्तकौ ।
ददौ यस्य स्वरूपं सः (कृताकृत) इतीरितः ॥ १०९ ॥

{१३९ / ७७८} चतुरात्मा, {१४० / ७७३} चतुर्व्यूहः,

ॐ चतुरात्मने नमः । ॐ चतुर्व्यूहाय नमः ।

भा०— इत्थम्,—
( चतुरात्मा ); वासुदेवः संकर्षणः प्रद्युम्नः अनिरुद्ध इति. ❋ ५
कथमेकस्य चातुरात्म्यम्; तत्राह—
( चतुर्व्यूहः );—

निर्व०—( १ )" डुकृञ्, करणे" धा० तनादिः कौ० पृ० ४७३
(२) "निष्ठा" इति, कर्मणि क्तः. ३।२।१०२॥ कौ० पृ० ५८६
अगुणः. अनिट्. नञ्समासे नलोपः. १०
अन्यत्र नञभावो विशेषः. अन्यत् समम्. दीर्घः. ❋
इत्थम्, चत्वारः—वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपाः,
आत्मानः—स्वरूपाणि, अस्येति—
( चतुरात्मा ). आत्मशब्दः, अततेः मनिणन्तो व्युत्पादितः.
( १ )" चते, याचने" धा० भ्वादिः कौ० पृ० ४२१ १५
( २ ) " चतेरुरन्" उणा० पा० ५ कौ० पृ० ६४४
इति, उरन् . ततः, नान्तलक्षणो दीर्घ इत्यादि. ❋
कथमेकस्यैव चातुरात्म्यम्, तत्रोच्यते. चत्वारः—यथोक्ततत्तत्कर्म-
योजनाय, ध्येयाराध्यव्यक्तये च, समस्तेन व्यस्तेन च गुणषट्केन,
तद्युगलत्रिकेण च, तद्व्यञ्जकवर्णभूषणप्रहरणादिभिः जाग्रदाद्यव- २०
स्थाचतुष्टयवैशिष्ट्येन च चतुर्विधाः व्यूहाः व्यूहमूर्तिभेदाः,
अस्येति—( चतुर्व्यूहः ).

निरु०— १३९ वासुदेवादिरूपत्वात् ( चतुरात्मे ) ति कथ्यते ।
१४० जाग्रत्स्वप्नसुषुप्त्यादौ व्यूहावस्थाचतुष्टये ॥ ११० ॥
एतैर्विशिष्टमूर्तित्वात् ( चतुर्व्यूह ) इतीरितः । २५

(१४१) चतुर्दंष्ट्रः,

ॐ चतुर्दंष्ट्राय नमः।

भा०—यथोक्तप्रयोजनेभ्यः, ध्येयाराध्यव्यक्तये च, समस्तव्यस्तेन
५ गुणषट्केन तद्व्यञ्जकव्यवस्थितावयववर्णभूषणप्रहरणवाहनध्वजादिभिः
जाग्रदाद्यवस्थाचतुष्टयविशिष्टाभिर्मूर्तिभिः चतुर्धा व्यूह्यत इति. ❀
व्यूहमूलेन परेण रूपेण—
(चतुर्दंष्ट्रः);- चतुर्दंष्ट्रत्वम् महापुरुपलक्षणम्. यथा,
(१) "चतुर्दशसमद्वन्द्वः चतुर्दंष्ट्रश्चतुर्गतिः" इति.रा०सु०३४-१९३।

१० निर्व०—(१) "ऊह, वितर्के" विपूर्वः. धा० भ्वादिः कौ०पृ०४०७
(२) "अकर्तरिचकारकेसंज्ञायाम्" ३।३।१९॥कौ०पृ० ६४७
इति घञ्, वेरिकारस्य यण् यः. चतुश्शब्दो व्युत्पादितः.
एवमुत्तरत्रापि. ❀
व्यूहमूलेन परेण रूपेण चायं महापुरुपलक्षणविशिष्टतया चतस्रः दंष्ट्राः
१५ अस्येति—
(चतुर्दंष्ट्रः).
(१) "दंश, दशने" धा० भ्वादिः कौ०पृ०४३१
(२) "सर्वधातुभ्यः ष्ट्रन्" उणा०पा०४कौ०पृ०६३९
इति, ष्ट्रन्. षत्व. ष्टुत्वं तवर्गजः-
२० (३) "तितुत्र०" इति, नेट्. नस्यानुस्वारः. ७।२।९॥कौ०पृ० ६०८
(४) "व्रश्च०" इति, ८।२।३६॥ कौ०पृ०५१
शस्य षः. ष्टुत्वम्.
(५) "मातरिपिच" इति, ङामहचप्पित्त्वादेव, ४।२।३६॥
कौ०पृ०२३२

२५ निरु०—१४१ दंष्ट्राचतुष्कयुक्तत्वात्(चतुर्दंष्ट्र)इति स्मृतः॥११३॥

१ व्यूहमूलेन।

(१४२) चतुर्भुजः, ॥

ॐ चतुर्भुजाय नमः ।

भा०—तथा,—
(चतुर्भुजः);— तथाहि. परं रूपमाहुः, ५
(१) "चतुर्भुजमुदाराङ्गं चक्राद्यायुधभूषणम्" वि० पु० ।
(२) "तमसःपरमो धाता शङ्खचक्रगदाधरः" रा० यु० ११४—१५।
(३) "भुजैश्चतुर्भिस्समुपेतम्" इत्यादि. वि० पु० ।
इदमेव यथोक्तं व्यूह्य,—

निर्व०—(६) "पिङ्गौरादिभ्यश्च" ४।१।४१॥ कौ० पृ० ९८ १०
इति ङीपि सिद्धे गौरादिषु मातामहशब्दपाठसामर्थ्यादनित्यण्पि-
तां ङीष्. ततः, अदन्तलक्षणटाप्. दीर्घः, संहितायाम्,
(७) "अचोरहाभ्यांद्वे" इति वा, ८।४।४६॥ कौ० पृ० १०
(८) "यणोमयः०" इति वा, ८।२।२३॥ कौ० पृ० ९
पाक्षिकं दस्य द्वित्वम्. बहुव्रीहावुपसर्जनत्वे, १५
(९) "गोस्त्रियोः०" १।२।४८॥ कौ० पृ० १२९
इति, आपो ह्रस्वः. पूर्वस्य पुंवत्. ❀
तथा, चत्वारः, भुजाः— बाहवः, अस्येति—(चतुर्भुजः).
(१) "भुज, पालनाभ्यवहारयोः" धा० रुधादिः कौ० पृ० ४७१
(२) "हलश्च" इति, करणे घञ्. ३।३।१२१॥ कौ० पृ० ६६३ २०
(३) "भुजन्युब्जौ पाण्युपतापयोः" ७।३।६१॥ कौ० पृ० ५६३
इति, निपातनात्,
(४) "चजोः०" इति, कुत्वम् गुणश्च न. ७।३।५२॥ कौ० पृ० ५६०
इदमेव यथोक्तं व्यूह्य, त्राजते— उपासितृभ्यः
ताच्छील्येन प्रकाशत इति— २५

निरु०—१४२ महापुरुषरूपत्वादुच्यते हि (चतुर्भुजः)।

१ यथा ।

श्लो० ॥ १६ ॥ (१४३) भ्राजिष्णुः, (१४४) भोजनम्,

ॐ भ्राजिष्णवे नमः। ॐ भोजनाय नमः।

भा०—( भ्राजिष्णुः ).
५ (१) "भुवश्च०" इत्यत्र चकारादिष्णुच्. ३।२।१३८॥ कौ० पृ० ६०१
उपासितृभ्यः प्रकाशनशीलः. ❀
तैः भुज्यते—सुखेन अनुभूयते इति—
( भोजनम् ). ❀

१० निर्व०—( भ्राजिष्णुः ).
(१) "टुभ्राजृ, दीप्तौ" धा०भ्वादिः कौ०पृ०४१८
(२) "एजृ भ्राजृ, दीप्तौ" वा. धा०भ्वादिः कौ०पृ० ३८९
(३) "अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" ३।२।१३६॥ कौ०पृ० ६०१
१५ इतिसूत्राद् इष्णुजिति वर्तमाने, वृत्तिरीत्या भाष्यादर्शनेपि अप्रतिषेधादनुमतत्वद्योतनेन अनुक्तसमुच्चयार्थात्,
(४) "भुवश्च०" इति चकारात्, ३।२।१३८॥ कौ०पृ०६०१
अन्यतोपि ताच्छीलिक इष्णुच्. ❀
तैः भुज्यते—सुखेनानुभूयते इति—
२० ( भोजनम् ).
(१) "भुज, पालनाभ्यवहारयोः" धा० रुधादिः कौ०पृ०४७१
(२) "कृत्यल्युटः०" ३।३।११३॥ कौ०पृ० ६६२
इति, बाहुलकात् कर्मणि ल्युट्. अनः. गुणः.
(३) "लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्ये. ॥

२५ निरु०—१४३उपासितृभ्यो(भ्राजिष्णुः)स्वप्रकाशनशीलतः ॥११२॥
१४४ सुखेन (भोजनं) प्राहुर्यो भक्तैरनुभूयते।

{१४५ / ५०२} भोक्ता,

ॐ भोक्त्रे नमः ।

भा०—स्वयमपि तदर्पितस्य प्रापणादेरमृतस्येव—( भोक्ता ).यथा,

( १ ) " अश्नामि प्रयतात्मनः " गी ० ९—२६ । ५

( २ ) " भोक्तारं यज्ञतपसाम् " इत्यादि. ❀ गी०५—२९ । तेषामाभिमुख्यात् प्रागूर्ध्वं च संचितानाम्, बुद्ध्या अबुध्या च सकलकरणैः सर्वदा सर्वथा च प्रचीयमानानाम्, विधिनिषेधशासनातिलङ्घनात्मनाम्, साधारणानाम्, असाधारणानां च, स्वावज्ञानिन्दादीनां, सर्वंसहेन स्वेनापि दुःसहानाम्, स्वभक्तविषयाणां च, अनवधिकानाम- १० पराधानाम्,—

निर्व०-तदर्पितम्, घृतक्षीरमधुशर्करामिश्रगोधूमतण्डुलपक्वपायसापरपर्यायम्, प्रापणमपि, अमृतमिव भुङ्क्ते इति—

( भोक्ता ). पूर्ववत् धातुः.

( १ ) " ण्वुल्तृचौ " ३।१।१३३॥ कौ०पृ०५६६ १५

इति तृच्. गुणः. निहतत्वात् नेट्.

( २ ) "चोः कुः" इति, झलि कुत्वेन गः. तस्य, ८।२।३०॥ कौ०पृ०६८.

(३)"खरिच"इतिचर्त्वेन कः.अनङादि.❀८।४।५५॥कौ०पृ०२०

तेषामाभिमुख्यात्, प्रागूर्ध्वंच बुद्ध्या अबुद्ध्या च सकलकरणैःसर्वदा सर्वथा च संचितान् प्रचीयमानान् विधिनिषेधशासनोल्लङ्घनात्मनः स्वविषयान् साधारणान् असाधारणांश्च अवज्ञानिन्दनादीन् सर्वंसहेन स्वेनापि- २०

निरु०—१४५ (भोक्ता)ऽर्पितस्य भोक्तृत्वाद्; ( भोक्ता )—स्यादमृतस्य वा ॥ ११३ ॥

{१४६ / ८७०} सहिष्णुः,

ॐ सहिष्णवे नमः ।

भा०—( सहिष्णुः ).

५ (१)"अलंकृञ्०" इत्यादिना इष्णुच्. ३।२।१३६॥ कौ० पृ० ६०१ कुतः इयती महती क्षमा अस्येत्याकाङ्क्षायाम्, शशिसलिलशीतलिमादिवत्, स्वरूपप्रयुक्तत्वादित्येवंपरः ताच्छील्यादिविषय इष्णुच् प्रत्ययः. एवम्, व्यूहः. ❀

अथ, विभवेषु त्रिमूर्तिमध्यावतारः—

१० निर्व०—दुःसहान् स्वभक्तविषयान् अनवधिकानपि अपराधान् तच्छीलः सहत इति—( सहिष्णुः ).

( १ ) " षह, मर्षणे " परस्मैः. धा० चुरादिः कौ० पृ० ४८६

( २ ) " अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् " ३।२।१३६ ॥ कौ० पृ० ६०१

१५ इति ताच्छीलिक इष्णुच्. ❀

एवं, व्यूह उक्तः. अथ, विभवः प्रस्तूयते. तत्र तावत्, त्रिमूर्तिमध्यावतारः. जगतोऽस्य, आदिषु—आदिभूतासु ब्रह्मविष्णुशिवात्मिकासु त्रिमूर्तिषु अन्यतमत्वेन जायते इति—

निरु०—१४६ प्रागूर्ध्वं संचितानां च बुद्ध्या च करणैस्सदा ।
२० कृतानां सर्वथा तेषां निषेधविधिसाधनम् ॥ ११४ ॥
अतीत्य क्रियमाणानाम् असत्त्वेवानुबन्धिनाम् ।
सर्वंसहेन स्वेनापि दुस्सहानां विशेषतः ॥ ११५ ॥
स्वभक्तविषयाणां च निर्मर्यादकृतैनसाम् ।
सहनैकरसशीलत्वात् ( सहिष्णु ) रिति विश्रुतः ॥ ११६ ॥
वर्णितोऽभूद्व्यूहभेदो विभवस्तु प्रतन्यते ।

( १४७ ) जगदादिजः।

ॐ जगदादिजाय नमः।

भा०— ( जगदादिजः );—जगदादिभूतासु त्रिमूर्तिष्वन्यतमत्वेन जात इति. ❋ सप्तम्यां जनेर्डः. एवम्, मेधँजें, गदाग्रेंजादयो- ५ पि. यथा ब्रह्मा,

( १ ) " यस्य प्रसादादहमच्युतस्य भूतप्रजासर्गकरोन्तकारी । क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तात्" ॥ इति. तथा उद्योगे देवाः, वि० पु० ४–१–३९।

( २ ) " गतिश्च नस्त्वं देवेषु पूर्वजो जगतः प्रभुः । रक्षार्थं सर्व- १० भूतानां विष्णुत्वमुपजग्मिवान्" इति. ❋ भा०उ०१२–११ ।

निर्व०—( जगदादिजः ).

( १ ) "जनी, प्रादुर्भावे"ईदित्. धा० दिवादिः कौ०पृ०४५४

( २ ) " सप्तम्यांजनेर्डः " ३।२।९७॥ कौ० पृ०५८५

इति, डः. डित्वात् टिलोपः. १५

( ३ )"डुदाञ्, दाने" आङ्पूर्वः.धा०जुहोत्यादिः कौ०पृ०४५१

( ४ ) " उपसर्गेघोःकिः " इति, किः. आल्लोपः. ३।३।९२॥ कौ० पृ० ६५८

( ५ ) " गम्लृ, गतौ " धा०भ्वादिः कौ०पृ०४३०

( ६ )"वर्तमानेपृषत्०"इत्यादिना,उणा०पा०२कौ०पृ०६२२ २० अतिप्रत्ययः, धातोः जगादेशश्च निपात्यते. यद्वा,

( ७ ) "द्युतिगमिजुहोतीनांद्वेच" ३।२।१७८॥कौ०पृ०६०७ इति, क्विप्, द्वित्वं च.

निरु०—१४७ जगतामादिभूतासु मूर्तिष्वन्यतमत्वतः ॥११७॥ जातत्वाद्विष्णुरूपेण प्रोच्यते ( जगदादिजः)। २५

{१४८ / ८३५} अनघो,

ॐ अनघाय नमः ।

भा०— एवं संसारमध्ये जनित्वापि,—
५ ( अनघः ). पापप्रतिस्पर्धी. ❀

निर्व०—( ८ ) " अन्येभ्योपि दृश्यते" इति, ३।२।१७८।। कौ० पृ० ६०७
दृशिग्रहणात् अभ्याससंज्ञा.
( ९ ) " हलादिशेषः" ७।४।६०।।कौ०पृ०३६९
१० ( १० ) " कुहोश्चुः" ७ । ४ । ६२ ॥ कौ०पृ० ३७८
इति, चुत्वम्. अभ्यासे गस्य जः.
(११) "गमःक्वौ"इतिअनुनासिकलोपः. ६।४।४०।।कौ०पृ०५८२
( १२ ) "ह्रस्वस्य०" इति, तुक्. ६।१।७१।।कौ०पृ०५५९
सांहितिकं जश्त्वम्. ❀
१५ एवं संसारमध्ये जनित्वापि अघविरोधी पापप्रतिस्पर्धीति—
( अनघः ).
( १ )"अघि,गत्याक्षेपे" पचाद्यच्. धा०भ्वादिः कौ०पृ०३८८
इदित्वान्नुमः पृषोदरादित्वात् लोपः. अथवा,
( २ ) " हन, हिंसागत्योः" धा०अदादिः कौ०पृ० ४३५
२० नञ्पूर्वः. न हन्ति पुण्यकर्माणमिति विग्रहे,
(३)"अन्येष्वपि०"इति,डः. टिलोपः. ३।२।१०१।।कौ०पृ०५८५
( ४ ) " न्यङ्क्वादीनांच " ७।३।५३॥ कौ०पृ०५६०
इति, कुत्वम्; आन्तरतम्यात् घः. नञो नलोपः. ततः,
विरोधार्थे नञ्तत्पुरुषः. नलोपः, नुट्. ❀

२५ निरु०— १४८ पापप्रतिस्प ( र्ध्यनघः )—

## (१४९) विजयो, (१५०) जेता, {१५१ / ११८} विश्वयोनिः.

ॐ विजयाय नमः । ॐ जेत्रे नमः। ॐ विश्वयोनये नमः ।

भा०—मूर्त्यन्तरयोरपि सृष्टिसंहारादिभिः जगद्विजयोऽस्मादिति— ५
(विजयः). यथा,
(१) "तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ" इति. ❀ भा०
मो० १६९—१९ ।
तयोरपि— (जेता),—स्वाभिप्रायेष्ववस्थापयिता. ❀
तन्मुखेन विश्वस्य—कार्यप्रपञ्चस्यापि, कारणम्— १०
(विश्वयोनिः). ❀

निर्व०—मूर्त्यन्तरमपि सृष्टिसंहारादिभिः जगद्विजयते अस्मादिति—
(विजयः).
(१) "जि, जये" विपूर्वः. धा० भ्वादिः कौ०पृ० ४०५
(२) "अकर्तरिच०" इत्यनुवृत्तौ, ३।३।१९॥ कौ०पृ०६४७ १५
(३) "एरच्" इति, ३।३।५६॥ कौ०पृ० ६५६
अपादाने अच्. गुणायादेशौ. ❀
तावपि द्वौ जयति—स्वाभिप्रायेष्ववस्थापयतीति—
(जेता). धातुः पूर्ववत्. ततस्तृच्. अनिट्. गुणः.अनङादि. ❀
तन्मुखेन, विश्वस्य सर्वस्यापि कार्यप्रपञ्चस्य,योनिः-कारणमिति— २०
(विश्वयोनिः).

निरु०— १४९ (विजयो) जगतां जयी ॥ ११८ ॥
१५० स्वाभिप्राये स्थापयिता (जेता) स्याद्विधिशङ्करौ ।
१५१ विश्वं तत्कार्यवर्गः स्याद्योनिस्तस्य तु कारणम् ॥ ११९ ॥
तस्य ब्रह्मादिमुखतो (विश्वयोनि) रितीरितः। २५

( १५२ ) पुनर्वसुः, ॥

ॐ पुनर्वसवे नमः ।

भा०—पुनः, तत्प्रभृतिषु देवेष्वन्तरात्मतया वसति चेति–
५ ( पुनर्वसुः ). यथा,
( १ ) " देवानांबन्धुर्निहितं गुहासु " ब्रह्मा,
( २ ) " तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः " इति. ❀ भा० मो० १७९–४।

निर्व०—( १ ) " यु, मिश्रणे " धा० अदादिः कौ० पृ०४३९
१० (२)"वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिः" उणा०पा०४कौ०पृ०६३४ इति, निः.
( ३ ) " नेट्० " इति, नेट्. गुणः.७।२।८॥कौ०पृ०५८१
विशेः कनि व्युत्पादितो विश्वशब्दः. पौनरुक्त्यं नाम्नामुक्तव्याख्यानेन, प्रकरणान्तरगतानामपि सर्वत्र यथायथं परिहरणीयम्. तथाच
१५ तत्रतत्र वक्ष्यते. अतो न विश्वयोनेः पुनरुक्तिर्दोषः. नच, एकेनैव नाम्ना विवक्षितसर्वनिर्वाहः; यतः, एकस्य शब्दस्य एकार्थतान्याय्या, लाघवात्; तथा प्रकरणाच्च; नतु नानार्थता, अगतिकगतिलक्षणागौरवात्; प्रकरणानौचित्याच्च; इत्याद्यलम्. तत उक्ता वाचोयुक्तिर्युक्तिमती. ❀ पुनस्तत्प्रभृतिषु वसति–अन्तरात्मतया वसतीति–
२० ( पुनर्वसुः ).
( १ ) " वस, निवासे " पुनःपूर्वः. धा०भ्वादिः कौ० पृ० ४३२

निरु०—१५२ब्रह्मादिष्वपि देवेषु ह्यन्तरात्मतया च यः ॥१२०
पुनर्निवसनान्नित्यं ( पुनर्वसु ) रुदाहृतः ।

श्लो० ॥ १७ ॥ ( १५३ ) उपेन्द्रो, .

ॐ उपेन्द्राय नमः ।

भा०—अथ आदित्येषु जघन्यजः—
( उपेन्द्रः ),- अनुजत्वेनेन्द्रमुपगतः. यथा, ५
( १ )" जघन्यजस्तु सर्वेषामादित्यानां गुणाधिकः। द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप ॥ तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः " ।
( २ )" विष्णुरिन्द्रानुजोभवत् " इत्यादि. ❀
स एवेन्द्रसत्राणाय बलिमखे— १०

निर्व०—( २ )"शृस्पृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" उणा०पा०१कौ०पृ०६०९इति,उः.पुनरिति रान्तमव्ययम्.अतः,
( ३ ) " हशिच " इति, ६।१।११४॥ कौ० पृ० २७
रोः उकारानुबन्धस्य विधीयमानमुत्वत्र. ❀ अथ,आदित्येषु जघन्यजः. इन्द्रानुजतया उपगत इन्द्रमिति— १५
(उपेन्द्रः ).
( १ ) " इदि, परमैश्वर्ये " धा०भ्वादिः कौ०पृ० ३८७
इदित्वात् नुम्. अनुस्वारपरसवर्णौ. अयम्,
( २ ) " ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः " उणा० पा०२ कौ० पृ० ६२० २०
इति रन्प्रत्ययान्तो निपातितः.
( ३ ) " नेट्० " इति नेट् ७ । २ । ८ ॥कौ०पृ०५८१
उपेत्यव्ययम्. गुणः.❀
श्रुत्यनुसारात् सएव इन्द्रसंत्राणाय बलिमखे ❀ दृप्तान् स्वकान्त्या वामानि सुखानि नयतीति— २५

निरु०—१५३इन्द्रस्याप्यनुजत्वेन जातश्(चोपेन्द्र)उच्यते॥१२१॥

## ( १५४ ) वामनः, ( १५५ ) प्रांशुर्,

## ॐ वामनाय नमः । ॐ प्रांशवे नमः ।

भा०—( वामनः ).

५ ( १ ) " दृष्टान् स्वकान्त्या वामानि सुखानि नयति" इति श्रुतिः.

( २ ) " स वामनो दिव्यशरीरधृक् " इति. ❀

तत्रैव—( प्रांशुः ). अश्नोतेः,

( १ ) " खरुशरु० " इत्यादिना उप्रत्ययः नुमागमश्च, उणा० पा० १ कौ० पृ० ६११

१० ( २ ) " सर्वव्यापिने " इति मन्त्रवर्णात् यथा, ॥ मन्त्रे ॥

( ३ ) " तोये तु पतिते हस्ते वामनो भूतवामनः । तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे॥नभःप्रक्रममाणस्य नाभ्यां तौ समवस्थितौ"।

निर्व०—( वामनः ).

( १ ) " णीञ्, प्रापणे " णोनः धा० भ्वादिः कौ० पृ० ४२३

१५ ( २ ) "अन्येष्वपि दृश्यते" इति डः टिलोपः. ३।२।१०१॥ कौ० पृ० ५८५

( ३ ) " टुवम, उद्गिरणे " वम्. धा० भ्वादिः कौ० पृ० ४१९

( ४ ) "नोदात्तोपदेशस्यमान्तस्यानाचमेः" ७।३।३४॥ कौ० पृ० ५४१ इत्यत्र,

( ५ ) " अनाचमिकमिवमीनाम् ०" ७।३।३४॥ कौ० पृ० ५४१

२० इत्युपसंख्यानात्, नोपधावृद्धिप्रतिषेधः ❀

तत्रैव क्षणात् प्राश्नुते सर्वं व्याप्नोतीति—( प्रांशुः ).

( १ ) " अशू, व्याप्तौ" प्रपूर्वः. धा० स्वादिः कौ० पृ० ४६३

( २ ) "खरुशरुशंकवंशुपीयुनीलंगुलिगु० " उणा० पा० १ कौ० पृ० ६११

निरु०—१५४ दृष्ट्या स्वकान्त्या वामानि सुखानि नयतीति यः।

२५ स ( वामनो )—

१५५ व्याप्तिमत्त्वात् ( प्रांशु ) श्च परिकीर्तितः ॥ १२२ ॥

{१५६ / १११} अमोघश्,

ॐ अमोघाय नमः।

भा०- (४) " वामनो रक्षतु सदा भवन्तं यः क्षणादभूत् " ॥
(५) " त्रिविक्रमक्रमाक्रान्तत्रैलोक्यस्फुरदायुधः " ॥ ५
इत्यादि. ईदृक् अपदानडिण्डिमाभिप्रायेण वेदः,
(६) " इदं विष्णुर्विचक्रमे" पु०सू०।
(७) " त्रीणि पदा विचक्रमे" पु०सू०।
(८) " विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुः" पु०सू०।
(९) " त्रिर्देवः पृथिवीमिति. प्रविष्णुः"इत्यादि. ❀ पु०सू०। १०
नास्य व्यर्थोस्तीति-
(अमोघः).

निर्व०-इति,उः,नुमागमश्च निपात्यते. यदि चेदं कुप्रकरणे पठ्यते, तदा, अनेन प्रकृते कुः, नुमागमश्च तथा निपात्यते. तत्रच, निपातनसामर्थ्यात् अनिदितोप्यस्य न नलोपः.नस्यानुस्वारः. यदात्वत्र, १५ सहैव शरुशब्देन अंशुशब्दस्यैव न पाठः, तर्हि बाहुलकात् प्रकृते प्रत्ययः, पृषोदरादिलक्षणो वर्णागमेनानुस्वारश्चेत्यवधेयम्. यद्वा.
(३) " शृस्वृस्नि० " उणा०पा०१ कौ०पृ० ६०९
राद्रुः बाहुलकात् वर्णागमः तत एवोभयमित्याद्यूह्यम्.दीर्घः. ❀
अपरिमितप्रभावतया नास्ति मोघः व्यर्थोऽस्येति- २०
(अमोघः). मुहेरङ्घञोः कुत्वेच मोघो व्युत्पादितः.

निरु०- १५६ बलेश्च वासवस्यापि कृतार्थीकरणात्ममम्।
मानातीतप्रभावत्वा (दमोघः) परिकीर्तितः ॥ १२३ ॥
न मोघं चेष्टितं यस्य सो (ऽमोघः) परिकीर्तितः।

१ रक्षणा। [२ अत्र कोशान्तरं द्रष्टव्यम्।]

{१५७}
{२५२} शुचिः

ॐ शुचये नमः ।

भा०—( १ ) "अपरिमितप्रभावाय" इति तन्मन्त्रवर्णः. ॥ मन्त्रे ॥
५ बलिवासवयोरविशेषेण कृतार्थीकरणात्. यथा,
( २ ) "अनुग्रहं चापि बलेरनुत्तमं चकार यश्चेन्द्रपदोपमं क्षणात् ।
सुराश्च यज्ञांशभुजः" वि० ध० ४३—३५ ।
( ३ ) "यत्राम्बु विन्यस्य बलिर्मनोज्ञानवाप भोग्यान्वसुधातलस्थः।
तथामरत्वं त्रिदशाधिपत्यं मन्वन्तरं पूर्णमपेतशत्रुः" ॥
१० इत्यादि. ❀ वि०ध० ।
ईदृगुपकारेषु प्रत्युपकारनिरपेक्षत्वात्—
( शुचिः ). इगुपधात् कित्. एवम्, ऋपिरुचिप्रभृतयः. यथा,
( १ ) "अस्पर्शश्च महान् शुचिः" इति. ❀

निर्व०—नञ्समासेन नलोपः.उक्तयुक्त्या न पौनरुक्त्यम्. ❀
१५ ईदृगुपकारेषु प्रत्युपकारनैरपेक्ष्यात् शुचिः परिशुद्ध इति—
( शुचिः ).
( १ ) "शुच, शोके" धा०भ्वादिः को०पृ० ३९०
( २ ) "ईशुचिर्, पूतीभावे" वा. धा० दिवादिः को०पृ०४५५
इह शौचकर्माचायम्. [६३७
२० ( ३ ) "सर्वधातुभ्यःइन्" इति,इन्.तस्य,उणा०पा० ४ को०पृ०
( ४ ) "इगुपधात्कित्" इति,कित्वात् न गुणः. ❀ उणा०पा०
४ को०पृ० ६३७

निरु०—१५७ स्वयंकृतोपकारेषु यत्किंचित् प्रत्युपक्रियाम् ।१२४।
अनपेक्षस्थितो योसौ ( शुचिः ) स्यात् धर्मदो मनुः ।

१ पदाभिकारणात् ।

(१५८) ऊर्जितः, । (१५९) अतीन्द्रस्,

ॐ ऊर्जिताय नमः । ॐ अतीन्द्राय नमः ।

भा०—नमुचिप्रभृतिपरिपन्थिवधबन्धनादौ बलम् ऊर्जा अस्य संजा- ५
तेति-( ऊर्जितः ). इतच्. ❀
इन्द्रानुजत्वेपि ऐश्वर्येणापदानेन तमतिक्रान्तः—(अतीन्द्रः ). यथा.

निर्व०—परिपन्थिवधबन्धनादौ,ऊर्जा-बलम्;अस्य संजातेति वा,—
तत्र बलिष्ठ इति वा;—( ऊर्जितः ).
( १ ) "ऊर्ज,बलप्राणनयोः" चुरादिः-पूर्वत्र,धा० चुरादिः कौ०
पृ० ४८० १०
( २ ) " बहुलमेतन्निदर्शनम् " इत्यस्य ३।१।२६॥ कौ० पृ० ४९२
व्याख्याविकल्पात्, अनित्यण्यन्ताश्चुरादय इति तदभावे,
( ३ ) " गुरोश्चहलः " ३।३।१०३॥ कौ० पृ० ६६०
इति स्त्रियां भावे अकारप्रत्ययः. ततः, अतष्टाप्.
दीर्घः. इत्थं निष्पन्नात् ऊर्जाशब्दात् सजातोपाधिकात्, १५
(४) "तदस्यसंजातंतारकादिभ्य इतच्" ५।२।३६॥ कौ० पृ० ३१८
इति,इतच्.
( ५ ) " यस्य० " इति, लोपः. ६।४।१४८॥ कौ० पृ० ५६ .
उत्तरत्र, ण्यन्तात् उक्तरीत्या केवलाद्वा अकर्मकात्,
( ६ ) " गत्यर्थ० " इत्यादिना, ३।४।७२॥ कौ० पृ० ५९६ २०
कर्तरि क्तः-इट्. णिचि,
( ७ ) " निष्ठायां सेटि " इति,तल्लोपो विशेषः. ❀ ६।४।५२॥
कौ० पृ० ५९२
इन्द्रानुजत्वेप्यविदितविभवतया अतिक्रान्त इन्द्रमिति—( अतीन्द्रः ).

निरु०—१५८ ऊर्जा बलं यस्य नित्यं संजाते(त्यूर्जितः)स्मृतः॥१२५॥ २५
१५९ इन्द्रानुजत्वेप्यैश्वर्यादतीतो ( ऽतीन्द्र ) उच्यते ।

{१६४ / ८७०} यमः, ॥ श्लो० ॥ १८ ॥ (१६५) वेद्यो,

ॐ यमाय नमः । ॐ वेद्याय नमः ।

भा०— ( यमः ). अच्. यथा,

५ (१) "यः पृथिवीमन्तरो यमयति" बृ०उ०५—७—३।

(२) "य आत्मानमन्तरो यमयति" इति, ॥ माध्यन्दिनशाखायाम्॥ प्रतितत्त्वमन्तर्यामि ब्राह्मणे. यथा,

(३) "यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदवि वादस्ते मा गङ्गां मा कुरून् गमः" इति. ❋ मनुस्मृ०८—९२।

१० एवमाविर्भूय प्रकटितातीन्द्रियमहिमत्वात् सर्वैर्वेदितुं शक्यः—

( वेद्यः ). ❋

वेदितृगवभजिनीम् विद्यामधीते वेद वेति—

निर्व०— एवम्, अखिलमकण्टकानुकूलम् यच्छतीति—

१५ ( यमः ). पूर्ववत् धातुः. पचाद्यच्. ❋

एवमाविर्भूय प्रकटितातीन्द्रियमहिमतया सर्वैरपि वेदितुं शक्य इति—

( वेद्यः ).

(१) "विद, ज्ञाने" धा०अदादिः कौ०पृ०४४३

२० (२) "ऋहलोर्ण्यत्" इति, ३।१।१२४॥कौ०पृ०५६२ कर्मणि हलन्तात् ण्यत्.

(३) "शकिलिङ् च" ३।३।१७२॥कौ०पृ०५५२ इति धात् शक्यार्थेयं कृत्यः. गुणः. ❋

वेदितृगवभजिनीं विद्यामधीते वेद वेति—

२५ निर्व०—१६४ अकण्टकं चानुकूलं यच्छतीत्यसितः(यमः)॥१२८॥

१६५ सर्वैश्च वेदितुं शक्यः साक्षात् ( वेद्य ) ईरितः ।

## ( १६६ ) वैद्यम्, ( १६७ ) सदायोगी,

## ॐ वैद्याय नमः । ॐ सदायोगिने नमः ।

भा०-( वैद्यः ).
( १ ) "तदधीते तद्वेद" इत्यण्.यथा,४।२।५९॥कौ०पृ०२३६ ५
( २ )"मेरुमन्दरमात्रोपि" ❋ वि०ध०
एवमत्र सततजागरूकः- ( सदायोगी ). यथा,
( १ ) " य एषु सुप्तेषु जागर्ति " इति. ❋

निर्व०-( वैद्यः ).
( १ ) " विद, ज्ञाने " धा०अदादिः कौ०पृ०४४३ १०
( २ ) " संज्ञायांसमजनिषदनिपतमनविद्षुञ्शीङ्भृञिणः"
३।३।९९॥कौ०पृ०६५९
इति, स्त्रियां क्यपि, गुणाभावे, अतष्टापि, दीर्घेच, निष्पन्नात्
विद्याशब्दात्,
( ३ ) " तदधीतेतद्वेद " इति, ४।२।५९॥कौ०पृ०२३६ १५
अधीते वेद वा इत्यर्थयोरण्. आदिवृद्धिः.
( ४ ) "यस्य०" इति, लोपः.❋६।४।१४८॥कौ०पृ०५६
इत्थमत्र सततजागरूकत्वात्,सदा योगः अस्यास्तीति-(सदायोगी).
( १ )"युजिर्, योगे"भावे घञ्.गुणः. धा०रुधादिःकौ०पृ०४७१
( २ )"चजोः०"इति, कुत्वम्, गः.७।३।५२॥कौ०पृ०५६० २०
सर्वैः वन्नन्तस्सर्वशब्दः. ततः,

निरु०-१६६ वेदितॄणां भवाख्यस्य गदस्य विनिवर्तनीम् ॥१२९॥
विद्यामधीते वेदेति यो ( वैद्यः ) समुदाहृतः ।
१६७ चिकित्सायां जागरूकः (सदायोगी) ति कथ्यते॥१३०॥

(१६०) संग्रहम्, (१६१) सर्गों,

ॐ संग्रहाय नमः। ॐ सर्गाय नमः।

भा०-(१) "अविदितविभवाय" इति तन्मन्त्रवर्णः. ॥ मन्त्रे ॥
५ (२) "अतिवाग्विन्द्रकर्मणाम्[1]" इति. ❀
अथ भक्तैरयत्नेन संगृह्यते इति-
(संग्रहः).
(१) "ग्रहवृदनिश्चिगमश्च"इति,अप्. ❀ ३।३।५८॥कौ०पृ०६५३
त्रिविक्रमक्रमणसुग्रहपादपद्मोह्यसौ तेभ्यस्सृज्यते इति-
१०(सर्गः).

निर्व०-(१)"इदि,परमैश्वर्ये" अतिपूर्वः.धा०भ्वादिः कौ०पृ०३८७
नुमित्यादि.
(२) "ऋज्रेन्द्र०" उणा०पा०२ कौ०पृ० ६२०
इत्यादिना रन्प्रत्ययान्तो निपातः.
१५(३) "नेड्०" इति,नेट्. ७।२।८॥ कौ०पृ० ५८१
अतिपूर्वस्समासः दीर्घः. ❀
अथ,त्रिविक्रमणसुग्रहपादपद्मतया भक्तैरयत्नेन सम्यक् गृह्यत इति-
(संग्रहः).
(१) "ग्रह,उपादाने "संपूर्वः. धा०क्र्यादिः कौ०पृ० ४७८
२०(२) "अकर्तरि०" इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७
(३)"ग्रहवृदनिश्चिगमश्च"इति कर्मण्यप्.३।३।५८॥कौ०पृ०६५३
समो मोऽनुस्वारः. पाक्षिकः परसवर्णः. ❀
सुहृत्सु निसृष्टात्मतया तेभ्यस्सृज्यत इति (सर्गः).

निरु०-१६० भक्तैरप्ययत्नेन संग्राह्यस् (संग्रह) स्स्मृतः॥१२६॥
२५ १६१ ब्रह्मादिभ्यस्सृज्यते यः (सर्ग) तं परिचक्षते।

१ कर्माणम्।

१६२ ) धृतात्मा, { १६३ / ८६९ } नियमो,

ॐ धृतात्मने नमः । ॐ नियमाय नमः ।

भा०—(१)"निसृष्टात्मा सुहृत्सु च"इति. ❀रा०यु०१७—३६।
एवमात्मदानेन धृता आत्मानोऽनेनेति— ५
(धृतात्मा).तत्प्रतिबलावलिप्रभृतयोपि नियम्यन्तेऽनेनेति—(नियमः).
( १ ) " यमः समुपनिविषु च " इति अप्. ❀ ३।३।६३॥
कौ०पृ०६५४
एवम्, अखिलमकण्टकानुकूलं यच्छतीति—

निर्व०—(१)"सृज, विसर्गे " धा०तुदादिः कौ०पृ०४६९ १०
( २ ) "अकर्तरिच कारके संज्ञायाम् " ३।३।१९॥कौ०पृ०६४७
इति, कर्मणि घञ्. गुणः, रपरः.
( ३ ) " चजोः० " इति, कुत्वम्. जस्य गः.७।३।५२॥कौ०
पृ०५६०
इत्थम्, आत्मदानेन धृताः आत्मानः अनेनेति— १५
( धृतात्मा ). अततेः मनिणि, आत्मशब्दो व्युत्पादितः.
( १ )"धृञ्, धारणे" कर्मणि क्तः.धा० भ्वादिःकौ०पृ०४२३
अनिट्. दीर्घः. ततः नान्तलक्षणो दीर्घ इत्यादि. ❀
तत्प्रतिबलावलिप्रभृतयो नियम्यन्ते अनेनेति—( नियमः ).
( १ ) " यम, उपरमे " निपूर्वः. धा०भ्वादिः कौ०पृ०४३० २०
( २ ) " अकर्तरिचकारके० " इत्यनुवृत्तौ, ३।३।१९॥कौ०
पृ०६४७
(३)"यमस्समुपनिविषुच " इति,नौ ३।३।६३॥कौ०पृ०६५४
उपपदे, करणे अप्.

निरु०—१६२येनात्मानो धृता नित्यं स(धृतात्मे)ति कीर्त्यते।।१२७।। २५
१६३ नियम्यते जगद्येन ( नियमः ) स उदीरितः ।

{१६४ / ८७०} यमः, ॥ श्लो० ॥ १८ ॥ (१६५) वेद्यो,

ॐ यमाय नमः । ॐ वेद्याय नमः ।

भा०— (यमः). अच्. यथा,

५ (१) "यः पृथिवीमन्तरो यमयति" बृ०उ०५—७—३।

(२) "य आत्मानमन्तरो यमयति" इति, ॥ माध्यन्दिनशाखायाम् ॥

प्रतितत्त्वमन्तर्यामि ब्राह्मणे. यथा,

(३) "यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदवि-

वादस्ते ऽ गङ्गां मा कुरून् गमः" इति. ❀ मनुस्मृ०८—९२।

१० एवमाविर्भूय प्रकटितातीन्द्रियमहिमत्वात्

सर्वैर्वेदितुं शक्यः—

(वेद्यः). ❀

वेदितृभवभञ्जिनीम् विद्यामधीते वेद वेति—

निर्व०— एवम्, अखिलमकण्टकानुकूलम् यच्छतीति—

१५ (यमः). पूर्ववत् धातुः. पचाद्यच्. ❀

एवमाविर्भूय प्रकटितातीन्द्रियमहिमतया सर्वैरपि

वेदितुं शक्य इति—

(वेद्यः).

(१) "विद, ज्ञाने" धा०अदादिः कौ०पृ०४४३

२० (२) "ऋहलोर्ण्यत्" इति, ३।१।१२४॥कौ०पृ०५६२

कर्मणि हलन्तात् ण्यत्.

(३) "शकिलिङ्च" ३।३।१७२॥कौ०पृ०५५२

इति चात् शक्यार्थेयं कृत्यः. गुणः. ❀

वेदितृभवभञ्जिनीं विद्यामधीते वेद वेति—

२५ निर्व०—१६४ अकण्टकं चानुकूलं यच्छतीत्यखिलं(यमः)॥१२८॥

१६५ सर्वैश्च वेदितुं शक्यः सौलभ्यात् (वेद्य) ईरितः ।

(१६६) वैद्यम्, (१६७) सदायोगी,

ॐ वैद्याय नमः। ॐ सदायोगिने नमः।

भा०—( वैद्यः ).
(१) "तदधीते तद्वेद" इत्यण्.यथा, ४।२।५९।।कौ०पृ०२३६ ५
(२) "मेरुमन्दरमात्रोपि" ❋ वि०ध०
एवमत्र सततजागरूकः— ( सदायोगी ). यथा,
(१) " य एषु सुप्तेषु जागर्ति " इति. ❋

निर्व०—( वैद्यः ).
(१) " विद, ज्ञाने " धा०अदादिः कौ०पृ०४४३ १०
(२) " संज्ञायांसमजनिषदनिपतमनविद्षुञ्शीङ्भृञिणः "
३।३।९९।।कौ०पृ०६५९
इति, स्त्रियां क्यपि, गुणाभावे, अतष्टापि, दीर्घेच, निष्पन्नात्
विद्याशब्दात्,
(३) " तदधीतेतद्वेद " इति, ४।२।५९।।कौ०पृ०२३६ १५
अधीते वेद वा इत्यर्थयोरण्. आदिवृद्धिः.
(४) "यस्य०" इति, लोपः. ❋ ६।४।१४८।।कौ०पृ०५६
इत्थमत्र सततजागरूकत्वात्,सदा योगः अस्यास्तीति—(सदायोगी).
(१) "युजिर्, योगे" भावे घञ्.गुणः. धा०रुधादिः कौ०पृ०४७१
(२) "चजोः०" इति, कुत्वम्, गः. ७।३।५२।।कौ०पृ०५६० २०
सर्तः वन्नन्तस्सर्वशब्दः. ततः,

निरु०—१६६ वेदितॄणां भवाख्यस्य गदस्य विनिवर्तनीम् ।।१२९।।
विद्यामधीते वेदेति यो ( वैद्यः ) समुदाहृतः ।
१६७ चिकित्सायां जागरूकः (सदायोगी) ति कथ्यते।।१३०।।

{७४७<br>{९२७}(१६८)वीरहा,

ॐ वीरघ्ने नमः ।

भा०—स्ववेदनविहन्तॄन् हेतुकवीरान् हतवानिति—(वीरहा). क्विप्.
५ (१) " ब्रह्मभ्रूणवृत्रेषु० "इति नियमः३।२।८७॥कौ०पृ०५८४
प्रायिकः. एवम्, कामहा, क्रोधहा, भंगहा, इत्येवमादयोपि.यथा,

निर्व०—(३) " सर्वैकान्यकियत्तदःकाले दा " इति, दाप्रत्ययः.
५।३।१५।कौ०पृ०३३६
(४) " सर्वस्यसोन्यतरस्यांदि " इति,५।३।६॥ कौ ० पृ०३३४
१० पाक्षिकस्सादेशः.
(५) " तद्धितश्चासर्वविभक्तिः " इति, १।१।३८॥कौ०पृ०८७
अव्ययसंज्ञा. इत्थं परिनिष्ठितसदाशब्दपूर्वात् योगशब्दात्
मत्वर्थीय इनिः.
(६) " यस्य० " इति, लोपः. ६।४।१४८॥कौ०पृ०५६
१५ (७) " सौच " इति, ६।४।१३॥ कौ०पृ०६४
इन्नन्तलक्षणो दीर्घ इत्यादि.
अदन्तपाठे अन्तरेण मत्वर्थीयम् बहुव्रीहिः. नच दीर्घः.❀
स्ववेदनविहन्तॄन्, वीरान्— हेतुकवीरान् हतवानिति—( वीरहा ).
(१) " हन, हिंसागत्योः " धा०अदादिः कौ०पृ०४३५
२० (२) " ब्रह्मभ्रूणवृत्रेषुक्विप् " इति, ३।२।८७॥कौ०पृ०५८४
उपपदनियमस्य प्रायोभिप्रायत्वात् अन्यस्मिन्नप्युपपदे क्विप्. यद्वा,

निरु०—१६८ स्वध्यानभञ्जकान् वीरान् हन्ति यस्स तु ( वीरहा) ।

भा०–(२) " असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् " इति
प्रसज्य, गी० १६–८।
(३) " तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपा-
म्यजस्रमशुभानासूरीष्वेव योनिषु "॥इत्यादि. ❋गी०१६–१९। ५
अथ स्वविषयपरविद्याप्रवर्तनात्–

---

निर्व०–(३) " क्विप्च " इति, ३।२।७६॥कौ०पृ०५८१
हनः क्विप्, सार्वकालिकः. वस्तुतस्तु,
(४) "ब्रह्मभ्रूणवृत्रेषु क्विप् " इति सूत्रे,३।२।८७॥कौ०पृ०५८४
प्रकृत्युपपदप्रत्ययकालनियमाश्चत्वारो हि फलिताः; तत्रच प्रकृति- १०
नियमाद्भूते चोक्तोपपदव्यावृत्तेरुपपदान्तरेऽप्ययं भवति. तत्प्रकारस्तु
स्पष्टमाकरे द्रष्टव्यः. तथाच अत्र वर्तमानाख्यातेन विग्रहो विशेषः.
एवमुत्तरत्रापीदृशे ( कामहा, क्रोधहा, भगहा, ) प्रदेशेऽवधेयम्.
(५) " अज, गतिक्षेपणयोः " धा०भ्वादिः कौ०पृ०३९१
(६) " स्फायितञ्चिवञ्चि० " इत्यादिना, रक्. उणा०पा०२ १५
कौ०पृ०६१९
(७) अजेर्वी०" इति, २।४।५६॥ कौ०पृ० ३९१ ❋
वीभावः. किस्वाद्गुणः. अनिट्. यद्वा,
(८) " वीर, विक्रान्तौ " धा०चुरादिः कौ०पृ०४९०
चुरादौ कथादिः अदन्तः. णिच्. २०
(९) " अतोलोपः " इति, ६।४।४८॥कौ०पृ०३९७
अल्लोपः. पचाद्यच्. णिलोपः.
(१०) " सौच " इति, ६।४।१३॥कौ०पृ०६४
हन्नन्तलक्षणो दीर्घ इत्यादि. ❋
अथ, स्वविषयपरविद्याप्रवर्तनेन आर्षवचनात् २५
मायाः परविद्यायाः, धवः– स्वामीति वा,–
निरुक्तानुसारेण मौनध्यानयोगवत्तया वा,–

{ ७३ / ७४१ } (१६९) माधवो, (१७०) मधुः,

ॐ माधवाय नमः। ॐ मधवे नमः।

भा०—( माधवः ). यथा,
५ (१) " मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान्।
तस्मान्माधवनामासि धवस्स्वामीति शब्दितः " इति,
(२) " मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्। इतिवा. ❀
भा०उ० ६९—४।
लब्धविद्योभ्यः स्वदमानत्वात्—( मधुः ).
१० (१) "मन,ज्ञाने"अस्मात् स्वाद्वर्थात्, धा०दिवादिः कौ०पृ०४५६
(२) " फलिपाटिनमि०" इत्यादिना,उणा०पा०१कौ०पृ०६१०
उप्रत्ययः, धकारोन्तादेशश्च. यथा,

निर्व०—( माधवः ). एकत्र,
(१) " धूञ्,कम्पने " पचाद्यच्. धा०क्र्यादिः कौ०पृ० ४७६
१५ गुणावदेशौ. साधितश्चायमन्यथा चापि प्रागेव.
(२) " माङ्,माने " धा०जुहो०कौ०पृ० ४५०
(३)"अन्येष्वपि०"इति,डः.टिलोपः३।२।१०१॥कौ०पृ०५८५.
स्त्रियामतष्टाप्. दीर्घः. अन्यत्र पृषोदरादिः. ❀
लब्धविद्यैर्यो मन्यते स्वदत इति—( मधुः ).
२० (१)"मन,ज्ञाने" आस्वादनकर्मेहायम्, धा०दिवादिः कौ०पृ०४५६

निरु०—१६९ मा विद्या च हरेः प्रोक्ता तस्याः स्वामी धवः स्मृतः॥
१३१॥
तस्मान्माधवनामासौ ब्रह्मविद्याप्रदो मनुः।
मौनाद्ध्यानाच्च योगाच्च ( माधवः ) परिकीर्तितः ॥ १३२ ॥
२५ १७० भक्तेभ्यो लब्धविद्येभ्यो स्वदमानतया ( मधुः )।

( १७१ ) अतीन्द्रियो,

ॐ अतीन्द्रियाय नमः ।

भा०–( ३ ) " मध्वउत्सः" इति,पु०सू० ।
( ४ ) " प्रियोहि ज्ञानिनोत्यर्थम् " इतिच. ❀ गी० ७–१७। ५
अथ, मधुरमधूदधिस्वरूपेस्मिन् गुणिनि उक्तपरव्यूहविभवहृदयं
षाड्गुण्यम् विवक्षन्, स्वरूपं शोधयति–
( अतीन्द्रियः ),–ज्ञानोपकरणान्यतिक्रान्तः. ❀

निर्व०–( २ ) " भृमृशीङ्तॄचरि०"इत्यतः उरिति,उणा०पा० १
कौ०पृ० ६०९ १०
( ३ ) " धान्ये नित्" इत्यतः निदितिच वर्तमाने,उणा०पा० १
कौ०पृ० ६०९
( ४ ) "फलिपाटिनमिमनिजनांगुक्पटिनाकिधतश्च"उणा०पा० १
कौ०पृ०६१० इति उः. नित्,धकारोन्तादेशश्च. ❀
अथैवं, मधुरमधूदधिस्वरूपेस्मिन् परव्यूहविभवहृदयषाड्गुण्यविवक्ष-१५
या स्वरूपं शोध्यते.अतिक्रान्तः, इन्द्रियाणि–ज्ञानोपकरणानि तद्-
विषयतयेति–( अतीन्द्रियः ).
( १ ) " इदि,परमैश्वर्ये" नुमित्यादि.धा०भ्वादिः कौ०पृ० ३८७
(२) "ऋज्रेन्द्र०"इत्यादिना रन्नन्तो निपातः.उणा०पा०२कौ०
पृ०६२० इत्थं. निर्व्यूढादिन्द्रशब्दात्, २०
( ३ ) "इन्द्रियमिन्द्रलिंगमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमितिवा"
इति, घच् प्रत्ययान्तो निपातः.५।२।९३॥ कौ०पृ० ३२५
( ४ ) " आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति.
७।१।२॥ कौ०पृ० ९४ घस्य इय्.
( ५ ) " यस्य०"इति,लोपःतनः.६।४।१४८॥कौ०पृ०५६ २५
अनिर्वृत्तसमासः.सवर्णदीर्घः.

निरु०–१७१ज्ञानोपकरणयातमनिक्रान्तो(ह्यतीन्द्रियः)॥१३३॥

१ गुणान्वयर्तु पर।

( १७२ ) महामायो,

ॐ महामायाय नमः ।

भा०—कथम्—

५ ( महामायः ). महती—अप्रपन्ननिखिलजनमोहिनी, तिरस्करिणीवत् माया अस्येति. यथा,

( १ ) " गुणमायासमावृतः " इति, जि० ३।

नेयं मृषा मायेति वक्ष्यते. ❋

निर्व०—( ६ ) "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति,२।४।२६॥कौ० १० पृ० १५६ परवल्लिङ्गतायां प्राप्तायाम्,

( ७ ) " द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः " इति, तत्प्रतिषेधः. ❋२।४।२६॥कौ०पृ०१५६

कथमित्थम्; यतः, महती—अप्रपन्नजनमोहिनी—माया—गुणमाया, अस्येति—( महामायः ).

१५ ( १ ) " माङ्, माने " धा० जुहो० कौ०पृ०४५०

( २ ) " माच्छाससिभ्यो यः " उणा०पा०४कौ०पृ०६३७

इति, यः. स्त्रियामतष्टाप्. दीर्घः.

( ३ ) " मह, पूजायाम् " धा०भ्वादिः कौ०पृ०४११

( ४) " वर्तमानेपृषत्० " उणा०पा०२कौ०पृ०६२२

२० इत्यादिना अतिः, शतृवद्भावश्च निपात्यते. उगित्वान्ङीप्.

( ५ ) " स्त्रियाःपुंवद्भाषितपुंस्कादनूङ्समानाधिकरणेस्त्रियामपूरणीप्रियादिषु " ६।३।३४॥कौ० पृ०१६०

इति, पूर्वपदस्य पुंवद्भावः. महत आत्वम् दीर्घः. बहुव्रीहौ,

( ६ ) " गोस्त्रियोरुपसर्जनस्य " इति, उपसर्जनह्रस्वः. ❋ १।२। २५ ४८॥कौ०पृ०१२९

निरु०—१७२ माया यस्याप्रपन्नानां सर्वेषामस्ति मोहनी ।
( महामायः ) स विज्ञेयो वस्वर्णीमनुरुज्ज्वलः॥१३४॥

## (१७३) महोत्साहो,

ॐ महोत्साहाय नमः ।

भा०—ज्ञानमयादपि अकर्तुः अलसोदासीनात् सांख्येश्वरात् व्या-
र्तकमैश्वर्यं गुणमाह.— ५

( महोत्साहः ).

महान्, उत्साहः उत्सहनं कर्तृत्वलक्षणमैश्वर्यम्, अस्येति. अनेन
ल्वयम्, अखिलकार्येषु अनन्यनियोज्यनिरङ्कुशस्वसंकल्पकणिकामा-
ण सर्वभोक्तॄणां भुक्ताभुक्तविचित्रकर्मतारतम्यानुगुणभोगतदुपकर-
णप्रकारपरिणामभेदभिन्नजगदपरिमितापूर्वरचनाचतुरसर्वशक्तिरपि स्वा- १०
तन्त्र्येण यथा पुरतः स्वभावनियममनुरुन्धानः सर्वमाविष्करोति. एत-
च्छीकरपरमाणुरणिमादिः द्रुहिणादौ विजृम्भते. ❋

निर्व०—अथ षाड्गुण्यं व्याचिख्यास्यते. तत्र कर्तृत्वप्राधान्यविवक्ष-
या त्वल्लक्षणस्यैश्वर्यस्य प्राथम्यम्; अन्यच्च, वक्ष्यमाणसंगतिविशेषेण
विशिष्टक्रमम्. अनन्यनियोज्यनिरङ्कुशस्वसंकल्पकणिकामात्रेण सर्व- १५
सृष्ट्या च अकर्तृत्वव्यावर्तकः, महान्— आभ्यधिकः, उत्साहः—उत्स-
हनं, कर्तृत्वलक्षणमैश्वर्यम्, अस्येति—

( महोत्साहः ).

( १ ) " षह,मर्षणे" धा० भ्वादिः कौ० पृ० ४८६
उत्पूर्वः.षस्सः.भावे घञ्. वृद्धिः. प्राग्वत् व्युत्पादितस्य २०
महत आत्वम्. दीर्घः.एवम्,अन्यत्रापि(महाबलः,महाबुद्धिरित्या-
दौ ) कश्चित् पुंवद्भावः च;स तु तत्रोच्यते.❋ आद्गुणः. एतत्परमाणु-
रणिमादिः द्रुहिणादौ. ❋

निरु०—१७३ महदुत्सहनं यस्य ह्यैश्वर्यं कर्तृलक्षणम् ।
( महोत्साह ) स्स विज्ञेयो मनुरैश्वर्यदायकः ॥ १३५ ॥ २५

( १७४ ) महाबलः, ॥ श्लो० ॥ १९ ॥ ( १७५ ) महाबुद्धिर्,

ॐ महाबलाय नमः । ॐ महाबुद्धये नमः ।

भा०— सहायपेक्षकर्त्रन्तरव्यावर्तकं महत् बलमस्येति—
५ ( महाबलः ). अनेन ह्ययम्, अपरिमितक्रियोपि अनाकलित—
श्रमः, स्वे महिम्नि तिष्ठन्, अवधीरिताधारान्तरः, दुर्वारव्यापार-
संततशक्तिसमुल्लासः, शरीरमिव सकलं बिभर्ति.
( १ ) "बहुलयन् बहुलम्" इति च मौलाः. ॥ मौल० ॥
एतद्देशो जीवनसमीरणगिरिधरादौ. ❀
१० असर्वज्ञकारणमतव्यवच्छेदमाह. महत् ज्ञानमस्येति—( महाबुद्धिः ).
इदं चास्याशेषदेशकालस्वभावविप्रकृष्टाऽविप्रकृष्टविषयम्;
सार्वज्ञ्यात् अविशयविपर्यासतया यथार्थम्; क्लेशकर्म—

निर्व०— सहायपेक्षकर्त्रन्तरव्यावर्तकं महत् बलम्—अपरिमित-
क्रियत्वेपि, अनाकलितश्रमत्वलक्षणोर्जा, अस्येति—
१५ ( महाबलः ).
(१)"बल,प्राणने"पचाद्यच्.अज्विधौ, धा०चुरादिः को०पृ०४८२
( २ ) "भयादीनामुपसंख्यानम् नपुंसकेक्तादिनिवृत्त्यर्थम्" ३।३।
५६॥को०पृ०६५३
इतिवा अच्. शेषं प्राग्वत्.
२० एतद्देशो जीवनसमीरणादौ. ❀
असर्वज्ञकारणव्यावर्तिका महती बुद्धिः— अविशयविपर्याससार्वज्ञ्य-
लक्षणं ज्ञानम्, अस्येति—( महाबुद्धिः ).
( १ ) "बुध, अवगमने" भावे, धा० दिवादिः को०पृ०४२०

निरु०— १७४ कर्त्रन्तरगतेशो यस्मृटस्स स्या ( न्महाबलः ) ।
२५ १७५ ( महाबुद्धि ) र्महत् ज्ञानं स्वरूपं यस्य मोच्यते ॥१३६॥

१ सर्वज्ञात । सार्वज्ञ्यमिति क्वचि ।

भा०— विपाकाशयाद्यपरामर्शात्, स्वाभाविकत्वात्, नित्यं च; चक्षुरादिकरणनिरपेक्षं च; तदपेक्षं च स्वातन्त्र्येण, पुण्डरीकाक्षत्व-शुचिश्रवस्त्वादेः. नच रूपरसादिग्रहणे करणनियमः, सर्वेण सर्वकार्यशक्तेः; सर्वोपि हि तिर्यक्षु चक्षुषैव पश्यति शृणोति च, कथमिदं सर्वशक्तेर्दुश्शकम्. यथोक्तम् जयायाम्, ५

(१)"सर्वतःश्रुतिमांश्चासौ यथा दृक्छ्रावकोरगः"इति.॥जयसं०॥

करतलामलकविलोकनवदपरोक्षं च, वैशद्यात्; अमोघं, च सर्वनिर्वहणात्. यथा,

(२)" विश्वतश्चक्षुरुतविश्वतो मुखः" तै०ना०६—१—१ ॥ १०

(३)" पश्यत्यचक्षुस्सशृणोत्यकर्णः " श्वे०उ०३—१९।

(४)" सर्वतोक्षिशिरोमुखम् " इत्यादि. तै०उ०।

आहुश्च नाथमुनिमिश्राः,

(५)"यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः"इति.॥न्यायतत्त्वे०॥ १५

यत्, केचित् सर्वज्ञमवजाह्निरे,

(६)" एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते । नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते " इति.

तत्, बौद्धाद्यनुमितसर्वज्ञविषयम्, तत्प्रकरणात्; अन्यथा शास्त्रविरोधाच्च.

(७)" नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता " इति, २०

शास्त्रीयसर्वज्ञत्वव्युदासनम्; अतएव अन्यपरोक्तं दुरुक्तं वा; चक्षुःश्रवःप्रभृतिषु काकोलूकगृध्रादिषु मन्त्रसिद्धौषधतपःप्रभावादिसंस्कृतेषु च, करणानां ज्ञानकार्यव्यतिहारतन्त्रताप्रकर्षतारतम्यदर्शनात्, सार्वज्ञ्यशास्त्रस्यायोग्यार्थनापि दुर्वदा. गुणान्तरवैचित्र्येपि एषैव दिक्. २५

---

१ नित्यनैव ।

.( १७६ ) महावीर्यो,

ॐ महावीर्याय नमः ।

भा०—अस्य लवो बद्धमुक्तनित्येषु चैतन्यम्. ❀

५ दधिभावमापद्यमानदुग्धादिकारणेभ्यो भेदकम्, सत्यपि हेतावविकारल-
क्षणं महत् वीर्यमस्येति—
( महावीर्यः ). अगरुमृगमदकस्तूरिकाकुसुमामोदवत्.
संनिधिमात्रेण निर्मर्यादकार्यकारी ह्ययम्. यथा,
( १ ) " तस्य सन्निधिमात्रेण गन्धः क्षोभाय जायते । मनसो नोपकर्तृ-
१० त्वात् तथासौ परमेश्वरः"इति.
एतदणुः योगीश्वरप्रभृतिषु अक्षोभ्यत्वम्. ❀

निर्व०—( २ )"स्त्रियां क्तिन्"इति,क्तिन्.३।३।९४॥कौ०पृ०६५८
अगुणः. निहतत्वात् नेट्.
( ३ ) " झषः०"इति धत्वम्.८।२।४०॥कौ०पृ०३८५
१५ जश्त्वम्. अन्यत्र प्राग्वत्.
( ४ ) " स्त्रियाःपुंवत्०"६।३।३४॥कौ०पृ०१६०
इति,पुंवद्भावो विशेषः. एतल्लवो बद्धमुक्तादौ. ❀
विकुर्वाणदुग्धादिकारणव्यावर्तकं महत् वीर्यम्— सत्यपि विकारहेतौ,
अविकारलक्षणमक्षोभ्यत्वमस्येति—( महावीर्यः ).
२० ( १ ) " वीर,विक्रान्तौ"धा०चुरादिः कौ०पृ०४९०
चुरादौ कथादिः. अदन्तः. णिच्.
( २ ) " अतोलोपः"इति,अल्लोपः.६।४।४८॥कौ०पृ०३९७
( ३ ) " अचो यत्" ३।१।९७॥कौ०पृ०५५७
इति,यत्. णेर्लोपः.एतदणुर्योगीश्वरादौ. ❀

२५ निरु०—१७६ हेतौ सति विकारित्वेप्यविकारित्वलक्षणम् ।
महद्धि वीर्यं यस्येति ( महावीर्य ) स्स च स्मृतः ॥१३७॥

## ( १७७ ) महाशक्तिर्, ( १७८ ) महाद्युतिः, ।

### ॐ महाशक्तये नमः । ॐ महाद्युतये नमः ।

भा०—पशुपतिमतावगतोपादानशक्तिविकलनिमित्तमात्रव्यावर्ति- ५
का महती शक्तिरस्येति—
( महाशक्तिः ). सा हि, साधनग्रामविनियोगलक्षणा, स्वशरीरैकदे-
शीकृतप्रकृतिपरिणामयोग्यतालक्षणा, सत्याऽसत्या वा, सामग्र्या सर्वदा
सर्वसंपादिनी. ऊर्णनाभिप्रभृतेः कीटस्यापि निमित्तस्यैव उपादानशक्तिरत-
र्क्या, कथमियं सर्वज्ञशक्तिस्तर्क्या ? १०
अस्या विभुट्प्रधानदधिदुग्धादौ प्रतिक्षणपरिणामित्वम्. ❀
सहकार्यपेक्षकारणवैलक्षण्यकरं तदनपेक्षालक्षणं तेजो महदस्येति—
( महाद्युतिः ).यत्, बाह्यान्तरतमोविरोधिस्वपरवर्गयोः.

निर्व०—उपादानशक्तिविकलनिमित्तमात्रताव्यावर्तिका महती श-
क्तिः-साधनग्रामविनियोगस्वशरीरैकदेशीकृतप्रकृतिपरिणामयोग्य- १५
तालक्षणसामर्थ्यम्, अस्येति—
( महाशक्तिः ).
( १ ) " शक्लृ,शक्तौ" धा०स्वादिः कौ०पृ०४६३
भावे ❀ स्त्रियां क्तिन्. अनिट्.प्राचीने तु पदे प्रागिव पुंवद्भावो
विशेषः.अस्या विभुट्प्रधानदुग्धादौ. ❀ २०
सहकार्यपेक्षकारणव्यावर्तिका महती द्युतिः—तदनपेक्षालक्षणं तेजः,
अस्येति—
( महाद्युतिः ).

निरु०—१७७ शक्तिश्च महती यस्य (महाशक्ति) स कीर्तितः।
१७८ तेजोऽनपेक्षरूपं स्वं महद्यस्य ( महाद्युतिः ) ॥ १३८ ॥ २५

१ परिणामतोपादानलक्षण । २ [illegible]

{१७९ / ६६२} अनिर्देश्यवपुः,

ॐ अनिर्देश्यवपुषे नमः।

भा०— क्रमेण रमणीयं भोषणं च भवति. अस्य विन्दुः, द्युमणिमाणि-
५ क्यादौ प्रकाशः. षट्सु चामीषु [१७३—१७८] महत्वविशेषणेन एते
गुणाः, कलयैव परावरं कार्यकलापं प्रवर्त्य, अशेषेणालब्धामिषाः महोदधा
विव महौघाः भगवत्यनन्ते मान्तीति निवेद्यते. अतिप्रथितेयं प्रक्रिया,
(१) " परास्य, शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"
१० श्वे० उ० ६—८।
( २ ) " तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः" वि०
पु० ६—५—८५।
( ३ ) " ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि
विना हेयैर्गुणादिभिः" इत्यादौ. वि० पु० ६—५—७९।
१५ भगवच्छास्त्राणि कात्स्न्र्येनेदमर्थानि.
एषु षट्स्वेव सौशील्यवात्सल्यादयः अगणितगुणाः,
केनापि प्रयोजनेनान्तर्भाव्यन्ते. ❀
एतत्षाड्गुण्यविग्रहत्वात्—( अनिर्देश्यवपुः ).यथा,

निर्व०— ( १ ) " वपुत, दीप्तौ" धा० भ्वादिः कौ० पृ० ४११
२० ( २ ) " सर्वधातुभ्य इन्" इति. इन्. उणा० पा० ४ कौ० पृ० ६३७
(३) "इगुपधात्कित" इति, कित्, अगुणः. उणा० पा० ४ कौ० पृ० ६३७
अन्यत् सर्वं प्राग्वत्. अस्य विन्दुः द्युमणिमाणिक्यादौ.
इत्थम्, षड्गुणा व्याख्याताः. एष्वेव इतरेषामन्तर्भावः. ❀
एतत्षाड्गुण्यविग्रहत्वेनानुपमत्वात्, अनिर्देश्यम्—इदमीदृशमिति निर्दे-
२५ ष्टुमशक्यम्, वपुः—शरीरम्, अस्येति—( अनिर्देश्यवपुः ).

निरु०—१७९ ज्ञानादिषाड्गुण्यमयमुपमानविवर्जितम्।
वपुरस्यास्ति तेजिष्ठम् ( अनिर्देश्यवपु ) र्हि सः ॥ १३९ ॥

१ लब्धास्मधाराः ततोस्मिन् लब्धपर्याप्तस्थानका महो। २ प्रयोजकेन।

भा०—(१) "षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम्" इति.
मौलसंहितायाम् चैतद्व्यञ्जितम्.—
(२) "बुद्धिमनोङ्गप्रत्यङ्गवत्तां भगवति लक्षयामहे, शास्त्रशब्देऽयः
बुद्धिमान् मनोवानङ्गप्रत्यङ्गवान्" इति. ॥ मौलसंहितायाम् ॥ ५
निरुक्तं चैतत्,
(३) "ये, बुद्धिमनोङ्गप्रत्यङ्गवन्तो भवन्ति, सांस्तमहाभौतिका-
स्ते भवन्ति; किमात्मिकानु खल्वियं भगवतो व्यक्तिः? इति, भौति-
कत्वमाशङ्क्य, उत्तरयति, भगवदात्मिकैवैषा; भगवतो व्यक्तिः,
यदात्मको हि भगवान्, तदात्मिकैवैषा; किमात्मकश्च भगवान्? १०
ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मकः; यथा, अङ्गारः खादिरः
शाल्मलो वा सुप्रदीप्तः सर्वतोग्निरेव स्यात्; यथा वा मधुपात्रं प्रपी-
यमानं सर्वतो मधुरमेव स्यात्; यथा वा सुवर्णपिण्डो निघृष्यमाणः
सर्वतः सुवर्णमेव स्यात्; यथावा प्रासाद आलोक्यमानः सर्वतो
दर्शनीय एव स्यात्; एवम्, भगवान्, सर्वतो ज्ञानमेव, सर्वत ऐश्व- १५
र्यमेव, सर्वतश्शक्तिरेव, यदिच्छेत्तद्भवेत्"
इत्यादिना.
एष एव पञ्चोपनिषद्विषयो वक्ष्यते.
(४) "शुद्धसत्त्वमयेन ह्यनेन कनकदलेनेव रत्नमुन्मील्यते षड्गु-
णी, नतु त्रिगुणमयेनेव निमील्यते" इति तत्त्वम्. वैष्णवेच, २०
(५) "रूपवर्णादिनिर्देशविशेषेण विवर्जितः" वि० पु० ।
निर्देशविशेषणम्—उपमानविशेषणम्, तद्वर्जितः—
अनुपमवपुरित्यर्थः. ❀

१ साम्र । राजत । २ छेपेनव ।

{ २२ / २२२ } ( १८० श्रीमान्, )

ॐ श्रीमते नमः ।

भा०—तदनुरूपया दिव्यभूषणसंपदा नित्ययुक्तः,-( श्रीमान् ).
५ इत्थं विविधगुणरूपानुरूपाम्भोधिगम्भीरभावः,—

निर्व०—( १ ) " डुवपू,बीजसन्ताने" धा० भ्वादिः कौ० पृ० ४३२
( २ ) "जनेरुसिः" इति वर्तमाने,उणा० पा० २ कौ० पृ० ६२४
( ३ ) " अर्तिपृवपियजितनिधनितपिभ्यो नित्" उणा० पा० २ कौ० पृ० ६२४
१० इति, उसिः नित्.
( ४ ) " दिश,अतिसर्जने " निपूर्वः.धा० तुदादिः कौ० पृ० ४६४
( ५ ) " ऋहलोर्ण्यत्" इति, ३।१।१२४॥ कौ० पृ० ५६२
शक्यार्थे ण्यत्. गुणः. नञ्समासः. नलोपः. ❀
तदनुरूपा श्रीः—दिव्यभूषणसंपत्, अस्य नित्यमस्तीति—
१५ ( श्रीमान् ).
( १ ) " श्रिञ्,सेवायाम् " धा० भ्वादिः कौ० पृ० ४२२
( २ ) " क्विब्वचि० "इत्यादिना,उणा० पा० २ कौ० पृ० ६२१
क्विपि दीर्घेच निष्पन्नात् श्रीशब्दात्, नित्ययोगे,
( ३ ) " तदस्य० "इति मतुप्. ५।२।९४॥ कौ० पृ० ३२५
२० ( ४ ) " अत्वसन्तस्य० "इति, ६।४।१४॥ कौ० पृ० ७८
अत्वन्तात् दीर्घः. उगित्त्वात् नुम्. ❀ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥ इति हल्ङ्यादिलोपः, ❀ संयोगान्तस्य लोपः,तस्यासिद्धत्वात् नलोपो न. ❀ इत्थं विविधगुणरूपानुरूपाम्भोधिगाम्भीर्यात्,अमेयः-अपरिमेयः,आत्मा-स्वभावः,अस्येति-

निरु०—१८० दिव्यभूषणसंपद्भिर्युक्तश् ( श्रीमान् ) सदा स्मृतः।

१ षड्गुण ।

{१८१ / १०३} अमेयात्मा, (१८२) महाद्रिधृत्, ॥

ॐ अमेयात्मने नमः । ॐ महाद्रिधृते नमः ।

भा०—( अमेयात्मा ). ❋ ५
अथ तदनुगुणयथेष्टविहारचेष्टितः,—
( महाद्रिधृत् );—महान्तं मन्दरं मथने धृतवान्. ❋

निर्व०—(अमेयात्मा ). व्युदपादि हि अततेरात्मशब्दः ?
(१) "माङ्, माने" ❋ अचोयत्. धा०जुहो० कौ०पृ०४५०
(२)"ईद्यति"इति, ईत्वम्, गुणः. नञ् ६।४।६५।।कौ०पृ०५५७ १०
समासे नलोपः. दीर्घः. ततः, नान्तलक्षणो दीर्घ इत्यादि. ❋
अथ, तदनुगुणयथेष्टव्यवहारचेष्टितम् प्रदर्श्यते. स च
मथनसमये महान्तमद्रिम् — मन्दरम् धृतवानिति,—
( महाद्रिधृत् ).
(१)"धृञ्, धारणे" क्विप्. धा०भ्वादिः कौ०पृ०४२३ १५
(२)"ह्रस्वस्य०"इति, तुक्. ६।१।७१।।कौ०पृ०५५९
अगुणः.(अद्रिधृक् )इति पाठे,
(३)"ञिधृषा, प्रागल्भ्ये" धा०स्वादिः. कौ०पृ०४६३
स्वादिः. इह धारणकर्मा चायम्. लक्षणया वा तदर्थलाभः.
क्विप्. शस्य जश्त्वेन डः.तस्य. २०
(४)"ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च"३।२।५९।। कौ०
पृ०६७इत्यत्र दधृगिति निपातनेन धृषेः क्विनो विधानात्,
(५)" क्विन्प्रत्ययस्य कुः" इत्यत्र, ६।२।६२।।कौ०पृ०६८
बहुव्रीह्यभपणादन्यप्राप्नोति अत्र विप्याति कुत्वम् गः.

निरु०—१८१मितगुणगम्भीरभावो यो(त्यमेयात्मा)मर्कानितः।।१४०।। २५
१८२ महान्तं मन्दरं योहि धृतवान् स ( महाद्रिधृत् )।

श्लो० ॥ २० ॥ ( १८३ ) महेष्वासो,

ॐ महेष्वासाय नमः ।

भा०—तथा, महान्—मनोहारी,इषूणामासः-क्षेपः-सिन्धुबन्धदशकन्धर-
५ वधादौ यस्य, सः,—
( महेष्वासः ). ❀ ललितधरणीभरणशीलः—

निर्व०—ततः, तस्य वा चर्त्वम् कः. एवमेवान्यत्राप्येतादृशे
प्रदेशेऽवसेयम्. शेषं प्राग्वत्.
( ६ ) " अद,भक्षणे"धा०अदादिः कौ० पृ०४३५
१० ( ७ ) " अदिशदिभूशुभिभ्यःक्विन्"इति,क्विन्. उणा०पा०४कौ०
पृ०६३५
निहतत्वात् नेट्. व्युदपादि महाशब्दः१ दीर्घः. ❀
सिन्धुबन्धदशकन्धरवधादौ, महान् मनोहारी, इषूणां—
शराणाम्, आसः—असनं क्षेपः, अस्येति—
१५ ( महेष्वासः ).
( १ ) " असु,क्षेपणे"भावे घञ्. वृद्धिः. धा०दिवादिःकौ०पृ०४५९
( २ ) " ईष,गतिहिंसादानेषु"धा०भ्वादिः कौ०पृ०४०७
( ३ ) " भृमृशीङ्०"इत्यत उः. उणा०पा०१कौ०पृ०६०९
( ४ ) " उन्देरिच्चादेः " उणा०पा०१कौ०पृ०६१०
२० इत्यत इच्चादेरिति वर्तमाने,
( ५ ) " ईषेःकिच्च"उणा०पा०१कौ०पृ०६१०
इति,उः,किच्च, आदेरिदादेशश्च. अगुणः. यण् वः.महाशब्दः प्राग्वत्.
❀ आद्गुणः. ❀
तदानीं, महीम्— ललितधरणीम् तच्छीलो बिभर्ति भरतीति वा,—

(१८४) महीभर्ता, {१८५ / ६१४} श्रीनिवासम्,

ॐ महीभर्त्रे नमः। ॐ श्रीनिवासाय नमः।

भा०—(महीभर्ता). ❋　५
(श्रीनिवासः). इति च, मथनसमानीतलक्ष्मीचाटुकारवक्षोऽधिरोपणादिदिव्यचेष्टापरम्. ❋

निर्व०—(महीभर्ता).
(१) "डुभृञ्, धारणपोषणयोः" धा० जुहोत्यादिः कौ०पृ०४५०
(२) "भृञ्, भरणे" वा. धा० भ्वादिः कौ०पृ०४२२　१०
(३) "तृन्" इति, ताच्छील्ये तृन्. गुणः. अनिट्. ३।२।१३५॥
कौ०पृ०६०१
(४) "मह, पूजायाम्" पचाद्यच्. धा० भ्वादिः कौ०पृ०४११
(५) "षिद्गौरादिभ्यश्च" ४।१।४१॥ कौ०पृ०९८
इति, गौरादित्वात् ङीष्.　१५
(६) "यस्य०" इति, लोपः. षष्ठीसमासः. ६।४।१४८॥ कौ०पृ०५६
भाष्युक्तं तु विग्रहप्रदर्शनमात्रम्. ततोऽनङित्यादि. ❋
तदा मथनसमानीतायाः श्रियः—लक्ष्म्याः, निवासः वक्षोधिरोपणादिनास्थानमिति—(श्रीनिवासः).
(१) "वस, निवासे" निपूर्वः. धा० भ्वादिः कौ०पृ०४३२　२०
(२) "हलश्च" इति, अधिकरणे घञ्. वृद्धिः. ३।३।१२१॥ कौ०
पृ०६६३
(३) "श्रिञ्, सेवायाम्" धा० भ्वादिः कौ०पृ०४२२
(४) "क्विब्वचि०" इति, उणा०पा०२ कौ०पृ०६२१
क्विपि, दीर्घश्च, धुतादितः श्रीशब्दः. ❋　२५

निरु०—१८४ धरणीधृतिशीलत्त्वः (महीभर्ते) ति शब्द्यते।
१८५ मथनानीतलक्ष्मीवान् (श्रीनिवासः) स ईरितः॥ १४२ ॥

{१८६ / ४५२} सतांगतिः, । {१८७ / ६४४} अनिरुद्धम्,

ॐ सतांगतये नमः । ॐ अनिरुद्धाय नमः ।

५ भा०—( सतांगतिः ).—स्वच्छन्दचेष्टितैरपि प्रणतप्रियंकरः. ❀ एवं निर्भूतनिरोधनिरवधिकजीवलोकजीवातुदिव्यचेष्टितः,—
( अनिरुद्धः ).
(१)"अपरिमितचेष्टो भगवाननिरुद्धः "इति मौलाः ? ❀ ।।मौलसं०।।
अस्यानिरुद्धस्यावतारकन्दस्य हंसावतारः.

१० निर्व०—स्वच्छन्दचेष्टितैरपि, सतां—प्रणतानां, गतिः—प्रियंकरतया प्राप्य इति,—
( सतांगतिः ).
( १ ) " गम्लृ, गतौ" धा०भ्वादिः कौ०पृ० ४३०
कर्मणि ❀ स्त्रियां क्तिन्. अनिट्.
१५ ( २ ) " अनुदात्त० "इत्यादिना, ६।४।३७।। कौ०पृ० ४३५
अनुनासिकलोपः इत्यादि.
( ३ ) " अस्,भुवि" धा०अदादिः कौ०पृ० ४४४
शतरि व्युत्पादितः सच्छब्दः. तत आम्. अनुस्वारादि. ❀
एवम्, निरवधिकजीवलोकजीवातुदिव्यचेष्टिततया, निरुद्धः—प्रति-
२० रुद्धः, नेति—
( अनिरुद्धः ).
( १ ) " रुधिर्, आवरणे"धा०रुधादिः कौ०पृ० ४७०
निपूर्वः. कर्मणि क्तः.अगुणः. अनिट्.
( २ ) "झषः० " इति,तस्य धः. ८।२।४० ॥ कौ०पृ०३८५

२५ निरु०—१८६ प्रणतानां प्रियकर ( स्सतांगति ) रिहोच्यते ।
१८७ अनन्तचेष्टायुक्त्या (दनिरुद्ध) उदाहृतः ॥ १४३ ॥

(१८८) सुरानन्दो, {१८९ / ५४३} गोविन्दो,

ॐ सुरानन्दाय नमः । ॐ गोविन्दाय नमः ।

भा०—आप्तसखत्वेन सुरा आनन्दन्ति अस्मादिति—(सुरानन्दः). ५
तद्गवां—स्तुतिगिराम्, विन्दः—
(गोविन्दः).
(१) "गवादिषु विन्देस्संज्ञायाम्" इति, शः. ३।१।१३८॥कौ०
पृ० ५६८
तैः सुरैः स्तूयमानोपकारः. ❀ १०

निर्व०—(३) "झलांजशूझशि" ८।४।५३॥ कौ०पृ०९
इति, जश्त्वेन पूर्वस्य धस्य दः. नञ्समासे नलोपः. ❀
अथ, अवतारकन्दस्य अस्यानिरुद्धस्य हंसावतार उच्यते. आप्तसख-
त्वेन सुरा आनन्दन्ति अस्मादिति—(सुरानन्दः).
(१) "टुनदि, समृद्धौ" धा०भ्वादिः कौ०पृ० ३८७ १५
आङ्पूर्वः. इदित्वात् नुमित्यादि.
(२) "अकर्तरिच०" इति, अपादाने घञ्. ३।३।१९॥कौ०पृ०६४७
(३) "षु, प्रसवैश्वर्ययोः" परस्मै. धा०अदादिः कौ०पृ०४४०
(४) "सुसूधा०" उणा०पा० २ कौ०पृ० ६२०
इत्यादिना, क्रन्. अगुणः. अनिट्. दीर्घः. षष्ठीसमासः. ❀ २०
तैस्स्तूयमानोपकारतया तेषां गाः-स्तुतिगिरः, विन्दति लभते इति—
(गोविन्दः).

निरु०—१८८ (सुरानन्द) स्सुरान् सर्वानानन्दयति यस्सदा।
१८९ गवां स्तुतिगिरां विन्दो (गोविन्द) स्स उदाहृतः ॥ १४४

{१८६ / ४५२} सतांगतिः, । {१८७ / ६४४} अनिरुद्धम्,

ॐ सतांगतये नमः । ॐ अनिरुद्धाय नमः ।

५ भा०—( सतांगतिः ).—स्वच्छन्दचेष्टितैरपि प्रणतप्रियंकरः. ❋
एवं निर्धूतनिरोधनिरवधिकजीवलोकजीवातुदिव्यचेष्टितः,—
( अनिरुद्धः ).
(१)"अपरिमितचेष्टो भगवाननिरुद्धः "इति मौलाः ? ❋॥मौलसं०॥
अस्यानिरुद्धस्यावतारकन्दस्य हंसावतारः.

१० निर्व०—स्वच्छन्दचेष्टितैरपि, सतां—प्रणतानां, गतिः—प्रियंकरतया
प्राप्य इति,—
( सतांगतिः ).
( १ ) " गम्लृ, गतौ" धा०भ्वादिः कौ०पृ० ४३०
कर्मणि ❋ स्त्रियां क्तिन्. अनिट्.
१५ ( २ ) " अनुदात्त० "इत्यादिना, ६।४।३७॥ कौ०पृ० ४३५
अनुनासिकलोपः इत्यादि.
( ३ ) " अस्,भुवि" धा०अदादिः कौ०पृ० ४४४
शतरि व्युत्पादितः सच्छब्दः. तत आम्. अनुस्वारादि. ❋
एवम्, निरवधिकजीवलोकजीवातुदिव्यचेष्टिततया, निरुद्धः—प्रति-
२० रुद्धः, नेति—
( अनिरुद्धः ).
( १ ) " रुधिर्, आवरणे"धा०रुधादिः कौ०पृ० ४७०
निपूर्वः. कर्मणि क्तः.अगुणः. अनिट्.
( २ ) "झषः०" इति, तस्य धः. ८।२।४०॥ कौ०पृ०३८५

०—१८६ प्रणतानां प्रियकर ( स्सतांगति ) रिहोच्यते ।
अनन्तचेष्टायुक्तत्वा (दनिरुद्ध) उदाहृतः ॥ १४३ ॥

(१८८) सुरानन्दो, {१८९ / ५४३} गोविन्दो,

ॐ सुरानन्दाय नमः । ॐ गोविन्दाय नमः ।

ना०—आपत्सखत्वेन सुरा आनन्दन्ति अस्मादिति–(सुरानन्दः). ५
तद्गवां–स्तुतिगिराम्,विन्दः–
( गोविन्दः ).
( १ ) "गवादिषु विन्देस्संज्ञायाम्"इति,शः. ३।१।१३८॥कौ०
पृ० ५६८
तैः सुरैः स्तूयमानोपकारः. ❋ १०

निर्व०–( २ ) " झलांजशूझशि" ८।४।५३॥ कौ०पृ०९
इति,जस्त्वेन पूर्वस्य धस्य दः. नञ्समासे नलोपः. ❋
अथ, अवतारकन्दस्य अस्यानिरुद्धस्य हंसावतार उच्यते. आपत्सख-
त्वेन सुरा आनन्दन्ति अस्मादिति–( सुरानन्दः ).
( १ ) " टुनदि,समृद्धौ"धा०भ्वादिः कौ०पृ० ३८७ १५
आङ्पूर्वः. इदित्वात् नुमित्यादि.
(२)"अकर्तरिच०"इति,अपादाने घञ्. ३।३।१९॥कौ०पृ०६४७
( ३ ) " षु,प्रसवैश्वर्ययोः"प्रसः. धा०अदादिः कौ०पृ०४४०
( ४ ) " सुसूधा०" उणा०पा० २ कौ०पृ० ६२०
इत्यादिना, क्रन्. अगुणः. अनिट्. दीर्घः. षष्ठीसमासः. ❋ २०
तैस्स्तूयमानोपकारतया तेषां गाः-स्तुतिगिरः, विन्दति लभते इति–
( गोविन्दः ).

निरु०–१८८ ( सुरानन्द ) स्सुरान् सर्वानानन्दयति यस्सदा।
१८९ गवां स्तुतिगिरां विन्दो ( गोविन्द ) स्स उदाहृतः ॥ १४४

## (१९०) गोविदांपतिः, ॥

ॐ गोविदांपतये नमः।

भा०—गावः-वेदगिरः, तद्विदां ज्ञानिनां ज्ञानयज्ञाराध्यत्वेन पाता—
५ (गोविदांपतिः). यथा,
(१) "हंसमूर्तिमथात्मानं ज्ञानयज्ञभुजं स्मरेत्" इति. ❀

निर्व०—(१) "विद्लृ, लाभे" धा०तुदादिः कौ०पृ०४७०
(२) "गवादिषुविन्देः संज्ञायाम्"३।१।१३८॥कौ०पृ०५६८
इति,व्युत्पादयिष्यमाणे च गोशब्दे उपपदे,शः. अनुपदमेव च व्युत्पा-
१० दयिष्यते. एवमेव सर्वत्रैतादृशे प्रदेशे अवधातव्यम्. श इत्.
(३) "शेमुचादीनाम्" ७।१।५९॥ कौ०पृ० ४७०
इति, नुम्, अनुस्वारपरसवर्णौ.
(४) "गम्लृ,गतौ" धा०भ्वादिः कौ०पृ० ४३०
(५) "गमेर्डोः" इति, डोः. टिलोपः. ❀ उणा० पा०२कौ०
१५ पृ० ६२२
तथा,गाः—वेदगिरः, विन्दन्ति—जानन्ति, तेषां गोविदां ज्ञानिनाम्,
पतिः— ज्ञानयज्ञाराध्यतया पातेति—
(गोविदांपतिः).
(१) "पा,रक्षणे"धा०अदादिः कौ०पृ० ४४३
२० (२) "पातेर्डतिः"इति,डतिः. टिलोपः.उणा०पा०५कौ०पृ०६४२
(३) "विद,ज्ञाने"धा०अदादिः कौ०पृ० ४४३
क्विप्.अगुणः. व्युत्पादि हि गोशब्दः. ततः,समुदायादाम्. अनुस्वार-
पाक्षिकपरसवर्णौ. ❀

निरु०—१९० गावो वेदगिरः प्रोक्ताः गोविन्दस्तत्सुपालनात्।
२५ (गोविदांपति) रुद्दिष्टो वेदविद्वत्पदो मनुः ॥ १४५ ॥

श्लो०॥२१॥ (१९१) मरीचिर्, (१९२) दमनो,

ॐ मरीचये नमः। ॐ दमनाय नमः।

भा०—एवम्, जनुषाऽस्थानेभ्योपि जन्तुभ्यः प्रकाशितनिर्मलरूपः—(मरीचिः). ❀मृकणिभ्यामीचिः. मृङ् अत्र दीप्तिकर्मा. यथा, ५
(१) "कुन्देन्दुस्निग्धकान्तिश्च" इति तद्ध्यानम्. ❀
कान्तिमन्दाकिनीभिः भवतापं दाम्यतीति—
(दमनः). ❀

निर्व०—एवम्, जनुषा—अन्धेभ्योपि जन्तुभ्यः प्रकाशितनिजनिर्मलरूपतया, मरीचिः— किरणः, तद्वदीत इति— १०
(मरीचिः).
(१) "मृङ्, प्राणत्यागे" दीप्तिकर्मेहायम्. धा०तुदादिः कौ० पृ० ४६८
(२)"मृकणिभ्यामीचिः" उणा०पा०४कौ०पृ०६३५ १५
इति,ईचिः. गुणो रपरः.❀
दीप्तिमन्दाकिनीभिः भवदाहं दाम्यति—उपशमयतीति—(दमनः).
(१)"दमु, उपशमे" धा०दिवादिः कौ०पृ०४५९
दमिरत्र अन्तर्भावितण्यर्थः.
(२)"कृत्यल्युटः०"३।३।११३।।कौ०पृ०६६२ २०
इति, बाहुलकात् कर्तरि ल्युट्.
(३)"बहुलमन्यत्रापि"उणा०पा०२कौ०पृ०६२४
इति,युज्वेत्यादि. योरनः.❀

निरु०— १९१अन्धेभ्योपि च जन्तुभ्यो हंसग्रीवावतारतः।
प्रकाशितस्वरूपत्वात् (मरीचि)रिति कथ्यते ॥१४६॥
१९२भवतापस्य दमनात् कान्त्या (दमन) ईरितः। २५

१ दमयतीति।

(१९३) हंसः, {१९४ / ८५९} सुपर्णो,

ॐ हंसाय नमः। ॐ सुपर्णाय नमः।

भा०—क एवम्;—( हंसः ).

५ (१) "हन्ता सज्ञानाम्" इतिमौलाः. ॥ मौलसं० ॥
मनोहरं हन्ति— गच्छति, स्मयते इति वा,—
( हंसः ). पृषोदरादित्वात्साधुः. यथा,
(२) " सत्सत्त्वशुभाश्रयपरमहंसाय " इति. ❀ ॥ ध्याने ॥
" शोभनपर्णत्वात्, संसारपारनयनाद्वा—
१० ( सुपर्णः )." इति नैरुक्ताः.

निर्व०—एवम्,हन्ति— हिनस्ति,मनोहरं हन्ति— गच्छति,हसति—स्मयत इति वा—(हंसः).पूर्वत्रोभयत्र,
(१)"हन, हिंसागत्योः" धा०अदादिः कौ०पृ० ४३५
(२)"वृतृवदिहनिकमिकषिभ्यःसः" उणा०पा०३कौ०पृ० ६२७
१५ इति, सः. अनिट्.
(३) "नश्च०"इति,नस्यानुस्वारः.अपरत्र,८।३।२४॥कौ०पृ०२०
(४)"हसे,हसने"पचाद्यच्.धा०भ्वादिः कौ०पृ० ४१०
पृषोदरादित्वेन वर्णागमान्नुमि साधुः.अनुस्वारः. ❀
स च, शोभने पर्णे पक्षौ अस्येति,—
२० निरुक्तानुसारात्, सुष्ठु पारं—संसारपारं नयतीति वा;—
(सुपर्णः). पूर्वत्र,

निरु०—१९३हंसावेवंविधो हन्ति गच्छतीति मनोहरम् ॥ १४७॥
(हंसः)
१९४शोभनपर्णत्वात् (सुपर्ण)इति कथ्यते।
२५ संसारपारनयनात् (सुपर्ण)इति वा मतः ॥१४८॥

१ स्वयते इति। २ दिः यथा।

## ( १९५ ) भुजगोत्तमः ।

### ॐ भुजगोत्तमाय नमः ।

भा०—(पद्मनाभोऽमरप्रभुः ).इत्यत्र ( श्लो०॥५॥ना०४८–४९ ) व्यूहपश्चिमोऽनिरुद्धः पद्मनाभ उक्तः. इह प्रादुर्भावप्रथमः पद्मनाभो विवक्ष्यते.— ❋ ५
(भुजगोत्तमः ),—भुजगस्य—शेषस्य, उत्तमः—शेषी, अनन्तभोग-पर्यङ्कशयनः.

निर्व०—(१)" पृ,पालनपूरणयोः"धा० जुहोत्यादिःकौ०पृ०४४९
(२)"धापृवस्यज्यतिभ्योनः"इति,नः.उणा०पा० ३कौ०पृ०६२५१०
( ३ ) " नेट्०"इति, नेट्.गुणःरपरः.७।२।८॥कौ०पृ०५८१
( ४ ) " रषाभ्यां नोणः०"८।४।१॥कौ०पृ०३९
इति,णत्वम्. स्वित्यव्ययपूर्वो बहुव्रीहिः.अन्यत्र,
( ५ ) " णीञ्,प्रापणे"णोनः.धा०भ्वादिः कौ०पृ०४२३
( ६ ) " अन्येष्वपि०"३।२।१०१॥कौ०पृ०५८५ १५
इति,डः. टिलोपः. पृषोदरादित्वात्, पारशब्दे दीर्घस्य ह्रस्वः,ह्रस्वस्य लोपश्च. णत्वम्, पूर्ववत्.
( ७ ) " पार,तीर,कर्मसमाप्तौ"धा०चुरादिः कौ०पृ०४९०
इति,पारयतेः चौरादिकात् कथादेः णिचि,अतो लोपे, ततः,एरचि, णिलोपेच, सिद्धे, सुपूर्वः समासः. ❋ २०
व्यूहपश्चिमोऽनिरुद्धः पद्मनाभः प्रागुक्तः. अथ,प्रादुर्भावप्रथमोऽपि पद्मनाभो वक्ष्यते. तस्य त्रैलोक्यग्रासबृंहितस्य अनन्तभोगपर्यङ्कशयत्वेन ध्येयतया सः भुजगस्य— शेषस्य, उत्तमः—शेषीति—( भुजगोत्तमः ). उच्छब्दात् आतिशायनिकस्तमप्. चर्त्वम्.

निरु०—१९५ प्रादुर्भावेषु प्रथमः पद्मनाभोऽथ उच्यते । २५
भुजगस्योत्तमश्शेषी ( भुजगोत्तम ) उच्यते ॥ १४९ ॥

## (१९६) हिरण्यनाभम्,

ॐ हिरण्यनाभाय नमः।

भा०—(१) " मानसेऽनन्तशयने दिव्यबोधतनुर्विभुः "॥ ध्याने॥
५ इति तद्ध्यानविधौ. आरण्यपर्वणि,

(२) " सुष्वाप भगवान् विष्णुरप्छय्यामेक एवहि। नागस्य भोगे महति, शेषस्यामिततेजसः "॥ वैष्णवे, भा०आ०।

(३) " भोगिशय्यागतश्शेते त्रैलोक्यग्रासबृंहितः " इति.
❀ वि०पु०। (हिरण्यनाभः); ❀ स एव,—

१० निर्व०—(१) " गम्लृ,गतौ "धा०भ्वादिः कौ०पृ० ४३०
(२) " अन्यत्रापि० "इति डः. टिलोपः. ३।२।४८॥ कौ०पृ०५७८
(३) " भुज,पालनाभ्यवहारयोः "धा०रुधादिः कौ०पृ० ४७१
(४) " हलश्च "इति, करणे घञ्. ३।३।१२१॥ कौ०पृ०६६३
(५) " भुजन्युब्जौपाण्युपतापयोः "७।३।६१॥ कौ०पृ०५६३
१५ इति, निपातनाद्गुणत्वमकुत्वंच. आद्गुणः. ❀
स एव, हिरण्यम्—स्वसंकल्पजनिताष्टदलपद्महिरण्मयकर्णिकात्वापन्नमेरुरूपं रुक्ममम्, नाभौ अस्येति—(हिरण्यनाभः).
(१) " णह,बन्धने "णोनः. धा०दिवादिः कौ०पृ० ४५५
(२) " वसिवपि० " इत्यतः इञिति वर्तमाने, उणा०पा० ४ कौ०
२० पृ० ६३८
(३) " नहेर्भश्च "उणा०पा० ४ कौ०पृ० ६३८
इति, इञ् भश्चान्तादेशः. वृद्धिः.
(४) " हर्य,गतिकान्त्योः "धा०भ्वादिः कौ०पृ० ४०४

निरु०—१९६ (हिरण्यनाभ) स्सौन्दर्यनाभिर्यस्येति स स्मृतः।

(१९७) सुतपाः, { ४८ / ३४८ } (१९८) पद्मनाभः,

ॐ सुतपसे नमः । ॐ पद्मनाभाय नमः ।

भा०—( सुतपा ) श्च. तपो—ज्ञानम्, संहृतसाक्षि; तद्ध्याने, ५
(१) " दिव्यबोधतनुर्विभुः " इति. ❀ ॥ ध्याने ॥
( पद्मनाभ ) श्च पूर्ववत्, हिरण्यनाभत्वपद्मनाभत्वे ब्राह्मोक्ते—

निर्व०—(५) " हर्यतेः कन्यन् हिरच " इति, कन्यन्, उणा०पा०५
कौ०पृ० ६४४
धातोः हिरादेशश्च. अगुणः. णत्वम्. बहुव्रीहिः.
(६) " अचूप्रत्यन्वव० " इत्यत्र, ५।४।७५॥ कौ०पृ० १८३ १०
अजिति योगविभागादच् समासान्तः.
(७) " यस्य० " इति, लोपः. ❀ ६।४।१४८॥ कौ०पृ० ५६
तथा, संहृतसाक्षितया शोभनं तपः ज्ञानम्, अस्येति—( सुतपाः ).
(१) " तप, संतापे " आलोचनकर्मेहायम्. धा० भ्वादिः कौ०पृ०४३०
(२) " सर्वधातुभ्यः० " इति, असुन्. स्विति, उणा०पा०४ १५
कौ०पृ० ६४०
अव्ययपूर्वपदस्तसमासः. असन्तलक्षणो दीर्घ इत्यादि. ❀
सएव च, पद्मं नाभौ अस्येति—( पद्मनाभः ),
(१) " णह, बन्धने " नः. ततः, धा० दिवादिः कौ०पृ०४५५
(२) " नहेः० " उणा०पा० ४ कौ०पृ०६३८ २०
इति, इञि, भकारे चान्तादेशे, नाभिशब्दो व्युत्पादितः.

निरु०—१९७ तपोबुद्धिस्सैव तनुः (सुतपा) यस्य स स्मृतः॥१५०॥
१९८ पार्थिवं भूरिपद्मं तु नाभावटदलं महत् ।
यस्य हेममयी दिव्या कर्णिका मेरुरुच्यते ॥ १५१ ॥
यस्य नाभौ तदुत्पत्तिः ( पद्मनाभः ) स उच्यते । २५

{१९९ / ७०} प्रजापतिः, ॥

ॐ प्रजापतये नमः ।

भा०— (१) " कदाचित्तस्य सुप्तस्य नाभ्यां कामादजायत। दिव्य-
५ मष्टदलं भूरि पङ्कजं पार्थिवं महत् ॥ यस्य हेममयी दिव्या कर्णिका
मेरुरुच्यते " ॥ इति. ❋
तत्पद्मोद्भवप्रभृतीनाम्—
(प्रजा—)--नाम्, (पतिः) नायकः. नैमित्तिकसृष्टिप्रलयविपर्यं चैत-
द्रष्टव्यम्. ❋
१० अथ नृसिंहावतारः.—

निर्व०— (३) " पद, गतौ " धा०दिवादिः कौ०पृ०४५५
(४) " अर्तिस्तुसु०"इत्यादिना मन्. अनिट्. उणा० पा० १कौ०
पृ०६१६
ततः, पूर्ववदजादि. ❋
१५ सएव, प्रजानाम्— तत्पद्मोद्भवप्रमुखानाम्, पतिः— नायकः इति—
(प्रजापतिः).
(१) " पा, रक्षणे " ❋ पातेर्डतिः. टेर्लोपः. धा० अदादिः कौ०
पृ०४४३
(२) " जनी, प्रादुर्भावे " प्रपूर्वः.धा०दिवादिः कौ०पृ०४५४
२० (३) " उपसर्गेच संज्ञायाम् " ३।२।९९॥कौ०पृ०५८५
इति, डः. टिलोपः. अतष्टाप्. दीर्घः. नैमित्तिकसृष्टिप्रलयविपर्यं
चैतत्. ❋
अथ, नृसिंहावतारः. मृत्युमृत्युतया मृत्युविरोधीति—

निरु०— १९९ नैमित्तिके तु ये सृष्टाः प्रजा ब्रह्ममुखास्तथा॥१५२॥
२५ तेषां चैव पतिस्स्वामी (प्रजापति) रिहोच्यते ।

श्लो० ॥ २२ ॥ (२००) अमृत्युम्,

ॐ अमृत्यवे नमः ।

ना०— (अमृत्युः). मृत्युविरोधी, मृत्युमृत्युत्वात्. ❀

इति श्रीहरितकुलतिलक— श्रीवत्साङ्काचार्यसूनोः, ५

श्रीरङ्गराज— श्रीपराशरभट्टस्य कृतौ,

श्रीविष्णुसहस्रनामविवरणे,

भगवद्गुणदर्पणे,

द्वितीयं शतकं समाप्तम्.

निर्व०— (अमृत्युः). १०

(१) "मृङ्, प्राणत्यागे" धा० तुदादिः कौ० पृ० ४६८

(२) "भुजि मृङ्भ्यां युक्त्युकौ" उणा० पा० ३ कौ० पृ० ६२६

इति, त्युक्. प्रागुक्तरीत्या न योरनः. अगुणः. अनिट्. नञ्— तत्पुरुषः. नलोपः. ❀

इति कुशिककुलतिलक श्रीवेङ्कटेश्वर-महाचार्यवर्यात्मज- १५

वरददेशिकतनयवरदगुरुवरसूनुवरदार्यसूरिविरचिते,

श्रीपराशरभट्टार्यभाषित-

श्रीमद्विष्णुसहस्रनामभाष्यानुगे,

भगवन्नामसहस्रनिर्वचने,

द्वितीयं शतकं संपूर्णम्. २०

निरु०— २०० नारसिंहमथ स्तौति सर्वमृत्युनिवारणम् ॥ १५३ ॥

मृत्योर्विरोधिरूपो यो मृत्युमृत्युस्वरूपनः ।

(अमृत्यु) रिति तं प्राहुः सन्मार्गो मृत्युनाशकः ॥ १५४ ॥

# अथ तृतीयशतकप्रारम्भः।

{२०१ / ८७७} सर्वदृक्,

ॐ सर्वदृशे नमः।

५ भा०— सएव, सर्वान्— अनुकूलप्रतिकूलतटस्थान्, यथार्हं नियन्तुं पश्यतीति—
(सर्वदृक्).
(१) "दृशेश्चेति वक्तव्यम्" इति, क्विन्.
❀ क्विन्प्रत्ययस्य कुः. सहि सर्वतो मुखः। ❀

१० निर्व०— सएव सर्वतोमुखः, सर्वान्— अनुकूलप्रतिकूलतटस्थान्, यथार्हं नियन्तुं पश्यतीति वा,—
सर्वस्मिन् दृगस्येति वा,—(सर्वदृक्).
(१) "दृशिर्, प्रेक्षणे" पूर्वत्र, धा०भ्वादिः कौ०पृ०४३०
(२) "दृशेश्चेतिवक्तव्यम्" इति, क्विन्.

१५ यदि तु, नायं कर्मणि विधिः, तदा, प्रकृते अर्थप्रदर्शनार्थ-स्तथा विग्रहः. षष्ठीसमासोयम्. अतः, न कर्मण्यण्.
इदानीमयं योजनान्तरेपि प्रत्ययः, तत्रच समासो वक्ष्यते.
अपरत्र तथा यदि चेन्न दृश्यते; तदा, पूर्वत्रापि वा,
(३) "क्विप्च" इति, क्विप्. ३।२।७६॥कौ०पृ०५८१

२० पूर्वयोजनायां क्विप्यपि प्राग्वदेव समासः.
अन्यत्र बहुव्रीहिः. अस्ति हि व्यधिकरणानामपि सः,
(४) "सप्तमीविशेषणे बहुव्रीहौ" २।२।३५॥कौ०पृ०१७३
इत्यत्र, सप्तम्याः प्राक्प्रयोगविधानादित्यादि. तत्र,

निरु०— २०१ अनुकूलान् तटस्थांश्च प्रतिकूलानपि स्वयम्।
२५ नियन्तुं च यथायोग्यं यः पश्यति स (सर्वदृक्)॥ १५५॥

{२०२ / ४८३} सिंहः,

ॐ सिंहाय नमः ।

भा०—क एवम् ?—
( सिंहः ),—महानृसिंहसंहननः.
( १ ) " सिचेस्संज्ञायाम्०"इति,उणा०पा०५कौ०पृ०६४४
कः.नुम्.हौच. ❀

निर्व०— (५) " क्विन्प्रत्ययस्य०"८।२।६२॥कौ०पृ०६८
इति,कुत्वस्यासिद्धत्वात्,
( ६ ) "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः"इति,८।२।३६॥कौ०पृ० ५१
शस्य षः.तस्य,
(७)"झलां जशोन्ते"इति,जश्त्वेन डः. तस्य,८।२।३९॥कौ०पृ०१४
( ८ ) " क्विन्प्रत्ययस्यकुः"इति,८।२।६२॥कौ०पृ०६८
तत्रच बहुव्रीह्याश्रयणात् क्विप्यपि वा कुत्वेन गः. तस्य,
(९)"वावसाने"इति चर्त्वेन कः. नच,८।४।५६॥कौ०पृ०३२
(१०)"आसर्वनाम्नः"इति, दृक्दृशवतुपु ६।३।९१॥कौ०पृ०७९
विधीयमानमात्वम्; यतः साहचर्यात् तत्र,
(११)' त्यदादिषुदृशोऽनालोचनेकञ्च"३।२।६०॥कौ०पृ०७९
इति,कञनुशिष्टक्विन्नन्तदृक्शब्दस्यैव ग्रहणम्; अतः,
नोभयत्रापि तत्. ❀

क एवम्, रिपुद्विपनिष्पेषभीषणमहानृसिंहसंहननतया,
सिञ्चति, हिनस्तीति वा—( सिंहः ).पूर्वत्र,
( १ ) " षिच,क्षरणे"षस्सः.धा०तुदादिः कौ०पृ०४७०
( २ ) " सिचेस्संज्ञायांहनुमौकश्च" उणा०पा०५कौ०पृ०६४४

निरु०—२०२ रिपुद्विपानां निष्पेषभीषणः( सिंह ) उच्यते ।

( २०३ ) संधाता, ( २०४ ) संधिमान्,

ॐ संधात्रे नमः। ॐ संधिमते नमः।

५ भा०–रिपुद्विपनिष्पेषभीषणोऽपि–
( संधाता ),–प्रणेयानां प्रह्लादप्रभृतीनां संश्लेषयिता. ❋
स च, तैस्संधिर्नित्योऽस्येति–
( संधिमान् ). नित्ययोगे मतुप्. ❋

निर्व०–इति, कः, तत्संनियोगेन चस्य हः, नुम् च. अगुणः नुमो नस्या-
१० नुस्वारः. अपरत्र,
( ३ ) "हिसि, हिंसायाम्" पचाद्यच्. धा०रुधादिः कौ०पृ० ४७१
❋ पृषोदरादित्वात् व्यत्यये सिंहिः इदित्वात् नुम्. नस्यानुस्वारः. ❋
एवम्, भीषणोपि प्रणेयान् सन्दधाति–संश्लेषयतीति–(सन्धाता).
( १ ) "डुधाञ्, धारणपोषणयोः" संपूर्वः. धा०जुहोत्यादिः कौ०
१५ पृ० ४५१
(२) "ण्वुल्तृचौ" इति, तृच्. अनिट्. ३।१।१३३॥कौ०पृ०५६६
अनङादि. समो मोऽनुस्वारः. पाक्षिकः परसवर्णः. ❋
सच, तैः संधिः नित्योस्येति–( संधिमान् ). प्राग्वत् धातुः; संपूर्वः.
प्राग्वदेवानुस्वारपरसवर्णौ.
२० ( १ ) "उपसर्गे घोः किः" इति, किः. ३।३।९२॥कौ०पृ० ६५८
आतो लोपः. इत्थं निर्व्यूढात् संधिशब्दात्, नित्ययोगे मतुप्.
उगित्वात् नुम्.
( २ ) "अत्वसन्तस्य०" इति, दीर्घ इत्यादि. ❋ ६।४।१४॥कौ०
पृ०७८

२५ निर०–२०३ प्रह्लादाद्यैश्च ( संधाता ) सश्लेषकरणाच्च सः ॥१५६॥
२०४ प्रह्लादाद्यैर्नित्यसंधिर्यस्य स्यात् ( संधिमान् ) स्मृतः।

(२०५) स्थिरः, {९६ / ५२४} (२०६) अजो,

ॐ स्थिराय नमः । ॐ अजाय नमः ।

०– तत्सन्धाने तदपचारदुर्विचाल्यत्वात्– ५
स्थिरः ).
) "अजिरशिशिर०" इत्यादिना किरच् प्रत्ययः,
त्यते. उणा० पा० १कौ०पृ०६१२
तद्म् " इति हि तन्मन्त्रवर्णः. ❀ ॥ मन्त्रे ॥
असंभवत्वेन इतरवन्न जायत इति– १०
जः ).
) "अन्येष्वपि दृश्यते" इति, डः. ३।२।१०१॥कौ०
५८५
) "न जायते जनिभ्यां यदजस्तस्मादनेकजित्" इति. ❀

०–तत्संधाने तदपचारदुर्विचाल्यो भद्रस्तिष्ठतीति–(स्थिरः). १५
) "ष्ठा, गतिनिवृत्तौ" सत्वम्, अयम्, धा०भ्वादिः कौ०
४२४
"अजिरशिशिरशिथिलस्थिर०" उणा०पा०१कौ०पृ०६१२
गादिना, किरजन्तो निपात्यते. आल्लोपः. ❀
असंभवतया इतरवत् जनयितुः न जायत इति–( अजः ). २०
) "जनी, प्रादुर्भावे" धा० दिवादिः कौ०पृ०४५४
) "अन्येष्वपि दृश्यते" ३।२।१०१॥कौ०पृ०५८५
, डः. टिलोपः. नञ्तत्पुरुषः. नलोपः. ❀

०– २०५ अपचारेप्यचाल्यत्वात्संधाने(स्थिर)उच्यते॥१५७॥
२०६ स्तम्भजत्वादितरवन्न जातत्वा ( दजः ) स्मृतः । २५

१ दनीकजित् ।

## (२०७) दुर्मर्षणः, (२०८) शास्ता,

### ॐ दुर्मर्षणाय नमः । ॐ शास्त्रे नमः ।

५ भा०— प्रतीपैः दुष्करं— मर्षणमस्येति—
(दुर्मर्षणः).
(१) " रथाङ्गशङ्खधातारं ब्रह्ममूर्तिं सुभीषणम् " ॥ ध्याने ॥
इति, तद्ध्यानम्. ❀
एवम्, सर्वकण्टकं साधु शास्तीति—
१० (शास्ता), तत्साधुकारिणि, तृन्.
(१) " तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ " उणा०पा०
२ कौ०पृ०६२३

निर्व०— सुभीषणतया प्रतीपैः दुष्करं मर्षणम्— धर्षणम्, अस्येति—
तेषु वा, तथा मर्षणम्— सहनं वा—
१५ (दुर्मर्षणः).
(१) " मृष, तितिक्षायाम् " धा०दिवादिः कौ०पृ०४५५
आद्ये धर्षणकर्मेहायम्. अन्यत्र तु यथा श्रुतः.
भावे ल्युट्. योरनः. गुणः रपरः. णत्वम्. दुरित्यव्ययपूर्वो बहुव्रीहिः.
(२) " अचोरहाभ्यां द्वे " इति वा, ८।४।४६॥कौ०पृ०१०
२० (३) " यणोमयः० " इति वा. ८।२।२३॥कौ०पृ०९
पाक्षिकं मस्य द्वित्वम्.
(४) " हलोयमां यमिलोपः " इतिच, ८।४।६४॥कौ०पृ०१०
पाक्षिकः प्रथमलोपः. ❀
एवम्, सर्वकण्टकं साधु शास्तीति—
२५ (शास्ता).

निरु०— २०७ दुष्करं मर्षणं यस्य परै (दुर्मर्षणः) स्मृतः॥१५८॥
२०८ समस्तान् कण्टकान् शास्तीत्यतः (शास्त) ति कीर्त्यते ।

(२०९) विश्रुतात्मा,

ॐ विश्रुतात्मने नमः।

भा०—इत्यनिट्.यथा,
(२) " निदानवित्रासितदानवः" वि०पु०। ५
(३) " द्रवन्ति दैत्याः " इति. ❀ वि०पु०।
( विश्रुतात्मा ).—स एव सर्वदा सर्वत्र सर्वै-
र्विस्मयेन विश्रुतः सैंहापदानस्वभावः. यथा,
(१) " अशेषदेवेशनरेश्वरेश्वरैः" इत्यादि. ❀
स एव सुरारिं हिरण्यकशिपुमुरोविदारं हतवानिति— १०

निर्व०—(१) "शासु, अनुशिष्टौ"तत्साधुकारिणि तुन्.धा०अ-
दादिः कौ०पृ० ४४७
" सागरं तर्तुकामस्य " इत्यादिवत्,
(२)"आनिलोट्"इत्यत्र निलोडित्येव सिद्धे,८।४।१६॥कौ०पृ०३७६
आनिग्रहणात् ज्ञापकात्, आगमशास्त्रानित्यतया इटोऽभावात्, १५
(३) "तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ " उणा०
पा०२कौ०पृ० ६२३
इति तृनोनुवादाद्वा नेट्. तत एव वा
अर्थविशेषानादरेण स्वतन्त्रौ तृनतृचौ अनिटौ. अनङादि. ❀
स एव, सर्वत्र सर्वदा सर्वैरपि विश्रुतः—विस्मयेनाकर्णितः, २०
आत्मा—सैंहापदानस्वभावः, अस्येति—
( विश्रुतात्मा ).व्युदपादि ह्यात्मशब्दः ?
(१) " श्रु,श्रवणे"विपूर्वः. धा०भ्वादिः कौ०पृ० ४२६
कर्मणि क्तः.अगुणः.अनिट्.दीर्घः.ततो नान्तलक्षणो दीर्घ इत्यादि. ❀
स एवच, सुरारिं—देवशत्रुम् उरोविदारम्, हतवानिति— २५

निरु०—२०९ विस्मयेन श्रुतं देवैः सैंहं यस्यापदानकम्॥१५९॥
शीलं ते ( विश्रुतात्मा ) स महाकीर्तिमदो मनुः।

(२१०)सुरारिहा,॥श्लो०॥ २३॥ (२११) गुरुर्गुरुतमो,

ॐ सुरारिघ्ने नमः । ॐ गुरुतमाय गुरवे नमः ।

५ ज्ञा०–( सुरारिहा ). यथा,
(१) "सत्सत्त्वकरजश्रेणीदीर्भिन्नोत्रयपाणिना । संयच्छते यथा सम्यक् भयानां सोऽत्रयं परम्" ॥ ध्याने ॥
इति तद्ध्याने. ❀
अथ मत्स्यावतारः. अविशेषविद्यापरमाचार्यकः–( गुरुः ).
१० (१) "स पूर्वेषामपि गुरुः" इति हैरण्यगर्भाः. ॥ हैर० ॥

निर्व०–( सुरारिहा ).
(१) "हन,हिंसायाम्"धा०अदादिः कौ०पृ० ४३५
उपपदनियमस्य प्रायिकतया,
(२) "ब्रह्मभ्रूण०"इत्यादिना, क्विप्. ३।२।८७॥कौ०पृ०५८४
१५ (३) "क्विप्च"इति,सार्वकालिको वा.३।२।७६॥कौ०पृ०५८१
अथवा,विग्रहभेदे अन्यथा चापि प्रागुक्तः.
(४) "ऋ,गतौ" धा०जुहोत्यादिः कौ०पृ० ४५२
(५) "अच इः"इति,इः.गुणः रपरः. उणा०पा०४कौ०पृ०६३८
सुरशब्दो व्युत्पादितः. दीर्घः. ततो नान्तलक्षणो दीर्घ इत्यादि. ❀
२० अथ मत्स्यावतारः. स चायम, गुरुतमः–गरीयान, गुरुः–अशेषविद्यापरमाचार्य इति,–
( गुरुर्गुरुतमः ).एकन्नाम.

निरु०–२१० हिरण्यकशिपोर्हन्ना कीर्त्यते स (सुरारिहा) ॥१६०॥
२११ अथ मत्स्यावतारस्य प्रस्तावस्तु प्रतन्यते ।
२५ अशेषविद्याचार्यत्वात् स्मृतो ( गुरुतमो गुरुः) ॥ १६१ ॥

१ [1] धिया सम्यग्भाविनाम् । [2] नार्यकेण गुरुः ।

{२१२
६२२} धाम,

ॐ धाम्ने नमः ।

भा०—(२)"कृग्रोरुच"इति,कुप्रत्ययः,उणा०पा१कौ०पृ०६१०
,उकारश्चान्तादेशः. तस्यैव विशेषणम्, ५
(गुरुतमः),न स्वतन्त्रनामत्वमस्य.
(३) "पूज्यश्च गुरुर्गरीयान्" इति. ❀ गी०११–४३।
संहारनश्वरचराचरबीजाधारनौकर्णधारत्वेन तदाश्रयत्वात्,–
(धाम).धाम्नः,
(१) "सर्वधातुभ्यो मनिन्" इति, मनिन् प्रत्ययः . ❀ उणा० १०
पा०४कौ०पृ०६३९

निर्व०– (१) " गृ, निगरणे"धा०तुदादिः कौ०पृ०४६८
(२) " कुर्भ्रश्च"इति,प्रकरणे,उणा०पा०१कौ०पृ०६१०
(३) " कृग्रोरुच"इति,कुः,उणा०पा०१कौ०पृ०६१०
उकारश्चान्तादेशः. रपरत्वम्.कित्त्वान्न गुणः.विशेषणे तु आतिशा- १५
यनिकस्तमप् विशेषः. ❀
संहारनश्वरचराचरबीजाधारनौकर्णधारतया तस्य धाम–स्थानमिति–
(धाम).
(१)" डुधाञ्,धारणपोषणयोः"धा०जुहोत्यादिःकौ०पृ०४५१
(२)" सर्वधातुभ्यो मनिन्" उणा०पा०४कौ०पृ०६३९ २०
निहनत्वान्नेट्.
(३) " लिङ्गमशिष्यम्"इत्यादि. ❀ ॥ महाभाष्ये ॥

निरु०–१२२चराचराधारतया (धामे) ति परिचक्षते ।

{१०७ / ८७३} (२१३)सत्यः,(२१४)सत्यपराक्रमः,।(२१५)निमिषो,

५ ॐ सत्यायनमः। ॐ सत्यपराक्रमायनमः। ॐनिमिषाय नमः।

भा०—मन्वादिषु तत्कालसमाश्रितेषु सत्सु साधुरिति—
( सत्यः ). ❀
तेषु, सत्यः —अकैतवः, पराक्रमः— वृत्तिः, अस्येति—
( सत्यपराक्रमः ). ❀
१० तद्विरोधिषु निमिषति— न कटाक्षयतीति—( निमिषः ). ❀

निर्व०—सत्सु तत्कालसमाश्रितेषु मन्वादिषु साधुरिति—
( सत्यः ). अस्तेश्शतरि सच्छब्दो व्युत्पादितः. ततः,
( १ ) " तत्र साधुः" इति, यत्. ४।४।९८॥कौ०पृ०२८९
भत्वाज्जश्त्वाभावः. ❀
१५ तेषु सत्यः— अकैतवः, पराक्रमः— वृत्तिः, अस्येति—
( सत्यपराक्रमः ).
(१)"क्रमु,पादविक्षेपे" परापूर्वः. भावे घञ्. धा०भ्वादिः कौ०पृ०४०१
( २ ) " नोदात्तोपदेशस्य०" ७।३।३४॥कौ०पृ०५४१
इत्यादिना न वृद्धिः. प्रागिव व्युत्पादितात् सत्यशब्दात्,
२० ( ३ ) " दिगादिभ्यो यत्" इति, ४।३।५४॥कौ०पृ०२६१
भवार्थे यत्. अन्यत् प्राग्वत्. ❀
तद्विरोधिषु, निमिषति— निमीलिताक्षो भवति तान्न कटाक्षयतीति—
( निमिषः ).

निरु०—२१३मन्वादिष्वपि साधुत्वात् (सत्य)इत्यभिधीयते।।१६२॥
२५ २१४वृत्तिर्ह्यकैतवा यस्य स स्यात् ( सत्यपराक्रमः )।
२१५योऽसौ सतान्नेक्षते हि ( निमिषः ) स विरोधिनः।।१६३॥

## (२१६) ऽनिमिषस्, (२१७) स्रग्वी,

ॐ अनिमिषाय नमः। ॐ स्रग्विणे नमः।

भा०—क एवम् ?—
(अनिमिषः).सत्सु न निमिषति जागर्तीति—
(अनिमिषः). दिव्यमीनतनुः. ❋
तिर्यक्त्वेपि परत्वसूचिनी वैजयन्ती स्रगस्य नित्ययोगिनीति—(स्रग्वी).
(१)"अस्मायामेधास्रजोविनिः"इति,विनिः. ❋५।२।१२१॥
कौ०पृ० ३३१ १०

निर्व०—(१) " मिष,स्पर्धायाम् "निपूर्वः.धा०तुदिःकौ॰पृ० ४६६
(२) " तुदादिभ्यो णल्कौ"इति, कः.
इगुपधलक्षणो वा, कित्वान्न गुणः. ❋
क एवम्; दिव्यमीनतनुः. सत्सु सततजागरूकतया निमिषो नेति—
(अनिमिषः). पूर्ववत् धातुरुपसृष्टः. नञ्समासः, १५
नञो नलोपश्च विशेषः. ❋
तिर्यक्त्वेपि परत्वसूचिनी स्रक्—वैजयन्ती माला अस्यास्ति नित्यमिति—(स्रग्वी).
(१) " सृज,विसर्गे"धा०दिवादिः कौ०पृ० ४५६
(२) "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ३।२।५९॥ २०
कौ०पृ० ६७
इति.क्विन्, अमागमश्च निपात्यते.
(३) " मिदचोन्त्यात्परः"इति, मित्वादन्त्यादचः परः यण्,
ऋतोरः १।१।४७॥ कौ०पृ० ७
एवं मिद्धात् स्रक्शब्दात्, २५

निरु०—२१६ सद्रक्षणे जागरूकः स्मृतो (ह्यनिमिष) श्च सः।
२१७ परत्वसूचिनी या च वैजयन्तीति कीर्तिता ॥ १६४ ॥
तया स्रजा नित्ययोगात् (स्रग्वी) ति परिकीर्त्यते।

{२१८ / ८७९} वाचस्पतिर्,

ॐ वाचस्पतये नमः ।

भा०— सएव श्रीमन्मात्स्यपुराणे वेदोपबृंहणात्—
५ (वाचस्पतिः). षष्ठ्या अलुक्.
(१)"षष्ठ्याःपतिपुत्र०"इत्यादिना सत्वम्.८।३।५३॥कौ०पृ०७१७

निर्व०—(४)"अस्मायामेधास्रजोविनिः" ५।२।१२१॥कौ०पृ०३३१
इति मत्वर्थे नित्ययोगे विनिः.
(५) " किन्प्रत्ययस्य कुः " इति कुत्वेन जस्य गः. ८।२।६२॥
१० कौ०पृ०६८
(६) " सौच" इति, इन्नन्तलक्षणो दीर्घ इत्यादि. ※६।४।१३॥
कौ०पृ०६४
सएव, वाचः-वेदवाचः, मात्स्यपुराणेनोपबृंहणात्, पतिः--स्वामी, इति—
(वाचस्पतिः).
१५ (१) " पा, रक्षणे " धा० अदादिः कौ०पृ०४४३
(२) " पातेर्डतिः"इति,डतिः.टिलोपः.उणा०पा०५कौ०पृ०६४२
(३) " वच, परिभाषणे " धा०अदा० कौ०पृ०४४३
(४) "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणाम् दीर्घोऽसंप्रसारणंच "
इति,क्विप्,दीर्घः, असंप्रसारणं च. अतः, ३।२।१७८॥कौ०पृ०६०७
२० (५) " वचिस्वपियजादीनांकिति"इति,६।१।१५॥कौ०पृ०४३२
न संप्रसारणम्. ततः, इन्दुभिन्नं पदम् समस्तं वा.लुकि प्राप्ते वाक्शब्दा-
दनाक्रोशेपि षष्ठ्या अलुक् छान्दसः. पञ्चमो ह्ययं वेदः; उभयत्रापि,
(६) " षष्ठ्याः पतिपुत्रपृष्ठपारपदपयःपोषेषुच " ६।३।५३॥कौ०
पृ०७१७ इति,षष्ठीविसर्गस्यापि छान्दसः सकारः. आद्ये,
२५ (७) " षष्ठीयुक्तश्छन्दसि वा" १।४।९॥कौ०पृ०६७८
इति, वा विस्वात् पक्षे तत्कार्यम्. ※

निरु०— २१८ वेदोपबृंहणत्वाद्धि (वाचस्पति) रिति श्रुतः ॥१६५॥

१ श्रीमान्मात्स्य ।

(२१९) उदारधीः, ॥

ॐ उदारधिये नमः।

श्ला०—एवं,सर्वोपजीव्यसार्वज्ञ्यात्—
(उदारधीः). ❀ ५

निर्व०—एवम्, सर्वोपजीव्यत्वात् उदारा,धीः—सार्वज्ञ्यलक्षणा बुद्धिः, अस्येति—(उदारधीः).

(१) "ध्यै, चिन्तायाम्" धा०भ्वादिः कौ०पृ०४२४

(२) "आदेचः०"इति,आत्वम्.६।१।४५।।कौ०पृ०४२३

(३) "इग्यणःसंप्रसारणम्"इति,१।१।४५।।कौ०पृ०५९ १०
इति, संप्रसारणसंज्ञायाम्,

(४) "ध्यायतेस्संप्रसारणंच" इति, यकारस्येकारः. ३।२।३।। कौ०पृ०५७०

(५) "क्विप्च"३।२।७६।।कौ०पृ०५८१

(६) "संप्रसारणाच" इति,६।१।१०८।।कौ०पृ०६० १५
पूर्वरूपमेकादेशः.

(७) "अन्येभ्योपि दृश्यते" ३।२।१७८।।कौ०पृ०६०७
इत्यत्र दृशिग्रहणात् विध्यन्तरोपसंग्रहार्थात् दीर्घः.

(८) "उन्दी, क्लेदने" धा०रुधादिः कौ०पृ०४७२

(९)"उदारादयश्च"इति, आरन्. उणादिःपा०३कौ०पृ०६३१ २०
इह नलोपः, अगुणत्वं च निपात्यते. पुंवद्भावः. स्यादेतत्,

(१०) "यूस्त्र्याख्यौनदी" इत्यत्र,१।४।३।।कौ०पृ०४४

(११) "प्रथमलिङ्गग्रहणं च कर्तव्यम्" १।४।३।।कौ०पृ०४४
इत्युपसंख्यानात्,

(१२)"नद्यृतश्च"इति,नदीलक्षणःकप्.५।४।१५३।।कौ०पृ०१६१ २५

निरु०—२१९सर्वोपजीव्यसार्वज्ञ्याडुच्यते स (उदारधीः)।

श्लो० ॥ २४ ॥ (२२०) अग्रणीर्,

ॐ अग्रण्ये नमः ।

भा०—तेन प्रकारेण, अग्रिमं पश्चिमं पदं नयतीति—
५ (अग्रणीः). ❋
तत्रच, नित्यसिद्धानां ग्रामं समाजं नयतीति—

निर्व०—प्राप्नोति. नैतदस्ति, यतः, समासान्तो विधिरनित्यः.
तदनित्यत्वं च स्फुटतरमुपपादयिष्यते. ❋
तेन प्रकारेण अग्रम्—अग्रिमं पश्चिमं पदम्, नयतीति—(अग्रणीः).
१० (१) "णीञ्, प्रापणे" णोनः. धा० भ्वादिः कौ०पृ०४२३
(२) "सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेपि क्विप्"
इत्यनेन योगेन,३।२।६१॥ कौ०पृ०५८०
(३) "क्विप्च" ३।२।७६॥कौ०पृ०५८१
इत्यस्य प्रपञ्चार्थेन अनुपसर्गेपि सुप्युपदे क्विप्.
१५ (४) "अक अग, कुटिलायां गतौ" द्वितीयोत्र, धा० भ्वादिः
कौ०पृ०४१५
(५)"ऋज्रेन्द्राग्र०"इत्यादिना रन्नन्तो, उणा० पा०२कौ०पृ०६२०
निपात्यते. यदितु अगेः केवलगतिकर्मणः इदितोपि अत्र ग्रहणम्;
तदा, इदित्त्वात् नुमो नलोपोपि निपात्यः.
२० (६) "नेड्०" इति, नेट्. एवमग्रेपि. ततः, ७।२।८॥
कौ०पृ० ५८१
(७)"अग्रग्रामाभ्यां नयतेर्णो वक्तव्यः"८।४।३९॥कौ०पृ०१५३
इति, णत्वम्. ❋
तत्रच, नित्यसिद्धानां ग्रामं समाजं नयतीति—

२५ निरु०—२२० महोदारतया भक्तानामग्रिमं पश्चिमं पदम् ॥ १६६ ॥
नयती (त्यग्रणीः) प्रोक्तो भक्तमोक्षप्रदो मनुः ।

(२२१) ग्रामणीर्, {२२ / १८०} (२२२) श्रीमान्,
(२२३) न्यायो,

ॐ ग्रामण्ये नमः । ॐ श्रीमते नमः । ॐ न्यायाय नमः । ५

भा०—(ग्रामणीः).
(१) "सत्सूद्विष०" इत्यादिना क्विप्. ३।२।६१॥ कौ०पृ०५८०
(२) "अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्" ८।४।३९॥ कौ०पृ० १५३
इति, णत्वम्. ❀
(१) "मत्स्यः कमललोचनः" इति, स्पष्टपरविभूतिः— १०
(श्रीमान्). ❀
एवम्, अभ्रेपहेतुः युक्तकारीति—(न्यायः).

निर्व०—(ग्रामणीः). पूर्ववदेव धातुः, प्रत्ययश्च.
(१) "ग्राम, आमन्त्रणे" धा० चुरा० कौ०पृ० ४८९
चुरादौ कथादिः; णिच्. अतो लोपः. एरच्. णिलोपः. १५
णत्वं च प्राग्वत्. ❀
एवम्, श्रीः—कमललोचनतया स्पष्टपरविभूतिः, अस्यास्तीति—
(श्रीमान्).
(१) "श्रिञ्, सेवायाम्" धा० भ्वादिः कौ०पृ० ४२२
(२) "क्विब्वचि०" ३।२।१७८॥ कौ०पृ० ६०७ २०
इत्यादिना क्विपि दीर्घे च निष्पन्नात् श्रीशब्दात् मतुप्.
अत्वन्तत्वाद्दीर्घः. नुमित्यादि. ❀
एवम्, न्यायः—अभ्रेपहेतुर्युक्तकारीति—(न्यायः).

निरु०—२२१ ग्रामं समाजं सूरीणां नयति (ग्रामणी) श्च यः॥१६७॥
२२२ मत्स्यरूपावनोर्गेपि (श्रीमान्) कमलेक्षनः । २:
२२३ (न्यायो) हि युक्तकारित्वाद्भक्तेष्वेव विशेषतः॥१६८॥

## ( २२४ ) नेता, ( २२५ ) समीरणः,

ॐ नेत्रे नमः । ॐ समीरणाय नमः ।

भा०—( १ ) " परिन्योर्नीणोः० "इत्यादिना घञ्. ❋ ३।३।३७॥
५ कौ०पृ० ६५०
नियुक्तं करोतीति—
( नेता ).निर्वाहशीलः;न्याय्यं हि निमज्ज्य निस्तारणं महात्मनाम्! ❋
एवमिष्टचेष्टः—( समीरणः ).
( १ ) " ईर,गतौ कम्पनेच" ❋ धा०अदा० कौ०पृ० ४३७
१० चलनशब्दार्थादकर्मकाद्युच्.एवम्, पवनादयोऽपि. उक्तार्थेषु,

निर्व०—( १ ) " इण् ,गतौ "निपूर्वः.धा०अदादिः कौ०पृ०४४१
( २ ) " परिन्योर्नीणोर्द्यूताभ्रेषयोः" ३।३।३७॥ कौ०पृ० ६५०
इति,अभ्रेषे घञ्. वृद्धिः. आय्.नेरिकारस्य यण् यकारः. ❋
एवम्, नियुक्तकारी, नयति—तच्छीलो निर्वहतीति—( नेता ).
१५ ( १ ) " णीञ् , प्रापणे" धा०भ्वादिः कौ०पृ० ४२३
णोनः. ताच्छीलिकस्तृन्. गुणः. अनिट्. अनङित्यादि. ❋
इत्थम् , समीर्ते—इष्टचेष्टो भवतीति—( समीरणः ).
( १ ) " ईर,गतौ कम्पनेच" सम्पूर्वः. धा०अदादिः कौ०पृ०४३७
( २ ) "चलनशब्दार्थादकर्मकाद्युच्" ३।२।१४८॥ कौ०पृ०६०३
२० इति, चलनार्थाकर्मकात् युच्. योरनः.
( ३ )"अट्कुप्वाङ्० "इति, णत्वम्. ❋८।४।२॥ कौ०पृ०३२

निरु०—२२४ भक्तैर्नियुक्तं यत् कर्म ( नेता ) तत्करणादपि ।
२२५ भक्तैः प्रेरितत्वात् ( समीरण ) उदाहृतः ॥ १६९ ॥

(२२६) सहस्रमूर्धा, (२२७) (विश्वात्मा,) ❀
(२२८) सहस्राक्षस्, (२२९) सहस्रपात्, ॥

ॐ सहस्रमूर्ध्ने नमः। ॐ विश्वात्मने नमः। ॐ सहस्राक्षाय नमः। ५
ॐ सहस्रपदे नमः।

भा०-(२) "कृत्वा मीनमयीं सद्यः प्रविवेश रसातलम्। वेदमूर्तिस्ततो वेदानानिन्ये ब्रह्मणोन्तिकम्" ॥ तद्ध्यानम्.
(३) "ज्ञानादिगुणवृन्देन पक्षभूतेन भूषितम्। स्वोत्थब्रह्म भेदं शृङ्ग निःसृतेन विराजितम्" १०
(४) "कल्पावसानसमये वहन्तं चैव चिन्तयेत्। नौरूपां विततां क्षोणीं प्रजापतिगुणान्विताम्"
(५) "मुक्ताफलनिभेनैव वपुषा निर्मलेन च। अनिमीलितनेत्रश्च मीनात्मा यतवाक् तथा" ॥ इति. ❀
अथ, एतद्विद्यावतारोज्जीवितासु पुरुषसूक्ताद्यासु, परविद्यासु, यथा- १५
प्रतिपाद्यते; तथाऽनुरूपाणि नामानि सहस्रमूर्धादीनि-
(सहस्रमूर्धा).-मूर्धा-अक्षि-पादाः-ज्ञानकर्मोपकरणोपलक्षणार्थाः. (सहस्र) शब्दश्च-तेषामसंख्येयत्वपरः.

निर्य०-अथ, एतद्विद्यावतारोज्जीवितासु पुरुषसूक्ताद्यासु परविद्यासु यथाप्रतिपाद्यते; तथाऽनुरूपाणि नामानि प्रस्तूयन्ते. सहस्रम्- २०
असंख्येयाः, मूर्धानः शिरांसि, अस्येति-(सहस्रमूर्धा).

निरु०-२२६ सहस्रशब्दो ह्यानन्त्यलक्षकस्समुदाहृतः।
(सहस्रमूर्धा) सोनन्तशिरस्कः कीर्त्यते ततः ॥ १७० ॥
(सहस्रमूर्धा) स स्याद्वा पुंसूक्ताद्युक्तनामवान्।
२२८-२२९ अक्षिपादपदे ज्ञानकर्मेन्द्रियनिदर्शके ॥ १७१ ॥ २५
तेनानन्तज्ञानकर्मा (सहस्राक्षः, सहस्रपात्)

❀ इदं नाम स्तोत्तरनामद्वयानन्तरम् भाष्ये व्याख्यातमिति ज्ञानामात्र एवोल्लिखितम्। १ भिदं शृंग। २ भेदं शृङ्गम्। ३ भयं शृङ्गम्।

भा०—(१) "विश्वतश्चक्षुरुत विश्वतो मुखः" तै०ना०६—१—१२।
(३) "सर्वतः पाणिपादन्तत्" इत्यादिज्ञापकात्. गी०१३—१३।
(२) "तैश्चतत्कार्यज्ञानक्रियासामर्थ्यानन्त्यं लक्ष्यते"
५ इति अभियुक्ताः; औचित्यात्, बहुशास्त्रान्तरसंगतेश्च. ❀
❀ आभ्यां ज्ञानशक्तनाभ्यां विश्वव्यापनात्—
( विश्वात्मा ). यथा,

निर्व०—(१) "मुह, वैचित्ये" आसनकर्महायम्. धा०दिवा० कौ०पृ०४५८
१०(२)"कनिन्युवृषि०"इत्यस्मिन् प्रकरणे,उणा०पा०१कौ०पृ०६१८
( ३ ) " श्वन्नुक्षन्पूषन् प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन् विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति"उणा०पा०१कौ०पृ०६१८
इति, अधिकरणे कनिन्, उपधादीर्घः, धोन्तादेशः, रमागमश्च निपात्यते. शतशब्दो व्युत्पादयिष्यते. तथा आनुपङ्क्तिको
१५ दशन्शब्दोपि. ततः, शतदशन्शब्दात्,
(४) "तदस्यपरिमाणम्०" इत्यर्थे, ५।१।५७॥ कौ०पृ० ३००
• ( ५ ) "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीति नवतिशतम्" ५।१।५९॥ कौ०पृ०३००
इति सूत्रस्य उदाहरणप्रदर्शनार्थत्वात् स्रच् प्रत्ययः,
२० प्रकृतेः सहभावश्च, इत्यादिप्रकारेण सहस्रशब्दो व्युत्पाद्यः. ततः, नान्तलक्षणो दीर्घ इत्यादि. सर्वज्ञानकर्मोपकरणोपलक्षणञ्चेदम्. एवमुत्तरत्रोभयत्रापि. ततश्च, ❀ तत्कार्यज्ञानक्रियासामर्थ्यानन्त्यं लक्ष्यते. ❀ आभ्यां ज्ञानशक्तनाभ्यां विश्वव्यापनात्, विश्वस्य-सर्वस्य, आत्मा— अन्तरात्मेति—
२५ ( विश्वात्मा ). अततेः मनिणि, विशेः कनि च, प्रागेव व्युदपादि.

निरु०—२२७आभ्यांश्च ज्ञानकर्मभ्यां (विश्वात्मा) व्यापनात्स्मृतः॥१७२॥

❀ अत्र भाष्यस्य मूलम् २५७ पृष्ठे २ पङ्क्तौ द्रष्टव्यम्।

भा०—(१) "स भूमिं विश्वतो वृत्वा" पु०सू०।
(२) "येनैषभूतस्तिष्ठत्यन्तरात्मा" तै०ना०।
(३) "येन सर्वमिदं प्रोतम्" तै०ना०६—५०। ५
(४) अहमात्मा गुडाकेश सर्वभूत"इत्यादि. ❀ गी०१०—२०।
संसारघटीयन्त्रपरिवर्तनात्—

---

निर्व०— चेदं शब्दद्वयम्. दीर्घ इत्यादि. ❀
सहस्रम्, अक्षीणि— चक्षूंषि, अस्येति—
(सहस्राक्षः). अशेः स्कौ अक्षिशब्दः पुरस्तादेव व्युत्पादितः. १०
व्युत्पादितश्च सहस्रशब्दः. एवमुत्तरत्रापि. सांहितिको दीर्घः. ततः,
प्रागुक्तरीत्या,
(१) "अक्ष्णोऽदर्शनात्" इति, अच् समासान्तः. ५।४।
७६॥कौ०पृ०१८३
(२) "यस्य०" इति,लोपः. ❀६।४।१४८॥कौ०पृ०५६ १५
तथा, सहस्रं पादाः— चरणाः, अस्येति—
(सहस्रपात्).
(१) "पद, गतौ" धा०दिवा० कौ०पृ०४५५
(२) "पदरुजविशस्पृशो घञ्" इति, ३।३।१६॥कौ०पृ०६४६
कर्तरि घञ्. वृद्धिः. ततः, २०
(३) "संख्यासुपूर्वस्य" इति, ५।४।१४०॥कौ०पृ०१७०
सहस्रसंख्यापूर्वत्वात् पादस्यान्त्यलोपः, स्थानिद्वारेण समासान्तः
पाक्षिकमवसानचर्त्वम्. अत्रच पौरुषसूक्तक्रमानुरोधेन ❀प्रत्या-
हारन्यायात् पूर्वं पूर्वयोरुभयोरुक्तिः; अनन्तरश्चानन्तरयोर्मध्यगयो-
रपीत्यवधेयम्. ❀ २५
संसारघटीयन्त्रम्, आवर्तयति— परिवर्तयतीति—

श्लो०॥२५॥(२३०)आवर्तनो, {२३१—४५४ / ६०४—७८०} निवृत्तात्मा,

ॐ आवर्तनाय नमः । ॐ निवृत्तात्मने नमः ।

५ भा०— ( आवर्तनः ). यथा,
( १ ) " तेनेदं भ्राम्यते ब्रह्मचक्रम् " भार० ।
( २ ) " भ्रामयन् सर्वभूतानि " गी०१८—६१।
( ३ ) कालचक्रं जगच्चक्रं युगचक्रञ्च केशवः । आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् " ॥ इत्यादि. भा०उ०६७—१२।
१० ( ४ ) " तस्माद्विराडजायत " पु०सू०—५।
इत्यादिनाऽपीदमेवोच्यते. ❀
ततः, संसारविभूतेः त्रिपाद्विभूतिकत्वेन निवृत्तम्— उद्गतम्, स्वरूपम् यस्य, सः—( निवृत्तात्मा ).

निर्व०— ( आवर्तनः ).
१५ ( १ ) " वृतु, वर्तने " धा०भ्वादिः कौ०पृ०४१२
आङ्पूर्वः. णिच्. गुणः रपरः. नन्द्यादिल्युः.
( २ ) "कृत्यल्युटः०" इति, बाहुलकात् वा ल्युट्. ३।३।११३॥ कौ०पृ०६६२
( ३ ) " बहुलमन्यत्रापि " इति, उणा०पा०२कौ०पृ०६२२
२० युच्. योरनः. णिलोपः. ❀
ततः, त्रिपाद्विभूतिकत्वेन संसारविभूतेः, निवृत्तः उद्गतः, आत्मा— स्वरूपम्, अस्येति—
( निवृत्तात्मा ). व्युत्पादि आत्मशब्दः.

निरु०— २३० संसाराख्यघटीयन्त्रे परिवर्तनशीलतः ।
२५ चक्रस्य विशेषेण ( ह्यावर्तन ) इतीरितः ॥ १७३ ॥
२३१ त्रिपाद्विभूति[illegible]
[illegible] १७४ ॥

( २३२ ) संवृतम्, ( २३३ ) संप्रमर्दनः, ।

ॐ संवृताय नमः । ॐ संप्रमर्दनाय नमः ।

भा०—( १ ) " त्रिपादूर्ध्वउदैत्पुरुषः " पु०सू०४। 5
( २ ) " परात्परं यन्महतो महान्तम् " इत्यादि. ❀तै०ना०
६—१—५।
तस्यामवस्थायाम्,
( ३ ) " तमसः परस्तात् " इति, पु०सू०२०।
तामसानां मूढानां गूढत्वात्— १०
( संवृतः ). ❀
संवरणं तमः, स्वविद्यया संप्रमर्दयतीति—
( संप्रमर्दनः ).

निर्व०—( १ ) " वृतु, वर्तने " निपूर्वः. धा०भ्वादिः कौ०पृ०४१२
अकर्मकात् कर्तरि क्तः. १५
( २ ) " उदितो वा " इति, ७।२।५६।। कौ०पृ०६६८
क्त्वायामिड्विकल्पात् निष्ठायान्नेट्. अगुणः. दीर्घः.
ततः, नान्तलक्षणोपधादीर्घादि. ❀
तस्यां दशायाम्, तमसः परस्तात्तनतया तामसानाम्
मूढानां संवृतः— आवृतः गूढ इति—( संवृतः ). २०
( १ ) " वृञ्, वरणे " संपूर्वः. निष्ठान्तः. धा०स्वादिः कौ०पृ०४६२
( २ ) "श्र्युकः किति" इति,नेट्. अगुणः.७।२।११॥कौ०पृ०४२५
समो मोऽनुस्वार इत्यादि. ❀
संवरणं तमः तेषां स्वविद्यया संप्रमर्दयतीति—
( संप्रमर्दनः ). २५

निरु०-२३२ तामसानां तु मूढानां गूढत्वात् ( संवृत ) स्स्मृतः ।
२३३ तमसो विद्यया सम्यङ् मर्दनात् (संप्रमर्दनः) ॥ १७५ ॥

(२३४) अहस्संवर्तको,

ॐ अहस्संवर्तकाय नमः ।

भा०—(१) "तमेवं विद्वानमृत इह भवति" पु०सू०२०।
५ (२) "य एवं विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति" इति, ❀ बृ०उ०६–४–१४।
अहरुपलक्षितकालपरिवृत्तिहेतुः,—
(अहस्संवर्तकः). ❀ ण्वुल्. ❀ युवोरनाकौ.
(१) "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" तै०ना०६–१–८।
१० (२) "कालचक्रं कालस्य हि च" इति, भा०उ०६७–१२।
कालो हि, भूतभवद्भविष्यद्रूपेण परापरप्रत्ययहेतुः, नित्यं भगवत्क्रीडनकम् संहितं षड्विधविकारकारिणं प्रकृतिपुरुषसंयोजनवियोजनं नियच्छति, तम्, एके व्यवस्थितां प्रकृतेः परिणामपरम्परामाहुः; अपरे परमेश्वरचेष्टासमष्टिम्;
१५ अन्ये स्वतन्त्रम्.श्रीपौष्करे कथञ्चिन्नेयमुदाहरणम्—

निर्व०—(१) "मृद,क्षोदे" संप्रपूर्वः.धा०क्र्यादिः कौ०पृ०४७७ णिच्.गुणः. रपरत्वम्. द्वित्वम्.नन्द्यादिल्युः, बाहुलकात् ल्युट्,युज्वा.योरनः.णिलोपः.समः प्राग्वदनुस्वारादि. ❀ अहः—तदुपलक्षितं कालम्, हेतुत्वात् संवर्तयति—
२० परिवर्तयतीति—
(अहस्संवर्तकः).एकन्नाम.
(१) "वृतु,वर्तने" संपूर्वः.धा०भ्वादिः कौ०पृ०४१२

निरु०—२३४ अहर्लक्षितकालस्य परिवृत्तेश्च साधनम् ।
(अहस्संवर्तक) इति प्राहुर्वेदान्तपारगाः ॥ १७६ ॥

१ संहिताम् । २ वियोजनयोर्नियं । वियोजने निय ।

(२३५) वह्निः,

ॐ वह्नये नमः ।

भा०— (३) " अध्यात्मं कालतत्त्वीयमधिदैवतमस्य वै ।
प्रभवाप्ययमूर्तिर्वै विश्वात्मा परमेश्वरः ॥ अधिभूतं परित्रियं त्रैलोक्यं[1]
भूतपूर्वकम् । कालश्च व्यक्ततत्त्वस्य ह्यध्यात्मत्वेन वर्तते ॥ अधिदै-
वतमिज्या च सद्योगमधिभूतता " ॥ इति. ❀ पौष्करे ।

देशरूपेण विश्वं वहतीति—

( वह्निः ).

( १ ) "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" उणा० पा० ४ कौ० पृ० ६३४

इति, निप्रत्ययः. प्रथमश्च देशः परमाकाशः; आपेक्षिकोऽन्यो गगन
दिगादिस्तत्कोणे. यथा,

( २ ) " अस्यामृतन्दिवि " पु० सू० ३।

( ३ ) " स्वे महिम्नि स्थितम् "

निर्व०— ण्यन्तः. गुणः. रपरः. द्वित्वम्.

( २ ) " ण्वुल् तृचौ " इति, ण्वुल्. ३।१।१३३ कौ० पृ० ५३३

वोरकः. णिलोपः. अहश्शब्दः, नञि जहातेः कनिनि [illegible]
अन्यत्भागवत्. ❀

प्रथमदेशपरमाकाशतत्कोणान्यगगनदिगादिदेशरूपेण [illegible]
नित्यादिकं विश्वं वहतीति—( वह्निः ).

( १ ) " वह, प्रापणे " धा० भ्वादिः कौ० पृ० [illegible]

(२) "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" उणा० पा० [illegible]
इति, निः. निहतत्वान्नेट्. ❀

निरु०— २३५ विश्वस्य देशरूपेण वहनाद् ( वह्निः ) [illegible] ।

१ त्रैकाल्यम् ।

{२३६ / ८१८} अनिलो, ( २३७ ) धरणीधरः, ॥

ॐ अनिलाय नमः । ॐ धरणीधराय नमः ।

५ भा०—( ४ ) " पादोऽस्येहाभवत्पुनः"इत्यादि. पु०सू०४।
देशो हि नाम, " इहेदम्" इत्याद्यवगतिहेतुः ?
सच तद्वत्तएव बद्धमुक्तनित्येभ्यः. ※
एवमेषाम्, अननात्— उज्जीवनात्—( अनिलः ).
( १ ) " सलिकल्यनि० " इत्यादिना इलच्, उणा०पा०१कौ०
१० पृ०६१३
अस्य कलैव प्रसिद्धोऽनिलः.
( २ ) " प्राणाद्वायुरजायत"पु०सू०१४।
( ३ ) " को ह्येवान्यात् कः प्राण्यात्"इति. ※ तै०आ०७—१।
अन्यदपि धारकं धारयतीति—
१५ ( धरणीधरः ).
(१)"सदाधारपृथिवीन्द्यामुतेमाम्"का०४प्र०१अ०८।

निर्व०— एवम्, एतान्, अनिति— अस्येहान्तर्भावितण्यर्थतया उज्जीवयतीति— ( अनिलः ).
( १ ) " श्वस, प्राणने " अनच.धा०अदा० कौ०पृ०४४६
२० इतिपठ्यते. "चात्, प्राणने.
( २ ) " सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्" उणा०पा०१कौ०पृ०६१३
इति, इलच्. अस्य कलैव प्रसिद्धोऽनिलः. ※
धरणीम्— धारकानारोपलक्षणां भुवम्, धरतीति—( धरणीधरः ).

२५ निरु०— २३६ बद्धादेरननाद्योसा (वनिलः) परिकीर्तितः॥१७७॥
२३७ भूतधात्र्याश्च धरणेर्धारणाद् ( धरणीधरः )।

श्लो० ॥ २६ ॥ ( २३८ ) सुप्रसादः,

ॐ सुप्रसादाय नमः ।

भा०–( २ ) " उद्धृतासि वराहेण" तै०ना० ६–१–२८ ।
( ३ ) " पृथिवीश्चान्तरिक्षं च द्यांश्चैव पुरुषोत्तमः । मनसैव वि- ५
सृष्टात्मा नयत्यात्मवशं वशी"इत्यादि. ❀ भा०उ० ६७–५ ।
स एवं संविधाय, सम्मुखेषु–( सुप्रसादः ).
( १ ) "तमक्रतुं पश्यति वीतशोको धातुः प्रसादात्"श्वे०उ० ३-२०।
( २ ) "प्रसादपरमौ नाथौ मम गेहमुपागतौ"इत्यादि. ❀ वि०पु०
५–१९–२० । १०
तत्कारणम्–

निर्व०–(१)"धृञ् ,धारणे"पचाद्यच् . धा०भ्वादिःकौ०पृ०४२३
गुणः रपरः. पुनरपि सएव धातुरावर्तते.
( २ ) " अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः" उणा०पा० २ कौ०
पृ० ६२३ इति, अनिः. गुणो रपरः. णत्वम्. १५
( ३ ) " कृदिकारादक्तिनः"इति. ४।१।४५।। कौ०पृ० १००
पाक्षिको ङीष् . दीर्घः. पर्जन्यवत् लक्षणप्रवृत्त्या,
( ४ )"यस्य०" इति लोपो वा, ६।४।१४८।।कौ०पृ० ५६
षष्ठीसमासोऽयम्. विग्रहार्थप्रदर्शनमात्रत्वे तद्गतो न कर्मण्यण् . ❀
स एवं संविधाय सम्मुखेषु शोभनः प्रसादः अस्येति–( सुप्रसादः ) २०
( १ )"षद्लृ,विशरणगत्यवसादनेषु"धा०तुदा०कौ०पृ०४६९
प्रपूर्वः. षस्सः. भावे घञ् .उपधावृद्धिः. स्वित्यव्ययपूर्वः समासः. ❀
कुतः? यतः, प्रसन्नः–स्वत एवावाप्तसमस्तकामतया रागाद्यनुपप्लुतः,
आत्मा–मनः, अस्येति–

निरु०–२३८ प्रसादपरमत्वाच्च (सुप्रसादः) प्रकीर्तितः।।१७८।। २५

१ विशिष्टात्मा । २ यत्कारणम ।

(२३९) प्रसन्नात्मा, (२४०) विश्वसृड्,

ॐ प्रसन्नात्मने नमः। ॐ विश्वसृजे नमः।

५. भा०—(प्रसन्नात्मा).-स्वत एवावाप्तकामतया रागाद्यनुपप्लुतमनाःयथा,
(१) "अविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति, छा० उ०८-१-५।
(२) "शान्तसमृद्धममृतम्" इतिच. तै०शी० ६—२।
अपूर्णः कृपणो हि दुराराधः. ❀
१० गुणदोषमनपेक्ष्य दाक्षिण्यात् विश्वं सृजतीति—(विश्वसृक्). ❀

निर्व०—(प्रसन्नात्मा). आत्मा व्युत्पादितः.
(१) "षद्लृ,विशरणगत्यवसादनेषु" धा०तुदा० कौ०पृ० ४६९
प्रपूर्वः. पस्तः. कर्तरि क्तः.अनिट्.
(२) "रदाभ्यां निष्ठातोनः पूर्वस्यच दः" ८।२।४२॥कौ०पृ०५८६
१५ इति,निष्ठातस्य नः,पूर्वस्य च दस्य.दीर्घः. ततः,नान्तलक्षणदीर्घादि. ❀
गुणदोषानपेक्षो दाक्षिण्यात् विश्वं सृजतीति—(विश्वसृक्).
(१) "सृज,विसर्गे" धा०तुदा० कौ०पृ० ४६९
(२) "क्विप्च" इति,क्विप्.अगुणः.३।२।७६॥कौ०पृ०५८१
(३) "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चांच" ३।२।५९॥
२० कौ०पृ० ६७
इति सूत्रे सृजेः क्विनो विहिततया,
(४) "क्विन्प्रत्ययस्यकुः" इति, तत्र, ८।२।६२॥ कौ०पृ० ६८

निर्व०—२३९ अवाप्तसर्वकामत्वाद्रागादिरहितं मनः।
यस्यास्ति स (प्रसन्नात्मा) चित्ततुष्टिप्रदो मनुः॥१७९॥
२५ २४० विश्वं जगत्सृजति यो (विश्वसृक्) स प्रकीर्तितः।

(२४१) विश्वभुग्विभुः,। (२४२) सत्कर्ता,

ॐ विश्वभुग्विभवे नमः। ॐ सत्कर्त्रे नमः।

ना०–तथैव व्याप्य भुनक्ति पालयतीति— ५
(विश्वभुग्विभुः); एकन्नाम. यथा,
(१) "सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्य-
दास्ते" इति, ❀ पु०सू०१६।
एवं सर्पीयोदण्डापूपिकया सतः—( सत्कर्ता ). यथा,
(१) "सज्जनमतिपूजकः" इति. ❀ १०

निर्व०–बहुव्रीह्याश्रयणात् क्विप्यपि कुः यथासंख्यपरिभाषया
जस्य गः पाक्षिकमवसानचर्त्वम्, कः. विश्वशब्दो व्युत्पादितः.
एवमुत्तरत्रापि. ❀
तथैव विभुः, व्याप्नुवन् विश्वं भुनक्ति- परिपालयतीति—
(विश्वभुग्विभुः); सविशेषणमेकन्नाम. १५
(१) "भुज, पालनाभ्यवहारयोः" धा०रुधा०कौ०पृ०४७१
पूर्ववत् क्विप्. अगुणः.
(२) "चोःकुः"इति,कुत्वेन गः.चर्त्वम् कः.८।२।३०॥कौ०पृ०६८
(३) "भू, सत्तायाम्" विपूर्वः.धा०भ्वादिः कौ०पृ०३६८
(४) "विप्रसंभ्यः०" इत्यादिना,३।२।१८०॥ कौ०पृ०६०७ २०
उक्तनीत्या डुः.टिलोपः. सांहितिकं जश्त्वम्. ❀
एवं सर्पीयोदण्डापूपिकान्यायात् सज्जनान् सत्करोति—
पूजयतीति—(सत्कर्ता).

निरु०–२४१ सत्सृष्टं व्याप्य वै भुञ्जन् पालयन् ( विश्वभुग्विभुः )
॥१८०॥ २५
२४२ ( सत्कर्ता ) यस्स विज्ञेयः सज्जनमतिपूजकः।

(२४३) सत्कृतम्, (२४४) साधुः,

ॐ सत्कृताय नमः। ॐ साधवे नमः।

५ भा०—तैश्च—
(सत्कृतः);-सहि तच्छ्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणेनेवाप्रति
पन्नप्रत्युपकारः परितुष्यति.
(१) "अहो ह्येकान्तिनस्सर्वान् प्रीणाति भगवान् हरिः। विधि-
प्रयुक्तां पूजाञ्च गृह्णाति शिरसा स्वयम्"
१० (२) "शबर्यापूजितस्सम्यक्" रा०बा०१—५८।
(३) "मालाकारेण पूजितः"इति. ❋ वि०पु०५—१९—२९।
तदपेक्षितदूत्यसारथ्यादिसाधयतीति—
(साधुः).
(१) "कृवापाजि०"इत्यादिना साधेरुण्. ❋ उणा०पा०१कौ०
१५ पृ० ६०९

निर्व०—(१) "डुकृञ्,करणे"अस्त्तेश्शतरि व्युत्पादित—धा०तना०
कौ०पृ०४७३
सत्पूर्वः. तृच्. गुणः रपरः. अनिट्. द्वित्वम्. अन्यत्राप्येवमेतादृशे.
अनङादि. ❋
२० तैश्च श्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणेनेव अप्रतिपन्नप्रत्युपकारप-
रितुष्टतया सदकारि—पूजित इति—
(सत्कृतः). पूर्ववत् धातुः; सत्पूर्वः.
कर्मणि क्तः. अगुणः. अनिट्.व्युदपादि च सच्छब्दः.
तदपेक्षितदूत्यसारथ्यादि साध्नोति—साधयतीति—(साधुः).
२५ (१) "राध साध, संसिद्धौ" धा०स्वादिः कौ०पृ०४६३

निरु०—२४३ अर्चादिभिस्सज्जनैर्यः पूजितम् (सत्कृत)स्स्मृतः॥१८१॥
२४४ सेवां सारथ्यदूत्याद्यां (साधु) स्साधयतीति सः।

(२४५) जह्नुः,

ॐ जह्नवे नमः ।

भा०– " अभक्तेष्वात्ममाहात्म्यमपन्हुत इति–
(जन्हुः)" इति नैरुक्ताः. उद्योगे यथा, ५
(१) " चक्रं तद्वासुदेवस्य मायया वर्तते विभोः । सापह्नवं पाण्डवेषु ईति राजसु सत्तम " इति. ❋भा०उ० ६–७–२ ।
एवमेभिरशेषैर्विशिष्य; उपनिषत्सु,
(१) " नारायणाय विद्महे " तै०ना० ६–१–२६ ।
(२) " नारायणपरं ब्रह्म" तै०ना० ६–११ । १०
(३) " एको ह वै नारायण आसीत् "महोपनिषदि–१ ।
(४) " अथ पुनरेव नारायणः " ।। महोपनिषदि ।।
(५) " चक्षुश्च द्रष्टव्यं च नारायणः" सु०उ० ६ ।
(६) " अथ दिव्यो देव एको नारायणः " सु०उ० ६ ।

निर्व०–(२) "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" उणा०पा०१ १५ कौ०पृ० ६०९
इति,उण्. वृद्धिः. ❋
अभक्तेषु आत्ममाहात्म्यमपन्हुत इति–(जन्हुः).
(१) " ओहाक्,त्यागे"इत्यतः,धा०जुहो० कौ०पृ० ४५०
(२)"दाभाभ्यान्नुः"इति,प्रकरणे,उणा०पा०३कौ०पृ०६२६ २०
(३) " जहातेर्द्वेऽन्तलोपश्च"इति,उणा०पा०३कौ०पृ० ६२६
नुप्रत्यये, द्वित्वे, बाहुलकात् द्विरुक्तपूर्वखण्डस्याभ्याससंज्ञायाम्,
(४)"ह्रस्वः"इति, अभ्यासह्रस्वे,७।४।५९।। कौ०पृ०३६९
(५) " कुहोश्चुः " इति, ७।४।६२।। कौ०पृ० ३७८

निरु०–२४५अभक्तेष्वात्ममाहात्म्यनिह्नुतेर(जन्हु)रुच्यते।।५८२।। २५

१ चेष्टतेराज, " कौरवेषु पाण्डवाना मुसम्मतम्" इतिमुद्रितकोशपाठः ।

( २४६ ) नारायणो,

ॐ नारायणाय नमः ।

भा०— इति प्रतिशाखं परस्य वस्तुनो मूर्त्यन्तरव्यावर्तकतया निर्दिष्ट-
५ मसाधारणन्नामाह,—
( नारायणः ). श्रौतनिरुक्तम्,
( ७ ) " यच्च किञ्चित् " इति. अन्यत् अपडक्षीणत्वात् नाचक्ष्म-
हे. ❀ पु०सू०।

निर्व०— चुत्वेन हकारस्यान्तरतम्यात् झकारे,
१० ( ६ ) " अभ्यासे चर्च " इति, ८।४।५४॥कौ०पृ०३७०
तस्य जश्त्वेन जकारे, उत्तरखण्डे अन्तलोपेन आकारलोपे,अनिड्त्वा-
दिडभावे च, जन्हुशब्दस्य निष्पाद्यत्वेपि, प्रकृते निरुक्तानुरोधादु-
क्तार्थनिष्पत्तिः. तद्बीजञ्च उक्तमेव. तथा चेह,
(७)"न्हुङ्, अपनयने" इति धातुः.विच्,धा०अदा०कौ०पृ०४४८
१५ द्वित्वम्, अभ्यासोवर्णस्य अत्वञ्च. मृयान्हि बाहुलकप्रभावः?
पृषोदरादिर्वा. अपरत्राप्येवमेतादृशे. यदित्वत्रापि निरुक्तस्वातन्त्र्यम्;
न तदाऽयं यत्नः. अन्यत्तु हलादिशेषादिकं यथाशास्त्रमेव. ❀
अथैवम्, अशेषैर्विशेषैः विशिष्य सकलोपनिषत्प्रसिद्धम् परस्य वस्तुनो
मूर्त्यन्तरव्यावर्तकम् असाधारणं नाम निर्दिश्यते. नराः स्वरूपप्रवाह
२० नित्यवस्तूनि, तेषां समूहाः— नाराः, ते अयनम्— श्रौतनिरुक्तानुसा-
रात् आश्रयः, यस्येति वा,—
तेषामयनमिति वा;—( नारायणः ).
( १ ) " इण्, गतौ " धा०अदा०कौ०पृ०४४१

निरु०— २४६ अन्तर्बहिश्च तत्सर्वं व्याप्य ( नारायण ) स्मृतः ।

१ यत्रपद— अक्षीणि मा(?)निहितानि, त्रयः पुरुषा इति यावत्; तत्र योऽर्थः नोपदेशार्हः, सः अपडक्षीणः, रहस्यमस्य इति यावत. अपद् कर्ण इतिवत् प्रयोगः ।

निर्व०-(२) " इ,गतौ"धा०भ्वादिः कौ०पृ० ३९४
(३) " ई, गतौ " धा०अदा०कौ०पृ० ४३७
(४) "अय,गतौ"वा.आदितस्त्रिपु ईयते, धा०भ्वा०कौ०पृ०४०२
अन्यत्रैकत्र, अय्यते वास्मिन्नित्यर्थे, ५
(५)"करणाधिकरणयोश्च" इति, ३।३।११७॥कौ०पृ०६६२
अधिकरणे ल्युट्. योरनः. गुणायादेशौ. इमावयतेस्तु न.
(६) " रि, हिंसायाम् " धा०स्वादिः कौ०पृ०५६३
(७) " अन्येभ्योऽपि दृश्यते" ३।२।१७८॥ कौ०पृ० ६०७
इति,डः. टिलोपः. नञ्समासः. १०
(८)"नभ्राण्णपात्०"इत्यस्योपलक्षण-६।३।७५॥कौ०पृ०१४८
तया प्रकृतिभावात् नलोपो न. यद्वा, नशब्दसमासः.
ततः,नलोपाभावः. ततः,
(९) " तस्य समूहः"इति, ४।२।३७॥ कौ०पृ० २३२
समूहार्थे अण्.
१५
(१०) " तद्धितेष्व०"इति,आदिवृद्धिः. ७।२।११७॥ कौ०
पृ० २०४
(११)"यस्य०" इति लोपः.सवर्णदीर्घः.६।४।१४८॥कौ०पृ०५६
(१२) " पूर्वपदात्संज्ञायामगः"इति,८।४।३॥कौ०पृ०१६७
णत्वम्.बहुव्रीहौ न किञ्चिदस्ति वक्तव्यम्. तत्पुरुषे तु, २०
(१३) " लिङ्गमशिष्यम्"इत्यादि. ॥महाभाष्ये ॥
समासद्वयेन पूर्वोक्तसूत्रात् करणे ल्युटा.
(१४) ' कृत्यल्युटः०"इति, ३।३।११३॥ कौ०पृ० ६६२
बाहुलकात् कर्मणि ल्युटा च, पञ्चमोऽन्यान्तर्यामित्वोपायत्वोपेय-
त्वसिद्धिरित्यादिस्त्वपदर्शितोऽर्थः. ❀
इदमेवगूढं व्याचष्टे; अनश्वराचिदचिद्विभूतिकतया, नराः-चिद्- २५
चिद्वर्गः. अस्याम्नोति वा,-

( २४७ ) नरः,॥ श्लो० ॥ २७ ॥ ( २४८ ) असंख्येयो,

ॐ नराय नमः । ॐ असंख्येयाय नमः ।

५ भा०—इदमेवगूढं व्याचष्टे—
( नरः ),–अनश्वरचिदचिद्विभूतिक इति. ❀
तत्समूहाश्चास्यासंख्येया इति—
( असंख्येयः ). ❀

निर्व०—तद्वैशिष्टयेन तद्व्यपदेशाद्वा;—
१० ( नरः ).
( १ ) "रि, हिंसायाम्" धा०स्वादिः कौ०पृ०४६३
( २ ) "अन्येभ्योऽपि दृश्यते" इति, ३।२।१७८॥ कौ०पृ०६०७
ड इत्युक्तमेव. टिलोपः. इहापि नञो नशब्दस्य वा समासः.
उक्ता हि नलोपाभावस्य द्वैधं गतिः। ततः, पूर्वत्र,
१५ ( ३ ) "अर्शआदिभ्योऽच्" इति, ५।२।१२७॥कौ०पृ०३३२
तस्याकृतिगणत्वात् मत्वर्थीयोऽच्.
( ४ ) "यस्य०" इति, लोपः. ६।४।१४८॥कौ०पृ०५६
अन्यत्र तु अजभावो विशेषः. ❀
तत्समूहाश्च असंख्येयाः— अगणनगोचराः, अस्य सन्तीति वा,–
२० प्राग्वत् तद्वत्तया तद्व्यपदेशेन वा,—
( असंख्येयः ).
( १ ) "ख्या, प्रकथने" संपूर्वः. धा०अदा० कौ०पृ०४४३
❀ अचो यत्.
( २ ) "ईद्यति." इति, आत ईत्त्वम्.ततः,६।४।६५॥कौ०पृ०५५७
२५ ( ३ ) "सार्वधातुक०" इति,गुणः.७।३।८४॥कौ०पृ०३६८

निरु०—२४७ रः क्षयो यस्य न ह्यस्ति स (नर) स्समुदाहृतः॥१८३॥
२४८ अगण्यनरसंघो यःसो (ऽसंख्येयः)प्रकीर्तितः।

( २४९ )ऽप्रमेयात्मा, ( २५० ) विशिष्टश्,

ॐ अप्रमेयात्मने नमः । ॐ विशिष्टाय नमः ।

भा०—तेषामसंख्येयानाम्, एकैकशोपि अप्रमेयानामनवधिकाना- ५
मन्तर्बहिश्च व्यापनात्—
( अप्रमेयात्मा ). ❀
स्वत एव तदनपेक्षवैलक्षण्यत्वात्—
( विशिष्टः ). ❀

निर्व०—अनुस्वारादि.नञ्समासः. नञो नलोपः.ततः, पूर्ववद्- १०
श्चापि पूर्वत्र मत्वर्थीयोऽर्श आद्यच्. अपरत्र,
अजभावो विशेषः. ❀
तेषामसंख्येयानामनवधिकानाम् एकैकशोपि अप्रमेयानाम्- प्रमा-
तुमशक्यानाम्, अन्तर्बहिश्च व्यापनादात्मेति—
( अप्रमेयात्मा ). निरुक्तो ह्यात्मशब्दः ? १५
( १ ) " माङ्, माने" प्रपूर्वःधा०जुहो०कौ०पृ०४५०
❀अचोयत्. ❀ ईद्यति.गुणः.नञ्समासः. नलोपः.
दीर्घः. ततः, नान्तलक्षणदीर्घादि. ❀
स्वतएव तदनपेक्षवैलक्षण्यतया विशिष्यते—अभ्यधिको भवतीति-
( विशिष्टः ). २०
( १) " शिष्लृ, विशेषणे" विपूर्वः धा०रुधा०कौ०पृ०४७१
(२)"गत्यर्थ०"इत्यादिना अकर्मकात्,३।४।७२।।कौ०पृ०५९६
कर्तरि क्तः. किस्वान्नगुणः. अनिट्.ष्टुत्वम्. ❀
अपितु, स्वसंबन्धेन तान् शिष्टान्, स्वानुगुणकल्याणान् करोतीति-

निरु०—२४९एकैकशोऽप्रमेया या ह्यसंख्याता विभूतयः॥ १८४॥ २५
तासां चैवा ( ऽप्रमेयात्मा ) व्यापनाद्बहिरन्ततः ।
२५० विलक्षणो ( विशिष्टो ) यस्सर्वांस्ताननपेक्ष्य सः ॥ १८५ ॥

( २५१ ) शिष्टकृत्, {२५२ / १५७} शुचिः ।

ॐ शिष्टकृते नमः । ॐ शुचये नमः ।

५ भा०— अपितु, स्वसंबन्धेन तान् स्वानुगुणकल्याणान् कुर्वन्, अनाधेयदीप्तिः—( शिष्टकृच्छुचिः ).

निर्व०— ( शिष्टकृत् ).
( १ ) "डुकृञ्, करणे" क्विपि तुक्. अगुणः. धा० तना० कौ० पृ० ४७३ जश्त्वचर्त्वे.
१० ( २ ) "शिषॢ, विशेषणे" क्तः. अगुणः. धा० रुधा० कौ० पृ० ४७१ अनिट्. ष्टुत्वम्. ❋
तथाच कुर्वन्, शुचिः— शुद्धः अनाधेयदीप्तिरिति— ( शुचिः ).
( १ ) "शुच, शोके" शुचिकर्मेत्ययम्. धा० भ्वादिः कौ० पृ० ३९०
( २ ) "ईशुचिर्, पूतीभावे" वा. धा० दिवा० कौ० पृ० ४५५
१५ ( ३ ) "इन् सर्वधातुभ्यः" इति, इन्. उणा० पा० ४ कौ० पृ० ६३७
( ४ ) "इगुपधात्कित्" इति, कित्. ततो न गुणः. उणा० पा० ४ कौ० पृ० ६३७
एकं वा नाम. अर्थः प्राग्वत्. ततः, व्यस्तात् समस्ताच्च संहितायां श्चुत्वस्यासिद्धत्वात् जश्त्वेन दः. ततः,
२० ( ५ ) "खरिच" इति, चर्त्वस्यासिद्धत्वात् ८।४।५५॥ कौ० पृ० २० श्चुत्वेन जः. तस्य, चर्त्वेन चः. श्चुत्वस्यासिद्धत्वात् न चोः कुः. ततः,
( ६ ) "शश्छोऽटि" इति, पाक्षिकं शस्य छत्वम्. ❋ ८।४।६३॥ कौ० पृ० २० अथ, यथोक्तोपपादनम्.

निरु०—२५१—२५२ स्वानुकूलशुभान् कुर्वन् स्वसंबन्धेन तान्
२५ स्वयम् । अनाऽधेयमहादीप्तिः ( शिष्टकृच्छुचि ) रुच्यते ॥ १८६ ॥

१ स्वगुण ।

## (२५३) सिद्धार्थस्, (२५४) सिद्धसंकल्पः,

## ॐ सिद्धार्थाय नमः। ॐ सिद्धसंकल्पाय नमः।

भा०— अथ, यथोक्तोपपादनम्.— ५
(सिद्धार्थः). ❀
स्वत एव वावाप्तकामत्वात् तदुपरि—
(सिद्धसंकल्पश्च);— स्वातन्त्र्येण प्रयुक्ततया स्वेच्छया
साधितसर्वार्थ इत्यर्थः.
(१) "सत्यकामस्सत्यसंकल्पः"इति. ❀ छा०उ०८—१५। १०

निर्व०—स्वत एवावाप्तसमस्तकामतया सिद्धोर्थोऽस्येति—
(सिद्धार्थः).
(१) "ऋ, गतिप्रापणयोः" धा०भ्वा० कौ०पृ०४२५
(२)"उपिकुषिगार्तिभ्यस्थन्" इति, उणा०पा०२कौ०पृ०६१८
कर्मणि थन्. गुणः रपरः. अनिट्. १५
(३)"षिधु,संराद्धौ"कुः.अगुणः.अनिट्.धा०दिवा०कौ०पृ०४५७
(४)"झष०" इति, धत्वम्. जश्त्वम्. ८।२।४०॥कौ०पृ०३८५
सांहितिको दीर्घः. ❀
स्वतन्त्रस्वेच्छासाधितसर्वार्थतया. सिद्धः संकल्पः अस्येति—
(सिद्धसंकल्पः). २०
(१) "कृपू,सामर्थ्ये"संपूर्वः.धा०भ्वादिः कौ०पृ०४१३
भावे घञ्.लघूपधगुणः.रपरत्वम्.
(२)"कृपोरोलः"इति,रेफस्य लत्वम्.८।२।१८॥कौ०पृ०४१३
अनुस्वारादि. सिद्धशब्दो व्युत्पादितः. ❀

निरु०—२५३ सिद्धाः प्राप्ता यस्य सर्वे ह्यर्थाः (सिद्धार्थ) ईरितः। २५
अवाप्तसर्वकामो वा (सिद्धार्थ) इति कथ्यते ॥ १८७ ॥
२५४ सत्यसंकल्पवत्त्वाच (सिद्धसंकल्प) ईरितः।

(२५५) सिद्धिदम्, (२५६) सिद्धिसाधनः, ।

ॐ सिद्धिदाय नमः । ॐ सिद्धिसाधनाय नमः ।

५ भा०— अणिमगरिमाद्याःसिद्धीः साधकेभ्यो ददातीति—
(सिद्धिदः). ❀
यस्य साधनमपि,
(१) "ये तु धर्म्यामृतमिदम्" इतिन्यायेन, गी० १२—२०।
अनुष्ठानवेलायामपि प्रियंकरत्वात् सिद्धिरूपम्, सः—
१० (सिद्धिसाधनः). ❀

निर्व०— साधकेभ्यः अणिमगरिमाद्यास्सिद्धीः ददातीति—
(सिद्धिदः).
(१) "डुदाञ्, दाने" धा०जुहो० कौ०पृ०४५१
(२)"आतोऽनुपसर्गे०"इति,कः.आतो लोपः३।२।३॥कौ०पृ०५७०
१५ (३) "षिधू, शास्त्रे माङ्गल्ये च" परस्मै.धा०भ्वादिःकौ०पृ०३८५
❀ स्त्रियां क्तिन् .
(४)"तितुत्र०" इति,नेट्. धत्वजश्त्वे. ❀७।२।९॥कौ०पृ०६०८
अनुष्ठानवेलायामपि प्रियंकरतया सिद्धिः, तद्रूपं
साधनमस्येति—
२० (सिद्धिसाधनः).
(१) "राध साध, संसिद्धौ" परस्मै. धा०स्वादिः कौ०पृ०४६३
करणे ल्युट्. अनः. सिद्धिशब्दो व्युत्पादितः. ❀
निखिलमङ्गलाङ्कुरार्पणदिनत्वात्, वृषः निरुक्तानुसारात् धर्मः, तद्रूपं
च तदहः— अस्य प्रथमाभिगमनदिवसश्चेति वृषाहः, सोऽस्यास्तीति—

२५ निरु०—२५५ (सिद्धिदो) ह्यणिमाद्यष्टसिद्धिदः कायदानतः॥१८८॥
२५६ तत्सिद्धेश्चापि हेतुत्वात् (सिद्धिसाधन) ईरितः ।

श्लो० ॥ २८ ॥ ( २२७ ) वृषाही,

ॐ वृषाहिणे नमः ।

भा०—निखिलमङ्गलाङ्कुरार्पणदिनत्वात् वृषरूपम्—धर्मरूपम्, अहः-
अस्य प्रथमाभिगमनदिवसम्, ५
( वृषाहः ). ❀ राजाहस्सखिभ्यष्टच्.
तदस्यास्तीति—
( वृषाही ). यथा,
( १ ) " अद्य मे सफलं जन्म सुप्रभाता च मे निशा । यदुन्निद्रा-
ब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहम्मुखम् " वि०पु०५—१७—३। १०
( २ ) " ता निशास्ते च दिवसाः" इत्यादि.
( ३ ) " यथा ह्येवैष एतस्मिन्नदृश्ये अथ सोऽभयं गतो भवति"
इति च. ❀ तै०आ०२—७।

निर्व०—(वृषाही). अहन्शब्दः नाम्नि जहातेः कनिनि व्युत्पादितः.
(१)"वृषु, सेचने"इगुपधलक्षणःकः.धा०भ्वादिः कौ०पृ०४१० १५
अगुणः, कर्मधारयः. सांहितिको दीर्घः.
( २ ) " राजाहस्सखिभ्यष्टच् " इति, टच्, ५।४।९१॥
कौ०पृ०१५२
(३)"तद्धिताः"इति,तस्य तद्धितसंज्ञायाम्,४।१।७६॥कौ०पृ०१०६
(४)"नस्तद्धिते " इति, टिलोपः. ६।४।१४४॥कौ०पृ०१३३ २०
( ५ ) " रात्राह्नाहाः पुंसि" इति, २।४।२९॥कौ०पृ०१५७
पुंस्त्वेन विग्रहः. ततः,
( ६ ) "अत इनिठनौ"इति,इनिः.५।२।११५॥कौ०पृ०३३०
(७)"पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे"२।२।१॥कौ०पृ०१३९
इत्यादिनिर्देशात्, २५

निरु०— २५७ वृषो हि धर्मस्तद्रूपमहर्यस्य दिवं स्मृतम् ॥१८९॥
प्रथमाभिगमनाख्यं ( वृषाही ) स प्रकीर्तितः ।

( २५८ ) वृषभो,

ॐ वृषभाय नमः ।

भा०—एवमभिगच्छतो भवद्‌भ्यान् वर्षतीति—

५ ( वृषभः ).

(१)"ऋषिवृषिभ्यां कित्"इति वृषेरभच्.उणा०पा० ३कौ०पृ०६३०

प्रत्ययः, किद्वद्भावश्च. ❀

एवं वर्षन् वेवेष्टीति—

निर्व०—( ८ )"एकगोपूर्वाट्ठञ् नित्यम्" इति, ५।२।११८॥

१० कौ०पृ०३३०

एकपूर्वात् समानाधिकरणार्थे ठञनुशासनाच्च लिङ्गात्,

( ९ ) "न कर्मधारयान्मत्वर्थीयः"

इति न्यायो हि न नित्यः. कृष्णसर्पवान्वल्मीक इत्यादिवत्.

तद्बीजं चेदमेवेत्यादि. एवमन्यत्रापि.

१५ ( १० ) "यस्य०" इति, लोपः. ६।४।१४८॥कौ०पृ० ५६

(११)"सौच"इति, इत्रन्तलक्षणो दीर्घ इत्यादि.❀६।४।१३॥

कौ०पृ० ६४

एवम्, अभिगच्छतो भवद्‌भ्यान् वर्षति—सिञ्चतीति—

( वृषभः ).

२० ( १ ) "वृषु,सेचने" धा०भ्वादिः कौ०पृ०४१०

( २ ) "कृशृशलिकलिगर्दिभ्योऽभच्" उणा०पा० ३कौ०पृ०६३०

इति,वर्त्तमाने,

( ३ ) "ऋषिवृषिभ्यां कित्" इति, अभच् कित्;उणा०पा० ३कौ०

पृ०६३० कित्वान्न गुणः. ❀

२५ एव वर्षन् वेवेष्टि—व्याप्नोतीति—

निरु०— २५८ अभिगच्छद्भ्यस्तजनान् सुधावर्षणतोऽन्वहम् ॥११०॥

(वृषभ) श्च समाख्यातः सिञ्चन् भयहरो मनुः ।

{ २ / ६६३ } (२५९) विष्णुः, (२६०) वृषपर्वा,

ॐ विष्णवे नमः। ॐ वृषपर्वणे नमः।

भा०—( विष्णुः ). ५
( १ ) " विषॢ, व्याप्तौ " धा०जुहो०कौ०पृ०४५१
( २ ) " विषेःकिच्च"इति,णुः. उणा०पा०३कौ०पृ०६२६
तैस्तैरुपकारैरधिकेन भगवता न्यूनानां स्वव्यतिरिक्तानाम-
विनाभावस्तार्किकप्रसिद्धोऽत्र व्याप्तिरभिमता;
( ३ )"न तदस्ति विना यत्स्यान्मया भूतश्चराचरम्" इति. ❀ १०
गी०१०—३९।
( वृषाः; )—वर्णाश्रमधर्माः, ते तदारोहणसोपानपर्वाणीति—
( वृषपर्वा ). ❀

निर्व०—( विष्णुः ).
( १ ) " विषॢ, व्याप्तौ " धा०जुहो०कौ०पृ०४५१ १५
( २ ) " स्थोणुः"इति वर्तमाने,उणा०पा०३कौ०पृ०६२६
( ३ )"विषेःकिच्च" इति,णुः किव्. अगुणः. निहतत्वान्नेट्. ❀
उणा०पा०३कौ०पृ०६२६
वृषाः— वर्णाश्रमधर्माः, पर्वाणि—तदारोहणसोपान-
पर्वाणि, अस्येति—( वृषपर्वा ). २०
( १ ) " पॄ, पालनपूरणयोः " धा०जुहो०कौ०पृ०४४९
( २ )"स्नामदिपद्यर्तिपॄशकिभ्यो वनिप्" उणा०पा०४कौ०पृ०६३७
इति, वनिप्. गुणः. रपरः.

निरु०—२५९(विष्णु)स्स्यादविनाभावाद्व्याप्यव्यापकभावतः॥१९१॥
२६०वृषा वार्णाश्रमा धर्माः पर्वाण्यारोहणे तु ते। २५
यस्य सन्ति सदा सोऽयं ( वृषपर्वा ) प्रकीर्तितः ॥ १९२ ॥

(२६१) वृषोदरः, | (२६२) वर्धनो,

ॐ वृषोदराय नमः | ॐ वर्धनाय नमः ।

५ भा०—आराधकानां यथालब्धहविरादिभिस्सुपूरत्वेन,
सर्वार्तास्पदत्वेन वा, धार्मिकोदरत्वात्—
(वृषोदरः). ❀
मातृवत् तान् उदरे कृत्वा वर्धयतीति—
(वर्धनः). ❀

१० निर्व०—(३) "नेट्०"इति,नेट्.वृषशब्दो व्याकृतः.७।२।८॥कौ०पृ०५८१
इत्थमुत्तरत्रापि. ततः, नान्तलक्षणो दीर्घ इत्यादि. ❀
आराधकानां यथालब्धहविरादिभिस्सुपूरतया,
सर्वास्पदतया वा, वृषः—लक्षणया धार्मिकम्, उदरमस्येति—
१५ (वृषोदरः).
(१) "दृ, विदारणे" उत्पूर्वः. धा०क्र्यादिः कौ०पृ०४७६
(२)"उदिदृणातेरजलौ पूर्वपदान्त्यलोपश्च"उणा०पा०५कौ०पृ०६४२
इति, अच्. अल्वा. स्वरे विशेषः. उदो दलोपश्च.
गुणः. रपरः. बहुव्रीहिः. गुणस्सांहितिकः. ❀
२० मातृवत् तानुदरे कृत्वा वर्धयतीति—(वर्धनः).
(१) "वृधु,वृद्धौ" णिच्. गुणः. रपरः. धा०भ्वादिः कौ०पृ०४१२
द्वित्वम्. ततो नन्द्यादिल्युः. बाहुलकाज्ज्युडेत्यादि.
योरनः.णेर्लोपः. ❀

निरु०—२६१भक्तैरुपाहृतां पूजामुपहारांश्च धर्मतः ।
२५ कृत्वोदरे यांजयति स (वृषोदर) उच्यते ॥ १९३ ॥
२६२ मातृवज्जठरे कृत्वा भक्तान् वर्धयति स्वयम् ।
(वर्धनः) प्रोच्यते नित्यं समार्णो वृद्धिदो मनुः ॥ १९४ ॥

## (२६३) वर्धमानश्च, (२६४) विविक्तश्च,

## ॐ वर्धमानाय नमः। ॐ विविक्ताय नमः।

भा०— तान् वर्धयन् स्वयमपि वर्धत इति वा;— ५
एवं प्रायैरपर्यवस्यत्समृद्धिरिति वा—
( वर्धमानः ). ❀
एवं, सर्वलोकोत्तरस्वैकान्तवृत्तान्तत्वात्—( विविक्तः ). ❀

निर्व०— तान् वर्धयन् स्वयमपि वर्धते इति वा— वर्तमाननिर्देशात्,
एवंप्रायैरपर्यवस्यत्समृद्धिरिति वा,— १०
( वर्धमानः ). धातुः पूर्ववत्. ❀ वर्तमाने लट्.
( १ ) " लटः शतृशानचावप्रथमासमानाधिकरणे " इति, शा-
नच्. ३।२।१२४॥कौ०पृ०५९९
तस्य शित्त्वेन,
( २ ) " तिङ्शित्० " इति सार्वधातुकत्वे, तत्र परतः, १५
३।४।११३॥कौ०पृ०३६८
( ३ )"कर्तरि शप्"इति,धातोः शप्.३।१।६८॥कौ०पृ०३६८
शपावितौ. गुणः, रपरत्वम्.
( ४ )"आनेमुक्" इति, अङ्गस्यातो मुक्.७।२।८२॥कौ०पृ०५९४
चस्समुच्चये. २०
इत्थम्, सर्वलोकोत्तरस्वैकान्तवृत्तान्तत्वात्, विविच्यते इति—
( विविक्तः ).
( १ )"विचिर्, पृथग्भावे" विपूर्वः.धा०रुधा० कौ०पृ०४७१
( २ ) " निष्ठा" इति,कर्मणि क्तः. ३।२।१०२॥कौ०पृ०५८६

निरु०— २६३ वर्धयंस्तान् स्वयमपि ( वर्धमान ) श्च वर्धनात्। २५
२६४ लोकोत्तराद्वृत्तान्तात् स्वैकान्ताद्गुणबृंहितात्॥१९५॥
( विविक्त ) इति विख्यातः पावनत्वप्रदो मनुः।

| (२६१) वृषोदरः, | (२६२) वर्धनो, |
|---|---|
| ॐ वृषोदराय नमः | ॐ वर्धनाय नमः । |

५ भा०—आराधकानां यथालब्धहविरादिभिस्सुपूरत्वेन,
सर्वार्तास्पदत्वेन वा, धार्मिकोदरत्वात्—
(वृषोदरः). ❋
मातृवत् तान् उदरे कृत्वा वर्धयतीति—
(वर्धनः). ❋

१० निर्व०—(३) "नेट्०"इति,नेट्,वृषशब्दो व्याकृतः.७।२।८॥कौ०
पृ०५८१
इत्थमुत्तरत्रापि. ततः, नान्तलक्षणो दीर्घ इत्यादि. ❋
आराधकानां यथालब्धहविरादिभिस्सुपूरतया,
सर्वास्पदतया वा, वृषः—लक्षणया धार्मिकम्, उदरमस्येति—
१५ (वृषोदरः).
(१) "दृ, विदारणे" उत्पूर्वः. धा०क्र्यादिः कौ०पृ०४७६
(२)"उदिदृणातेरजलौ पूर्वपदान्त्यलोपश्च"उणा०पा०५कौ०पृ०६४२
इति, अच्, अल्वा. स्वरे विशेषः. उदो दलोपश्च.
गुणः. रपरः. बहुव्रीहिः. गुणस्सांहितिकः. ❋
२० मातृवत् तानुदरे कृत्वा वर्धयतीति—(वर्धनः).
(१) "वृधु,वृद्धौ" णिच्. गुणः. रपरः. धा०भ्वादिः कौ०पृ०४१२
द्वित्वम्. ततो नन्द्यादिल्युः. बाहुलकाद्युष्ठेत्यादि.
योरनः.णेर्लोपः. ❋

निरु०—२६१भक्तैरुपाहृतां पूजामुपहारांश्च धर्मतः ।
२५ कृत्वोदरे योजयति स (वृषोदर) उच्यते ॥ १९३ ॥
२६२ मातृवज्जठरे कृत्वा भक्तान् वर्धयति स्वयम् ।
(वर्धनः) प्रोच्यते नित्यं सतार्णां वृद्धिदो मनुः ॥ १९४ ॥

श्लो० ॥ २९ ॥ ( २६६ ) सुभुजो, {२६७ / ७२०} दुर्धरो,

ॐ सुभुजाय नमः । ॐ दुर्धराय नमः ।

भा०— प्रपन्नभरधुर्यशोभनभुजः— ५
( सुभुजः ). ❀
तादृग्भुजबलेन संवर्तसमुद्रवेगः बालक्रीडासैकतसेतुभिरिव परैः
र्दुर्वारवेगः–( दुर्धरः ).
( १ ) " ईषद्दुस्सुषु०"इत्यादिना खल् . ❀ ३।३।१२६॥
कौ०पृ० ६६४ १०

निर्व०–( १ )"श्रुयजीषिस्तुभ्यःकरणे"इति,क्तिन्. ३।३।९५॥
कौ०पृ० ६५९
अगुणः. अनिट्. ❀
प्रपन्नभरधौरेयतया, शोभनाः भुजा अस्येति–
( सुभुजः ). १५
( १ ) " भुज,पालनाभ्यवहारयोः"धा०रुधा० कौ०पृ० ४७१
( २ )"हलश्च"इति,करणे घञ् . ३।३।१२१॥कौ०पृ०६६३
( ३ ) " भुजन्युब्जौ०"इति, ७।३।६१॥ कौ०पृ० ५६३
निपातनात् अगुणत्वम्.
(४) "चजोः०" इति,कुत्वाभावश्च.७।३।५२॥कौ०पृ०५६० २०
स्वित्यव्ययपूर्वो बहुव्रीहिः. ❀
तादृग्भुजबलेन संवर्तसमुद्रवेग इव बालक्रीडासैकतसेतुभिः दुर्वा-
रवेगतया परैः धर्तुमशक्य इति–( दुर्धरः ).
( १ ) " धृञ् , धारणे" दुष्पूर्वः. धा०भ्वादिः कौ०पृ०४२३

निरु०–२६६प्रपन्नभरणे धुर्यभुजो यः (सुभुज)स्तु सः॥१९७॥ २५
२६७ परैर्दुर्वारवेगो यो ( दुर्धर ) स्स च कथ्यते ।

(२६५) श्रुतिसागरः, ॥

ॐ श्रुतिसागराय नमः ।

भा०— एवंप्रकारगुणप्रवणानां श्रुतीनाम् सागर इव सरिदोघानां पर-
५ मा पर्यवसानभूमिरिति—( श्रुतिसागरः ).
( १ ) " नारायणपरा वेदाः " भाग० २—५—१५।
( २ ) " वेदैश्च सर्वैरहमेव वेद्यः " इति. ❀ गी०१५—१५।

निर्व०— किंत्वान्न गुणः. अनिट्.
( ३ ) " चोःकुः " इति, कुः.कुत्वेन चस्य कः. ❀ ८।२।३०॥
१० कौ०पृ०६८
एवंप्रकारगुणप्रवणानां श्रुतीनाम्, सागरः सर्ववेदवेद्यतया,
सरितामिव समुद्रः, परमा पर्यवसानभूमिरिति—( श्रुतिसागरः ).
( १ ) " गॄ, निगरणे " धा०तुदा०कौ०पृ०४६८
( २ ) " ऋदोरप् " इति, अप्. ३।३।५७॥कौ०पृ०६५३
१५ गुणो रपरः. ततः,
( ३ ) " तेनसह० " इति, सहशब्दस्य बहुव्रीहिः. २।२।२८॥
कौ०पृ०१६५
( ४ ) " वोपसर्जनस्य" इति,सहस्य सः. ६।३।८२॥कौ०पृ०१६५
पाक्षिकः. ततः, सगरनिर्वृत्तत्वात्,
२० (५)" तेन निर्वृत्तम् " इति वा. प्रणाड्या ५।१।७९॥कौ०पृ०३०३
तदपत्यलक्षणया वा, संबन्धसामान्यविवक्षया,
( ६ )" तस्येदम् " इति वा, अण्. आदिवृद्धिः. ४।३।१२०कौ०
पृ०२७१
( ७ ) " यस्य० " इति, लोपः. ६।४।१४८॥कौ०पृ०५६
२५ ( ८ ) " श्रु, श्रवणे " धा०भ्वादिः कौ०पृ०४२६

निरु०— २६५. नदीनां सागर इव स्वगुणोक्तिविधाजुषाम् ॥१९५॥
श्रुतीनामवसानत्वात् कथ्यते ( श्रुतिसागरः )।

श्लो० ॥ २९ ॥ (२६६) सुभुजो, {२६७ / ७२०} दुर्धरो,

ॐ सुभुजाय नमः । ॐ दुर्धराय नमः ।

भा०— प्रपन्नशरधुर्यशोभनभुजः— ५
(सुभुजः). ❀
तादृग्भुजबलेन संवर्तसमुद्रवेगः वालक्रीडासैकतसेतुभिरिव प्रै-
दुर्वारवेगः—(दुर्धरः).

(१) " ईषद्दुस्सुषु०" इत्यादिना खल्. ❀ ३।३।१२६॥
कौ०पृ० ६६४

( २६८ ) वाग्मी,

ॐ वाग्मिने नमः ।

ना०—एवम्, दुर्लभः, दुर्गमः, इत्यादयोपि. ❀

५ तथा,प्रशस्यतया वाक्—

( वाग्मी ). प्रशंसायाम्. ❀ वाचो ग्मिनिः.प्रशस्यत्वञ्च वेदात्मकत्वात्, जित्वरमधुरगम्भीरप्रियहितत्वाच्च यथा,

( १ ) " वाग्विवृताश्च वेदाः"

( २ ) " उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा । भूयः कथय

१० तृतिर्हि श्रृण्वतो नास्ति मेऽमृतम् "

निर्व०—( २ ) "ईपदुस्सुपुकृच्छ्राकृच्छ्रार्थेषु खल्".

३।३।१२६ ॥ कौ०पृ० ६६४

इति, कृच्छ्रार्थे दुस्युपपदे कर्मणि खल्.

(३) "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च"३।३।१६३॥कौ०पृ०५५१

१५ इत्यत्र लोटा बाधो माभूदित्येवमर्थकेन कृत्यग्रहणेन ह्यधिकाराद्धर्ममपि तवन्वा सरूपविधिः कचिन्नेति ज्ञापनात्, कल्युट्तुमुन्खलर्थेषु तदभावादिह कृत्याप्रसक्तेः. एवमीदृशे, तत्र तत्र प्रदेशेऽवधातव्यम्. गुणः रपरः.

( ४ ) " ससजुषोरुः"इति,दुसस्सस्य रुः. ❀ ८।२।६६॥

२० कौ०पृ० २६

तथा वेदात्मकतया, जित्वरमधुरगम्भीरप्रियहिततया च, प्रशस्यतया वाक् अस्यास्तीति—( वाग्मी ).

(२६९) महेन्द्रो,

ॐ महेन्द्राय नमः ।

भा०—(३) " बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियवदः "
(४)"ईरयन्तं भारतीं भारतानामर्चनीयां शंकरीम् सृञ्जयानाम् । ५
बुभूषन्निर्ग्रहणीयामनिन्द्यां परासूनामग्रहणीयरूपाम् "
(५) "ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् । अनर्मकृतमत्र-
स्तमनिरस्तमसंकुलम् ॥ राजीवनेत्रो राजानं हेतुमद्वाक्यमब्रवीत्"
इत्यादि. ❀
एवं सर्वतोमुखं प्रसृतत्वात्, पूज्यपरमैश्वर्यः— १०
(महेन्द्रः).
(१) " इदि, परमैश्वर्ये " धा०दिवा० कौ०पृ० ३८७

निर्व०—प्राप्तसंप्रसारणाभावश्च. इत्थं सिद्धात् वाक्छब्दात्,
(४) " वाचोग्मिनिः"इति,प्रशंसायाम्, ५।२।१२४ ॥ कौ०
पृ० ३३१ १५
मत्वर्थे ग्मिनिः.
(५) " आलजाटचौ बहुभाषिणि" ५।२।१२५॥ कौ०पृ०३३१
इत्यत्र, ❀ कुत्सित इति वक्तव्यात्, प्रशंसायां वाचो बहुत्वेपि
ग्मिनिरेव; नालजाटचौ.
(६) "लशकु०" इति, न गस्येत्संज्ञा, १।३।८॥कौ०पृ०३२ २०
❀ अतद्धिते इति प्रतिषेधात्. ❀ चोःकुः कः, जश्त्वेन गः.
इन्नन्लक्षणो दीर्घ इत्यादि. ❀
एवम्, सर्वतोमुखं प्रसृतत्वेन पूर्णपरमैश्वर्यतया महांश्चासाविन्द्र
श्चेति—(महेन्द्रः).

निरु०—२६९ परमैश्वर्यवत्त्वेन (महेन्द्र) इति भण्यते । २५

१ परां साधूनां ग्रह ।

(२७०) वसुदो,

ॐ वसुदाय नमः ।

भा०–(२)"ऋज्रेन्द्राग्र०" इत्यादिना, उणा०पा०२ कौ०पृ०६२०
५ रन्प्रत्ययान्तो निपातितः. ❀
एवं सत्यप्यनभिभवनीये महेन्द्रत्वेन महत्त्वे लघुभ्यो धनायद्भ्यो धनं ददातीति–( वसुदः ).यथा,
(१) "देवेन्द्रस्त्रिभुवनमर्थमेकपिङ्गः" इत्यादि. ❀ वि०भ०४३-४७।
(२) "वासुदेवस्सर्वम्" इतिप्रकारेण, गी० ७–१९ ।
१० गरीयसां स्वयमेव धनमिति–

निर्व०–(१) "इदि,परमैश्वर्ये"धा०भ्वादिः कौ०पृ० ३८७
❀ इदितोनुम्धातोः. अनुस्वारपरसवर्णौ. अयम्,
(२) "ऋज्रेन्द्राग्र०" इत्यादिना रन्नन्तो निपातितः. उणा०पा०२ कौ०पृ० ६२०
१५ व्युत्पादि हि महच्छब्दः! तत आत्वम्. दीर्घः. ❀ आद्गुणः. ❀
एवं सत्यपि अनभिभवनीये महेन्द्रत्वेन महत्त्वे, लघुभ्यो धनायद्भ्यो वसु–धनम्, ददातीति–
( वसुदः ).
(१) "डुदाञ्, दाने" धा०जुहो०कौ०पृ०४५१
२० (२)"आतोऽनुपसर्गेकः"इति, कः.आल्लोपः.३।२।३॥कौ०पृ०५७०
वसुशब्दः वसतेः,
(३)" शृस्वृस्निहि०" इति, उणा० पा० १ कौ०पृ०६०९
उप्रत्यये व्युत्पादितः. ❀
गरीयसां स्वयमेव वसुः–धनमिति–

२५ निरु०–२७० ( वसुदो ) धनदानाच धनायद्भ्यो विशेषतः॥१९९॥

{१०५ / ७०१}(२७१)वसुः, । ( २७२ ) नैकरूपो,

ॐ वसवे नमः । ॐ नैकरूपाय नमः ।

भा०– ( वसुः ). ❋ ५
अथ, यथोक्तमहिमोचितवैश्वरूप्यम्. तत्तत्सर्वप्रतीतियोग्यरूपः–
( नैकरूपः ).
(१)"नभ्राण्णपात्०" इत्यत्र नभ्राट् ६।३।७५॥कौ०पृ०१४८
ग्रहणस्य प्रदर्शनार्थत्वात्, नञ्समासस्य महाविभाषया विकल्पित-
त्वाद्वा, नलोपाभावः. १०

निर्व०– ( वसुः ).
( १ ) " वस, निवासे " धा०भ्वादिः कौ०पृ०४३२
( २ ) " शृस्वृस्निहि०"इत्यादिना,उणा०पा०१कौ०पृ०६०९
उरित्युक्तमेव.
( ३ ) "लिङ्गमशिष्यम्"इत्यादि. ❋ ॥ महाभाष्ये ॥ १५
अथ,यथोक्तमहिमोचितवैश्वरूप्यं प्रव्यज्यते. नैकानि–अनेकानि,
तत्तत्सर्वप्रतीतियोग्यानि रूपाणि, अस्येति–
( नैकरूपः ).
( १ ) " रु, शब्दे "धा०अदा०कौ०पृ०४३९
(२)"खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः"उणा०पा०३कौ०पृ०६२६
इति,पप्रत्ययः,धातोर्दीर्घः, इडभावश्च निपात्यते. २०

निरु०–२७१ सर्वस्य हरिरूपत्वाद्धनं यस्माद् ( वसु ) स्ततः ।
२७२ यस्सदा बहुरूपश्च ( नैकरूप ) स्स कीर्तितः ॥ २०० ॥
तत्तज्जनज्ञानयोग्यं रूपं यस्य विशेषतः ।
( नैकरूप ) स्समुद्दिष्टः सर्वप्रत्ययगोचरः ॥ २०१ ॥ २

## (२७३) बृहद्रूपः,

ॐ बृहद्रूपाय नमः।

भा०—एवम्, नैकमाय इत्यादयः.
५ (२) "विश्वरूपाय" इति मन्त्रवर्णात्. ॥ मन्त्रे ॥
(३) "पश्यामि त्वा सर्वतोऽनन्तरूपम्" इति. ❀ गी० ११—१६।
एष्वेकैकमेव दिग्व्योमावकाशं व्याप्नुवत् बृहद्रूपमस्येति—
(बृहद्रूपः).यथा,

निर्व०—(३) "इण्, गतौ" धा०अदा०कौ०पृ०४४१
१० (४) "इण्भीकापाशल्यतिमर्चिभ्यः कन्" इति, उणा०पा०३
कौ० पृ०६२७ कन्. गुणः. अनिट्. नञ्समासः.नच,
(५) "नलोपोनञः" इति, नलोपश्शङ्क्यः, ६।३।७३॥कौ०पृ०१४७
(६) "नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्र
नक्रनाकेषु प्रकृत्या" इति.सूत्रे६।३।७५॥कौ०पृ०१४८
१५ नभ्राड्ग्रहणस्योपलक्षणार्थतया क्वचिदन्यत्रापि नञ्-
समासे प्रकृतिभावात्. यद्वा, नञ्समासस्य महाविभाषया
विकल्पितत्वेन तदभावात्, समासचरमावयवरूढोत्तर
पदनिमित्तकनलोपाभावः. अत्रच नञःसमुदायेन
संबन्धः. न शब्दसमासोऽयम्,ननु नञ्समास इति तु
२० महान् पन्थाः. प्रागपि इदं मनागुक्तम्. वृद्धिः. ❀
एषु एकैकमेव बृहत्- व्योमावकाशं व्याप्नुवत् रूपमस्येति—
(बृहद्रूपः).रूपशब्दो हि निरूपितः?
(१) "बृह.वृद्धौ" धा०भ्वादिः कौ०पृ०४११

निरु०—२७३व्याप्नुवद्यस्य रूपं तु (बृहद्रूप) स्स कीर्तितः।

## ( २७४ ) शिपिविष्टः,

ॐ शिपिविष्टाय नमः ।

भा०– (१) "द्यावापृथिव्योरिदमन्तर हि व्याप्तं त्वयैकेन दिशश्च सर्वाः" इति. ❀ गी०११–२० । ५
शिपयः–रश्मयः, तान् संप्रविष्टः–व्याप्तवानिति–
( शिपिविष्टः ).यास्कः,
( १ ) " शिपयो रश्मय उच्यन्ते तैराविष्टः" इति. ॥ यास्के ॥
एतत्प्रायमार्षम्,
( २ )"शिपिविष्टेति यच्चास्य पतिं रोम च यद्भवेत् । तेनापि विष्टं १० यत्किंचित् उद्योगे, शिपिविष्ट हि तत्स्मृतम्"भा०शा०३४३–४१।
( ३ )" रोमकूपेषु च तथा सूर्यस्येव मरीचयः"इति.भा०उ० ।
(४)"तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो"इति. ❀

निर्व०–(२)"वर्तमाने पृषद्बृहत्०"उणा०पा०२कौ०पृ०६२२ १५ इत्यादिना, अतिप्रत्ययः. गुणाभावश्च निपात्यते. जश्त्वम्. वचनानुसारात्. शिपयः–रश्मयः तैस्सर्वम्, तान्वा, आविष्टः–समाविष्टः आविष्टो व्याप्तवानिति–
( शिपिविष्टः ).
( १ ) ' विश,प्रवेशने"धा०तुदा० कौ०पृ०४६९ २०
( २ ) " विष्लृ, व्याप्तौ " वा.धा०जुहो०कौ०पृ०४५१
(३)' गत्यर्थ०" इत्यादिना कर्तरि क्तः,३।४।७२॥कौ०पृ०५९६ कित्त्वान्न गुणः. अनिट्. पूर्वत्र,
( ४ ) " व्रश्च० " इत्यादिना शान्तत्वात् ८।२।३६॥कौ०पृ०५१

निरु०–२७४शिपयो रश्मयः प्रोक्ताः व्याप्य तेष्वपि वर्तनात्॥२०२॥ २५
( शिपिविष्ट ) स्समाख्यातस्सूर्येन्द्वग्न्यादिरूपवत् ।

(२७५) प्रकाशनः, ॥

ॐ प्रकाशनाय नमः ।

भा०— इदमेव दिव्यं रूपं दिदृक्षुभ्योऽर्जुनादिभ्योऽसौ प्रकाशयतीति-
५ (प्रकाशनः). यथा,
(१) " दिव्यन्ददामि ते चक्षुः पश्य मे योगमैश्वरम् " गी० ११-८।
(२) "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम" इति. ❀ गी० ११-५२।
(ओजः)—बलम्, (तेजः)—पराभिभवनसामर्थ्यम्, कीर्तिर्वा,
(द्युतिः)—औज्ज्वल्यम्, तानि धरतीति—

१० निर्व०— पत्वम्, ष्टुत्वम्, उभयत्र टः.
(५) " पिश, अवयवे " तुदादौ मुचादिः. धा०तुदा०कौ०पृ०४७०
(६) " अयं दीपनायामपि " अत्रच धा०तुदा०कौ०पृ०४७०
दीपनाक्रियः.
(७) " पृषोदरादीनि यथोपादिष्टम् " इति, ६।३।१०९॥ कौ०
१५ पृ०११७
वर्णविपर्यये विकारे च शिपेत्यस्मात्,
(८) "इन्सर्वधातुभ्यः" इति, इन्. स च, उणा०पा०४कौ०पृ०६३७
(९) " इगुपधात्कित् " इति, कित्; कित्वात् उणा०पा०४
कौ०पृ०६३७ न लघूपधगुणः. ❀
२० इदमेव दिव्यं रूपं दिदृक्षुभ्योऽर्जुनादिभ्यः प्रकाशयतीति-(प्रकाशनः).
(१) " काशृ, दीप्तौ " प्रपूर्वः. णिच्.धा०दिवादिः कौ०पृ०४५५
ल्युः; ल्युड्वा.बाहुलकात्. नन्द्यादिः. अनः.णिलोपः. ❀
ओजः—बलम्, तेजः—पराभिभवनसामर्थ्यम्, कीर्तिर्वा,
द्युतिः— औज्ज्वल्यम्, तानि धरतीति—

निरु०— २७५ दिव्यरूपं दिदृक्षुभ्यः पार्थादिभ्यो विशेषतः ॥२०३॥
रूपं प्रकाशयति यस्स (प्रकाशन) ईरितः ।

१धारयतीति । धत्ते ।

श्लो०॥३०॥ ( २७६ ) ओजस्तेजोद्युतिधरः,

ॐ ओजस्तेजोद्युतिधराय नमः ।

भा०— ( ओजस्तेजोद्युतिधरः ) . सएव, एकन्नाम.
( १ ) " यथा प्रदीप्तज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः" ५
गी० ११—२९ ।
( २ ) " स्थाने हृषीकेश तव प्रकीर्त्या " गी० ११—३६ ।
( ३ ) " दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता " इत्यादि. ❀
गी० ११—१२ । सूरिभिरपि संप्रतिपन्नपरप्रभावः—

निर्व०— ( ओजस्तेजोद्युतिधरः ). एकन्नाम. १०
( १ )"धृञ्,धारणे"पचाद्यच्.गुणः रपरः. धा०भ्वादिः कौ०पृ०४२३
( २ ) " द्युत, दीप्तौ " धा० भ्वादिः कौ०पृ० ४११
( ३ )"इन् सर्वधातुभ्यः" इति, इन्. उणा०पा०४कौ०पृ०६३७
( ४ )" इगुपधात् कित् " इति, कित्; कित्त्वान्न गुणः. उणा०
पा०४कौ०पृ०६३७ १५
(५) "तिज, निशातने, क्षमायाञ्च." धा०चुरा०कौ०पृ०४८३ ❀
( ६ ) "सर्वधातुभ्योऽसुन्"इति,असुन्,गुणः.उणा० पा० ४ कौ०
पृ० ६४०
( ७ ) " उब्ज, आर्जवे " धा० तुदा०कौ०पृ०४६५
( ८ ) " उब्जेर्बलोपश्च " इति, असुन्, उणा०पा०४ कौ० २०
पृ०६४० बलोपश्च. लघूपधगुणः. षष्ठ्या विग्रहः. तदर्थप्रदर्शनमे-
तत्. अतः न कर्मण्यणित्युक्तमेव. ❀ सूरिभिरपि संप्रतिपन्नपरप्रभा-
वतया, प्रकाशः—प्रदीप्तः, आत्मा— स्वभावः, अस्येति—

निरु०— २७६ असाधारणसामर्थ्यं बलमोजः प्रचक्षते ॥२०४॥
पराभिभवसामर्थ्यं तेजश्चपरिपठ्यते। कीर्तिर्वा द्युतिरौज्ज्वल्यं तानि २५
धत्ते च यस्सदा ॥२०५॥ ( ओजस्तेजोद्युतिधरो ) ह्येकनामा
प्रकीर्तितः ।

(२७७)प्रकाशात्मा,(२७८)प्रतापनः, । {२७९ / ३५३} ऋद्धम्,

ॐ प्रकाशात्मने नमः। ॐ प्रतापनाय नमः। ॐ ऋद्धाय नमः।

५ भा०—( प्रकाशात्मा ). यथा, धृतराष्ट्रः,
( १ ) " त्वमेव पुण्डरीकाक्ष सर्वस्य जगतः प्रभुः। तस्मान्मे यादव-
श्रेष्ठ प्रसादं कर्तुमर्हसि"इति. ❋ भा०उ० ।
( १ ) " भासस्तवोग्राः प्रतपन्ति"इति—
( प्रतापनः ). ❋
१० एवम्,कूलमुद्वहत्पार्वणार्णं वइव—
( ऋद्धः ).यथोद्योगे,
( १ ) " ततस्स पुरुषव्याघ्रः संजगाद पुनस्स्वयम्। तान्दिव्यामद्भुता-
श्चित्रामृद्धिमत्तामरिन्दम"इति. ❋ भा०उ० ।

निर्व०—( प्रकाशात्मा ).व्युदपादि चात्मशब्दः.
१५ ( १ ) " काश्, दीप्तौ" प्रपूर्वः.धा०दिवा०कौ०पृ० ४५५
पचाद्यच्. दीर्घः. ततः, नान्तलक्षणो दीर्घ इत्यादि. ❋
स्वतेजोभिः जगत् प्रतापयतीति—( प्रतापनः ).
( १ ) " तप,सन्तापे"प्रपूर्वः.धा०भ्वादिः कौ०पृ० ४३०
णिच्.उपधावृद्धिः. ल्युः.ल्युट्टेत्यादि. अनः. णिलोपः. ❋
२० इत्थम्, कूलमुद्वहत्पार्वणपाथोनिधिरिव ऋद्धः—समृद्ध इति—(ऋद्धः).

निरु०—२७७ मूर्खैरपि सदा सम्यक् प्रतिपन्नस्वभाववान्॥ २२६॥
यस्स स्यात्तु ( प्रकाशात्मा )
२७८ तीक्ष्णभावः ( प्रतापनः ) ।
२७९ पार्वणो जलधिर्यद्वदृद्धिमान् ( ऋद्ध ) उच्यते॥ २२७॥

१ अर्णवजलवत् ऋद्धः ।

(२८०) स्पष्टाक्षरो,

ॐ स्पष्टाक्षराय नमः ।

भा०—अनयर्ध्या प्रतिपाद्यया स्पष्टीकृतवेदाक्षर इति—
(स्पष्टाक्षरः). ❀ ५

निर्व०—(१) "स्पशु,बृद्धौ"धा०स्वादिः कौ०पृ० ४६१
(२) "गत्यर्थ०"इत्यादिना अकर्मकात् ३।४।७२ ॥ कौ०
पृ० ५९६
कर्तरि क्तः.
(३)"झपस्तथोर्धोधः"इति,तस्य धः.८।२।४०॥कौ०पृ०३८५ १०
(४) "झलां जश् झशि" इति, ८।४।५३॥ कौ०पृ० ९
जश्त्वेन पूर्वस्य धस्य दः.
(५) "उदितो वा"इति, ७।२।५६ ॥ कौ०पृ० ६६८
क्त्वायामिड्विकल्पात्,
(६) "यस्य विभाषा"इति, ७।२।१५ ॥ कौ०पृ० ५८७ १५
निष्ठायां नेट्. कित्वान्न गुणः. ❀
प्रतिपाद्यया चानयर्ध्या स्पष्टम्—स्पष्टीकृतम्, अक्षरम्—वेदाक्षरम्,
अस्येति—(स्पष्टाक्षरः).
(१) "अशू,व्याप्तौ"धा०स्वादिः कौ०पृ० ४६३
(२) "अश,भोजने"वा.धा०क्र्यादिः कौ०पृ० ४७८ २०
(३) "अशेस्सरन्" इति,सरन्.उणा०पा०३ कौ०पृ०६२८
(४) "तितुत्र०"इति,नेट्. ७।२।९॥कौ०पृ० ६०८
(५) "व्रश्च०"इति,शस्य षः. ८।२।३६ ॥ कौ०पृ० ५१
(६) "षढोः०"इति,षस्य कः. ८।२।४१॥ कौ०पृ० ५२
(७) "इण्कोः"इत्यधिकृत्य, ८।३।५७॥ कौ०पृ०३४ २५

निरु०—२८० स्पष्टीकृताश्च वेदार्णा यस्मात् (स्पष्टाक्षरो) मतः ।

(२८१) मन्त्रः,

ॐ मन्त्राय नमः ।

भा०—" तन्मन्तारं त्रायत इति—
५ (मन्त्रः)" इति नैरुक्ताः. ब्राह्मे, दुष्टविद्रावणस्तोत्रे,
(१) "प्राणप्रयाणे कः स्मर्तुं शक्तस्स्यान्मधुसूदन" इति, ॥ ब्राह्मे ॥
पृच्छन्तं नारदं प्रति भगवान्,
(२) " तृष्णातोयसमाकीर्णाद्घोरात् संसारसागरात् । अपारा-
त्पारमाप्नोति यो मां स्मरति नित्यशः " ।। ब्राह्मे ॥
१० (३) " स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये
स्थिते स्मर्ता विश्वरूपञ्च मामजम् ।। ततस्तं म्रियमाणन्तु काष्ठपाषाणस-
न्निभम् । अहं स्मरामि मद्भक्तं नयामि परमाङ्गतिम्" इति. ❀ ।।वाराहे।।

निर्व०—(८)"आदेशप्रत्यययोः" इति,षः.८।३।५९।।कौ०पृ०३४
(९) " स्पश,बाधनस्पर्शनयोः" धा०भ्वादिः कौ०पृ० ४२१
१५ (१०) " वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" ७।२।२७ ॥
कौ०पृ० ५९४
इति, णिचि निष्ठान्ततया निपातनात् इडभावः णिलुक्च.
लुका लुते प्रत्ययलक्षणाभावात् नोपधावृद्धिः. शान्तलक्षणपत्वष्टुत्वादि-
कन्तु यथाशास्त्रमेव. दीर्घः. ❀
२० निरुक्तानुसारात् तन्मन्तारं त्रायते इति—(मन्त्रः).
(१) " त्रैङ्,पालने" धा०भ्वादिः कौ०पृ० ४२७
(२) " आदेचः०" इति,आत्त्वम्. ६।१।४५ ॥ कौ०पृ० ४२३
(३)"आतोऽनुपसर्गेकः" इति,कः. आल्लोपः. ३।२।३।।कौ०पृ०५७०

निरु०—२८१ मन्तारं त्रायत इति (मन्त्र) श्चाप्यभिधीयते।।२०८।।

(२८२) चन्द्रांशुः,

ॐ चन्द्रांशवे नमः ।

भा०—तेषां मन्तॄणां क्लमहराह्लादनतेजस्त्वात्—(चन्द्रांशुः).
(१) "चदि,आह्लादने" धा०भ्वादिः कौ०पृ० ३८७　　५
(२) "स्फायितञ्चि०"इत्यादिना रक्,चन्द्रः.यथा,उणा०पा०२ कौ०पृ०६१९
(३) "ते तं सोममिवोद्यन्तं दृष्ट्वा" इत्यादि. ❋

निर्व०—"मन,ज्ञाने"ताच्छीलिकस्तृन्.अनिट्.धा० दिवा०कौ० पृ० ४५६　　१०
अनुस्वारपरसवर्णौ. ❋ पृषोदरादित्वात् तृशब्दलोपः.ऋतो वा. ❋ तेषां मन्तॄणां क्लमहरणतया, चन्द्राः—आह्लादनाः, तस्यैव वा; अंशवः तेजांसि, अस्येति—
(चन्द्रांशुः). पूर्वत्र चन्द्र इति यावत्. अपरत्रतु स्पष्ट एवायमर्थः.
(१) "अश,व्याप्तौ"धा०स्वादिः कौ०पृ० ४६३　　१५
(२)"मरुशरु०" इत्यादिना,उः कुर्वा,उणा०पा०१कौ०पृ०६११ नुमूच निपातितः.तत्सामर्थ्यात् अनिदितोप्यस्य कौ न नलोपः. अनुस्वारः.तत्रतु अस्यापाठे बाहुलकात् प्रत्ययः, पृषोदरादिलक्षणो वर्णागमादनुस्वारश्चेत्युक्तमेव.
(३)"चदि,आह्लादने" इदित्त्वान्नुम्.धा०भ्वादिः कौ०पृ० ३८७ २०
अनुस्वारादि.
(४)"स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिव-सिवाशिशीङ्हसिसिधिशुभिभ्यो रक्" इति,रक्. उणा० पा०२कौ०पृ०६१९　　२५

निरु०—२८२ क्लमहारि महाह्लादतेजस्करतयापि च ।
मन्तॄणमेव (चन्द्रांशु) राह्लादफलदो मनुः ॥२०९॥

## (२८३) भास्करद्युतिः, ॥

ॐ भास्करद्युतये नमः ।

भा०—परेषां परिभावुकप्रभावत्वात्—
५ (भास्करद्युतिः). यथा,
(१) "रक्षांसि भीतानि दिशो द्रवन्ति" इति,गी० ११—३६।
(२) "शरजालांशुमान् शूरः कपे रामदिवाकरः । शत्रुरक्षोमयन्तोयमुपशोषन्नयिष्यति" इतिच. रा०सु० ३—७—१६। उभयत्र,
(३) "एवमेषोऽसुराणाञ्च सुराणाञ्चैव सर्वशः । भयाभयकरः कृष्णस्स-
१० र्वलोकेश्वरः प्रभुः" इति. ❋ भा०स० ६२—२७।

निर्व०—इदित्वान्न नलोपः.
(५) "नेड्वशि०" इति,नेट्.बहुव्रीहिः. ७।२।८॥कौ०पृ०५८१
अनुकल्पेऽव्ययम्. यतः,
(६) "सप्तमीविशेषणेबहुव्रीहौ" इत्यत्र सप्तमीग्र-२।२।३५॥कौ०
१५ पृ० १७३
हणात्; अन्यथा चापि वा. सहि व्यधिकरणानामपि भवति. ❋ परपरिभावुकप्रभावतया भास्करस्य—सूर्यस्येव, द्युतिः-दीप्तिः, अस्येति-(भास्करद्युतिः).
(१) "द्युत, दीप्तौ" इन्. धा०भ्वादिः कौ०पृ० ४११
२० (२) "इगुपधात्कित्" इति,कित्.उणा०पा०४ कौ०पृ० ६३७
ततो न गुणः.
(३) "डुकृञ्, करणे" ततः,धा०तना०कौ०पृ० ४७३
(४) "भा,दीप्तौ" धा०अदा०कौ०पृ० ४४३

निरु०—२८३ परप्रभावाभिभवलक्षणद्युतिमांश्च यः ।
२५ स (भास्करद्युतिः) प्रोक्तो नेत्रवैमल्यदो मनुः ॥ २१० ॥

श्लो० ॥ ३१ ॥ (२८४) अमृतांशूद्भवो,

ॐ अमृतांशूद्भवाय नमः ।

भा०—सर्वतापहराप्यायनमृतसंजीवनामृतमयांशुश्चन्द्रोपि तन्मनश्शै-
त्यादिगुणोपस्नेहात् तथोद्भवतीति— ९
( अमृतांशूद्भवः ).

निर्व०— (५)"सर्वधातुभ्यः०"इति,असुन्. दीर्घः. उणा०१।०४
कौ०पृ०६४०
एवं सिद्धे भाश्शब्दे उपपदे,
( ६ ) " दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलि १०
पिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यतद्धनुररुष्पु"इति,
टः. गुणः. रपरत्वम्. ३।२।२१।।कौ०पृ०५७४
( ७ ) " ससजुषो रुः" इति,८।२।६६।।कौ०पृ०२६
भासस्सकारस्य रुत्वम्.
( ८ )"खरवसानयोर्विसर्जनीयः"इति,८।६।१५।।कौ०पृ०१२ १९
रेफस्य विसर्जनीयः.तस्य,
( ९ ) " कुप्वो≍क≍पौच" इति,८।३।३७।।कौ०पृ०२३
जिह्वामूलीये प्राप्ते, तदपवादः,
(१०)"कस्कादिषुच"इति,कस्कादेराकृति-८।३।४८।।कौ०पृ०२३
गणत्वात्,सः.व्यधिकरणपूर्वपदो बहुव्रीहिः.तत्रचो-त्कैव गतिः. ❀२०
अमृतांशोः- सर्वतापहराप्यायनमृतसंजीवनामृतमयांशोश्चन्द्रस्यापि,
तन्मनश्शैत्यादिगुणोपस्नेहात् तथोद्भूतत्वेन उद्भवति अस्मादिति,
( उद्भवः )— उत्पत्तिस्थानम्, इति—( अमृतांशूद्भवः ).

निर्व०—२८४ सर्वतापहरस्यैव मृतसंजीवनस्य च ।
अमृतांशोर्हि तज्जत्वा ( दमृतांशूद्भवः ) स्मृतः ॥ २११ ॥

{२८५ / १२६} भानुः,

ॐ भानवे नमः ।

भा०—( १ ) "चन्द्रमा मनसो जातः" इति. ※ पु०सू०।
५ अतिभास्वरेण सहस्रांशुनाप्युपजीव्यतेजा भातीति—
( भानुः ).
( १ ) "यस्यादित्यो भामुपयुज्य भाति" इति. ※

निर्व०—(१)"भू,सत्तायाम्"उत्पूर्वः.धा०भ्वादिः कौ०पृ०३६८
( २ ) "भावे"३।३।१८॥कौ०पृ०६४७
१० ( ३ ) "अकर्तरिचकारके०"इत्यनुवृत्तौ,३।३।१९॥कौ०पृ०६४७
( ४ ) "ऋदोरप्"इति,अपादाने३।३।५७॥कौ०पृ०६५२
अप्.गुणावादेशौ.
( ५ ) "अशू,व्याप्तौ"धा०स्वादिः कौ०पृ०४६३
( ६ ) "खरुशरु०" इत्यादिना,उणा०पा०१कौ०पृ०६११
१५ अन्यथा चापि अंशुशब्दो व्युत्पादितः.
( ७ ) "मृङ्, प्राणत्यागे" धा०तुदा०कौ०पृ०४६८
(८) "हसिमृग्रिण्० " इत्यतः तन्निति वर्तमाने,उणा०पा० ३कौ० पृ०६२८
(९)"तनिमृङ्भ्यां किच्च"इति,तन् कित्.उणा०पा०३कौ०पृ०६२९
२० अगुणः.अनिट्.नञ्समासः. नलोपः. तत उभयत्रापि सवर्णदीर्घः. ※
अतिभास्वरेण भास्करेणापि उपजीव्यतेजा भातीति—
( भानुः ).
( १ ) "भा,दीप्तौ " धा०अदा०कौ०पृ०४४३
(२)"दाभाभ्यान्नुः"इति,नुः.अनिट्. ※ उणा०पा० ३कौ०पृ०६२६

२५ निरु०—२८५रवेस्तेजस्करत्वाच ( भानु )रित्यभिधीयते।

## (२८६) शशबिन्दुम्,

ॐ शशबिन्दवे नमः।

भा०—एवञ्च—
(शशबिन्दुः). ५
(१) "शश,प्लुतगतौ"शशानां कुटिलगतीनाम्, धा०भ्वादिः कौ० पृ०४१०
(बिन्दुः)—अपलपिता.
(२) "बिदि,अवयवे" धा०भ्वादिः कौ०पृ०३८७
बिन्दुरिच्छुरित्युप्रत्ययान्तो निपातितः. ❋ १०
तथा ऋजुगतीनाम् निर्वाहकः—

निर्व०—एवंच, शशानाम्—कुटिलगतीनाम्, बिन्दुः- अपलपितेति- (शशबिन्दुः).
(१)"बिदि,अवयवे"अपलापक्रियः धा०भ्वादिः कौ०पृ०३८७
इहायम्. अनेकार्थाहि धातवः ? अपलाप इत्येव वा पाठः. १५
इदित्त्वान्नुमित्यादि.
(२) "बिन्दुरिच्छुः"इति बवयोरभेदात्, विदिविद्योरुभयोरप्यु प्रत्ययो निपात्यते. ताच्छीलिकः वेत्तेर्नुम् च. यदितु वेत्तेरेवेदन्निपातनं बिन्दुरिति; तदा,
(३) "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" २०
इत्यत्र चकारात् अनुक्तसमुच- उणा०पा०१कौ०पृ०६०९
यार्थात् विन्देरुः; बाहुलकाद्वा.
(४) शश, प्लुतगतौ"पचाद्यच्. ❋ धा०भ्वादिः कौ०पृ०४१०
ऋजुगतीनां सुराणां देवानाम्, ईश्वरः-निर्वाहक इति—

निरु०—२८६शशप्लुतगतिः प्रोक्तो बिन्दुस्तस्य निवर्तकः॥२१२॥२९
कौटिल्यगतिविध्वंसी (शशबिन्दु) रुदाहृतः।

## ( २८७ ) सुरेश्वरः । ( २८८ ) औषधम्,

## 'ॐ सुरेश्वराय नमः, । ॐ औषधाय नमः ।

५ भा०—( सुरेश्वरः ).
( १ ) " सर्वजिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् " इतिवत्. ❀
भवतीव्रविषापहप्रभावत्वात्—
( औषधम् ).यथा,
( १ ) " देवा देवर्षयश्चैव यं विन्दुर्दुःखभेषजम्"
१० ( २ ) " एकाग्रतामूल्यबलेन लभ्यं भवौषधन्त्वं भगवन् किलैकः"
इत्यादि. ❀

निर्व०—( सुरेश्वरः ).
( १ ) " ईश,ऐश्वर्ये" धा०अदा०कौ०पृ० ४३८
(२) "स्थेशभास०" इत्यादिना वरच्. ३।२।१७५॥कौ०पृ०६०६
१५ ( ३ ) " नेट्० " इति,नेट्.७।२।८॥कौ०पृ० ५८१
( ४ ) " षु,प्रसवैश्वर्ययोः " परस्मै. धा०अदा०कौ०पृ० ४४०
व्युदपादि चातः क्रनि सुरशब्दः. गुणः. ❀
औषधम्– भवतीव्रविषापहं भेषजमिति—
( औषधम् ).
२० ( १ ) " डुधाञ्,धारणपोषणयोः "ततः,धा०जुहो० कौ०पृ०४५१
( २ ) " उष,दाहे "भावे घञ्.गुणः.धा०भ्वादिः कौ०पृ०४०९
ततस्तत्रोपपदे,
( ३ ) " कर्मण्यधिकरणेच " ३।३।९३॥कौ०पृ०६५८
इति, किः. आतो लोपः. इत्थं निष्पन्नात् ओषधिशब्दात्,
२५ ( ४ ) " ओषधेरजातौ "इति, प्रकृतेचा-५।४।३७॥कौ०पृ०३५५

निर्व०—२८७ धर्ता ऋजुगतीनां यः स ( सुरेश्वर ) ईरितः॥२१३॥
२८८ भवतीव्रविषं हर्ता ( ह्यौषधं )यस्स उच्यते।

( २८९ ) जगतस्सेतुः,

ॐ जगतस्सेतवे नमः ।

भा०—एवं सदसद्वर्गसंकरविरोधित्वेन—
( जगतस्सेतुः ). ५
( १ ) " षिञ् ,बन्धने " धा०स्वादिः कौ०पृ०४६१
( २ ) " सितनिगमि० " इत्यादिना तुन्. यथा, उणा०पा०१
कौ०पृ०६१३
( ३ ) " एष सेतुर्विधरण एषां लोकानामसंभेदाय " इति.बृ०उ०
६–४–२२। १०
अतः खलु कर्मसु अकृताभ्यागमकृतविप्रणाशयोरप्रसक्तिः.
( ४ ) " यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्व-
कृतं कर्म कर्तारमनुविन्दति "
( ५ ) " शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते " इति. ❀

निर्व०—जातिवचनत्वात् स्वार्थे अण्. १५
(५)"तद्धितेष्वचा०"इति,आदिवृद्धिः.७।२।११७॥कौ०पृ०२०४
( ६ ) " यस्य० "इति,लोपः. ६।४।१४८॥ कौ०पृ०५६
( ७ ) " लिङ्गमशिष्यम् "इत्यादि. ❀ ॥ महाभाष्ये ॥
एवम्,कर्मसु अकृताभ्यागमकृतविप्रणाशप्रसङ्गपरिजिहीर्षया
जगतां सेतुः— तद्वत् सदसद्वर्गासंभेदहेतुरिति— २०
( सेतुः ).
( १ ) " षिञ् ,बन्धने " परस्मै.धा०स्वादिः कौ०पृ०४६१
( २ ) " सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् "उणा०पा०१
कौ०पृ०६१३
इति, तुन्. गुणः. अनिट्. जगच्छब्दो व्युत्पादितः. ततो ङस्. ❀ २५

निर्व०—२८९ निरोधा ( जगतस्सेतु )स्सदसद्वर्गसङ्गतेः ॥२१४॥

(२९०) सत्यधर्मपराक्रमः, ॥

ॐ सत्यधर्मपराक्रमाय नमः ।

भा०—एवंविधा धर्माः— कल्याणगुणाः, पराक्रमाः—चेष्टितानि च,
५ सत्याः— अवितथाः, यस्य, सः—
( सत्यधर्मपराक्रमः ). तथाहि. गुणचेष्टितानि प्रक्रम्य,
( १ ) " सर्वमेतदृतं मन्ये यन्मां वदसि केशव" गी० १०—१४।
इत्यर्जुनः.
( २ ) " विष्णुस्सत्यपराक्रमः "
१० ( ३ ) "यं वा केष्वनुवाकेषु निपत्सूपनिपत्सु च । गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु "इति च. ❀

निर्व०— एवंविधाः सत्याः— अवितथाः, धर्माः— कल्याणगुणाः,
पराक्रमाः— चेष्टितानि, चास्येति—
( सत्यधर्मपराक्रमः ).
१५ ( १ ) " क्रमु,पादविक्षेपे " परापूर्वः.भावे घञ्.धा०भ्वादिः
कौ०पृ०४०१
(२)"अत उपधायाः"इति, वृद्धिप्राप्तौ,७।२।११६॥कौ०पृ०३८६
(३)"नोदात्तोपदेशस्यमान्तस्यानाचमेः "७।३।३४॥कौ०पृ०५४१
इति, तन्निषेधः.
२० ( ४ ) " धृञ्,धारणे " धा०भ्वादिः कौ०पृ०४२३
( ५ ) " अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् "
इति, मन्.गुणः रपरः.अनिट्. उणा०पा०१कौ०पृ० ६१६
अस्तेर्युत्यादितात्, सच्छब्दात् यतिसत्यशब्दोहि व्युदपादि.
बहुपदलक्षणार्थं बहुव्रीहिः तद्विधावनेकोक्तेः. ❀

२५ निरु०—२९०सत्या ह्यवितथा धर्मा गुणा यस्य पराक्रमः ।
चेष्टितानि च सन्तीति ( सत्यधर्मपराक्रमः )॥ २३५॥

श्लो० ॥३२॥ (२९१) भूतभव्यभवन्नाथः,(२९२)पवनः,

ॐ भूतभव्यभवन्नाथाय नमः । ॐ पवनाय नमः ।

भा०-एवंभायं स्वाम्यमैश्वर्यं वा न केवलमद्य,किन्तु त्रिकालेष्विति- ५
( भूतभव्यभवन्नाथः ).यथा,
( १ ) " भूतभव्यभवन्नाथः केशवः केशिसूदनः । प्राकारस्सर्ववृष्णीनामापत्स्वभयदोऽरिहा " इति. ❋ भार०सभा०३८-२३।
एवं सर्वदा सर्वत्र.स्वभावादेव पुनातीति–
(पवनः).पविर्गत्यर्थः.एतद्बन्धेन गन्धवाहस्यापि सततगतित्वम्. ❋ १०

निर्व०– एवंभायं स्वाम्यमैश्वर्यं वा न केवलमद्य; किन्तु त्रिकालेष्वपि. ततः, भूतभव्यभवताम्-अतीतागामिवर्तमानकालत्रयवर्तिनाम्, नाथः–ईश्वर इति–( भूतभव्यभवन्नाथः ).
( १ ) " नाथृ, नाधृ, याच्ञोपतापैश्वर्याशीष्षु " धा०भ्वादिः कौ०-पृ०३८२ पचाद्यच्.भूतभव्यभवच्छब्दाःभवतेःप्रागेव व्युदपादिषत.१५
( २ ) " यरोऽनुनासिकेऽनुनासिको वा " इति, ८।४।४५॥कौ० पृ० १९ पाक्षिकोऽनुनासिकः. यथोक्तव्याख्यानेन नाथप्रायन्तयोः प्रकरणान्तरस्थयोरनयोर्नाम्नोर्न पुनरुक्तिः.एवमेव सर्वत्राप्यूहक्षे तत्र तत्र प्रदेशेऽवधातव्यम्. उक्तश्चैतत्. ❋
एवं सर्वदा सर्वत्र स्वभावादेव पुनाति गच्छतीति–( पवनः ). पविर्ग- २० त्यर्थः. नन्द्यादित्युः; ल्युड्वा. बाहुलका–

निरु०–२९१ ऐश्वर्यं नाथ स्वाम्यं वा त्रिकालेष्वपि यस्य सः ।
( भूतभव्यभवन्नाथ ) इत्युक्तस्साद्भिरादरात् ॥ २१५ ॥
२९२ सदा स्वयन्तु सर्वत्र प्रवाह इति नित्यशः ।
(पवनः ) प्रवहति यः कथ्यते वेगद्रो मनुः ॥ २१७ ॥

{२९३ / ८१७} पावनो,

ॐ पावनाय नमः।

भा०—तथा स्वसंबन्धिनो गङ्गादीन् जगत्पुनानान् प्रयोजयतीति-
५ (पावनः). यथा अगस्त्यः,
(१) " पावनस्सर्वलोकानां त्वमेव रघुनन्दन " रा०।
इत्यादि. ❀
एवं बहुमुखमुपकृत्य च नालं न पर्याप्तमस्यानुग्रहमहिमेति-

निर्व०—दित्यादि. अनः.यद्वा,
१० (१) " पूञ्, पवने " गतिकर्मेहायम्. धा०क्र्या०कौ०पृ०४७५
(२) "सुयुरुवृञो युच्" इति वर्त्तमाने, उणा०पा०२कौ०पृ०६२२
(३) "बहुलमन्यत्रापि " इति, युच्. उणा०पा० २ कौ०पृ०६२४
अनः. गुणावादेशौ. एतद्बन्धेन गन्धवहस्यापि सततगतेः पवनत्वम्. ❀
स्वसंबन्धितया पुनानेन गङ्गादिना जगत् पावयतीति-
१५ (पावनः).
(१) " पूञ्, पवने " हेतुमणिच्. धा०क्र्यादिः कौ०पृ०४७५
वृद्ध्यावादेशौ. ततः, प्राग्वत् ल्युः. ल्युट्, युज्वा. अनः. णिलोप
इत्यादि. ❀ इत्थम्, बहुमुखमुपकृत्यापि, अनुग्रहमहिम्नो नालम्-
नपर्याप्तम्, अस्येति वा,—अलः—पर्याप्तो नेति वा-

२० निरु०—२९३ यस्स्वसंबन्धिगङ्गादीन् पावनान् लोकपावनान्।
स (पावन) इति ख्यातः पावनत्वप्रदो मनुः ॥२१८॥

१ महिम्न इति।

{२९४ / ९१६} ऽनलः,। ( २९५ ) कामहा,

ॐ अनलाय नमः । ॐ कामघ्ने नमः ।

भा०—( अन्—अलः ).—अतन्द्रो देवः. ईदृक्—भक्तिशीकरानुवेधात् लौकिकानलस्यापि अन्—अलत्वम्. ५
( १ ) "हविषा कृष्णवर्त्मेव भूय एवाभिवर्धत" इति, ❀
एवंप्रकार स्वगुणदर्शिनां विषयान्तरविषयस्पृहां हन्तीति—
( कामहा ).
(१)" नकामकलुषं चित्तं मम ते पादयोस्स्थितम्" इति तद्दर्शिनः; १०
( २ ) " श्रोत्रियस्य चाकामहतस्य " तै०आ०८—५ ।
( ३ )"यदिच्छन्तो ब्रह्मचर्यञ्चरन्ति"इति च. ❀ कठवल्ल्याम्-१-२।

निर्व०—( अन्—अलः ).
( १ ) " अल, भूषणपर्याप्तिवारणेषु " धा०भ्वादिः कौ०पृ०४०४
पचाद्यच्. नञस्समासो, बहुव्रीहिः; तत्पुरुषो वा, नञो नलोपः. १५
नुट्. ईदृशशक्तिलेशानुवेधादग्नेरप्यन्—अल—त्वम्. ❀
स्वगुणदर्शिनां, ( कामं )—विषयान्तरस्पृहां, हन्तीति—( कामहा ).
( १ ) "हन, हिंसागत्योः" उपपदनियमस्य प्रायिकत्वाभिप्रायो
वा, धा०अदा०कौ०पृ०४३५
सार्वकालिको वा, अन्यथा चापि वा, क्विप्. २०
( २ )"कमु, कान्तौ " कान्तिरिच्छा. धा०भ्वादिः कौ०पृ०३९९

निरु०—२९४ अपर्याप्तो हि भक्तेभ्योऽप्युपकृत्य पुनः पुनः ।
अनुग्रहं यः करोति सो ( ऽनलः ) परिकीर्तितः॥२१९॥
२९५ पुंसां स्वदर्शिनां योऽसौ स्पृहां च विषयान्तरे ।
हन्त्यात्( कामहा ) प्रोक्तः सर्वाशापूरको मनुः॥२२०॥ २५

१ मनुग्रेघान् इति ।

## ( २९६ ) कामकृत्,

ॐ कामकृते नमः ।

भा०—अन्यदपि भोगमोक्षादिकं स्वयमेव काम्यं करोतीति—
५ ( कामकृत् ). ❀

निर्व०—( ३ ) " कर्मणिङ् " इति स्वार्थिकस्य णिङः, ३।१।३०॥
कौ०पृ० ३९९
( ४ ) "आयादय आर्धधातुके वा" इति, ३।१।३१॥ कौ०पृ० ३९७
विभाषितत्तया, तदभावे वाऽसरूपविधिना वा, अत्र,
१० ( ५ ) "ऋहलोर्ण्यत्" इति, हलन्त—३।१।१२४॥ कौ०पृ०५६२
लक्षणण्यदभावे, भावे घञ्.
( ६ ) " नोदात्तोपदेशस्य० " इत्यत्र, ७।३।३४॥ कौ०पृ०५४१
( ७ ) " अनु, ( आचमि—कमि—वमीनाम् ) " ७।३।३४॥
कौ०पृ०५४१ इति, वक्तव्यात्, नोपधावृद्धिप्रतिषेधः. ततो वृद्धिः.
१५ णिङ्पक्षे तु, तन्निमित्तैव वृद्धिः.
(८) "नोदात्तो०" इत्यस्य, चिणि—ञिति-णिति-कृतिच ७।३।३४॥
कौ०पृ०५४१ विधीयमानस्य, इहानवकाशात्, वार्तिकानुपस्थानात्.
ततः, उक्तेर्थे,
( ९ ) " सन्—आद्यन्ताः० " इति, धातुत्वात्, ३।१।३२॥ कौ०
२० पृ० ३९७ अचो, यति प्राप्ते, पूर्वोक्तन्यायात्.
(१० ) " एरच् " णेर्लोपः. ३।३।५६॥ कौ०पृ०६५३
सिद्ध्यसिद्धियां भावस्य भेदग्रहे नेह कृत्यप्रसक्तिरेव वेति ध्येयम्. एवम्
अन्यत्तु वक्ष्यते. हलन्तलक्षणः,
( ११ ) " सोच " इति, दीर्घः. इत्यादि. ❀ ६।४।१३॥ कौ०
२५ पृ०६४ कामम्—अन्यदपि भोगमोक्षादिकं काम्यम् स्वयमेव करोती-
ति—( कामकृत् ).
( १ ) " डुकृञ् , करणे " क्विपि, या० तना० कौ०पृ० ४७३

निरु०—२९६ स्वपादपभेरागादिकरणात् ( कामकृत् ) स्मृतः ।

१ मोक्षादि इति । २ कार्यम् इति ।

{२९७ / ६६०} कान्तः,

ॐ कान्ताय नमः ।

भा०—स्वयं सौन्दर्यसौकुमार्यादिरूपगुणैः—
( कान्तः ). कर्मनिष्ठायाम्, ५
( १ ) " अनुनासिकस्य क्विझलोः क्ङिति " इति दीर्घः. ❀
६।४।१५॥कौ०पृ०५१५

निर्व०—( २ ) " ह्रस्वस्य०" इति, तुक्. ६।१।७१॥ कौ०पृ०
५५९ अगुण इत्यादि. काम्यत इति कामः.
( ३ ) " कमु, कान्तौ " उक्तन्यायात्, धा०भ्वादिः कौ०पृ० १०
३९९ कृत्यप्रवृत्तौ,
( ४ ) " अकर्तरिचकारके०" इति, कर्मणि ३।३।१९॥कौ०पृ०
६४७ घञ्. णिङ्. पक्षेतु, एरचि, णिलोपः. एवं, तत्र तत्र ( कामः
कामप्रद इत्यादौ ) ध्येयम्. शेषं पूर्ववत्. ❀
स्वयं,सौन्दर्यसौकुमार्यादिरूपगुणैः,कान्तः-अभिरूप इति-(कान्तः). १५
( १ ) " कमु, कान्तौ " धा०भ्वादिःकौ०पृ०३९९
( २ ) " वर्तमाने क्तः " इत्यनुवृत्तौ,
( ३ ) " मतिबुद्धिपूजार्थेभ्यश्च " इति , ३।२।१८८॥कौ०
पृ० ५९७ मतेः पृथक् बुद्धिग्रहणात् इह कान्तिरिच्छेति तदर्था-
दस्मात् वर्तमाने क्तः. अकर्मकात् कर्तरीह भवति. २०
(४)"उदितो वा"इति,क्त्वायामिड्विकल्पात्,७।२।५६॥कौ०पृ०६६८
(५)"यस्य विभाषा"इति , निष्ठायामिट् ७।२।१५॥कौ०पृ०५८७
(६)"अनुनासिकस्यक्विझलोःक्ङिति"इति,६।४।१५॥कौ०पृ०५१५
झलादौ किति,धातोरुपधाया दीर्घः. अनुस्वारपरसवर्णौ. ❀

निरु०२९७सौन्दर्यादिगुणैः(कान्तः)मनोहरतया शुभम् ॥२२१॥ २५

१ निरुक्ति, इदं पदं समाप्यन्तम् ।

## (२९८) कामः, (२९९) कामप्रदः,

### ॐ कामाय नमः । ॐ कामप्रदाय नमः ।

५ भा०— शीलौदार्यदयादिभिरात्मगुणैश्च, निकामकमनीयत्वात्—
(कामः). एतद्गुणबिन्दुना हि, मदनोपि; जगत् उन्मादयति. ? ❀
स्वकामेभ्यः क्षुद्रकामेभ्यश्च यथार्हं काम्यं प्रददातीति—
(कामप्रदः).
(१) "प्रे दाज्ञः" इति कः. वसुप्रदः, इत्यादयोपि यथा, ३।२।६॥
१० कौ०पृ०५७२
(२) "एको बहूनां यो विदधाति कामान्" कठ०—२—५।
अनया, नितान्तकान्ततया, सर्वहृदयहरणे, प्रभवतीति—

निर्य०—शीलौदार्यदयादिभिरात्मगुणैश्च कामः—निकामकमनीय इति—
(कामः). पूर्ववदेवधातुः. कर्मणि घञ्. अन्यच्च पूर्ववत्.
१५ एतद्गुणबिन्दुना हि मदनोपि जगदुन्मादनः काम उच्यते. ❀
स्वकामेभ्यः अन्यकामेभ्यश्च यथार्हं कामं—काम्यं, प्रददातीति—
(कामप्रदः).
(१) "डुदाञ्, दाने" [illegible] ० कौ०पृ० ४५१
(२) "प्रेदाज्ञः" [illegible] ।६॥कौ०पृ०५७२
२० आल्लोपः. कामशब्द [illegible] ❀
अनया नितान्तकान्त [illegible]

निरु०— [illegible] १
(कामप्रद [illegible]

१ काम्येभ्[illegible]

{ ३०० / ३५ } प्रभुः, ॥

ॐ प्रभवे नमः ।

भा०— ( प्रभुः ).

( १ ) "रामः कमल पत्राक्षः सर्वसत्त्वमनोहरः" इत्यादि. ❋ ५

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः,
श्रीरङ्गराजदिव्याज्ञालब्धपराशरापरनामधेयस्य,
श्रीरङ्गनाथस्य कृतौ,
श्रीमद्विष्णुनामसहस्रविवरणे,
भगवद्गुणदर्पणे १०
तृतीयं शतकं सम्पूर्णम्.

निर्व०— ( प्रभुः ).

( १ ) "भू, सत्तायाम्" प्रपूर्वः. धा०आदिः कौ०पृ०३६८

( २ ) "विप्रसंभ्यः०" इति, वाहुलकात् ३।२।१८०॥कौ० पृ०६०७ १५

संज्ञायामपि डुरिति प्रागप्युक्तमेव. डित्वाट्टिलोप इत्यादि. ❋

इति श्रीकुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज
वरदेशिकतनयवरद्गुरुवरसूनुवरदार्यसूरिविरचिते,
श्रीपराशरभट्टार्यभाषित-
श्रीमद्विष्णुसहस्रनामभाष्यानुगे, २०
भगवन्नामसहस्रनिर्वचने,
तृतीयं शतकं संपूर्णम्.

निरु०— ३०० सर्वेषां चित्तहरणे ( प्रभुः ) प्रभवतीति यः ।

# अथ चतुर्थशतक प्रारम्भः ।

## श्लो० ॥ ३३ ॥ ( ३०१ ) युगादिकृद्,

ॐ युगादिकृते नमः ।

५ भा०— अथाऽमर्यादाश्चर्यत्वम्. तत्र न्यग्रोधशाय्यवतार उदाहरणम्. युगस्यान्तेऽपि आदिं करोतीति—
(युगादिकृत्). स खलु संवर्तेऽपि प्रलयात् अनुपप्लुतं, गजत् प्रवर्तितवान्. स्वधर्मव्यवस्थया, कृतादियुगानां, पौनःपुन्येन आवर्तनात्—

निर्व०— अथ अमर्यादाश्चर्यत्वम्. तत्र तावत् न्यग्रोधशाय्यवतार
१० उदाह्रियते. संवर्तकेपि प्रलयादनुपप्लुतजगत्प्रवर्तनेन अन्तेपि युगस्यादिं करोतीति—( युगादिकृत् ).
( १ ) " डुकृञ्, करणे " क्विपि तुक्. अगुण इत्यादि. धा० तना० कौ० पृ० ४७३
( २ ) " डुदाञ्, दाने " आङ्पूर्वः. धा० जुहो० कौ० पृ० ४५१
१५ (३) "उपसर्गेघोः किः" इति, किः. आलोपः. ३।३।९२॥ कौ० पृ० ६५८
( ४ ) "युजिर्, योगे" धा० रुधा० कौ० पृ० ४७१
( ५ ) " युज, समाधौ " वा. इगुपधलक्षणः कः. धा० दिवा० कौ० पृ० ४५६ पृषोदरादित्वात् जस्य गः. यद्वा, घञ्.
( ६ ) "चजोः०" इति. कुत्वम्. जस्य गः. ७।३।५२॥ कौ० पृ० ५६०
२० ( ७ ) " उञ्छादीनाञ्च " इति, स्वरविधौ. ❋ ६।१।१६०॥ कौ० पृ० ७२४
उञ्छादिगणे युगेति निपातनादगुणः. विशिष्टविषयश्चेदं निपातनं कालविशेषे रथाद्युपकरणे च अन्यत्र तु योग इत्येव भवति. सांहितिको दीर्घः. स्वधर्मव्यवस्थया युगानि— कृतादीनि, आवर्तयति— पौनः
२५ पुन्येन परिवर्तयतीति—

निरु०—३०१ न्यग्रोधशायी भगवान् पुराणपुरुषोत्तमः ॥ २२३ ॥
करोत्यादिं युगस्यान्ते ( युगादिकृ ) दुदीरितः ।

( ३०२ ) युगावर्तः, ( ३०३ ) नैकमायो,

ॐ युगावर्ताय नमः । ॐ नैकमायाय नमः ।

भा०–( युगावर्तः ). ❀ ५
मुग्धशिशुरूपापरिमितजगन्निगरणनिरालम्बनैकोदकवटदलशय-
नाद्यनेकातर्क्याश्चर्यः–
( नैकमायः ).नच मिथ्यावचनोऽयं माया-शब्दः, तथ्येपि प्रयोग-
भूयस्त्वात्. तथाहि,
( १ ) " मायां तु प्रकृतिं विद्यात्" श्वे०उ० ४–९ । १०
इति, अनेकार्थ-क्रिया-कारिण्यां प्रकृतौ;
( २ ) " मायावयुनं ज्ञानम्"

निर्व०–( युगावर्तः ).
( १ ) " वृतु,वर्तने" आङ्पूर्वः. णिच्. गुणः रपरः. धा०भ्वादिः
कौ०पृ० ४१२ १५
(२)"अन्येभ्योऽपि दृश्यते"इति,डः.३।२।१७८॥कौ०पृ०६०७
पचाद्यज्वा. यथासंख्यं टिलोपो णिलोपो वा. युगशब्दः प्राग्वत्.
दीर्घश्च. सांहितिकं जश्त्वम्. ❀ मुग्धशिशुरूपापरिमितजगन्निगर-
णनिरालम्बनैकोदकवटदलशयनाद्यनेकातर्क्याश्चर्ययोगितया नैकाः
अनेकाः मायाः–आश्चर्याणि, अस्य, इति,– ( नैकमायः ). २०
( १ ) " माङ्,माने" धा०जुहो०कौ०पृ० ४५०

निरु०–३०२ धर्मव्यवस्थया स्वस्य युगाद्यावर्तनान्मुहुः॥२२४॥
( युगावर्तः ) समाख्यातः कालरूपधरो हरिः ।
३०३ मुग्धार्भकत्वरूपेण जगन्निगरणादपि ॥ २२५ ॥
वटैकपत्रशयनान्निरालम्बजले मुहुः । अनन्ताश्चर्यसंयुक्तो ( नै- २५
कमाय ) स्तु स स्मृतः ॥ २२६ ॥

भा०—( ३ ) " संख्याता देवमायया "

( ४ ) " विश्वानि, देव! वयुनानि विद्वान्" इतिच, ज्ञाने;

( ५ ) " तेन मायासहस्रं तत् शम्बरस्याशुगामिना । बालस्य रक्ष-

५ ता देहमेकैकश्येनसूदितम् " इति, ॥ वाराहे ॥

तत्त्वज्ञानाबाध्ये, अज्ञनाश्ये, वाराहे मायाध्यायादिना;

( ६ ) " मेघोदयस्सागरसन्निवृत्तिरिन्दोर्विभागस्फुरितानि वायोः ।

विद्युद्विभङ्गो गतमुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः" इति अभि-

युक्तैश्च महाश्चर्ये;

१० आरण्यपर्वणि मार्कण्डेयेन, वटदलशयनाद्याश्चर्यमुक्त्वा,

( ७ ) " ततो मे पृथिवीपाल विस्मयस्सुमहानभूत् । लोकन्दृष्ट्वा स-

मस्तञ्च, इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः । आश्चर्यं भरतश्रेष्ठ"

भा०आ०—१८८—९४ ।

इति तद्विषये निर्दोषप्रत्यक्षसिद्धे बह्वाश्चर्यपर्यायप्रयोगश्च भूयिष्ठः उपल-

१५ भ्यते. ❀

---

निर्व०—( २ ) " माच्छाससिभ्यो यः " इति, यः. उणा०पा०४

कौ०पृ०६३७ ततः स्त्रियाम्, अतष्टाप्. दीर्घः.

( ३ ) " इण् ,गतौ" धा०अदा०कौ०पृ० ४४१

( ४ ) " इण्भीकापाशल्यतिमर्चिभ्यः कन्" इति,उणा०पा०३

२० कौ०पृ० ६२७

कन्. बाहुल्कात् न इत्. एवं तत्र तत्र ज्ञेयम्. गुणः.

अनिट्. ततः स्त्रियामतष्टाप्. दीर्घः. नेत्यनेनाव्ययेन समासे वृद्धिरेकारः.

( ५ ) "नभ्राण्णपात्०" इत्यस्योपलक्षण-६।३।७५॥कौ०पृ०१४८

तया नञ्समासस्य विकल्पिततया नशब्दसमासतया वा नैकेत्यत्र नलो-

२५ पाभावः. उक्तञ्चैतत् प्रागेव. बहुव्रीहौ

( ६ ) " स्त्रियाःपुंवत्०" इत्यादिना, ६।३।३४॥ कौ०पृ० १६०

---

१ विस्मितो नावबुध्यसे । २ भूयिष्ठम् ।

( ३०४ ) महाशनः, । ( ३०५ ) अदृश्यो,

ॐ महाशनाय नमः । ॐ अदृश्याय नमः ।

भा०—निखिलजगन्निगरणमस्येति—( महाशनः ). यथा, ५
( १ )"यच्च किंचिन्मया लोके दृष्टं स्थावरजङ्गमम् । तद्पश्यमहं सर्वं तस्य कुक्षौ महात्मनः" इति, भार०आ०१८८—१२२ ।
( अदृश्यः ).
( १ ) "ऋदुपधाच्चाक्लृपिचृतेः"३।१।११०॥कौ०पृ०५६०
इति, क्यप्. अतर्क्यवृत्तान्तः. यथा, १०

निर्व०—पूर्वपदस्य पुंवद्भावः. उपसर्जनत्वादुत्तरपदे,
( ७ ) " गोस्त्रियोः०" इति, १।२।४८ ॥ कौ०पृ०१२९
उपसर्जनस्त्रीप्रत्ययस्य ह्रस्वोकारः. ॐ महत् अशनं निखिलजगन्निगरणम् अस्येति—( महाशनः ).
( १ ) " अश, भोजने"धा०क्र्यादिः कौ०पृ० ४७८ १५
( २ ) "ल्युट्च"इति, भावे ल्युट्.३।३।११५॥कौ०पृ०६६२
अनः. ॐ त्वादितान्महतः.
( ३ ) "आन्महतः०"इति, आत्वम्. दीर्घः.६।३।४६॥कौ०
पृ०१५५
पुनस्सांहितिको दीर्घ इत्यादि. ॐ २०
अनर्क्यवृत्तान्ततया दृश्यः, द्रष्टुं शक्यः नेति—( अदृश्यः ).
( १ ) " दृशिर्, प्रेक्षणे"इति. धा०भ्वादिः कौ०पृ० ४३०

निरु०—३०४ भुवनानान्निगरणात् ( महाशन ) इतीरितः ।
३०५ अनर्क्यवृत्तान्ततया जगतः प्रत्येपि यः ॥ २२७ ॥
न दृश्यश्चिन्त्यमानोपि सो ( ऽदृश्य ) इति कथ्यते ।

( ३०६ ) व्यक्तरूपश्च,

ॐ व्यक्तरूपाय नमः ।

भा०—( २ ) " कथंन्वयं शिशुः शेते लोके नाशमुपागते । तपसा
५ चिन्तयंश्चापि तं शिशुं नोपलक्षये" इति. ॐ भार०अ० १८८—९४।
अथच, अभिगच्छतो मार्कण्डेयादेः—
( व्यक्तरूपः ). सुग्रहदिव्यविग्रहः. यथा,
( १ ) " अतसीपुष्पसंकाशः श्रीवत्सकृतलक्षणः । साक्षाल्लक्ष्म्या इवा-
वासः स सदा प्रतिभाति मे" भार०अ० १८८—९६ ।

१० निर्व०—(२)" ऋदुपधाच्चाक्लृपिचृतेः" ३।१।११०॥कौ०पृ०५६०
इति क्यप्.
(३)"शकि लिङ् च"इति,शक्यार्थेऽयम्.३।३।१७२॥कौ०पृ०५५२
क्यप्. किंत्वान्न गुणः. नञ्समासः. नलोपः इत्यादि. ॐ
अथच, अभिगच्छतो मार्कण्डेयादेस्सुग्रहदिव्यविग्रहतया व्यक्तं रूपम्
१५ अस्य इति—( व्यक्तरूपः ).
( १ ) " रु, शब्दे"धा०अदा०कौ०पृ० ४३९
(२) "खष्पशिल्प०"इत्यादिना,पप्रत्ययः.उणा०पा०३कौ०पृ०६२६
इडभावः. दीर्घश्च निपातितः.
( ३ ) " अञ्जू, व्यक्ति—म्रक्षण—कान्ति-गतिषु" धा०रुधा०कौ०
२० पृ०४७२
विपूर्वः. क्तः. ऊदित्त्वादिड्विकल्पे,
( ४ ) " यस्य विभाषा" इति,निष्ठायां७।२।१५॥कौ०पृ०५८७
नेट्. यद्वा,
( ५ ) " अञ्जि-घृ-सि-भ्यः क्तः"उणा०पा० ३ कौ०पृ० ६२९

२० निरु०—३०६ महाजले संचरतो मार्कण्डेयस्य धीमतः ॥ २२८ ॥
दृश्यो यो ( व्यक्तरूपः ) स्याद्दिव्यविग्रहधारणात् ।

( ३०७ ) सहस्रजित्,

ॐ सहस्रजिते नमः

भा०—( २ ) " तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजात मृदुरक्ताभिरङ्गुलीभिरलंकृतौ ॥ प्रणतेन मया मूर्ध्ना गृहीत्वा ह्य- ५ भिवन्दितौ " इति. ❀भार०अ०१८८—१३३।

सहस्रयुगसंख्यं कल्पान्तं शयानो जयतीति—

( सहस्रजित् ).

( १ ) " यावद्युगानां विप्रर्षे सहस्रं परिवर्तते । तावत् स्वपिमि॥ इत्यादि. ❀भार०अ०१८९—४१। १०

परिमितशिशुरूपस्याप्यस्य कश्चित्, कदाचित्, कथञ्चिदपि, महिमावधिप्रकर्षो नास्तीति—

निर्व०—( ६ ) " तितुत्र० "इति,नेट्.७।२।९॥कौ०पृ०६०८

( ७ ) " अनिदिताम्० "इति,नलोपः,६।४।२४॥कौ०पृ०७६

( ८ ) "चोः कुः"इति,कुत्वेन जस्य गः.८।२।३०॥कौ०पृ०६८ १५

तस्य चर्त्वेन कः. वेरिकारस्य यण्.यकारः. चस्तमुच्चये. ❀

शयानोयं सहस्रं सहस्रयुगसंख्यं कल्पान्तं जयतीति—

( सहस्रजित् ).

( १ ) "जि,जये" क्विपि तुक्. अगुणः.धा०भ्वा०कौ०पृ०४०५

व्युत्पादितस्सहस्रशब्दः. ❀ २०

अन्तं—परिमितशिशुरूपस्य— महिमावधिं जयति—अभिभवति- प्रधर्षयति इति—

निरु०—३०७ सहस्रयुगसंख्याकं सर्वकल्पान्तमेव हि ॥२२९॥ शयान एव जयति ( सहस्रजिदि )ति स्मृतः ।

१ पर्यन्तम् । २ सहस्रपरिवर्तनम् । ३ प्रधर्षको ।

(३०८)अनन्तजित्,॥श्लो०॥ ३४ ॥ (३०९)इष्टः,(३१०)
अविशिष्टः, [ इष्टोऽविशिष्टश् ]

५ ॐ अनन्तजिते नमः।ॐ इष्टाय नमः। ॐअविशिष्टाय नमः।

भा०—( अनन्तजित् ).
(१)"अन्तःशरीरे तस्याहं वर्षाणामधिकं शतम्। न हि पश्यामि तस्याहमन्तन्देवस्य कर्हिचित्॥आसादयामि नैवान्तं तस्य राजन् महात्मनः" इति. ❋ भा०अ०१२४—१२५।
१० एवमुदरेण धूर्तैर्मुख्यैरपि अविशेषेण जनयित्रीव वाञ्छित इति—( इष्टः ). ❋
( अविशिष्टः ).तथा,

निर्व०—( अनन्तजित् ).
स नास्ति कश्चित् कदाचित् कथंचिदपि अस्य इति—(अनन्तजित्).
१५ ( १ )"जि,अभिभवे"प्राग्वत् प्रत्ययादि.धा०भ्वादिः कौ०पृ०४०५
( २ )" अम,गत्यादिषु"धा० भ्वादिः कौ०पृ०४०१
( ३ )" हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्"उणा०पा०३कौ०पृ०६२८इति, तन्.
(४)"तितुत्र०"इति,नेट्.अनुस्वारपरसवर्णौ.७।२।९॥कौ०पृ०६०८
२० नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. नुट्. ❋
एवमुदरेण धूर्तैर्मुख्यैरपि, अविशिष्टस्सन्, अविशेषेण इष्टः जनयित्रीव वाञ्छितः इति—( इष्टोऽविशिष्टः ). एकं नाम.

निरु०—३०८मतस्य शिशुरूपस्य कदाचित्कश्चिदेवहि ॥ २३०॥
कथं चिदवधिर्नास्ति महिम्नः परमात्मनः। तस्मा ( दनन्तजिदि )
२५ ति वरवर्णो जपदो मनुः ॥ २३१ ॥
३०९—३१० ( इष्टो ) ( ऽविशिष्टः ) कथितः सर्वरक्षणतत्परः।

१ समुद्रे।

## (३११) शिष्टेष्टः,

ॐ शिष्टेष्टाय नमः ।

भा०—पण्डिताग्रण्यां मार्कण्डेयादीनां परमपुरुपार्थत्वेन इष्टः—
(शिष्टेष्टः),तत्रैव च, ५
(१)"सत्त्वस्था निरहंकारा नित्यमध्यात्मकोविदाः । मामेव सततं
विप्राश्चिन्तयन्त उपासते " इति, भा०अ०१८९–१६७ ।
(२) " आसीनं तं नरव्याघ्रं पश्याम्यमिततेजसम्" इति. ❋
भा०आ०१८८–१२९।

निर्व०— (१)"इपु,इच्छायाम्"क्तः.धा०तुदा० कौ०पृ०४६६ १०
(२) " उदितो वा"इति,क्त्वायामिड्विकल्पात्, ७।२।५६॥
कौ०पृ० ६६८
(३)" यस्य विभाषा" इति, निष्ठायां ७।२।१५कौ०पृ०५८७
नेट्. कित् कित्वान्न गुणः. ष्टुत्वम्. विशेपणे,
(४)"शिप्लृ,विशेपणे"विपूर्वः. निष्ठादिकं धा०रुधा०कौ०पृ०४७१ १५
पूर्ववत्. निहतत्वान्नेट्. नञ्समासः. नलोपः.
सांहितिकं पूर्वरूपम्. ❋
शिष्टानां पण्डिताग्रण्यां मार्कण्डेयादीनाम् इष्टः- परमपुरुपार्थत्वे-
न अभिमतः इति— (शिष्टेष्टः).
(१) " इपु,इच्छायाम्"प्राग्वत् धा०तुदा०कौ०पृ०४६६ २०
प्रत्ययादि.
(२)"शिप्लृ,विशेपणे"तत्रापि, तथा अनुप- धा०रुधा०कौ०पृ०४७१
सदन्यम्, अनन्पूर्वत्वं च, विशेपः.
(३) " आद्गुणः" ❋ ६।१।८७॥कौ०पृ०११

निरु०-३११मार्कण्डेयादिनार्नीनां पण्डितेष्वग्रयायिनाम्॥२३२॥२५
उत्कृष्टपुरुपार्थत्वेनेष्ट (शिष्ट) उच्यते।

## ( ३१२ ) शिखण्डी,

ॐ शिखण्डिने नमः ।

भा२—अपरिमिताप्रधृष्यमैश्वर्यं परं तेजश्शिखण्डमस्यातिशायितमिति-
५ ( शिखण्डी ).
(१) " अतिशायने० " इति, इनिः. ❀५।३।५५।।कौ०पृ० ३४०

निर्व०—शिखण्डः अपरिमिताप्रधृष्येश्वर्यपरमतेजःकलापोऽति-
शयेनास्यास्तीति—( शिखण्डी ).
( १ )"अण, शब्दे" धा०भ्वादिः कौ०पृ० ४०१
१० ( २ ) " अम, गत्यादिषु" वा. धा०भ्वादिः कौ०पृ०४०१
(३)"अमन्ताड्डः" इति, डः. उक्तयुक्त्या न, उणा०पा०१कौ०
पृ०६१५ ड इत्. इत्थं तत्र तत्र ज्ञेयम्,
( ४ )" नेड्वशि० " इति, नेट्. अमतेरनुस्वा-७।२।८।।कौ०पृ० ५८१
रपरसवर्णौ विशेषः.
१५ ( ५ ) " शीङ्, स्वप्ने " धा०अदा० कौ०पृ० ४३८
( ६ ) " मुहेः खो मूर्च " इत्यतः खः उणा०पा०५कौ०पृ०६४३
इति वर्तमाने,
(७)"शीङो ह्रस्वश्च" इति, खः, धातोश्च उणा०पा०५कौ०पृ०६४३
ह्रस्वः उक्तयुक्त्या, विधानाद्वा, न, ख इत्. ह्रस्वविधानसामर्थ्या-
२० न्न गुणः. बाहुलकात् नेट्. न च,
( ८ ) " आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" ७।१।२।।
कौ०पृ०९४
इति, खस्य शङ्कच ईनादेशः, साहचर्यात् तत्र तद्धितग्रहणात्.
एवमन्यत्रापि. ततः स्त्रियामतष्टाप्. दीर्घः.

२५ निरु०— ३१२ अत्यप्रधृष्यमैश्वर्यं परं यत्तेज आस्थितम् ॥२३३॥
तच्छिखण्डन्तु यस्यास्ति त-( च्छिखण्डी ) ति चक्षते ।

( ३१३ ) नहुषो, ( ३१४ ) वृषः, ।

ॐ नहुषाय नमः । ॐ वृषाय नमः ।

भा०—तथा, स्वमायया जीवान् नह्यति बध्नातीति— ५
( नहुषः ). इति, नैरुक्ताः. यथा,
( १ ) " तस्मिंश्चान्यो मायया सन्निरुद्धः" इति. ❋
स एव अमृतोपमया स्वकान्त्या वाचा च सागरस्योदराटनश्रान्तमा-
श्वासयन् सिञ्चतीति–( वृषः ).
( १ ) " वृषु, सेचने" यथा, धा०भ्वादिः कौ०पृ० ४१० १०

निर्व०—ततः,शकन्ध्वादित्वात् पररूपम्,एकादेशः.ततो मत्वर्थीय
आतिशायनिक इनिः.
(९) " यस्य०" इति, लोपः. ६।४।१४८कौ०पृ०५६
(१०) " सौच" इति, इन्नन्तलक्षणो दीर्घः. इत्यादि. ❋ ६।
४।१३ ॥ कौ०पृ० ६४ १५
तथा स्वमायया जीवान् नह्यति–बध्नाति इति–( नहुषः ).
( १ ) " णह्, बन्धने" धा० दिवा०कौ०पृ०४५५
( २ ) " णो नः" ६।१।६५ ॥ कौ०पृ० ३८६
(३)"पृनहिकलिभ्य उपन्"इति. ❋ उणा०पा०४कौ०पृ०६३५
स एवामृतोपमया स्वकान्त्या वाचा च तादृश्या,सागरोदरानुप्रान्तं २०
मार्कण्डेयमाश्वासयन् वर्षति–सिञ्चति इति–( वृषः ).

निरु०—३१३ जीवान् स्वमायया नित्यं(नहुषो)नह्यतीति यः॥२३४॥
३१४ सागरस्योदरे नित्यं वसन्नमृतरूपया ।
स्वदेहकान्त्या वाचापि सम्यगाश्वासयन्मुहुः ॥ २३५ ॥
बहुशस्सिञ्चति तु यः ( वृष ) स्स परिपठ्यते । २५

(३१५) क्रोधहा,

ॐ क्रोधघ्ने नमः।

भा०— ( २ ) "ततो मामब्रवीद् बालस्त पद्मनिभलोचनः। श्रीवत्स-
५ धारी द्युतिमान् वाक्यं श्रुतिसुखावहम् ॥ जानामि त्वां परिश्रान्तन्तेदा
विश्रमकाङ्क्षिणम्" इत्यादि. ❀ भा० अ० १८८—९४।
अथ, भार्गवं रामं ध्वनयति त्रिस्सप्तवारं नरपतिनिरासकरं क्रोधं
काश्यपप्रार्थनामात्रेण हतवान्—
( क्रोधहा ). ❀
१० पूर्वं तेभ्यः—

निर्व०—( १ ) "वृषु, सेचने" धा० भ्वादिः को० पृ० ४१०
( २ ) "तुदादिभ्यो णल्को" इति, कः.
इगुपधलक्षणो वा, अगुणः. ❀
अथ, भार्गवरामो ध्वन्यते क्रोधं एकविंशतिकृत्वो नृपनिरासकरं
१५ मन्युं काश्यपप्रार्थनामात्रेण हन्ति स्मेति—
( क्रोधहा ).
( १ ) "हन, हिंसागत्योः" धा० अदा० को० पृ० ४३५
(२) "ब्रह्मभ्रूण०" इति, उपपदनियम—३।२।८७॥ को० पृ० ५८४
स्य प्रायोभिप्रायत्वात्, क्विप्. सार्वकालिको वा, अन्यथापि वा
२० प्रागुक्तः.
( ३ ) "क्रुध, जिघांसायाम्."
भावे घञ्, गुणः. हलन्तलक्षणो दीर्घ इत्यादि. ❀
पूर्वं तेभ्यः क्रोधं करोति इति—

निरु०—३१५ काश्यपस्य प्रार्थनया यः क्रोधं क्षत्रहानिदम् ॥२३६॥
२५ हतवान् ( क्रोधहा ) प्रोक्तः षडर्णः क्रोधनाशकः।

१ तात ! विश्रान्तकाङ्क्षिणम्।

(३१६) क्रोधकृत, (३१७) कर्ता, (३१८) विश्वबाहुर्,

ॐ क्रोधकृते नमः। ॐ कर्त्रे नमः। ॐ विश्वबाहवे नमः।

भा०—(क्रोधकृत्) च. ❀ ५
तथाविधक्रोधहेतोः कार्तवीर्यस्य च्छेत्ता—
(कर्ता). यथा,
(१) "निःक्षत्रियां यश्चकार मेदिनीम्" इति. ❀
एवं, कण्टकोद्धारेण विश्वस्मै बाहू यस्य सः—(विश्वबाहुः). ❀

निर्व०—(क्रोधकृत्). १०
(१) "डुकृञ्, करणे" धा०तना०कौ०पृ०४७३
(२) "सुकर्मपापमन्त्रपुण्येषु कृञः" ३।२।८९॥कौ०पृ०५८४
इति, उपपदनियमाभावात्, अन्यत्रापि उपपदे क्विप्.
(३) "ह्रस्वस्य०" इति, तुक्. अगुणः.६।१।७१॥कौ०पृ०५५९
क्रोधशब्दो व्युत्पादितः. ❀ १५
तथाविधक्रोधहेतुं कार्तवीर्यं कृन्तति— छिनत्ति इति—(कर्ता).
(१) "कृती, छेदने" ईदित्. धा०तुदा० कौ०पृ०४७०
(२) "तृन्तृचौ शंसिक्षदादिभ्यस्संज्ञायांचानिटौ" उणा०पा०२
कौ०पृ०६२३ इति, तृच्. स चानिट्. गुणः रपरः.
(३) "झरो झरि सवर्णे" इति, ८।४।६५॥कौ०पृ०११ २०
पाक्षिकः प्रथमतलोपः. अनङादि. ❀
एवं, कण्टकोद्धारेण विश्वस्मै सर्वस्मै बाहू— भुजौ अस्य इति—
(विश्वबाहुः).

निरु०—३१६(क्रोधकृत्)क्षत्रियेभ्यो यः पूर्वं क्रोधं करोति सः॥२३७॥
३१७ क्रुद्धेतोः कार्तवीर्यस्य च्छेत्ता (कर्तेति) शब्द्यते। २५
३१८ विश्वस्मै बाहू यस्येति (विश्वबाहुः) प्रकीर्तितः॥२३८॥

## (३१९) महीधरः ॥

ॐ महीधराय नमः

भा०—एवं, भारावतरणेन महीं धत्ते इति—( महीधरः ).

(१) " च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु । यस्मान्न च्यवसे स्थानात् तस्मात्संकीर्त्यसे( ऽच्युतः )"इति. ❀
ब्रह्मादिसाधर्म्येणावतारेपि स्वैश्वर्यप्रच्युतिवैधर्म्यात्—

निर्व०—(१) " बाधृ,विलोडने" धा०भ्वादिः कौ०पृ० ३८२
(२) " कुर्भ्रश्च"इति प्रकरणे, उणा०पा० १ कौ०पृ०६१०
१० (३) " अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुग्दीर्घहकारश्च" इति, कुः. धकारस्य हका—उणा०पा०१ कौ०पृ०६१०
रश्च. विश्वशब्दो व्युत्पादितः. ❀
इत्थं भारावतरणेन महीं धरति इति—
( महीधरः ).
१५ (१) " धृञ् , धारणे" पचाद्यच् . गुणो रपरः. धा०भ्वादिः कौ० पृ० ४२३
(२) " मह, पूजायाम्" भागवदच् . स्त्रियाम्, धा०भ्वादिः कौ० पृ० ४११
(३) " षिद्गौरादिभ्यश्च " इति गौरादि- ४।१।४१॥कौ०पृ०९८
२० त्वात्, ङीप्, भसंज्ञायाम्.
(४)"यस्य०"इति, लोपः. षष्ठ्या विग्रहः६।४।१४८॥कौ०पृ० ५६
कार्यः. तद्बीजं चोक्तमेव. ❀
ब्रह्मादिसाधर्म्येणावतारेपि स्वैश्वर्यप्रच्युतिवैधर्म्यात् तद्वच्च्युतः च्यवनधर्मा न इति—

२५ निरु०—३१९ भारावतरणं कृत्वा गां धत्ते स ( महीधरः )।

श्लो० ॥ ३५ ॥ {३२० / १०१} अच्युतः, (६२१) प्रथितः,

ॐ अच्युताय नमः । ॐ प्रथिताय नमः ।

भा०—( अच्युतः ). ❀ ५
तथात्वेन प्रसिद्धः—
( प्रथितः ). यथा,
( १ )" तस्य नाम महद्यशः" तै० २—१—९।
( २ ) "यशसश्चैकभाजनम्" ❀ रा०।
तत्रोपजीविनां जीवितरूपत्वात्— १०

निर्व०—( अच्युतः ).
( १ )" च्युङ्, गतौ" धा०भ्वादिः कौ०पृ० ४२७
( २ )"गत्यर्थ०" इत्यादिना कर्तरि क्तः.३।४।७२॥कौ०पृ०५९६
अनिट्. कित्त्वाद्गुणः. नञ्समासः. नञो नलोपः. ❀
तथात्वेन प्रथते प्रसिद्धो भवति इति—( प्रथितः ). १५
( १ )" प्रथ,प्रख्याने" प्रागुक्तसूत्रेणाऽकर्मकात्, कर्तरि क्तः.
धा०भ्वादिः कौ०पृ०४१४
( २ )" आर्धधातुकस्येड्वलादेः " इति, इट्. ७।२।३५॥ कौ०
पृ०३७०
तत्रोपजीविनां जीवितरूपतया प्राणिति अस्मादुपजीवि-जातम् इति-२०

निरु०— ३२०च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु॥ २३९ ॥
यस्मान्न च्यवते स्थानात् तस्मात्संकीर्त्यते ( ऽच्युतः )।
साधर्म्येणावतारेऽपि ब्रह्मेन्द्रवरुणादिभिः ॥ २४० ॥
न स्वैश्वर्यात्प्रच्युतो यः सो ( ऽच्युतः ) परिकीर्तितः ।
३२१अच्युतत्वेन लोकेऽस्मिन् प्रख्यातः (प्रथितः) स्मृतः॥२४१॥ २५

{३२२ / ६७} प्राणः, {३२३ / ६६} प्राणदो,

ॐ प्राणाय नमः । ॐ प्राणदाय नमः ।

५ भा०— ( प्राणः ).

( १ ) " प्राणोस्मि प्रज्ञात्मा तन्मामायुरमृतमित्युपास्व" कौषी०।

( २ ) " अमृतं देवानामायुः प्रजानाम्"

( ३ ) " प्राणस्तथानुगमात्" इति. ❋ ब्र० १–१–२९।

अथ, कूर्ममूर्तिं सूचयति—( प्राणदः ). मरुताम्मथनोचितबलप्रदः.

१० ( १ ) " अनन्तबलशक्तयः" इति, तन्मन्त्रवर्णात्. ❋

निर्व०— ( प्राणः ).

( १ ) " अन, प्राणने" प्रपूर्वः. धा०अदा० कौ०पृ०४४६

( २ ) " अकर्तरि च कारके० " इति, अपादाने ३।३।१९॥ कौ० पृ०६४७ घञ्. करणत्वविवक्षायां, वापवादः.

१५ (३) "हलश्च" इति वा, उपधावृद्धिः. दीर्घः. ३।३।१२१॥ कौ०पृ०६६३

(४) "पूर्वपदात् संज्ञायाम् ०" इति, णत्वम्. ८।४।३॥ कौ०पृ० १६७

( ५ ) " अनितेः " इत्यस्यासिद्धत्वादित्युक्तमेव. ८।४।१९॥ कौ०पृ०४४६

अथ, कूर्ममूर्तिरुच्यते मन्त्रवर्णानुरोधेन प्राणं मरुतां मथनोचितं

२० बलं ददाति इति—( प्राणदः ).

( १ ) " डुदाञ्, दाने" धा०जुहो० कौ०पृ०४५१

( २ ) " आतोनुपसर्गे कः" इति, कः. ३।२।३॥ कौ०पृ०५७०

आक्षेपः. व्युदपादि हि प्राणशब्दः. ❋

निरु०—३२२ पुंसां जीवितरूपत्वात् ( प्राण ) इत्यभिधीयते ।

२५ ३२३ मरुतां बलदानाद्धि समुद्रमथने भृशम् ॥ २४२ ॥

( प्राणद ) श्च समुद्दिष्टः कूर्मरूपतया हि सः ।

| (३२४) वासवानुजः, | (३२५) अपान्निधिर्, |
|---|---|
| ॐ वासवानुजाय नमः। | ॐ अपान्निधये नमः। |

भा०— अमृतार्थिनं वासवमनु तत्संविधानाय जात इति— ५
(वासवानुजः).
(१) "अनौ कर्मणि" इति, डः. ※ ३।२।१००॥ कौ० पृ० ५८५
मथ्यमानमहार्णवधारणात्—(अपान्निधिः). ※

निर्व०— अमृतार्थिनं वासवमनु, तत्संविधानाय जात इति—
(वासवानुजः). १०
(१) "जनी, प्रादुर्भावे" अनुपूर्वः. धा० दिवा० कौ० पृ० ४५४
जनेरिति वर्तमाने,
(२) "अनौ कर्मणि" इति, डः. णिलोपः. ३।२।१००॥ कौ० पृ० ५८५
(३) "वस, निवासे" धा० भ्वादिः कौ० पृ० ४३२
(४) "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" १५
इति, उः. इत्थं निष्पन्नाद्वसुशब्दात्, उणा० पा० १ कौ० पृ० ६०९
अणूचेति वर्तमाने,
(५) "ज्योत्स्नादिभ्य उपसंख्यानम्" वार्ति० ५।२।१०३॥
कौ० पृ० ३२८
इति, मत्वर्थे अण्. आदिवृद्धिः. गुणवादेशौ. ततस्सवर्णदीर्घः. ※ २०
मथ्यमानमहार्णवधारणात् अपां— जलबाहुल्यात्, समुद्रस्य
निधिः— स्थानम् इति—
(अपान्निधिः). भिन्नं पदम्.
(१) "डुधाञ्, धारणपोषणयोः" धा० जुहो० कौ० पृ० ४५१
निपूर्वः. घुसंज्ञायाम्, २५

निरु०— ३२४ वासवस्यानुजत्वेन जातत्वाद् (वासवानुजः)॥२१३॥
३२५ (अपान्निधि) मथ्यमानमहार्णवविधारणात्।

( ३२६ ) अधिष्ठानम्,

ॐ अधिष्ठानाय नमः ।

शा०—( १ ) " मन्दराद्रे ( रधिष्ठानं ) भ्रमतोऽभून्महामुने" ! इति-
५ ( अधिष्ठानम् ).

निर्व०—(२)"उपसर्गे घोःकिः" इति,किः.३।३।९२॥कौ०पृ०६५८
आल्लोपः. प्राक्तने तु पदे,
( ३ ) " आप्लृ, व्याप्तौ" धा०स्वादिः कौ०पृ०४६२
( ४ ) " क्विब्वचि०"इत्यतः क्विविति वर्तमाने,उणा०पा०२कौ०
१० पृ०६२१
( ५ ) " आप्नोतेर्ह्रस्वश्च" इति, क्विप्. उणा०पा०२कौ०पृ०६२१
आकारस्य ह्रस्वश्च. तत आप्. संहितायाम्,
( ६ ) " यरोऽनुनासिकेऽनुनासिको वा" इति,८।४।४५॥कौ०पृ०११
पाक्षिकोऽनुनासिकः. ❀
१५ मन्दरोनधिष्ठानतया भ्रमन्,सोयमधितिष्ठति अस्मिन् इति-(अधिष्ठानम्).
( १ ) " ष्ठा, गतिनिवृत्तौ" अधिपूर्वः. धा०भ्वादिः कौ०पृ० ४२४
षत्त्वः. टवर्गस्तवर्गजः.
( २ ) " करणाधिकरणयोश्च" इति, अधिकरणे, ल्युट्. योरनः.
दीर्घः. ३।३।११७॥कौ०पृ० ६६२
२० ( ३ ) " आदेशप्रत्यययोः " इत्यौत्सर्गिकस्य षत्वस्य. ८।३।५९॥
कौ०पृ०३४
( ४ )"सात्पदाद्योः"इति,निषेधे प्राप्ते, ८।३।१११॥कौ०पृ०३५८.
( ५ ) "उपसर्गात्—सुनोति—सुवति—स्यति—स्तौति—स्तोभति—स्था-
सेनय—सेध—सिच—सञ्ज—स्वञ्जाम्" इति, षः. ष्टुत्वम्. ८।३।६५॥
२५ कौ०पृ०३८४

निरु०—३२६ भ्रममाणं मन्दराद्रिं धृतवान् यो महाजले ॥२४४॥
( अधिष्ठानं ) तमेवाहुरधिष्ठानमदो मनुः ।

( ३२७ ) अप्रमत्तः, ( ३२८ ) प्रतिष्ठितः, ॥

ॐ अप्रमत्ताय नमः । ॐ प्रतिष्ठिताय नमः ।

५

भा०—एवंविधानां त्राणेषु—
( अप्रमत्तः ). अत्यन्तमवहितः. ❋
स्वयमन्यानपेक्षया स्वे महिम्नि—( प्रतिष्ठितः ).
( १ ) " स भगवः क प्रतिष्ठित " इति, छा०उ० ७–२४–१।
( २ ) " स्वे महिम्नि " इति, छा०उ०७–२४–१।
( ३ ) " स्वे महिम्नि स्थितं देवम्" इतिच. ❋ वि० । १०

निर्व०—"लिङ्गमशिष्यम्" इत्यादि. ❋ ॥ महाभाष्ये ॥
एवंविधानां संत्राणे सावधानतया, प्रमत्तोऽनवहितो न इति—
( अप्रमत्तः ).
( १ ) " मदी, हर्षे" प्रपूर्वः. ईदित्. धा०दिवा०कौ०पृ०४५९
(२)"गत्यर्थ०"इत्यादिना अकर्मकात्,३।४।७२॥कौ०पृ०५९६१५
कर्तरि क्तः.
(३)"श्वीदितो निष्ठायाम्" इतीण्निषेधः. ७।२।१४॥कौ०पृ० ५८९
(४)"रदाभ्याम्०"इति, निष्ठानत्वं प्राप्तम्,८।२।४२॥कौ०पृ०५८६
( ५ ) " न ध्याख्यापृमूर्छिमदाम्" इति, ८।२।५७॥कौ०पृ०५८९
प्रतिषिध्यते. चर्त्वम्. नञ्समासः. नलोपः. ❋ २०
स्वयमन्यानपेक्षया, स्वे महिम्नि सुस्थितः इति—
( प्रतिष्ठितः ).
( १ ) " ष्ठा, गतिनिवृत्तौ" धा०भ्वादिः कौ०पृ० ४२४
प्रतिपूर्वः. पत्त्वः. टवर्गस्तवर्गजः.

निरु०—३२७ अत्यन्तावहितप्राणे(स्त्वप्रमत्तः)प्रकीर्तितः॥२४५॥२५
( ३२८ ) स्वे महिम्नि स्थितो यस्तु स ( प्रतिष्ठित ) उच्यते ।

श्लो० ॥ ३६ ॥ ( ३२९ ) स्कन्दः, ( ३३० ) स्कन्दधरो,

ॐ स्कन्दाय नमः । ॐ स्कन्दधराय नमः ।

५ भा०—स्वयमसुरादीन् स्कन्दयति शोपयतीति—( स्कन्दः ). ❀
तादृशं सुरसेनान्यमपि धरत इति—
( स्कन्दधरः ). सोपि हि, तस्य विभूतिः.
( १ ) " सेनानीनामहं स्कन्दः" इति. ❀ गी० १०—२४ ।
( १ ) " भुवनभृत" इति, तन्मन्त्रवर्णात्—

१० निर्व०—( २ ) " गत्यर्थाकर्मकश्लिपशीङ्स्थास०" ३।४।७२॥
कौ०पृ० ५९६
इत्यादिना कर्तरि क्तः. अनिट्.
( ३ ) " द्यति—स्यति—मा—स्थामित्ति किति"इति, ७।४।४० ॥
कौ०पृ० ५९४
१५ तादौ किति आत इत्वम्. कित्वान्न गुणः.
(४) "उपसर्गात् सुनोति०" इत्यादिना पः.८।३।६५कौ०पृ०३८४
द्गुत्वम्. स्वयमसुरादीन् स्कन्दयति—शोपयतीति—( स्कन्दः ).
( १ )"स्कन्दिर्,गतिशोपणयोः"इरित्. धा०भ्वादिः कौ०पृ०४२९
णिच्. ततः पचाद्यच्. णिलोपः. ❀
२० तादृशसुरसेनान्यं स्कन्दं गुहमपि विभूतितया धरतीति—( स्कन्दधरः )
( १ ) " धृञ्, धारणे" धा०भ्वादिः कौ०पृ० ४२३
कर्मणः शेषत्वविवक्षायां पचाद्यच्. गुणोरपरः. स्कन्दशब्दो
व्युत्पादितः. ❀
मन्त्रवर्णात्—

२५ निरु०—३२९असुरादीन् शोपयति(स्कन्दः)स्कन्दयतीति यः।२४६।
३३० स ( स्कन्दधर ) आख्यातः षडाननविधारणात् ।

( ३३१ ) धुर्यः, ( ३३२ ) वरदो,

ॐ धुर्याय नमः । ॐ वरदाय नमः ।

५

भा०–( धुर्यः ).
( १ ) " धुरोयड्ढकौ"इति, यत्. ※ ४।४।७७॥कौ०पृ०२८७
अन्येभ्योपि लोककार्यधुर्येभ्यो देवेभ्यः तांस्तान् वरान् ददातीति–
( वरदः ). ※

निर्व०–धुरं भुवनभारं वहतीति–( धुर्यः ).
( १ )"धुर्वीत्ययं हिंसाकर्मा" ततो, धा०भ्वादिः कौ०पृ०४०५ १०
( २ ) " भ्राज–भास–धुर्वि–द्युतोर्जि–पॄ–जुग्रावस्तुवः–क्विप्"
३।२।१७७॥कौ०पृ०६०७
इति, क्विप्, तल्लोपः.
( ३ ) " राल्लोपः " इति, वलोपः. एवंनिष्पन्नात्, ६।४।२१॥
१५
कौ०पृ० ५११
धूर्शब्दात्,
( ४ ) " तद्वहति०"इत्यधिकारे ४।४।७६॥ कौ०पृ० २८७
( ५ ) " धुरोयड्ढकौ"इति, यत्. ४।४।७७॥ कौ०पृ० २८७
(६)"हलि च"इति उपधाया इको दीर्घे प्राप्ते,८।२।७७॥कौ०पृ० ६३
( ७ ) " यचिभम्"इति, भसंज्ञायाम्, १।४।१८॥कौ०पृ० ३८ २०
( ८ ) " न भकुर्छुराम्"इति, तन्निषेधः. ※८।२।७९॥कौ०
पृ०२८७
अपरेभ्योपि भुवनकर्मधुरंधरेभ्यो देवेभ्यः तांस्तान् वरान् ददातीति-
( वरदः ).
( १ ) " डुदाञ्, दाने" धा०जुहो० कौ०पृ० ४५१ २५

निरु०–३३१ भुवनं धृतवान्( धूर्यो )
३३२ ( वरदो )ऽभीष्टदः स्मृतः ॥ ७४७ ॥

( ३३३ ) वायुवाहनः, ।

ॐ वायुवाहनाय नमः ।

भा०— तद्यथा—

५ ( वायुवाहनः )— जगत्प्राणं वायुं वाहयतीति. ❀

अथ, द्विषट्काध्यात्मविषयः—

निर्व०—( २ ) " आतोनुपसर्गे कः " इति, कः. आतो लोपः.३।२।३॥कौ०पृ०५७०

( ३ ) " वृञ्, वरणे " धा०स्वादिः कौ०पृ०४६२

१० ( ४ )"अकर्तरिच कारके० " अप् इत्यनुवृत्तौ,३।३।१९॥कौ० पृ०६४७

( ५ ) " ग्रहवृदृनिश्चिगमश्च " ३।३।५८॥कौ०पृ०६५३ इत्यप्. गुणो रपरः. ❀

तद्यथा, वायुं— जगत्प्राणं वाहयति-वहनधर्माणं करोतीति—

१५ ( वायुवाहनः ).

( १ ) " वह, प्रापणे " णिच्. धा०भ्वादिः कौ०पृ०४३२ वृद्धिः. ल्युः. ल्युड्वा. बाहुलकात्, इत्यादि. अनः. णिलोपः.

( २ ) " वा, गतिगन्धनयोः " धा०अदा० कौ०पृ०४४३

( ३ ) " कृवापाजिमिस्वदिसाध्यशूभ्य उण् " इत्युण्. उणा०

२० पा०१कौ०पृ०६०९

( ४ ) "आतो युक् चिण्कृतोः" इति, ७।३।३३॥कौ०पृ०५३९ णिति कृति धातोर्युक्. ❀

अथ, द्विषट्काध्यात्मविषयः आर्षनिरुक्तानुसारात् (वासुः) विश्वम्— आवासयन्, आच्छादयन्, वसन्, वासाधिकरणभूतश्चासौ ( देवः )

२५ क्रीडन्. विजिगीषमाणः, द्योतमानः गच्छंश्चेति —

निरु०—३३३ जगत्प्राणं वहति यो ( वायुवाहन ) उच्यते ।

{३३४ / ७०१} वासुदेवो,

ॐ वासुदेवाय नमः ।

भा०— ( वासुदेवः )-वासुश्चासौ देवश्चेति. विश्वं स्वस्मिन् सवि-
त्रीव वासयन्, पक्षाभ्यामिवाच्छादयंश्च, तस्मिन् वसतीति—वासुः. ५
एवं क्रीडति, विजिगीषते, अथ च द्योतते, स्तूयते, गच्छति, चेति
( देवः ) अतो ( वासुदेवः ); निरूचुश्च ऋषयः.
( १ ) "छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः। सर्वभूताधि-
वासश्च वासुदेवस्ततः स्मृतः " भा०मो० १६६।

निर्व०— ( वासुदेवः ). १०
( १ ) " दिवु, क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्न-
कान्तिगतिषु " धा० दिवा० कौ० पृ० ४५२
(२) "इगुपधज्ञा-प्री-किरः कः" इति, ३।१।१३५॥ कौ० पृ० ५६७
कापवादः पचादिपाठादच्. लघूपधगुणः.
( ३ ) "वस, निवासे" धा० भ्वादिः कौ० पृ० ४३२ १५
(४) "वस, आच्छादने च" णिच्. वृद्धिः. धा० अदा० कौ० पृ० ४३८
( ५ ) "शॄस्वृस्निहि०" इत्यत्र चकारात्, उणा० पा० १ कौ० पृ० ६०९
बाहुलकात् वा, उः, णिलोपः.
( ६ ) " वस, निवासे" इति शुद्धाद्वा. धा० भ्वादिः कौ० पृ० ४३२
बाहुलकात् उण्— कर्तर्यधिकरणे वा. उपधावृद्धिः. २०

निरु०—३३४ सर्वभूतान् वासयति वासुस्स परिकीर्तितः ॥ २४८ ॥
दिवुधातोरपि क्रीडाद्यर्थकत्वाद्विशेषतः । वासुश्चासौ देवश्चेति
( वासुदेवः ) प्रकीर्तितः ॥ २४९ ॥ सर्वभूतेष्वपि वसन् स्वस्मिन्
भूतानि वासयन् । यः क्रीडति मुदा यद्वा ( वासुदेव ) स्स उच्यते
॥ २५० ॥ सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स २५
( वासुदेवे ) ति विद्वद्भिः परिपठ्यते ॥ २५१ ॥

( ३३५ ) बृहद्भानुः,

ॐ बृहद्भानवे नमः ।

भा०—( २ ) " वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः । वासुदेव-
५ स्ततो ज्ञेयः सर्वेषामपि पठ्यते" भा०उ०६८—३।
( ३ ) " सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति
विद्वद्भिः परिपठ्यते" इति, सर्वशास्त्रे. वि० १—२—१२।
गुह्यमिति, नातिव्यज्यते. ❀
तदेव व्याचिकीर्षति. तत्र यद्भोगविभूत्या द्योतमानत्वं तदाह-
१० ( बृहद्भानुः )-बृहन्तो भानवो नित्यदीप्ताः अस्येति. ❀

निर्व०— यदा तु तत्रापि निरुक्तस्वातन्त्र्यम्. तदा न कोप्ययं यत्नः
अन्यत्राप्येवमूह्यम्. एवं निरुक्तप्रदेशे सर्वत्रापि. न्यरूपि चेदं प्रागेव.
अन्यदप्यत्र वक्तव्यं सर्वशास्त्रगुह्यमिति. नातिव्यज्यते. ❀
तदेवव्याचिकीर्षति. तत्र धात्वर्थनिर्देशक्रमाविवक्षया यत् भोगविभू-
१५ त्या द्योतमानत्वं तत् तावदुच्यते. बृहन्तो महान्तो विश्वदीप्ताः,
भानवः—किरणाः अस्येति—
( बृहद्भानुः ).
( १ )"भा, दीप्तौ" धा०अदा०कौ०पृ०४४३
(२)"दा-भाभ्यां नुः"इति,नुः,अनिट्,उणा०पा० ३कौ०पृ०६२६
२० (३)"बृह बृहि, वृद्धौ" धा०भ्वादिः कौ०पृ०४११
( ४ ) " वर्तमाने पृषद् बृहन् महज्जगच्छतृवच्च" उणा०पा०२
कौ०पृ०६२२
इति, अतिप्रत्ययान्तो निपात्यते.
शतृवत् कार्यभाक् च भवति. तेनोगित्कार्यं गुणाभावश्च निपातनात्;
२५ बृहेरिदित्त्वान्नुमो नलोपोपि. जश्त्वम्. ❀

निरु०—३३५ बृहन्तो भानवो यस्य स ( बृहद्भानु ) रुच्यते ।

(३३६) आदिदेवः, (३३७) पुरन्दरः, ॥

ॐ आदिदेवाय नमः । ॐ पुरन्दराय नमः ।

भा०—यदवरविभूत्या क्रीडति; तदाह— ५
( आदिदेवः ); यथा,
(१)"संप्रयोज्य वियोज्याऽयं कामकारकरः प्रभुः । क्रीडते भगवान्"
अ० ३०—४० ।
( २ ) " अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी । मोदते भगवान् विष्णुर्बालः क्रीडनकैरिव" ❀ भा०स० ६२—३४। १०
छादनात् यत् असद्बाधनिवारणं तदाह चतुर्भिः. असुरपुराणि दारयतीति—
( पुरन्दरः ).

निर्व०— अथ, यदवरविभूत्या क्रीडनं तदुच्यते. संप्रयोज्य वियोज्य च,कामकारकरणतया,आदिः-प्रथमबीजभूतश्चासौ देवः क्रीडंश्चेति ( आदिदेवः ). १५
( १ ) " दिवु, क्रीडादौ" धा०दिवा० कौ०पृ०४५२
पचाद्यच्. गुणः. आदिशब्दो व्युत्पादितः. ❀
छादनाद्यत् बाधनिवारणं तदुच्यते चतुर्भिः. पुराणि असुरपुराणि तदुपलक्ष्याणि आधिदैविकानि असुरपिशाचाशनिग्रहादिभयानि २० तानि दारयति— भेदयति इति—
( पुरन्दरः ).
( १ ) " दॄ,विदारणे"णिच्. वृद्धिः. धा०क्र्यादिः कौ०पृ०४७६
खरत्वम्.

निरु०—३३६ यः क्रीडती (त्यादिदेवः)साऽऽत्मकविभूतिभिः २५
॥२५२॥३३७ ( पुरन्दर ) इति ख्यातस्त्रिपुरगणां विदारणात् ।

श्लो० ॥ ३७ ॥ ( ३३८ ) अशोकः,

ॐ अशोकाय नमः ।

भा०— ( १ ) " वाचंयमपुरन्दरौ च" इति, निपातितः. ६।३।६९॥
५ कौ०पृ०५७७
असुरपिशाचाऽशनिग्रहाव्याधिदैविकभयहरणप्रदर्शनमेतत्. ❀
आध्यात्मिकानां शोकमोहाशनायादीनां विरोधी—
( अशोकः ). ❀

निर्व०—( २ )"पॄ,पालनपूरणयोः"धा०क्र्यादिः का०पृ०४७६
१० ( ३ )"भ्राज भास०"इत्यादिना क्विप्. ३।२।१७७॥कौ०पृ०६०७
( ४ )"उदोष्ठ्यपूर्वस्य" इति, किति ७।१।१०२॥कौ०पृ०४४९
ऋतः उत्त्वं. रपरत्वम्. अगुणः. एवं निष्पन्ने पूर्युपपदे,
( ५ )"पूस्सर्वयोर्दारिसहोः" ३।२।४१॥कौ०पृ०५७७
इति, दारेः खच्.
१५ ( ६ ) "खचि ह्रस्वः" इति, खच्परे णौ.६।४।९४॥कौ०पृ०५७७
उपधाह्रस्वः. णिलोपः.
(७)"वाचंयमपुरन्दरौ च" इति,व्युत्पा—६।३।६९॥कौ०पृ०५७७
दितस्य पुरोऽमन्तत्वं निपात्यते. अनुस्वारपरसवर्णौ. ❀
शोकस्य तदुपलक्ष्याणामाध्यात्मिकानां शोकमोहाशनायादीनां
२० विरोधीति—( अशोकः ).
( १ ) " शुच, शोके" धा०भ्वादिः कौ०पृ०३९०
( २ ) " ईशुचिर्, पूतीभावे" वा, धा०दिवा० कौ०पृ०४५५
पूतीभावः क्लेदः. भावे घञ्. गुणः.
(३)"चजो०"इति,कुत्वम् कः,विरोधार्थे७।३।५२॥कौ०पृ०५६०
२५ नञ्. तत्पुरुषः. नञो नलोपः.

निरु०—३३८(अशोकः) शोकमोहादिनाशकः परिकीर्तितः॥२५३॥

(३३९) तारणम्, { ३४० / ९६८ } तारः, { ३४१ / ६५१ } शूरः,

ॐ तारणाय नमः। ॐ ताराय नमः। ॐ शूराय नमः।

भा०—आधिभौतिकेभ्यश्च वैरिचोरव्याघ्यादिभयेभ्यस्तारयतीति— ५
(तारणः). ❀
सान्निधानाच्च सर्वसंसारभयात्तारयतीति—(तारः). अथर्वशिरसि,
(१) "गर्भजन्मजरामरणसंसारसागरमहाभयात्तारयतीति
तस्मादुच्यते तारः"इति. अ०।
(२) "अपहतपाप्मा विजरः" छा०८—१—५। १०
इत्यादिका च श्रुतिरेतत्प्रकरणप्रवणा. ❀
यद्विजिगीपुत्वम्; तदाह शूर इति—(शूरः). समर्थो जैत्रः.

निर्व०—आधिभौतिकेभ्यश्च,वैरिचोरव्याघ्रादिभयेभ्यः तारयतीति-
(तारणः).
(१) "तॄ, प्लवनतरणयोः"णिच्.धा०भ्वादिःकौ०पृ०४२७ १५
(२) "अचोञ्णिति" इति,वृद्धिः. रपरत्वम्.७।२।११५॥
कौ०पृ० ४२
नन्द्यादिल्युः; ल्युट्वा. बाहुलकादित्यादि. योरनः. णेर्लोपः.
(३) "अट्कुप्वाङ्०" इति णत्वम्. ❀८।४।२॥कौ०पृ०३२
सन्निधानाच्च सर्वसंसारभयात्तारयतीति— २०
(तारः). पूर्ववत् धातुः. णिच्. वृद्धिः. रपरत्वम्. पचाद्यच्.
णिलोपः. ❀
यद्विजिगीपुत्वम्; तदुच्यते. शूरः समर्थः जैत्र इति— (शूरः).

निरु०—३३९ य (स्तारण) स्तारयति वैरिव्याघ्यादिभीतितः।
३४० (तारः) संसारभयतो नित्यं तारयतीति सः ॥ २५४ ॥ २५
३४१ विजिगीपुतया जैत्रः समर्थः (शूर) उच्यते।

{३४२ / ६५०} शौरिर्,

ॐ शौरये नमः।

भा०— (१) "शु, गतौ" ॥सौत्रोयम्॥ कौ०पृ०
५ (२) "शुसिचिमीनां दीर्घश्च" इति,उणा०पा०२कौ०पृ०६२०
क्रन्प्रत्ययो दीर्घश्च. ❀
यद्विशेषतो भक्तान् गच्छति तत्प्रदर्शयति—
(शौरिः)— शूरस्य वसुदेवस्यापत्यम्.
(१) "अत इञ्" ❀४।१।९५॥कौ०पृ०२०९

१० निर्व०— (१) "शु, गतौ" ॥सौत्रोयं धातुः॥ कौ०पृ०
(२) "सु-सूधा-गृधिभ्यः क्रन्"उणा०पा०२कौ०पृ०६२०
इति वर्तमाने,
(३) "शुसिचिमीनां दीर्घश्च" उणा०पा०२कौ०पृ०६२०
इति क्रन्. धातोश्च दीर्घः. अनिट्. ❀
१५ यद्विशेषतो भक्तान्प्रति गमनं तत्प्रदर्श्यते
शूरस्य वसुदेवस्य अपत्यमिति—
(शौरिः).
(१) "शु, गतौ"प्राग्वदेव सर्वम् ॥सौत्रोयं धातुः॥ कौ०पृ०
एवं निर्व्यूढाच्छूरशब्दात्,
२० (२) "अत इञ्" तदपवादे च, ४।१।९५॥कौ०पृ०२०९
(३) "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४॥कौ०पृ०२१३
इति, वृष्णिलक्षणेऽणि प्राप्ते, तदपवादो,
(४)"बाह्वादिभ्यश्च"इति, बाह्वादेरा-४।१।९६॥ कौ०पृ०२०९
कृतिगणत्वात् इञ्. भसंज्ञायाम्,
२५ (५) "यस्य०" इति, लोपः.६।४।१४८॥कौ०पृ०५६

निरु०—३४२ शूरस्य वसुदेवस्य योऽपत्यं (शौरि)रुच्यते ॥२५५॥

(३४३) जनेश्वरः,।(३४४) अनुकूलः,

ॐ जनेश्वराय नमः। ॐ अनुकूलाय नमः।

भा०—एवं सर्वसंप्लावनोज्ज्वलैश्वर्यमहौघः— ५
(जनेश्वरः). ❀
अथ च, निसर्गमहत्त्वेन विस्मयमदमानवर्जनादनुद्वेलः—
(अनुकूलः)—कूलमनुवर्तत इति; यथा,
(१) "वीर्यवान्न च वीर्येण महता स्वेन विस्मितः"
भक्तभव्यो वा— १०
(अनुकूलः).

निर्व०—(६) "तद्धितेष्वचामादेः" ७।२।११७॥कौ०पृ०२०४
इति, आदिवृद्धिरौकारः. ❀
एवं सर्वसंप्लवनोज्ज्वलैश्वर्यमहौघतया, जनानाम् ईश्वरः इति—
(जनेश्वरः). १५
(१) "ईश, ऐश्वर्ये" धा०अदा०कौ०पृ०४३८
(२) "स्थेशभास०" इत्यादिना, ३।२।१७५॥कौ०पृ०६०६
वरच् प्रत्यय इत्यादि.
(३) "जनी, प्रादुर्भावे" धा० दिवा०कौ०पृ०४५४
पचाद्यच्. सांहितिको गुणः. ❀ २०
अथ च, नैसर्गिकमहत्त्वेन, विस्मयमदमानवर्जनात् अनुद्वेलतया,
अनुकूलः— कूलमनुवर्तमान इति वा, भक्तभव्य इति वा,—
(अनुकूलः).

निरु०—३४३प्लवनोज्ज्वलनैश्वर्यमहौघस्त्या (जनेश्वरः)।
३४४ स्वभावतो महत्त्वेऽपि मदविस्मयवर्जनात्॥ २५६॥ २५
भक्तैकप्रवणो नित्यम् (अनुकूल) इति स्मृतः।

१ संप्लवनो।

## ( ३४५ ) शतावर्तः,

ॐ शतावर्ताय नमः ।

भा०—( १ ) " हस्तावलम्बको ह्येको भक्तिक्रीतो जनार्दनः "
५ (२) "यदि शक्तोपि गच्छ त्वमतिचञ्चलचेष्टित" वि० पु० ५६-१५।
इत्यादि. ❀
तथा,
( शतावर्तः )— शतमावर्ता अस्येति. आवर्तशब्दैनैश्वर्यविजृम्भितानि लक्ष्यन्ते. अतिवेलमप्यनुवेलीक्रियमाणमिदमैश्वर्यं संकटगतिक्षोभसमुद्भ-
१० वत्सरिदावर्तवत् विजृम्भते. एवम्,

निर्व०—( १ ) " कूल, आवरणे " धा० भ्वादिः कौ० पृ० ४०४
इगुपधलक्षणः कः. अनुपूर्वो गतिसमासः. तत्पुरुषः.
( २ ) " परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः " २।४।२६॥ कौ० पृ० १५६
इति, परवल्लिङ्गतायां प्राप्तायाम्,
१५ ( ३ ) " द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः " २।४।२६॥
कौ० पृ० १५६
इति, तन्निषेधः. ❀
तथा शतम्, आवर्तविशेषाः अतिवेलत्वेप्यनुवेलीक्रियमाणतया संकटगतिक्षोभसमुद्भवत्सरिदावर्तवत् तदुपलक्ष्याण्यैश्वर्यविजृम्भितानि,
२० अस्येति—
( शतावर्तः ).
( १ ) " वृतु, वर्तने " आङ्पूर्वः. धा० भ्वादिः कौ० पृ० ४१२
भावे घञ्. लघूपधगुणः रपरः.
( २ ) " दंश, दशने " धा० भ्वादिः कौ० पृ० ४३१

२५ निरु०—३४५ऐश्वर्यजृम्भिताभिरप्या आवर्त्ता यस्य नित्यशः॥२५७॥
शतं सन्ति ( शतावर्त्ता ) वरवर्णो भुक्तिमुक्तिदः ।

( ३४६ ) पद्मी,

ॐ पद्मिने नमः ।

भा०–( १ ) " शान्तोदितविज्ञानप्राणाय "

इति परमन्त्रलिङ्गं समर्थितम्. ❋ ५

एवं वासुदेवत्वं गुणतो विवृत्य, रूपतोपि विव्रियते. लीलापद्मेन

नित्ययोगात्–

( पद्मी ). ❋

निर्व०–( ३ ) " कनिन्युवृषि० " उणा०पा०१कौ०पृ०६१८

इत्यतः कनिन्निति वर्तमाने, १०

( ४ ) " नुदंशेर्गुणश्च " इति, कनिन् .

( ५ ) " अनिदिताम्० " इति, नलोपः ६।४।२४॥कौ०पृ०७६

पुनरपि स एवावर्तते. ततः,

( ६ ) "पञ्चद्दशतौ वर्गे वा " ५।१।६०॥ कौ०पृ०३०१

इति संख्यायाः कनोपवादतया, पाक्षिकडत्वन्तो निपातः.डित्त्वाट्टि- १५

लोपः. कर्मधारयः. नलोपः एवं सिद्धात् दशदशच्छब्दात्,

( ७ ) " तदस्य परिमाणम् " इत्यर्थे ५।१।५७॥कौ०पृ०३००

( ८ ) " पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीति

नवतिशतम् " इति, तप्रत्ययः. ५।१।५९॥कौ०पृ०३००

प्रकृतेश्शभावश्च निपात्यते; यद्वा. लाघवात् रूढिशब्दा एव निपात्यन्ते. २०

बहुर्व्रीहिः. ❋

इत्थं वासुदेवत्वं गुणतो विवृतम्, अथ, रूपतोपि विव्रियते.

लीलापद्मेन नित्ययोगात्. पद्मं नित्यमस्यास्तीति,–

( पद्मी ) व्युत्पादितो हि, पद्यतेर्मन्प्रत्यये पद्मशब्दः ?

निरु०–३४६ गुणतो वासुदेवत्वमुक्तं रूपादिरुच्यते ॥ २५८ ॥ २५

लीलापद्मधरो नित्यं ( पद्मी ) ति परिकीर्त्यते ।

(३४७) पद्मनिभेक्षणः, ॥ श्लो०॥३८॥

{४८
१९८}(३४८) पद्मनाभो,

५ ॐ पद्मनिभेक्षणाय नमः। ॐ पद्मनाभाय नमः।

भा०— अमलकमलास्फालननिभं श्रमापहं वीक्षणमस्येति— (पद्मनिभेक्षणः). ※
नाभिश्च पद्मनिभोऽस्येति— (पद्मनाभः). ※

निर्व०— ततो नित्ययोगे, मत्वर्थीयोऽत इनिः.
१० (१) "यस्य०" इति, लोपः. ६।४।१४८॥कौ०पृ०५६
(२) "सौच" इतीन्नन्तलक्षणो दीर्घः. इत्यादि. ※६।४।१३॥ कौ०पृ०६४
तथा, पद्मनिभम्, अमलकमलास्फालनसदृशम्, ईक्षणम् श्रमापहवीक्षणम्, अस्येति— (पद्मनिभेक्षणः).
१५ (१) "ईक्ष, दर्शने" धा०भ्वादिः कौ०पृ०४०६
(२) "ल्युट् च" इति, भावे ल्युट् योरनः. णत्वम्.३।३।११५॥ कौ०पृ०६६२
(३) "भा, दीप्तौ" निपूर्वः. धा०अदा०कौ०पृ०४४३
(४) "आतश्चोपसर्गे" इति, कः. आल्लोपः. ३।१।१३६॥ कौ०
२० पृ०५६८ पद्मशब्दो व्याकृतः. एवमुत्तरत्रापि. गुणः. ※
तथा पद्मम्, पद्मनिभा, नाभिः अस्येति— (पद्मनाभः).
(१) "णह, बन्धने" धा०दिवा०कौ०पृ०४५५

निरु०— ३४७ स्वच्छाम्बुजातसदृशमीक्षणं श्रमहारि च ॥२५९॥
यस्यास्ति भक्तरक्षायां स स्यात् (पद्मनिभेक्षणः)।
२५ ३४८ नाभिश्च पद्मवद्यस्य (पद्मनाभः) स उच्यते ॥२६०॥

१ दीनदम्।

(३४९) अरविन्दाक्षः,

ॐ अरविन्दाक्षाय नमः।

भा०—अरविन्दसुन्दरे, अक्षिणी. अस्येति—(अरविन्दाक्षः).❀ स्वसदृशेन सुरभिकोमलेन आसनपद्मेन, उपासकमानससरसिजेन ५ वा, गीयते स्वान्तरवस्थाप्यत इति—

निर्व०—(२) "णोनः" ६।१।६५॥कौ०पृ० ३८६
(३) "नहेर्भश्च" इति इञि भकारे च उणा० पा० ४कौ०पृ०६३८ अन्तादेशे,वृद्धौ च नाभिशब्दो व्युत्पादितः. बहुव्रीहिः. ततः,
(४) "अच् प्रत्यन्वव०" इत्यत्र, ५।४।७५॥कौ०पृ०१८३ १० अजिति योगविभागात् अच्समासान्तः.
(५) "यस्य०" इति, लोपः. ❀ ६।४।१४८॥कौ०पृ० ५६ तथा, अरविन्दे तद्वत् सुन्दरे, अक्षिणी, अस्येति— (अरविन्दाक्षः). व्युत्पादि ह्यशेरक्षिशब्दः ?
(१) "विद्लृ, लाभे" धा०तुदा० कौ०पृ० ४७० १५
(२) "गवादिषु विन्देस्संज्ञायाम्" इति,३।१।१३८॥कौ०पृ०५६८ शः—ततस्तुदादिलक्षणशस्य कित्त्वाद्गुणः.
(३) "शेमुचादीनाम्" इति, नुम्. ७।१।५९॥कौ०पृ०४७० अनुस्वारपरसवर्णौ. पररूम्.
(४) "ऋ, गतौ" पचाद्यच्. गुणः. रपरः. दीर्घः. ततो धा० २० जुहो०कौ०पृ० ४५२
(५) "बहुव्रीहौसक्थ्यक्ष्णोः०" इति, षच्.५।४।११३॥कौ०पृ० १६६ प्रागुक्तन्यायाचदसान्तौ,
(६) "अक्ष्णोऽदर्शनात्" इत्यज्वा. ५।४।७६॥कौ०पृ०१८३
(७) "यस्य०" इति, लोपः.❀६।४।१४८॥कौ०पृ०५६ २५ स्वसदृशेन सुरभिकोमलेन पद्मेन आसनपद्मेन, उपासक—

निरु०—३४९ रक्तारविन्दनयन (रक्तारविन्दाक्ष) ईरितः।

१ यस्य सः।

( ३५० ) पद्मगर्भः, ( ३५१ ) शरीरभृत्, ।

ॐ पद्मगर्भाय नमः । ॐ शरीरभृते नमः ।

५ भा०—( पद्मगर्भः ).
( १ ) " अर्तिगृभ्यां भन् " यथा, उणा०पा०३कौ०पृ०६३१
( २ ) " दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकम् " तै०ना०
६—१०—२३ ।
( ३ ) " दहरं पुण्डरीकं वेश्म " इत्यादि. छा०८—१—१।
१० ( ४ ) " सरसिजासनसन्निविष्टः " ❀
ईदृशेन शुभाश्रयेण स्वशरीरभूतमुपासकं पुष्णातीति—
( शरीरभृत् )—उपास्यगुणैर्हि तेषां पोषः ?

निर्व०—मानससरसिजेन वा, गीर्यते स्वान्तरवस्थाप्यत, इति—
( पद्मगर्भः ).
१५ ( १ ) " गॄ, निगरणे " धा०तुदा० कौ०पृ०४६८
( २ ) " अर्तिगृभ्यां भन्" उणा०पा०३कौ०पृ०६३१
इति. कर्मणि भन्. गुणः रपरः.
( ३ ) " नेड्वशि०" इति नेट्. पद्मशब्दः ७।२।८॥कौ०पृ०५८१
प्राग्वत्. ❀
२० ईदृशेन शुभाश्रयेण शरीरं स्वशरीरभूतं उपासकं बिभर्ति पुष्णातीति—
( शरीरभृत् ).
( १ ) " डुभृञ्, धारणपोषणयोः " धा०जुहो० कौ०पृ०४५०

निरु०—३५० योगिहृत्पुण्डरीकस्थः (पद्मगर्भः) स उच्यते ॥२६१॥
३५१ योगिहृत्कञ्जमध्यस्थः स्वदेहं तं बिभर्ति यः।
२५ ( शरीरभृत् ) स कथितो वस्तूनां भुक्तिमुक्तिदः ॥ २६२ ॥

## ( ३५२ ) महर्द्धिर्,

ॐ महर्द्धये नमः।

भा०—( १ ) " वसति हृदि सनातने च तस्मिन् भवति पुमान्
जगतोऽस्य सौम्यरूपः " वि० पु० ३—७—२४ । ५
( २ ) " ब्रह्मविद इव सोम्य ते मुखं भाति " इति च, छा० ।
उपासको हि तस्यात्मवच्छरीरवच्च ?
( ३ )" रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत् " इति. ❀
अथ, विभूतितोपि स एव विव्रियते. तद्योगक्षेमक्षमनिस्सीमविभूतिः—
( महर्द्धिः ). १०

निर्व०—( २ ) "वासरूपोऽस्त्रियाम्" ३।१।९४॥ कौ०पृ०५५५
इति, वासरूपविधिना क्विपि तुक्. अगुणः.
( ३ ) " शॄ, हिंसायाम् " धा० क्र्यादिः कौ०पृ०४७६
( ४ ) " कृशॄपॄकटिपटिशौटिभ्य ईरन् " उणा०पा०
इति, ईरन्. गुणः रपरः. ❀ १५
अथ विभूतितोपि, वासुदेव एव विव्रियते. तद्योगक्षेमक्षमा, महती
निस्सीमा ऋद्धिः— विभूतिः, अस्येति—
( महर्द्धिः ).
( १ ) " ऋधु, वृद्धौ " धा० स्वा० कौ०पृ०४६१
(२)"स्त्रियां क्तिन्"इति, भावे क्तिन्, ३।३।९४॥कौ०पृ०६५८ २०
अगुणः.
( ३ ) " तितुत्र० " इति, नेट्. ७।२।९॥कौ०पृ०६०८
( ४ )"झषस्तथोर्धो धः"इति, तस्य धः. ८।२।४०॥कौ०पृ०३८५

निरु०— ३५२ सएव वासुदेवोथ भूनिम्नि विव्रियते। तद्योग-
क्षेमवहननिर्मर्यादविभूतितः ॥ २६३॥ ( महर्द्धिम् ) २

( ३५३ ) ऋद्धो,

ॐ ऋद्धाय नमः ।

भा०—तत्समृद्ध्या स्वयमपि समृद्धः—
५ ( ऋद्धः ). यथा,
( १ ) " अभिषिच्य च लङ्कायाम् " इत्यादि. ❀ रा०बा०१-१५
इमम्महान्तम्महिमानम्क्षुल्लकयन्निव प्रवृद्ध आत्मा स्वरूपम्.

निर्व०—( ५ ) "झलां जश् झशि" इति,पूर्वस्य धस्य दः. ८।४।५३॥
कौ० पृ०९ व्युत्पादित एव हि महच्छब्दः, ततः स्त्रियाम्, वर्तमाने
१० पृषदित्यत्र शतृवदित्यातिदेशिक उगिल्लक्षणो ङीप्. ततः,
( ६ ) " स्त्रियाः पुंवत्० " इत्यादिना ६।३।३४॥कौ०पृ०१६०
तस्य पुंवद्भावः.
( ७ ) "आन्महतः०" इत्यात्वम्. दीर्घः.६।३।४६॥कौ०पृ०१५५
( ८ ) "ऋत्यकः" इति, प्रकृतिभावस्य पाक्षिकतया, ६।१।१२८॥
१५ कौ०पृ०१६ तदभावे आद्गुणः. रपरत्वम्. ❀
तत् समृद्ध्या स्वयमपि, ऋद्धः समृद्ध इति—
( ऋद्धः ). पूर्ववत् धातुः.
( १ ) " गत्यर्थ० " इत्यादिनाऽकर्मकात्कर्तरि,
कौ०पृ०५९६
२० ( २ ) "उदितो वा" इति क्त्वायामिट्—
विकल्पान्निष्ठायां नेट्. ततः, भाग्वदेव ध
नाम्नोः संहितायां सोरुत्वम्. ❀
इमं महान्तं महिमानं चुल्लकयन्निव वृ
अस्य इति—

२५ निरु०—३५३ तत्समृद्ध्या यस्समृद्ध (

( ३५४ ) वृद्धात्मा, ( ३५५ ) महाक्षो,(३५६)गरुडध्वजः,॥

ॐ वृद्धात्मने नमः। ॐ महाक्षाय नमः।ॐ गरुडध्वजाय नमः।

भा०—( वृद्धात्मा ). ❀ ५
महाक्षः—महान् पूज्यः, अक्षो, यस्य सः—
(महाक्षः). वहनेन रथावयवसाम्यात् अक्षः त्रयीमयः तार्क्ष्यः, स हि, गरुडवाहनस्य औपवाह्यः ? ❀
स एव ध्वजो, यस्य सः—
( गरुडध्वजः )—तद्धि, सर्वेश्वरस्यासाधारणं चिह्नम् ? ❀ १०

निर्व०— ( वृद्धात्मा ). आत्मशब्दो ह्यततेर्व्युत्पादितः ?
( १ ) " वृधु, वृद्धौ " प्राग्वत् क्तः. अगुणः. ❀ धा०भ्वादिः कौ०पृ०४१२
उदित्वान्निष्ठायामेट्. धत्वजश्त्वादि. दीर्घः, ततो नान्तलक्षणो दीर्घ इत्यादि. महान् पूज्यः, अक्षः वहनेन रथावयवसाम्यात्, १५ औपवाह्यस्त्रयीमयस्तार्क्ष्यः अस्येति— ( महाक्षः ).
( १ ) 'अक्षू, व्याप्तौ" पचाद्यच्. धा०भ्वादिः कौ०पृ०४०८
प्राग्वत् व्युत्पादितान्महत आत्वमित्यादि. ❀
स एव गरुडो, ध्वजः केतुः स्वासाधारणं चिह्नम्, अस्येति—
( गरुडध्वजः ). २०
( १ ) " ध्वज, गतौ" पचाद्यच्. धा०भ्वादिः कौ०पृ०३९१
( २ ) " गॄ, निगरणे" धा०तुदा० कौ०पृ०४६८

निरु०—३५४ महिमानं चुलकयन् प्रवृद्धस्सर्वतोधिकम् ॥ २६४ ॥
आत्मा स्वरूपं यस्येति स ( वृद्धात्मे ) ति कथ्यते ।
३५५ अक्षस्तु तार्क्ष्यो वहनाद्रथावयवसाम्यतः ॥ २६५ ॥ २५
महान् पूज्यस्स यस्यास्ति स ( महाक्ष ) इति स्मृतः ।
३५६ स एव तु ध्वजो यस्य स उक्तो ( गरुडध्वजः ) ॥ २६६ ॥

( ३५३ ) ऋद्धो,

ॐ ऋद्धाय नमः ।

भा०—तत्समृद्ध्या स्वयमपि समृद्धः—
५ ( ऋद्धः ). यथा,
( १ ) " अभिषिच्य च लङ्कायाम् " इत्यादि. ❋ रा०वा० १-२५।
इमम्महान्तम्महिमानञ्चुलकयन्निव प्रवृद्ध आत्मा स्वरूपम्, अस्येति—

निर्व०—( ५ ) "झलां जश् झशि" इति,पूर्वस्य धस्य दः. ८।४।५३॥
कौ० पृ०९ व्युत्पादित एव हि महच्छब्दः, ततः स्त्रियाम्, वर्तमाने
१० पृषदित्यत्र शतृवदित्यातिदेशिक उगिल्लक्षणो ङीप्. ततः,
( ६ ) " स्त्रियाः पुंवत्० " इत्यादिना ६।३।३४॥कौ०पृ०१६०
तस्य पुंवद्भावः.
( ७ )"आन्महतः०" इत्यात्वम्. दीर्घः.६।३।४६॥कौ०पृ०१५५
( ८ ) "ऋत्यकः" इति, प्रकृतिभावस्य पाक्षिकतया, ६।१।१२८॥
१५ कौ०पृ०१६ तदभावे आद्गुणः. रपरत्वम्. ❋
तत् समृद्ध्या स्वयमपि, ऋद्धः समृद्ध इति—
( ऋद्धः ). पूर्ववत् धातुः.
( १ ) " गत्यर्थ०" इत्यादिनाऽकर्मकात्कर्तरि क्तः. ३।४।७२॥
कौ०पृ०५९६
२० ( २ ) "उदितो वा" इति क्त्वायामिड्—७।२।५६॥कौ०पृ०६६८
विकल्पान्निष्ठायां नेट्. ततः, प्राग्वदेव धत्वम्. जश्त्वम्. गुणाभावश्च.
मान्नोः संहितायां सोरुत्वम्. ❋
इमं महान्तं महिमानं चुलुकयन्निव वृद्धः— प्रवृद्धः आत्मा स्वरूपम्
अस्य इति—

२५ निरु०—३५३ तत्समृद्ध्या यत्समृद्ध ( स्तृद्ध ) उच्यते।

( ३५४ ) वृद्धात्मा, ( ३५५ ) महाक्षो,(३५६)गरुडध्वजः,॥

ॐ वृद्धात्मने नमः। ॐ महाक्षाय नमः।ॐ गरुडध्वजाय नमः।

भा०—( वृद्धात्मा ). ❀ ५
महाक्षः—महान् पूज्यः, अक्षो, यस्य सः—
(महाक्षः). वहनेन रथावयवसाम्यात् अक्षः त्रयीमयः तार्क्ष्यः, स हि,
गरुडवाहनस्य औपवाह्यः ? ❀
स एव ध्वजो, यस्य सः—
( गरुडध्वजः )—तद्धि, सर्वेश्वरस्यासाधारणं चिह्नम् ? ❀ १०

निर्व०— ( वृद्धात्मा ). आत्मशब्दो ह्यततेर्व्युत्पादितः ?
( १ ) " वृधु, वृद्धौ " प्राग्वत् क्तः. अगुणः. ❀ धा०भ्वादिः
कौ०पृ०४१२
उदित्वान्निष्ठायान्नेट्. धत्वजश्त्वादि. दीर्घः, ततो नान्तलक्षणो
दीर्घ इत्यादि. महान् पूज्यः, अक्षः वहनेन रथावयवसाम्यात्, १५
औपवाह्यस्त्रयीमयस्तार्क्ष्यः अस्येति— ( महाक्षः ).
( १ ) 'अक्षू, व्याप्तौ" पचाद्यच्. धा०भ्वादिः कौ०पृ०४०८
प्राग्वत् व्युत्पादितान्महत आत्वमित्यादि. ❀
स एव गरुडो, ध्वजः केतुः स्वासाधारणं चिह्नम्, अस्येति—
( गरुडध्वजः ). २०
( १ ) " ध्वज, गतौ" पचाद्यच्. धा०भ्वादिः कौ०पृ०३९१
( २ ) " गॄ, निगरणे" धा०तुदा० कौ०पृ०४६८

निरु०—३५४ महिमान चुलकयन् प्रवृद्धस्सर्वतोधिकम् ॥ २६४ ॥
आत्मा स्वरूपं यस्येति स ( वृद्धात्मे ) ति कथ्यते ।
३५५ अक्षस्तु तार्क्ष्यो वहनाद्रथावयवसाम्यतः ॥ २६५ ॥ २५
महान् पूज्यस्स यस्यास्ति स ( महाक्ष ) इति स्मृतः ।
३५६ स एव तु ध्वजो यस्य स उक्तो ( गरुडध्वजः ) ॥ २६६ ॥

## ( ३५३ ) ऋद्धो,

ॐ ऋद्धाय नमः।

भा०—तत्समृद्ध्या स्वयमपि समृद्धः—
५ ( ऋद्धः ). यथा,
( १ ) " अभिषिच्य च लङ्कायाम् " इत्यादि. ❀ रा० बा० १-२५।
इमम्महान्तम्महिमानञ्चुलकयन्निव प्रवृद्ध आत्मा स्वरूपम्. अस्येति—

निर्व०—( ५ ) "झलां जश् झशि" इति,पूर्वस्य धस्य दः. ८।४।५३॥
कौ० पृ० ९ व्युत्पादित एव हि महच्छब्दः, ततः स्त्रियाम्, वर्तमाने
१० पृषदित्यत्र शतृवदित्यातिदेशिक उगिल्लक्षणो ङीप्. ततः,
( ६ ) " स्त्रियाः पुंवत्० " इत्यादिना ६।३।३४॥कौ०पृ० १६०
तस्य पुंवद्भावः.
( ७ )"आन्महतः०" इत्यात्वम्. दीर्घः.६।३।४६॥कौ०पृ० १५५
( ८ ) "ऋत्यकः" इति, प्रकृतिभावस्य पाक्षिकतया, ६।१।१२८॥
१५ कौ०पृ० १६ तदभावे आद्गुणः. रपरत्वम्. ❀
तत् समृद्ध्या स्वयमपि, ऋद्धः समृद्ध इति—
( ऋद्धः ). पूर्ववत् धातुः.
( १ ) " गत्यर्थ० " इत्यादिनाऽकर्मकात्कर्तरि क्तः. ३।४।७२॥
कौ०पृ०५९६
२० ( २ ) "उदितो वा" इति क्त्वायामिड्—७।२।५६॥कौ०पृ० ६६८
विकल्पान्निष्ठायां नेट्. ततः, प्राग्वदेव धत्वम्. जश्त्वम्. गुणाभावश्च.
नाम्नोः संहितायां सोरुत्वम्. ❀
इमं महान्तं महिमानं चुलकयन्निव वृद्धः— प्रवृद्धः आत्मा स्वरूपम्
अस्य इति—

२५ निरु०—३५३ तत्समृद्ध्या यस्समृद्ध ( स्त्वृद्ध ) उच्यते।

( ३५९ ) भीमः,

ॐ भीमाय नमः ।

भा०—अतः ते तस्मात् बिभ्यतीति—
( भीमः ). ५
(१)"भियष्पुग्वा"इति,मक्प्रत्ययः,उणा०पा०१कौ०पृ०६१७
(२)"भीमादयोऽपादाने"इति,३।४।७४॥कौ०पृ०६४५
तद्भीता हि, वाय्वादयो देवाः स्वमर्यादां नातिवर्तन्ते. यथा,
( ३ ) "भीषा स्माद्वातः पवते" इत्यादि१ तै०अ०८।
( ४ ) "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्महद्भयं वज्र- १०
मुद्यतम्" कठो०२—६—२ ।
( ५ ) "भयादेवाग्निस्तपति, भयात्तपति सूर्यः, भयादिन्द्रश्च
वायुश्च, मृत्युर्धावति पञ्चमः" कठो०२—६—३।
( ६ ) "कम्पनात्" ❋ ब्र०१—३—४० ।

निर्व०—अतः ते बिभ्यत्यस्मात् इति—( भीमः ), १५
( १ ) "ञिभी, भये" धा०जुहो०कौ०पृ०४४९
(२)"इषियुधीन्धिदसिश्याधूसूभ्यो मक्" उणा०पा०१कौ०पृ०६१७
इति प्रकरणे,
(३)"भियः षुग्वा" इति, मक् नात्र तस्य,उणा०पा०१कौ०पृ०६१७
विभाषितः षुक्. कित्वान्न गुणः. २०
( ४ ) "भीमादयोपादाने" इत्यपादाने साधुः.❋ ३।४।७४॥कौ०
पृ०६४५
यथापूर्वकल्पनेन तेषां समयमधिकारिनियमम्,अभयप्रदानव्रतनिर-
ततया, भक्तेभ्यः स्वात्मप्रदानावसरं वा, जानाति वेत्तीति—

निरु०—३५९ (भीमो )यस्माद्बिभ्यति तु शरभात् पवनादयः। २५

१ घृतम् ।

## ( ३६० ) समयज्ञो,

ॐ समयज्ञाय नमः।

भा०— अतस्तेषामग्न्यादीनाम् ऊर्ध्वज्वलनादिसमयमधिकारनियमं
५ जानातीति–( समयज्ञः ).

( १ ) "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" तै०६–१–३८।
इति,यद्वा, भक्तेभ्यः स्वात्मदानावसरस्समयः,तदभयदानव्रतं वेति. ❀
(२)"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये"इति,श्रुतिसिद्धं
समयं ज्ञात्वा, तेभ्यो दीयते, छा०६।१४–२ ।
१० तैरादीयते चेति–

( हविः ).

( १ ) " हु, दानादानयोः" धा०जुहो० कौ०पृ०४४९
(२)"अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः"उणा०पा०२कौ०पृ०६२४
इति, इसिः. ❀

१५ निर्व०– ( समयज्ञः ).

( १ ) " ज्ञा, अवबोधने"धा०क्र्यादिः कौ०पृ०४७७
(२)"आतोनुपसर्गे कः"इति कः. आल्लोपः. ३।२।३।।कौ०पृ०५७०
( ३ ) " इण् , गतौ" संपूर्वः. धा०अदा०कौ०पृ०४४१
( ४ ) " एरच्" इत्यच्. ३।३।५६।।कौ०पृ०६५६
२० ( ५ ) "पुंसिसंज्ञायाम्०"इति,घो वा.३।३।११८।।कौ०पृ०६६२
गुणायादेशौ. ❀

समयं ज्ञात्वा तेभ्यो दीयते तैरादीयते च इति–

( हविः ).

(१)"हु,दानादानयोः"आदाने चप्रीणनेपि,धा०जुहो०कौ०पृ०४४९

२५ निरु०—३६०अग्न्यादीनां च समयमूर्ध्वाग्रज्वलनादिकम् ॥२६८॥
यो जानात्यधिकारं च ( समयज्ञः ) स कीर्तितः।

## ( ३६१ ) हविर्हरिः, ।

ॐ हविर्हरये नमः ।

भा०—तद्विघ्नमपहरतीति–( हरिः ).
( १ ) "सर्वधातुभ्य इन्" इति, हरतेरिन्. यथा, उणा०पा०४ ५
कौ०पृ०६३७
( २ ) " हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि
संस्पृष्टो दहत्येव हि पावकः" १ इति.
( हविर्हरिः ). इत्येकं नाम.
( १ )"इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णश्च मे हरिः श्रेष्ठ- १०
स्तस्माद्धरिरहं स्मृतः"इति. ❀ भा०शा० ३४३–२९ ।

निर्व०–( २ ) "अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः" उणा०
पा०२कौ०पृ० ६२४
इति, इसिः. गुणावादेशौ. आदिष्टलिङ्गोयम्. इत्यादि. ❀
तद्विघ्नं हरतीति–( हरिः ). १५
( १ ) " हृञ्, हरणे" धा०भ्वादिः कौ०पृ० ४२३
( २ )"सर्वधातुभ्य इन्" इति वर्तमाने, उणा०पा०४कौ०पृ०६३७
( ३ ) " अच इः" इत्यस्यापवादः, उणा०पा०४कौ०पृ० ६३८
( ४ ) " हृपिपिरुहिवृतिविदिछिदिकीर्तिभ्यश्च" उणा०पा० ४
कौ०पृ० ६३७
इति इन्. गुणः रपरः. ❀ २०
यद्वा क्रतुभागहरतया, हविः उपहृतं हरतीति–( हविर्हरिः ).

निरु०–३६१ समयं श्रुतिसिद्धं यो ज्ञात्वा तेभ्यः श्रियं मुदा॥२६९॥
दत्ते हुतं हविस्तेभ्य दीयते स हविस्स्मृतः ।
हरतीति हरिर्विघ्ना नम्रदानेषु नित्यशः ॥ २७० ॥ २५
( हविर्हरि ) रिति प्रोक्तो ह्यष्टार्णश्चैकनामनः

( ३६२ ) सर्वलक्षणलक्षण्यो,

ॐ सर्वलक्षणलक्षण्याय नमः ।

भा०—अथ, लक्ष्मीपतिमूर्तिः—साक्षाल्लक्ष्मीसततालिङ्गनसौभाग्यसूच-
५ केस्सर्वैर्लक्षणैर्लक्षणे ज्ञाने साधुः—( सर्वलक्षणलक्षण्यः ).
( १ ) " तत्र साधुः" इति, यत्. तानि लक्षणानि, यथा, ४।४।
९८॥ कौ०पृ० २८९
( २ ) " ध्यायेत्कमलगर्भाभं देवं[1] लक्ष्मीपतिन्ततः ।
कमलालयहेतीश विभूषितकरद्वयम्" तन्मनौ च,
१० ( ३ ) " पुण्डरीकाक्ष ! सकलसुखसौभाग्यवारिधे" इति. ❀

निर्व०-एकन्नाम,जुहोतिरिह दानमात्रकर्मा.अन्यत् सर्वं पूर्ववत्.रुत्वम्.
अथ, लक्ष्मीपतिमूर्तिः प्रकम्प्यते. साक्षाल्लक्ष्मीसततालिङ्गनसौभाग्य-
सूचकैः कमलगर्भाभत्वपुण्डरीकाक्षत्वादिभिः सर्वैर्लक्षणैः लक्षणे
ज्ञाने साधुरिति—( सर्वलक्षणलक्षण्यः ).
१५ ( १ ) " लक्ष, दर्शनाङ्कनयोः" चुरादिः णिच्. धा०चुरा०
कौ०पृ० ४७९
( २ ) " ल्युट् च" इति, भावे ल्युट्. ३।३।११५॥कौ०पृ०६६२
अनः. णिलोपः. णत्वम्.
( ३ ) " तत्र साधुः" इति यत्. ४।४।९८॥ कौ०पृ० २८९
२० ( ४ )"यस्येति च"इति लोपः. ण्यन्तः. ६।४।१४८॥कौ०पृ० ५६
पुनरपि स एव धातुः.
( ५ ) " करणाधिकरणयोश्च" इति करणे, ल्युट्. ३।३।११७॥
कौ०पृ० ६६२
अन्यत् समं. यदभावो विशेषः. यद्वा, तत एव धातोर्ण्यन्तात्,
२५ निरु०—३६२ ( सर्वलक्षणलक्षण्यो ) लक्ष्मीचरणचिह्नितः ॥२७१॥

१ ध्येयम् ।

## ( ३६३ ) लक्ष्मीवान्,

### ॐ लक्ष्मीवते नमः।

भा०— तथाच—
( लक्ष्मीवान् ). तथैव लक्ष्म्या नित्ययोगवान्? यथा, ५
( १ )"द्रव्यं देवीपरिणये लीलयैव समर्पयन्। प्रकाशयन्ननादित्य-
मात्मना प्रकृतेस्सह ॥ मत्करैरनुविद्धेयं प्रकृतिः प्राकृतैरहम्।
यतोहमाश्रितश्चास्या मूर्तिर्मय्येतदात्मिका" ॥ इति, प्रकृतिः
जगताम्माता श्रीः, ❀

निर्व०— (६) "धावृवस्यज्यतिभ्यो नः" इति वर्तमाने, उणा० १०
पा०३कौ०पृ०६२५
( ७ )"लक्षेरट् च" इति, नः. तस्याडागमश्च. उणा०पा० ३
कौ०पृ०६२५ णिलोपः. णत्वम्. व्युत्पादि सर्वशब्दः. ❀
तथाच, लक्ष्मीः नित्यमस्यास्ति, अस्मिन् वा, इति—
( लक्ष्मीवान् ). १५
( १ ) "लक्ष, दर्शनाङ्कनयोः" धा०चुरा०कौ०पृ०४७९
( २ ) "अवितृस्तृतन्त्रिभ्य ईः" उणा०पा० ३ कौ०पृ०६३२
इति वर्त्तमाने,
( ३ )"लक्षेर्मुट् च" इति, ईप्रत्ययः. उणा०पा० ३कौ०पृ०६३२
तस्य मुडागमश्च णिलोपः. एवं निष्पन्नाल्लक्ष्मीशब्दात् २०
नित्ययोगे मतुप्.
(४) "मादुपधायाश्चमतोर्वोऽयवादिभ्यः" ८।२।९॥कौ०पृ०३२५
इति मोपधान् मतोर्मस्य वः. अत्वन्तलक्षणो दीर्घः. ततो,
नुमादि. संयोगान्तलोपः. तस्यासिद्धत्वान्नलोपो न. ❀

निरु०—३६३ लक्ष्म्या च नित्ययुक्तत्वा (ल्लक्ष्मीवा)निति कथ्यते। २५

( ३६२ ) सर्वलक्षणलक्षण्यो,

ॐ सर्वलक्षणलक्षण्याय नमः ।

भा०—अथ, लक्ष्मीपतिमूर्तिः—साक्षाल्लक्ष्मीसततालिङ्गनसौभाग्यसूच-
५ केस्सर्वैर्लक्षणैर्लक्षणे ज्ञाने साधुः—( सर्वलक्षणलक्षण्यः ).
( १ ) " तत्र साधुः" इति, यत्. तानि लक्षणानि, यथा, ४।४।
९८॥ कौ०पृ० २८९
( २ ) " ध्यायेत्कमलगर्भाभं देवं[1] लक्ष्मीपतिन्ततः ।
कमलालयहेतीश विभूषितकरद्वयम्" तन्मनौ च,
१० ( ३ ) " पुण्डरीकाक्ष ! सकलसुखसौभाग्यवारिधे" इति. ❀

निर्व०-एकन्नाम,जुहोतिरिह दानमात्रकर्मा.अन्यत् सर्वं पूर्ववत्.रुत्वम्.
अथ, लक्ष्मीपतिमूर्तिः प्रक्रम्यते. साक्षाल्लक्ष्मीसततालिङ्गनसौभाग्य-
सूचकैः कमलगर्भाभत्वपुण्डरीकाक्षत्वादिभिः सर्वैर्लक्षणैः लक्षणे
ज्ञाने साधुरिति—( सर्वलक्षणलक्षण्यः ).
१५ ( १ ) " लक्ष, दर्शनाङ्कनयोः" चुरादिः णिच्. धा०चुरा०
कौ०पृ० ४७९
( २ ) " ल्युट् च" इति, भावे ल्युट्. ३।३।११५॥कौ०पृ०६६२
अनः. णिलोपः. णत्वम्.
( ३ ) " तत्र साधुः" इति यत्. ४।४।९८॥ कौ०पृ० २८९
२० ( ४ )"यस्येति च"इति लोपः. ण्यन्तः. ६।४।१४८॥कौ०पृ० ५६
पुनरपि स एव धातुः.
( ५ ) " करणाधिकरणयोश्च" इति करणे, ल्युट्. ३।३।११७॥
कौ०पृ० ६६२
अन्यत् समं. यदभावो विशेषः. यद्वा, तत एव धातोर्ण्यन्ताव,

२५ निरु०—३६२ ( सर्वलक्षणलक्षण्यो ) लक्ष्मीचरणचिह्नितः ॥२७१॥

[1] ध्येयम् ।

## ( ३६३ ) लक्ष्मीवान्,

### ॐ लक्ष्मीवते नमः।

भा०— तथाच—
( लक्ष्मीवान् ). तथैव लक्ष्म्या नित्ययोगवान्? यथा, ५
( १ ) "द्वयं देवीपरिणये लीलयैव समर्पयन्। प्रकाशयन्ननादित्य-मात्मना प्रकृतेस्सह ॥ मत्करैरनुविद्धेयं प्रकृतिः प्राकृतैरहम्। यतोहमाश्रितश्चास्या मूर्तिर्मय्येतदात्मिका" ॥ इति, प्रकृतिः जगताम्माता श्रीः, ❀

निर्व०— (६) "धावृवस्यज्यतिभ्यो नः" इति वर्तमाने, उणा० १० पा०३कौ०पृ०६२५
( ७ ) "लक्षेरट् च" इति, नः. तस्याडागमश्च. उणा०पा० ३ कौ०पृ०६२५ णिलोपः. णत्वम्. व्युत्पादि सर्वशब्दः. ❀
तथाच, लक्ष्मीः नित्यमस्यास्ति; अस्मिन् वा, इति—
( लक्ष्मीवान् ). १५
( १ ) "लक्ष, दर्शनाङ्कनयोः" धा०चुरा०कौ०पृ०४७९
( २ ) "अवितृस्तृतन्त्रिभ्य ईः" उणा०पा०३ कौ०पृ०६३२ इति वर्तमाने,
( ३ ) "लक्षेर्मुट् च" इति, ईप्रत्ययः. उणा०पा०३कौ०पृ०६३२ तस्य मुडागमश्च णिलोपः. एवं निष्पन्नाल्लक्ष्मीशब्दात् २० नित्ययोगे मतुप्.
(४) "मादुपधायाश्चमतोर्वोऽयवादिभ्यः" ८।२।९॥कौ०पृ०३२५ इति सोपधान् मतोर्मस्य वः. अत्वन्तलक्षणो दीर्घः. ततो, नुमादि. संयोगान्तलोपः. तस्यासिद्धत्वान्नलोपो न. ❀

निरु०—३६३ लक्ष्या च नित्ययुक्तत्वात् (लक्ष्मीवा)निति कथ्यते। २५

( ३६४ ) समितिंजयः, ॥ श्लो० ॥ ४० ॥ ( ३६५ ) विक्षरो,

ॐ समितिंजयाय नमः । ॐ विक्षराय नमः ।

५ भा०— तथा जगत्पिता पितृवन्निर्वृतिकरोयं जीवानां स्वदास्यविवाद-
क्लेशञ्जयतीति—
( समितिंजयः ).
( १ ) " संज्ञायां भृतृवृजि० " इत्यादिना खच्. ३।२।४६॥कौ०
पृ०५७८
१० ( २ ) " अखिलदुःखजयः " इति मन्त्रवर्णात्.
यथोक्तभक्तप्रणयाक्षरणात्—( विक्षरः ). ❀

निर्व०— दुःखशमनाश्रितया समितिं युद्धं जीवानां स्वदास्यविवा-
दक्लेशं, जयति अभिभवति, इति—
( समितिंजयः ).
१५ ( १ ) " जि, अभिभवे" धा०भ्वादिः कौ०पृ०४२६
(२)"संज्ञायां भृतृवृजिधारिसहितपिदमः"३।२।४६॥कौ०पृ०५७८
इति खच्. गुणायादेशौ.
( ३ ) " इण्, गतौ" संपूर्वः. धा०अदा० कौ०पृ०४४१
( ४ ) "स्त्रियां क्तिन्" इति, क्तिन्. अगुणः. अनिट्. ३।३।९४॥
२० कौ०पृ०६५८
(५) " अरुर्द्विषदजन्तस्य मुम्" इति, ६।३।६७॥कौ०पृ०५७५
अजन्तलक्षणो मुम्. अनुस्वारपरसवर्णौ. ❀
यथोक्तप्रणयाक्षरणात्,विगतःक्षरःप्रणयक्षरणम् अस्येति—(विक्षरः).

निरु०—३६४ चेतनानां स्वदासत्वविवादं जयतीति यः ॥ २७२ ॥
२५ ( समितिंजय ) आख्यातः सर्वदुःखशमाश्रयः ।
३६५ उक्तस्नेहस्याक्षरणाद् ( विक्षरः ) परिकीर्तितः ॥ २७३ ॥

१ शमनाश्रयः ।

( ३६६ ) रोहितो, ( ३६७ ) मार्गो,

ॐ रोहिताय नमः । ॐ मार्गाय नमः ।

५

भा०—कमलगर्भाभत्वात्—
( रोहितः ). ❀
उपासकैमार्ग्यत इति—
( मार्गः ).
( १ ) " वाञ्छितसिद्धिप्रदः " इति, मन्त्रवर्णात्. ❀

निर्व०— ( १ ) " क्षर,संचलने" धा०भ्वादिः कौ०पृ०४११ १०
( २ ) " घञर्थे कविधानम्" इति, भावे कः.
विपूर्वो बहुव्रीहिः. ❀
कमलगर्भाभतया रोहितो रक्त इति—
( रोहितः ).
(१)"रुह,बीजजन्मनि प्रादुर्भावे च"धा०भ्वादिः कौ०पृ०४२० १५
( २ )"हृश्याभ्यामितन्" इति वर्तमाने,उणा०पा० ३कौ०पृ०६२९
( ३ ) " रुहेरश्च लो वा"इति, उणा०पा०२ कौ०पृ०६२१
इतन्. पाक्षिको रस्य लश्च. नचात्रैवप्रापिको लः करिष्यते. गुणः. ❀
वाञ्छितसिद्धिप्रदतया उपासकैर्मृग्यते अन्विष्यते इति—
२०
( मार्गः ).
( १ ) " मार्ग,अन्वेषणे"आधृषीयः.धा०चुरा० कौ०पृ०४८८
ततः,
( २ ) "आधृषाद्वा" इति वा णिचि,
( ३ ) "अकर्तरि च कारके संज्ञायाम्"३।३।१९॥कौ०पृ०६४७
२५
इति, कर्मणि घञ्. णिच्पक्षे तु,

निरु०—३६६ पद्मस्य गर्भाभतया ( रोहितः ) परिकीर्तितः ।
३६७ उपासकैर्मार्ग्यमाणो ( मार्गो )वाञ्छितसिद्धये ॥ २७१ ॥

## ( ३६८ ) हेतुर्, ( ३६९ ) दामोदरः,

### ॐ हेतवे नमः । ॐ दामोदराय नमः ।

५ भा०—तद्धेतुः—
( हेतुः ).
( १ ) " हि,गतौ" धा०स्वादिः कौ०पृ०४६२
( २ ) "कमिमनि०"इत्यादिना तुः. ❋उणा०पा१कौ०पृ०६१४
उदरे दामान्यस्येति—
१० ( दामोदरः ).

---

निर्व०—(४)"एरच्"इत्यच्.उक्तेर्थे तल्लोपश्च.३।३।५६॥कौ०पृ६५३
अत्र च,घञ् न. तत्प्रकारश्च वक्ष्यते. ❋
स च हेतुः तत्कारणमिति—
( हेतुः ).
१५ ( १ ) " हि,गतौ— वृद्धौ च"धा०स्वादिः कौ०पृ०४६२
( २ ) " अर्तेश्च तुः"इति वर्तमाने,उणा०पा० १कौ०पृ०६१३
(३)"कमि-मनि-जनि-गा-भा-या-हि-भ्यश्च"इति,तुः.गुणः.अनिट्. ❋
उणा०पा० १कौ०पृ०६१४
सकललोकाधारतया, आर्षवचनानुसारात्. दामानि,लोकाः उदरे अ-
२० स्य, इति वा,तदनुसाराद्देवसुखशंसित्वदमगुणयोगात् वा,इत्थं लक्ष्मीस्पृ-
हणीयचातुरीकत्वेपि,सश्रितवात्सल्यात्, यशोदादामनि गलितजलतया,
दामानि,रज्जवः, उदरे अस्येति वा— ( दामोदरः ).

---

निरु०—३६८ वाञ्छितार्थनिदानत्वाद् ( हेतु ) रित्यभिधीयते ।
३६९ दामानि लोकनामानि ह्युदरे यस्य सन्ति सः ॥ २७५ ॥
२५ ( दामोदर ) इति ख्यातो यशोदादामबन्धनात् ।
देवानां सुखशंसित्वाद्दामाद् ( दामोदरो )ऽपि वा ॥२७७॥

( ३७० ) सहः, ।

ॐ सहाय नमः ।

भा०—( १ ) " दामानि लोकनामानि भान्ति यस्योदरान्तरे। तेन दामोदरो देवः" इति.
(२)"देवानां सुखशंसित्वाद्दामाद्दामोदरं विदुः"भा०उ०७१-९। इति वा.
( ३ ) " ततस्स दामोदरतां प्रययौ दामबन्धनात्" वि०पु०५—६—२० । इति वा. एवं लक्ष्या अपि स्पृहणीयचातुर्योपि सन् यशोदादामनि गलितजलः संश्रितवात्सल्याद्बभूवेत्यर्थः. ❀ एवं तद्बन्धनतर्जनभर्त्सनादिकं सहत इति—
( सहः ). ❀

निर्व०—( १ ) " दॄ, विदारणे" धा०क्र्यादिः कौ०पृ० ४७६ उत्पूर्वः.
( २ ) " उदिदृणातेरजलौ पूर्वपदान्त्यलोपश्च"उणा०पा०५कौ० पृ०६४३
इत्यच्. अल् वा. पूर्वपदान्त्यस्य उदो दकारस्य लोपश्च. गुणः. रपरः.
( ३ ) " डुदाञ्, दाने" धा०जुहो०कौ०पृ० ४५१
( ४ )"सर्वधातुभ्यो मनिन्" इति मनिन्. उणा०पा० ४ कौ० पृ० ६३९
अनिट्. बहुव्रीहिः. अन्यच्च प्रागेव प्रव्यक्तं. नलोपः.संहितायाम्,
( ५ ) " आद्गुणः" ❀ ६।१।८७ ॥ कौ०पृ० ११
एवं तद्बन्धनतर्जनादिकं सहत इति—
( सहः ).

निरु०—३७८ यशोदाकृतबन्धादिसहनात् ( सह ) ईरितः ।

(३७१) महीधरो, (३७२) महाभागो,

ॐ महीधराय नमः। ॐ महाभागाय नमः।

५ भा०—स एव भूभारधरणेन—( महीधरः ). ❋
वह्वीनीलापोडशसहस्रदिव्यकन्यकारुक्मिणीसत्यभामाजाम्बवतीप्रभृतीनां स्वयंवरसौभाग्यवत्त्वात्—( महाभागः. ) ❋

निर्व०—( १ ) " मह, मर्षणे" पस्मः. पचाद्यच्. ❋ धा०भ्वादिः कौ०पृ० ४११

१० स एव, भूभारहरणेन मह्या धरः इति—
( महीधरः ).
( १ ) "धृञ्, धारणे" पचाद्यच्. धा०भ्वादिः कौ०पृ०४२३
गुणः. रपरः. महीशब्दो हि,
( २ ) " मह, पूजायाम्" इत्यतः धा०भ्वादिः कौ०पृ० ४११

१५ पचाद्यचि स्त्रियाम्, गौरादिलक्षणङीपि,
( ३ ) " यस्य० " इति, लोपे च, व्युत्पादितः । ६।४।१४८॥
कौ०पृ० ५६
षष्ठीसमासः. ❋
स एव महान्, भागः रुक्मिणीसत्यभामादीनां स्वयंवरसौभाग्यम्,

२० अस्येति—( महाभागः ).
(१)"भज, सेवायाम्"भावे घञ्. वृद्धिः.धा०भ्वादिः कौ०पृ०४३१
(२) "चजोः० " इति, कुत्वम्. गः. ७।३।५२॥ कौ०पृ०५६०
व्युत्पादितान्महत आत्वमित्यादि. ❋

निरु०—३७१ भूभारनाशनेन ज्याधारणाद्(धरणीधरः)॥२७७॥
२५ ३७२ रुक्मिण्यादिबहुस्त्रीभि ( महाभागः ) स्वयं वृतः।

## ( ३७३ ) वेगवान्, ( ३७४ ) अमिताशनः, ॥

ॐ वेगवते नमः। ॐ अमिताशनाय नमः ।

भा०– मनुष्यधर्मलीले बाल्येऽपि दुर्वारपरमैश्वर्यप्रसरत्वात्– ५
( वेगवान् ). अतिशायने मतुप् . ❀ कथम्?–
( अमिताशनः ).अपरिमितं गोपैरिन्द्राय परिकल्पितमशनमस्येति,
तस्मिन् विस्मिता हि गोपास्तमतिशशङ्किरे? यथा,
( १ )"देवो वा दानवो वा त्वम्?" इत्यादि.वि०पु०५–१३–१२।

निर्व०–मनुष्यधर्मलीले बाल्येपि, वेगः दुर्वारपरमैश्वर्यप्रसरोऽति- १०
शयेनास्येति–
( वेगवान् ).
( १ ) " ओविजी,भयसंचलनयोः"धा०तुदा०कौ०पृ०४६४
भावे घञि,लघूपधगुणः.
( २ )"चजोः०"इति,कुत्वम्. ग:. ७।३।५२॥कौ०पृ०५६० १५
( ३ ) "तदस्यास्ति०"इति,५।२।९४॥कौ०पृ०३२५
अतिशायने मतुप्.
( ४ )"मादुपधायाः०"इति,अवर्णान्,८।२।९॥कौ०पृ०३२५
मनोर्मस्य वः. अत्वन्तलक्षणो दीर्घः, नुमित्याद्युमित्यादि. ❀
अमितं अपरिमितम्, अशनं गोपैरिन्द्राय परिकल्पितं भोजनम्, २०
अस्येति– ( अमिताशनः ).

निरु०–३७३दुर्वारपरमैश्वर्यप्रसरत्वाद्विशेषतः ॥ २७८ ॥
मनुष्यधर्मे बाल्येऽपि ( वेगवा ) निति शब्द्यते ।
३७४ इन्द्राय कल्पितं गोपैरमितं चाशनं स्वयम् ॥ २७९ ॥
भुक्तवान्यच्च निश्शेषं प्रोच्यते सो ( ऽमिताशनः ) । २५

श्लो०॥४१॥ {३७५ / ७९६} उद्भवः,( ३७६) क्षोभणो,

ॐ उद्भवाय नमः। ॐ क्षोभणाय नमः।

५ भा०—( १ )"दामोदरं बन्धहरम्"इति वि०पु०१—९—१४४।
प्रकारेण स्वबन्धानुसन्धायिनां भवबन्धनिर्धूननेन उद्गतो
भवोऽस्मादिति—( उद्भवः ). ❋
अन्यान् बन्धार्हान्, बन्धनीञ्च प्रकृतिं क्षोभयतीति—(क्षोभणः).❋

निर्व०—( १ )" अश,भोजने" धा०क्र्यादिः कौ०पृ०४७८
१०( २ ) " ल्युट् च" इति,३।३।११५॥कौ०पृ०६६२
नपुंसके भावे ल्युट्. अनः.
( ३ ) "माङ्,माने"कर्मणि क्तः.अनिट्.धा०जुहो० कौ०पृ०४५०
(४)"द्यतिस्यति०"इति,इत्त्वम्.कित्त्वान्न गुणः.७।४।४०॥कौ०पृ०
५९४ नञ्समासः. नञो नलोपः. सांहितिकस्सवर्णदीर्घः. ❋
१५ स्वदामबन्धानुसंधायिनां भवबन्धनिर्धूननेन उद्गतो भवोस्मादिति—
( उद्भवः ).
(१)"भू, सत्तायाम्" भावे, धा०भ्वादिः कौ०पृ०३६८
( २ )"अकर्तरिच कारके०"इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७
( ३ ) " ऋदोरप्" इत्यप्.गुणावादेशौ,३।३।५७॥कौ०पृ०६५३
२० उच्छब्देन बहुव्रीहिः. ❋
बन्धनार्हानन्यान्, बन्धनीञ्च प्रकृतिं क्षोभयति चालयतीति—
( क्षोभणः ).

निरु०—३७५ समुद्गतो भवो यस्मा (दुद्भवः)परिकीर्तितः॥२८०॥
३७६ प्रकृतेर्बन्धनार्हाणां क्षोभणात् ( क्षोभणः ) स्मृतः।

२५ १ गतम्।

## (३७७) देवः, (३७८) श्रीगर्भः,

### ॐ देवाय नमः। ॐ श्रीगर्भाय नमः।

भा०—मायापाशेन व्याघ्रवराहादिवत् जीवान् बध्वा, दीव्यति ५
क्रीडतीति—( देवः ).❀
एवंभायभोगक्रीडासाहित्येन वर्धनीयाऽस्य श्रीरिति—( श्रीगर्भः ).

निर्व०—(१)"क्षुभ, संचलने"णिच्.धा०क्र्यादिः कौ०पृ०४७७
गुणः, नन्द्यादिल्युः; ल्युट् वा बाहुलकादित्यौंदि अनः. लघूपधगुणः.
णिलोपः. १०
(२) "अट्कुप्वाङ्०" संहितायाम्, ८।४।२॥ कौ०पृ० ३२
(३) "शर्परे विसर्जनीयः" इति विसर्गस्यैव८।३।३५॥कौ०पृ०२४
विसर्गः कार्यान्तरनिवृत्त्यर्थः. अतो नेह जिह्वामूलीयः. एवं तत्र,
तत्र, (क्षमः क्षाम इत्यादौ) यथायोगमवसेयम्. ❀
व्याघ्रवराहादिवज्जीवान् मायापाशेन बध्वा, दीव्यति क्रीडतीति— १५
(देवः).
(१)"दिवु, क्रीडादौ"पचाद्यच्. धा०दिवा० कौ०पृ०४५२
(२)"पुगन्त०" इति, गुणः.❀७।३।८६॥ कौ०पृ० ३७०
एवंभायभोगक्रीडासाहित्येन श्रीः गर्भः तद्वदेव वर्धनीयास्येति—
(श्रीगर्भः). २०

निरु०—३७७ व्याघ्रादिवज्जीवततेर्मायापाशेन बन्धनम्॥२८१॥
कृत्वा नित्यं क्रीडति यः स (देवः) परिकीर्तितः।
३७८ श्रीः क्रीडाभोगसाहित्याद्वर्धनीया हरेरिति ॥ २८२ ॥
(श्रीगर्भः)—

( ३७९ ) परमेश्वरः, ।

ॐ परमेश्वराय नमः ।

भा०—( १ ) " विष्णोरेषाऽनपायिनी " इति, ❀ वि० पु० १–
५ ९१४–४ ।
एवं लक्ष्मीस्वयंग्रहणसप्रयोजनपरमैश्वर्यः—
( परमेश्वरः ). यथा,
( १ )"अतीव रामश्शुशुभेऽभिरामया विभुः श्रिया विष्णुरिवामरे-
श्वरः" इति. ❀ रा०बा० ७७–३३ ।
१० स्वप्राप्तिसाधकतमत्वात्—

निर्व०—( १ ) " गॄ, निगरणे" धा० तुदा० कौ०पृ० ४६८
( २ )"अर्तिगॄभ्यां भन्" इति, भन्. उणा०पा० ३ कौ०पृ०६३१
गुणः. रपरः.
( ३ ) " नेट्०"इति, नेट्. ७।२।८॥ कौ०पृ० ५८१
१५ ( ४ ) " श्रिञ्, सेवायाम्" धा०भ्वादिः कौ०पृ० ४२२
(५)"क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घो संप्रसारणं च"इति,
क्विप्. दीर्घश्च. ❀ उणा०पा० २ कौ०पृ० ६२१
एवं लक्ष्मीस्वयंग्रहणसप्रयोजनपरमैश्वर्यतया, परमश्चासावीश्वरश्च इति–
( परमेश्वरः ).
२० ( १ ) " ईश, ऐश्वर्ये" धा० अदा० कौ०पृ० ४३८
(२ )"स्थेशभास०" इत्यादिना वरच्.३।२।१७५॥कौ०पृ०६०६
इत्यादि परमशब्दः पृषोदरादिर्व्युत्पादितः प्रागेव. ❀
स्वस्य स्वप्राप्तिसाधकतमत्वाद, क्रियते प्राप्तुः स्वप्राप्तिरनेनेति–

निरु०—३७९ पारमैश्वर्ययुक्तत्वाद ( परमेश्वरः ) ।

१ सहायिनी । २ विकामया ।

( ३८० ) करणं, ( ३८१ ) कारणं,

ॐ करणाय नमः। ॐ कारणाय नमः।

भा०— ( करणं )— ज्ञानकरणानां श्रवणनयनादीनां, क्रियोप- ५
करणानां करचरणादीनाञ्च एतच्छक्तिशीकरतः करणत्वम्; यथा,
( १ ) " चक्षुश्च द्रष्टव्यञ्च नारायणः, श्रोत्रञ्च श्रोतव्यं च नाराय-
णः " ॥३३॥ इत्यादि. ❀महो० ।
तैस्तैस्तद्वतस्तत्तत्कारयतीति—
( कारणं ) —दैवतम्. ❀ १०

निर्व०—( करणम् ),
( १ ) " डु-कृञ्, करणे " धा० तना०कौ०पृ०४७३
( २ ) "करणाधिकरणयोश्च" इति, ३।३।११७॥कौ०पृ०६६२
करणे ल्युट्. अनः. गुणः रपरः. णत्वम्.
(३) "लिङ्गमशिष्यम्" इत्यादि. ज्ञानकर्मोपकरणा-॥महाभाष्ये॥ १५
नां श्रोत्रनेत्रकरचरणादीनाम्, एतच्छक्तिशीकरतः करणत्वम्. ❀
दैवततया, तैस्तैरतद्वतस्तत्तत्कारयतीति वा, तैस्तैस्तत्तत् कार्यतेऽनेने-
ति वा. ( कारणम् ). धातुः पूर्ववत्. णिच्. वृद्धिः. रपरत्वम्.
पूर्वत्र नन्द्यादिल्युः;
(१) " कृत्यल्युटः० " इति, बाहुलकात् ३।३।११३॥ कौ० २०
पृ०६६२ कर्तरि ल्युट्;
( २ ) " बहुलमन्यत्रापि " इति, युज्वा. उणा०पा०२कौ०
पृ०६२४
( ३ ) "करणाधिकरणयोश्च" इति, ३।३।११७॥कौ०पृ०६६२

निरु०—३८० स्वमातो साधकतमं जीवानां (करणं) विदुः॥२८३॥२५
३८१ जीवानां चक्षुरादीन् यो हेतून् कारयतीति सः ।
प्रोच्यते ( कारणं )—

{३८२ / ११७} कर्ता, (३८३) विकर्ता,

ॐ कर्त्रे नमः। ॐ विकर्त्रे नमः।

५ भा०— तत्र स्वतन्त्रः—
(कर्ता). अधिकारी फली जीवोपि हि, स्वयं स्वस्य यथा, सुखदुःखाभिमानी? तथा, तदतिशयेन वा तदवस्थाभिमानी हि भगवान्? यथा, (१) " व्यसनेषु मनुष्याणां भृशं भवति दुःखितः। उत्सवेषु च सर्वेषु पितेव परितुष्यति " रा० अ० २—४०—२।
१० (२) " बहुस्यां प्रजायेय " इति च. तै०२—६—२।
पृथगभिमानित्वे हि, न बहुस्यामिति स्यात्? ❀
अत एव, तत्फलभोगेन हर्षशोकादिभिर्विकुर्वाणः—
(विकर्ता)—स्वार्थहर्षशोकाद्यभावेपि परार्थतत्प्रसक्तिरदोषः;

निर्व०— करणे ल्युट्. अनः. णिलोपः. णत्वम्. लिङ्गमशिष्यमि-
१५ त्यादि. ❀
यथा जीवः स्वसुखदुःखाभिमानी तथा तदतिशयेन वा, पृथगभिमानित्वाभावेन, परदुःखदुःखित्वादिगुणकस्य भगवतस्तद्विषये तदवस्थाभिमानितया, तत्र स्वतन्त्रः तत्करोतीति,—
(कर्ता). प्राग्वद्धातुः—तृच्. गुणो रपरः. अनिट्. अनङादि. ❀
२० स्वार्थहर्षशोकाद्यभावेपि, परार्थतत्फलभोगेन हर्षशोकादिभिर्विकुर्वाणतया, विकरोतीति—
(विकर्ता). प्राग्वदेव धातुः; विपूर्वः. अन्यच्च सर्वम्. ❀

निरु०— ३८२ (कर्ता) स्वतन्त्रः परिकीर्तितः ॥ २८४ ॥
३८३ विकुर्वाणो (विकर्ता) यो हर्षशोकादिभिः स्मृतः।

{३८४ / ५४८} गहनो,

ॐ गहनाय नमः।

भा०—अन्यथा परदुःखदुःखित्वाद्यो गुणाः कथमस्य स्युः. ❀
एवं सर्वेषां ज्ञानायतनभोगतदुपकरणस्वरूपेषु तदभिन्नतन्त्राभिमाना- ५
त्मके महागुणे —
( गहनः )—अतिभूमिः,
( १ ) " सहैव सन्तं न विजानन्ति देवाः "
तत्रान्तर्यामिब्राह्मणम्,
( २ ) " यः पृथिव्यां तिष्ठन् " अन्तः—ब्र०५—७—३। १०
इत्यादि. सर्वं सुबालोपनिषदि,
( ३ ) " चक्षुश्च द्रष्टव्यञ्च नारायणः " इत्यादि. सु०।
( ४ )"अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्।। विविधाश्च
पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् " इति.❀भा०गी०१८—१४।
१५
एवं गूहति रक्षतीति—

निर्व०—एवं सर्वेषां ज्ञानायतनभोगभोगोपकरणेषु तदभिमानात्मके
महागुणे अतिभूमितया, गहनः दुर्विज्ञान इति.—
( गहनः ).
( १ ) " गाहू, विलोडने" धा०भा० को०पृ०४०७
( २ ) " बहुलमन्यत्रापि " इति, युच्. उणा०पा०२ को० २०
पृ०६२४ बाहुलकाद्ध्रस्वत्वञ्च. योरनः. ❀
एवं गूहति रक्षतीति.—

निरु०—३८४ बुद्ध्यायतनभोगोपकरणादिषु देहिनाम् ॥ २८५ ॥
तदभिन्नाभिमानात्मा महागुणगणेषु च।
( गहनो ) ह्यतिभूमित्वाद्—

{३८२ / ११७} कर्ता, ( ३८३ ) विकर्ता,

ॐ कर्त्रे नमः । ॐ विकर्त्रे नमः ।

५ भा०— तत्र स्वतन्त्रः—
(कर्ता). अधिकारी फली जीवोपि हि, स्वयं स्वस्य यथा, सुखदुःखाभिमानी ? तथा, तदतिशयेन वा तदवस्थाभिमानी हि भगवान् ? यथा,
( १ ) " व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । उत्सवेषु च सर्वेषु पितेव परितुष्यति " रा० अ० २—४०—२।
१० ( २ ) " बहुस्यां प्रजायेय " इति च. तै० २—६—२।
पृथगभिमानित्वे हि, न बहुस्यामिति स्यात् ? ❀
अत एव, तत्फलभोगेन हर्षशोकादिभिर्विकुर्वाणः—
( विकर्ता )—स्वार्थहर्षशोकाद्यभावेपि परार्थतत्प्रसक्तिरदोषः,

निर्व०— करणे ल्युट्. अनः. णिलोपः. णत्वम्. लिङ्गमशिष्यमि-
१५ त्यादि. ❀
यथा जीवः स्वसुखदुःखाभिमानी तथा तदतिशयेन वा, पृथगभिमानित्वाभावेन, परदुःखदुःखित्वादिगुणकस्य भगवतस्तद्विषये तदवस्थाभिमानितया, तत्र स्वतन्त्रः तत्करोतीति,—
( कर्ता ). प्राग्वद्धातुः—तृच्. गुणो रपरः. अनिट्. अनङादि. ❀
२० स्वार्थहर्षशोकाद्यभावेपि, परार्थतत्फलभोगेन हर्षशोकादिभिर्विकुर्वाणतया, विकरोतीति—
( विकर्ता ). प्राग्वदेव धातुः, विपूर्वः. अन्यच्च सर्वम्. ❀

निरु०— ३८२ ( कर्ता ) स्वतन्त्रः परिकीर्तितः ॥ २८४ ॥
३८३ विकुर्वाणो ( विकर्ता ) यो हर्षशोकादिभिः स्मृतः ।

{३८४ / ५४८} गहनो,

ॐ गहनाय नमः ।

भा०—अन्यथा परदुःखदुःखित्वादयो गुणाः कथमस्य स्युः. ❀ एवं सर्वेषां ज्ञानायतनभोगतदुपकरणस्वरूपेषु तदभिन्नतन्त्राभिमाना- ५ त्मके महागुणे —

( गहनः )—अतिभूमिः,

( १ ) " सहैव सन्तं न विजानन्ति देवाः "

तत्रान्तर्यामिब्राह्मणम्,

( २ ) " यः पृथिव्यां तिष्ठन् " अन्तः—ब्र०५—७—३। १०

इत्यादि. सर्वं सुबालोपनिषदि,

( ३ ) " चक्षुश्च द्रष्टव्यञ्च नारायणः " इत्यादि. सु० ।

( ४ )"अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् ।। विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् " इति.❀भा०गी०१८—१४।

एवं गूहति रक्षतीति— १५

निर्व०—एवं सर्वेषां ज्ञानायतनभोगभोगोपकरणेषु तदभिमानात्मके महागुणे अतिभूमितया, गहनः दुर्विज्ञान इति.—

( गहनः ).

( १ ) " गाहू, विलोडने" धा०भ्वा० कौ०पृ०४०७

( २ ) " बहुलमन्यत्रापि " इति, युच्. उणा०पा०२ कौ० २० पृ०६२४ बाहुलकाध्द्रस्वत्वञ्च. योरनः. ❀

एवं गूहति रक्षतीति.—

निरु०—३८४ बुद्ध्यायतनभोगोपकरणादिषु देहिनाम् ॥ २८५ ॥

तदभिन्नाभिमानात्मा महागुणगणेषु च ।

( गहनो ) ह्यतिभूमित्वाद्—

(३८५)गुहः, ॥ श्लो० ॥४२॥ (३८६) व्यवसायो,

ॐ गुहाय नमः । ॐ व्यवसायाय नमः ।

५ भा०.—( गुहः ).अथ, ध्रुवमूर्तिः. ❀
अतिशयेन सीयते बध्यतेऽस्मिन् ज्योतिश्चक्रमिति—
( व्यवसायः ).
अधिकरणे घञ्. नक्षत्राधारव्योमशरीरत्वात्; अतो हि.
( १ ) " गगनमूर्तये " इति तन्मन्त्रवर्णः.
१० ( २ ) " भवचक्रमूर्त दैवम् "
इति, तद्ध्यानम्. ❀

निर्व०—( गुहः ).
( १ ) " गुहू, संवरणे " धा०भ्वादिः कौ०पृ०४२२
( २ ) " गुदादिभ्यो णल्कौ " इति,कः;
१५ इगुपधलक्षणो वा—भगुणः. ❀
अथ, ध्रुवमूर्तिरुपक्रम्यते मन्त्रवर्णानुरोधेन नक्षत्राधारगगनमूर्तितया,
विशेषेण अवसीयते बध्यतेऽस्मिन् ज्योतिश्चक्रम्, इति—
( व्यवसायः ).
( १ ) " षिञ्, बन्धने " व्यवपूर्वः षस्सः.धा०स्वा०कौ०पृ०४६१
२० ( २ )"अकर्तरिच कारके० " इत्यधिकरणे घञ्, वृद्ध्यायादेशौ.
३।३।१९॥कौ०पृ० ६४७
( ३ ) "इकोयण्०" इति, वेरिकारस्य यण्. यकारः. ❀ ६।१।
७७॥कौ०पृ०८

निरु०— ३८५ रक्षतीति ( गुहः ) स्मृतः ॥ २८६ ॥
२५ ३८६ ज्योतिश्चक्रं ध्रुवे नित्यं सीयते बध्यते यतः ।
( व्यवसाय ) स्ततो ज्ञेयो भगणाधारमूर्तिमान् ॥ २८७ ॥

१ भव । २ विचक्र ।

## ( ३८७ ) व्यवस्थानः, (३८८) संस्थानः, (३८९) स्थानदो,

## ॐ व्यवस्थानाय नमः। ॐ संस्थानाय नमः। ॐ स्थानदाय नमः।

भा०—तन्मूलः कालः कलामुहूर्ताद्यात्मा, तत्रैव व्यवतिष्ठत इति— ५
( व्यवस्थानः ). ❀
सर्वमेतस्मिन् सन्तिष्ठते समाप्यत इति—( संस्थानः ).स एव,
( १ ) " परमपदप्राप्तिहेतवे " ❀
इति मन्त्रवर्णात्—
( स्थानदः ). ❀ १०

निर्व०—तन्मूलः कलामुहूर्ताद्यात्मकः कालोऽपि व्यवतिष्ठतेऽस्मि-न्निति.— ( व्यवस्थानः ).
(१)"ष्ठा,गतिनिवृत्तौ"व्यवपूर्वः. परस्मै.धा०भ्वादिः कौ०पृ०४२४
( २ ) " स्तोःश्चुना श्चुः " ८।४।४०॥कौ०पृ०१८
( ३ ) " करणाधिकरणयोश्च " इत्यधिकरणे ३।३।११७॥ १५
कौ०पृ०६६२
ल्युट्.अनः.दीर्घः. वेरिकारस्य पूर्ववद्यण्. ❀
सर्वमेतत् सन्तिष्ठते समाप्यतेऽस्मिन्निति.—
( संस्थानः ). संपूर्वो हि तिष्ठतिस्समाप्तिवचनः १ पूर्ववद्धातुः;
संपूर्वः. अन्यदपि तद्वत्. ❀ २०
स एव, मन्त्रवर्णात् परमपदप्राप्तिहेतुतया,
स्थानं परं पदं ददातीति.— ( स्थानदः ).

निरु०—३८७ कलामुहूर्तादिमयो ध्रुवे कालोऽवतिष्ठते ।
यस्मात्तस्माद् ( व्यवस्थानो ) लष्टार्णः स्थानदो मनुः ॥२८८॥
३८८ ध्रुवे समाप्यत इति ( संस्थान ) स्सर्वमुच्यते । २५
३८९ स एव परमाकाशप्राप्तौ हेतुत्वतस्सदा ॥२८९॥
प्रोच्यते ( स्थानद ) इति सप्तार्णो मनुनायकः ।

( ३९० ) ध्रुवः, ।

ॐ ध्रुवाय नमः ।

भा०—स खलु तुङ्गपदप्रदानेनार्वाचीनं ध्रुवमपि ध्रुवीचकार; अतो-
५ ( ध्रुवः )-अस्य सर्वव्यापकत्वं तत्त्वम्. ❀
अथ, मृतसंजीवनं रामचरितम्—सर्वैश्वर्यादपि पराऽस्य कल्याणगुणसमृद्धिः इति—

निर्व०— ( १ ) " डु-दाञ्, दाने" धा०जुहो०कौ०पृ०४५१
(२)"आतोऽनुपसर्गे कः"इति,कः. आल्लोपः. ३।२।३॥कौ०पृ०५७०
१० ( ३ ) " ष्ठा,गतिनिवृत्तौ"परस्म ईत्यादि.धा०भ्वादिः कौ०पृ० ४२४
अधिकरणे ल्युट्. अनः. ❀
स एवार्वाचीनमपि ध्रुवं तुङ्गपदप्रदानेन, ध्रुवति सर्वव्यवस्थापकतया स्थिरयतीति—
( ध्रुवः ). अन्तर्भावितण्यर्थोऽत्र ध्रुवतिः.
१५ ( १ ) " ध्रु, गतिस्थैर्ययोः" धा०तुदा०कुटादिः कौ०पृ०४६७
ध्रुवेति पाठान्तरम् आद्योऽनिट्- अपरस्सेट्.
( २ ) " तुदादिभ्यो णल्कौ" इति,कः१ बाहुलकाद्वा,
सेट इगुपधलक्षणो वा. किल्वान्न गुणः. आद्यस्य.
( ३ ) " अचिश्नुधातु०" इत्युवङ् ६।४।७७॥ कौ०पृ०४५
२० अपरस्य न यत्नः. यद्वा, उभाभ्यामपि पचाद्यच्. तस्य
( ४ ) " गाङ्कुटादिभ्योऽञ्णिन्ङित्" १।२।१॥कौ०पृ०४४२
इति कुटादेः पराञ्णित्त्वेन ङित्वान्न गुणः. अन्यत् पूर्ववत्. ❀

निरु०—३९०अर्वाचीनं ध्रुवमपि तुङ्गस्थानप्रदानतः ॥ २९० ॥
ध्रुवीचकार यस्माद्धि ( ध्रुव ) स्तस्मात्प्रकीर्तितः ।

१ व्यवस्थापकत्वम् ।

( ३९१ ) परर्द्धिः,

ॐ परर्द्धये नमः ।

भा०–( परर्द्धिः ). परावस्थस्यापि हि, रामस्यावरसोमादिदेवगुणै-
कदेशनिदर्शनं क्रियते. यथा, ५
(१)"विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः"रा०बा० १–१८।
इत्यादौ. परत्वञ्चात्रैव, एतदुक्तम्–
( २ ) " अव्यक्तमक्षरं ब्रह्मनिर्मितम् । देवानां हृदयं सौम्यं गुह्यं
रामः परन्तपः" रा०अ० २–३३ ।
(३)"बहवो नृपकल्याणगुणाः पुत्रस्य सन्ति ते"रा०अ०२–२६।१०
॥३१॥ इत्यादि.

निर्व०–अथ मृतसंजीवनं रामवृत्तान्तः प्रस्तूयते. परस्यापि स्व-
स्य अवरवत् एकगुणैकदेशनिदर्शनकरणेन सर्वैश्वर्यादपि परा अ-
तिशयिता ऋद्धिः कल्याणगुणसमृद्धिः अस्येति–( परर्द्धिः ).
( १ ) " ऋधु, वृद्धौ" धा०स्वादिः कौ०पृ०४६३ १५
( २ ) " स्त्रियां क्तिन् " इति, क्तिन्–अगुणः. ३।३।९४ ॥
कौ०पृ० ६५८
( ३ ) " तितुत्र०" इति, नेट्. ७।२।९॥कौ०पृ०६०८
(४)"झषस्तथोः०" इति, धः. ८।२।४०॥कौ०पृ० ३८५
पूर्वस्य जश्त्वेन दः. २०
( ५ ) " पृ, पालनपूरणयोः" धा० क्र्यादिः कौ०पृ० ५७६
( ६ )"ऋदोरप्"इत्यप्.गुणो रपरः.३।३।५७॥कौ०पृ०६५३
क्त्यक इति हि पाक्षिकः? ततः स्त्रियाम्, अतष्टाप्. दीर्घः.
(७) "स्त्रियाः पुंवत्०"इत्यादिना ६।३।३४॥कौ०पृ०१६०

निरु०–३९१ कल्याणानां पराणां च गुणानामृद्धिरसदा॥३९१॥ २५
परावस्थतया चैव ( परर्द्धि ) रिति कथ्यते ।

(३९२) परमस्पष्टः, (३९३) तुष्टः,

ॐ परमस्पष्टाय नमः। ॐ तुष्टाय नमः।

५ भा०—(४) "भगवत" इति स्वमन्त्रवर्णाच्च. ❋
किञ्च—
(परमस्पष्टः)—स्पष्टप्रत्यक्षदृष्टस्वपारम्यः; यथा,
(१) "व्यक्तमेष महायोगी परमात्मा सनातनः" यु०११४—१४।
(२) "सूर्यस्यापि भवेत्सूर्यः" इत्यादि. ❋
१० अधिकृताधिकारात्परत्वादपि अतिशयेन समस्तमनुष्याद्यधिकारयो-र्दाशरथित्वजगत्पालनयोर्लाभात् प्रीतः—(तुष्टः)—यथा,

निर्व०—तस्य पुंवद्भावः. संहितायाम्, आद्गुणः. रपरः. ❋
स्पष्टप्रत्यक्षदृष्टस्वपारम्यतया, परमश्चासौ स्पष्टश्चेति—
(परमस्पष्टः). एकन्नाम.
१५ (१) "स्पश, बाधनस्पर्शनयोः" धा०भ्वादिः कौ०पृ० ४२१
(२) "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" ७।२।२७॥कौ०पृ०५९४
इति णिचि निष्ठायां, णेर्लुक्. तत उपधावृद्ध्यभावोऽनिट्त्वं च निपात्यते.
(३) "व्रश्च०" इत्यादिना शान्तत्वात् ८।२।३६॥कौ०पृ०५१
षः. ष्टुत्वं. परमशब्दस्य पृषोदरादित्वात् साधुत्वमित्युक्तमेव. ❋
२० सकलमनुष्याद्यधिकारदाशरथित्वजगत्पालनलाभेन अधिकृताधिकारा-त् परत्वादपि अतिशयेन तुष्यति. प्रीणातीति—
(तुष्टः).

निरु०—३९२ साक्षाद्दृष्टस्वपारम्यः (परमस्पष्ट) उच्यते ॥ २९२॥
३९३ लाभाद्दाशरथित्वस्य जगतः पालनस्य च।
२५ मनुष्यत्वेपि यः प्रीतः स (तुष्ट) इति कथ्यते ॥ २९३॥

( ३९४ ) पुष्टः, ( ३९५ ) शुभेक्षणः, ॥

ॐ पुष्टाय नमः । ॐ शुभेक्षणाय नमः ।

भा०—( १ ) " पितरं रोचयामास तदा दशरथं नृपम्" रा० बा०१५—३१ । ५
(२)"कुलोचितमतिः क्षात्रं धर्मं स्वं बहु मन्यते"रा०अ०१—१६।
( ३ ) " आत्मानं मानुषं मन्ये रामं दशरथात्मजम्" इति. ❀ रा० यु०१२०—११ ।
एवं महागुणैः परिपूर्णः—( पुष्टः ). १०
( १ ) " तमेवं गुणसपन्नम्" इति, ❀ बा०रा०१—१९ ।
एवंविधैश्वर्यशीलातिशयपिशुनशीतलविशालो—
दारदीर्घराजीवलोचनः—( शुभेक्षणः ). यथा,

निर्व०—( १ ) " तुष,तुष्टौ" धा० दिवा०कौ०पृ०४५६
(२)"गत्यर्थ०"इत्यादिना कर्तरि क्तः. ३।४।७२॥कौ०पृ०५९६ १५
अगुणः.निहतत्वान्नेट्. ष्टुत्वम्. ❀
एवं महागुणैः परिपूर्णतया स्वयं पुष्यतीति—( पुष्टः ).
( १ ) " पुष,पुष्टौ" धा०दिवा० कौ०पृ०४५६
कर्तरि पूर्ववन्निष्ठा. गुणाभावः. अनिट्त्वम्. ष्टुत्वञ्च. ❀
एवंविधैश्वर्यशीलातिशयपिशुनशीतलविशालोदारदीर्घराजीवलोच- २०
नतया, शुभम्, ईक्षणं नयनम्, अस्येति वा, शुभम् ईक्षणं स्वकर्मकं स्वकर्तृकञ्च दर्शनम्, अस्येति वा,—( शुभेक्षणः ).

निरु०—३९४ गुणैर्यो ह्यानृशंस्याद्यैः पूर्णः (पुष्ट) इतीरितः ।
३९५ सौशील्यैश्वर्यपिशुन शीतलं दीर्घमायतम् ॥ २९४ ॥
ताम्रं च लोचनं यस्य स ( शुभेक्षण ) ईरितः । २५
स्वकर्मकर्तृकं चैव शुभं यस्येति दर्शनम् ॥ २९५ ॥
शुभेक्षणः स्यात्—

श्लो० ॥ ४३ ॥ ( ३९६ ) रामो,

ॐ रामाय नमः ।

भा०-(१)"सुभ्रूरायतताम्राक्षस्साक्षाद्विष्णुरिव स्वयम्"रा०अ०२-४३।
५ इति. स्वकर्मकं स्वकर्तृकञ्च. दर्शनमतिशुभमस्येति वा-शुभेक्षणः-यथा,
( २ ) " यश्च रामं न पश्येत्तु यञ्च रामो न पश्यति। निन्दितस्स वसेल्लोके स्वात्माप्येनं विगर्हते" इति. ❋ रा० अ० १७—१४ ।
(३) "रम्यतेऽस्मिन् सदा सर्वैर्गुणरूपवशीकृतैः" इति—
(रामः)—यथा,
१० ( १ ) " रामो रमयतां श्रेष्ठ" रा०अ० ५३—१।
( २ ) " गुणाभिरामं रामं च" भा०स० ५८—४२।
( ३ ) " श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः"

निर्व०—( १ )"ईक्ष, दर्शने" पूर्वत्र करणे धा०भ्वादिः कौ०पृ० ४०६ ल्युट्. अनः. णत्वम्. अपरत्र भावे ल्युट्. अन्यत्प्राग्वत्.
१५ ( २ ) " शुभ, दीप्तौ" धा०भ्वादिः कौ०पृ० ४१२
( ३ ) " शुभ, शोभार्थे वा" धा०तुदा० कौ०पृ० ४६६
इगुपधलक्षणः कः. क्त्त्वान्न गुणः. ततः संहितायाम्,
( ४ ) " आद्गुणः" ❋ ६।१।८७॥ कौ०पृ० ११
सर्वैर्गुणरूपवशीकृतैः रम्यते अनुरज्यतेऽस्मिन् इति वा, तद्वशीकृते-
२० ष्वयं रमते रज्यतीति वा—( रामः ).
( १ ) " रमु, क्रीडायाम्" पूर्वत्र, धा०भ्वादिः. कौ०पृ० ४२०
( २ ) " हलश्च" इत्यधिकरणे घञ्. ३।३।१२१॥कौ०पृ०६६३
अपरत्र,

निरु०—३९६ स्वगुणै रम्यते ( राम ) ईरितः ।

( ३९७ ) विरामो,

---

ॐ विरामाय नमः ।

---

भा०–( ४ ) " तथा सर्वप्रजाकान्तैः प्रीतिसञ्जननैः पितुः"
(५)"गुणैर्विरुरुचे रामो दीप्तस्सूर्य इवांशुभिः" रा०अ०१–३३। ९
इति.
(६) "शरदिन्दीवरत्विषे । अभिरामशरीराय"इति स्वमन्त्रालिङ्गाच. ❀
विरम्यतेऽस्मिन्वरप्रदैः ब्रह्मादिभिः, वरैश्चावध्यत्वादिभिः लब्धवरैश्च
रावणादिभिरिति–( विरामः ). यथा,
( १ ) " ब्रह्मा स्वयंभूश्चतुराननो वा " रा०सु०५१–५५। १०
इत्यादि. ❀
निसर्गनैरपेक्ष्येण कृपणाद्राज्यादेः–

---

निर्व०–( ३ ) "ज्वलितिकसन्तेभ्यो णः " इति, ३।१।१४०॥
कौ०पृ० ५६८
कर्तरि ज्वलादिलक्षणो णः. ण इत् उभयत्र उपधावृद्धिः. ❀
वरप्रदैः ब्रह्मादिभिः, वरैरवध्यत्वादिभिः,लब्धवरैश्च रावणादिभिः. १५
विरम्यते उपरम्यतेऽस्मिन् इति–
( विरामः ). पूर्ववदेव धातुः; विपूर्वः. धातूनामनेकार्थत्वात् उक्ता-
र्थोपपत्तिः. अन्यच्च प्रथमकल्पवत् प्रत्ययादि. ❀
अनुकल्पवत् नैसर्गिकनैरपेक्ष्येण कृपणाद्राज्यादेः व्यरंसीत् उपरत इति-

---

निरु०–३९७ वरप्रदैर्ब्रह्मपुरस्यैरवध्यत्वादिभिर्वरैः ॥ २९६ ॥ २०
यस्मिन् विरम्यत इति स ( विरामः ) प्रकीर्तितः ।

( ३९८ ) विरतो, ( ३९९ ) मार्गो,

ॐ विरताय नमः । ॐ मार्गाय नमः ।

५ भा० —( विरतः )—यथा,

( १ ) " नचास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति" रा०अ० १६—३२।

( २ )" लोककान्तस्य कान्तत्वं शीतरश्मेरिव क्षपा "

( ३ )" स पितुर्वचनं श्रीमानाभिषेकात् परं प्रियम् " रा०सु०

१० ३३—२४ ।

( ४ ) " धर्मोपदेशात्त्यजतश्च राज्यं मां चाप्यरण्यन्नयतः पदातिम् " इत्यादि. रा० । ❀

भरद्वाजादिमुनिभिः मार्ग्यते इति—

( मार्गः ). ❀

१५ निर्वं०—( विरतः ). पूर्ववदेव विपूर्वो धातुः

(१) "गत्यर्थ०" इत्यादिना कर्तरि क्तः.३।४।७२॥कौ०पृ०५९६ निहतत्वान्नेट्.

(२)"अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति " इति रमेरनुदात्तोपदेशतया, ६।४।३७।।कौ०पृ०४३५

२० अनुनासिकस्य मस्य लोपः. ❀

भरद्वाजादिभिर्मुनिभिः मार्ग्यते मृग्यते, इति—( मार्गः ).

( १ ) " मार्ग, अन्वेषणे " चुरादिराधृषीयः कौ०पृ०४८८

( २ ) " आधृषाद्वा " चुरादौ. कौ०पृ०४८६

इत्यतोऽस्य विभाषितो णिच्.

२५ निरु०—३९८ निसर्गनैरपेक्ष्येण राज्यादेः कृपणाद्धि यः॥२९७॥

विरागी ( विरत ) स्स स्याद् सतार्णः परमाद्भुतः ।

३९९मृग्यमाणतया ( मार्गो ) भरद्वाजादिभिस्सदा ॥२९८॥

## ( ३९८ ) विरजोमार्गो,

ॐ विरजोमार्गाय नमः ।

भा०–( विरजोमार्गः ). इति पाठे, विरजाः अपांसुलः, निर्दोषः, तद्दर्शितो मार्ग इति, यथा, ५
( १ ) " या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः" रा०अ० ६८–२९ ।
( २ ) " आवहत्परमां गतिम्" इति. ❋
निर्व०–( ३ )"अकर्तरि०" इति, कर्मणि घञ्–णिचूपक्षे तु, ३।३।१९ ॥ कौ०पृ० ६४७ १०
( ४ ) " एरच् " इति, तल्लोपश्च–अत्र घञ् ३।३।५६ ॥ कौ० पृ० ६५३
नेति तूपपादयिष्यते. यद्वा, दिवादौ वृत्करणस्य केषांचिन्मते पुषादिमात्रसमाप्त्यर्थतया दिवादेः श्वादिवदाकृतिगणत्वेन मृग्यतिरपि दिवादिरस्ति. ततः, वासरूपन्यायात् कृत्याप्रवृत्तौ, कर्मणि घञ्. १५
( ५ )"पुगन्त०" इति, लघूपधगुणः ७।३।८६॥कौ०पृ०३७० रपरः. मर्गः. स एव,
( ६ ) " प्रज्ञादिभ्यश्च" इति, स्वार्थेऽणि, ५।४।३८॥कौ०पृ०३५६
( ७ ) " यस्य०" इति लोपे, ६।४।१४८॥ कौ०पृ० ५६
आदिवृद्धौ च, ( मार्गः ). ❋ २०
अथ वा, विरजोमार्गः इति पाठः. निर्दोषमार्गप्रदर्शनेन विरजाः विगतरजस्कः अपांसुलः, मृज्यते परिमृज्यत इति. मार्गोऽध्वा, अस्मादिति–( विरजोमार्गः ). एकनाम.
( १ )" मृजू ,शुद्धौ" कर्मणि घञ्.धा०अदा०कौ०पृ०४४५

निरु०–३९८ पाठस्तु विरजोमार्ग इति निर्दोषदर्शितः । २५
पन्थाः स्याद्येन (विरजोमार्ग ) स्सन्मार्गदर्शनात् ॥ २९९ ॥

( ३९८ ) विरतो, ( ३९९ ) मार्गो,

ॐ विरताय नमः । ॐ मार्गाय नमः ।

५ भा० —( विरतः )—यथा,

( १ ) " न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति" रा० अ० १६—३२।

( २ ) " लोककान्तस्य कान्तत्वं शीतरश्मेरिव क्षपा "

( ३ ) " स पितुर्वचनं श्रीमानभिषेकात् परं प्रियम् " रा० सु०

१० ३३—२४ ।

( ४ ) " धर्मापदेशात्त्यजतश्च राज्यं मां चाप्यरण्यन्नयतः पदा-तिम् " इत्यादि. रा० । ❋

भरद्वाजादिमुनिभिः मार्ग्यते इति—

( मार्गः ). ❋

१५ निर्व०—( विरतः ). पूर्ववदेव विपूर्वो धातुः

(१) "गत्यर्थ०" इत्यादिना कर्तरि क्तः. ३।४।७२॥ कौ० पृ० ५९६ निहतत्वान्नेट्.

(२) "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति " इति रमेरनुदात्तोपदेशतया, ६।४।३७।कौ० पृ० ४३५

२० अनुनासिकस्य मस्य लोपः. ❋

भरद्वाजादिभिर्मुनिभिः मार्ग्यते मृग्यते, इति—( मार्गः ).

( १ ) " मार्ग, अन्वेषणे " चुरादिराधृषीयः कौ० पृ० ४८८

( २ ) " आधृषाद्वा " चुरादौ. कौ० पृ० ४८६

इत्यतोऽस्य विभाषितो णिच्.

२५ निरु०—३९८ निसर्गनैरपेक्ष्येण राज्यादेः क्षपणाद्धि यः॥२९७॥

विरागी ( विरत ) स्स स्यात् सतार्णः परमाद्भुतः ।

३९९मृग्यमाणतया ( मार्गो ) भरद्वाजादिभिस्सदा ॥२९८॥

( ४०० ) नयो,

ॐ नयाय नमः ।

भा०–( ३ ) " सुहृदां ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता।
समर्थेनापि सन्देष्टुं शाश्वतीं भूतिमिच्छता " सभापर्वणि च स्वयम्, ५
( ४ ) "यजस्वाऽभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते । नियुङ्क्ष्व
चापि मां कृत्ये सर्वं कर्तास्मि ते वचः " भा०स० ३३–२५।
उद्योगे
( ५ ) "अयमस्मि महाबाहो! ब्रूहि यत्ते विवक्षितम् । करिष्या-
मीह तत्सर्वं यत्त्वं वक्ष्यसि भारत । " इति. भा०उ०७१–५। १०
( ६ ) " वायुसूनोस्सुहृत्त्वेन भक्त्या परमया च सः । शत्रूणाम-
प्रकम्प्योपि लघुत्वमगमत्कपेः " रा०यु०५९–१२१।
इति वा. ❀
ते च तथास्मिन्नीयन्त इति–
( नयः )– ते ह्याहुः ? १५

निर्व०–( ३ )" अचो यत् " इति, यत्. कृत्यः गुणः. ❀
३।१।९७।कौ०पृ०५५७
ते च तथा नीयन्तेऽस्मिन्निति,–
( नयः ). धातुः प्राग्वत्. नत्वम्.

निरु०– ४०० यस्मिन् तपोधना नित्यं नीयन्त इति वै २०
( नयः ) ॥ ३०० ॥

( ३९९ ) नेयो,

ॐ नेयाय नमः।

भा०—सुहृदां नियोगार्हत्वात्–( नेयः )– यथा,
५ ( १ ) " आज्ञाप्योऽहं तपस्विनाम्"
(२)"आवासंस्त्वहमिच्छामि प्रदिष्टमिह कानने" रा०आ०५–३३।

निर्व०–( २ ) " मृजेर्वृद्धिः " इतीको वृद्धिः. ७।२।११४ ॥
कौ०पृ० ४४५
रपरत्वम्.
१० ( ३ )" चजोः०" इति, कुत्वम्. गः. ७।३।५२॥ कौ०पृ० ५६०
( ४ ) " रञ्ज, रागे " धा०दिवा० कौ०पृ० ४५५
( ५ ) " सर्वधातुभ्योऽसुन् " इत्यसुन् उणा०पा० ४कौ०पृ०६४०
तत्प्रकरणे,
( ६ ) " भूरञ्जिभ्यां कित् " इति तस्य कित्त्वात्, उणा०पा० ४
१५ कौ०पृ० ६४१
( ७ ) " अनिदिताम्० " इति, ६।४।२४॥ कौ०पृ०७६
उपधाया नस्य लोपः. विपूर्वो बहुव्रीहिः.
( ८ ) " ससजुषः०" इति, सोरुत्वम्. ८।२।६६॥कौ०पृ० २६
संहितायाम्,
२० ( ९ ) " हशि च" इति, उत्वम्. ६।१।११४॥ कौ०पृ०२७
( १० ) " आद्गुणः" ❀ ६।१।८७॥ कौ०पृ० ११
सुहृदां नियोगार्हतया नेतुमर्ह इति–( नेयः ).
( १ ) " णीञ्, प्रापणे " णो नः. धा०भ्वादिः कौ०पृ०४२३
( २ ) " अर्हे कृत्यतृचश्च " अर्हार्थे, ३।३।१६९॥कौ०पृ०५५०

२५ निरु०–३९९ नियोगयोग्यस्सुहृदां योऽसौ ( नेय ) स्स उच्यते।

( ४०० ) नयो,

ॐ नयाय नमः ।

भा०— ( ३ ) " सुहृदां ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता।
समर्थेनापि सन्देष्टुं शाश्वतीं भूतिमिच्छता " सभापर्वणि च स्वयम्, ५
( ४ ) "यजस्वाऽभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते । नियुङ्क्ष्व
चापि मां कृत्ये सर्वं कर्तास्मि ते वचः " भा०स०३३—२५।
उद्योगे,
( ५ ) "अयमस्मि महाबाहो! ब्रूहि यत्ते विवक्षितम् । करिष्या-
मोह तत्सर्वं यत्त्वं वक्ष्यसि भारत ! " इति. भा०उ०७१—५। १०
( ६ ) " वायुसूनोस्सुहृत्त्वेन भक्त्या परमया च सः । शत्रूणाम-
प्रकम्प्योपि लघुत्वमगमत्कपेः " रा०यु०५९—१२१।
इति वा. ❀
ते च तथास्मिन्नीयन्त इति—
( नयः )— ते ह्याहुः ? १५

निर्व०— ( ३ )" अचो यत् " इति, यत्. कृत्यः गुणः. ❀
३।१।९७।कौ०पृ०५५७
ते च तथा नीयन्तेऽस्मिन्निति,—
( नयः ). धातुः प्राग्वत्. नत्वम्.

निरु०— ४०० यस्मिन् तपोधना नित्यं नीयन्त इति वै २०
( नयः ) ॥ ३०० ॥

भा०—( १ ) " रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः "
रा०आ०—१—२०।
तथा,
५ ( २ ) " पाण्डवानां भवान्नाथो भवन्तश्चाश्रिता वयम् "
इति. ❀

---

## इति श्रीमद्विष्णुनामसहस्रविवरणे,
भगवद्गुणदर्पणे
### चतुर्थं शतकं समाप्तम्.

---

१० निर्व०—( १ ) " अकर्तरि च कारके०" इत्यनुवृत्तौ, ३।३।१९।
कौ०पृ०६४७
( २ ) "एरच्" इत्यधिकरणे अच्. ३।३।५६॥कौ०पृ०६५३
(३)"श्रिणीभुवोऽनुपसर्गे"इति, घञ् तु न.३।३।२४॥कौ०पृ०६४९
बाहुलकात्. गुणायादेशौ. ❀

१५ इति श्रीकुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरदेशिकतनयवरद्गुरुवरसूनुवरदार्यसूरिविरचिते,
## श्रीपराशरभट्टार्यभाषित-
## श्रीमद्विष्णुसहस्रनामभाष्यानुगे,
भगवन्नामसहस्रनिर्वचने,
### चतुर्थं शतकं संपूर्णम्.

# अथ पञ्चमशतकप्रारम्भः ।

( ४०१ ) अनयः, ।

ॐ अनयाय नमः ।

भा०— स एव, असुहृद्भिः न नयोऽस्यासीदिति—
( अनयः ). यथा रावणेन ५
( १ ) " हिमवान्मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भु-
जाभ्यामुद्धर्तुं न संख्ये भरतानुजः " रा०यु०।यद्वा,
( २ ) " अयश्शुभावहो विधिः " ❀
सोऽस्मादन्यो जगतां नास्तीति— ( अनयः ). यथा,
( १ ) " एते वयं सर्वसमृद्धकामा येषामयन्नो भवितासशास्ता " १०
इति. ❀ रक्षसामतिभयचलनहेतुत्वात्—

निर्व०— स एव दुर्हृद्भिर्नास्ति नयः प्रणयः अस्येति वा, जगताम-
न्यो नास्ति अयः शुभावहो विधिरस्मात्, इति वा,—
( अनयः ). पूर्वत्र पूर्ववद्धातुः नत्वञ्च.
( १ ) " भावे " इत्यनुवृत्तौ, ३।३।१८॥कौ०पृ०६४७ १५
( २ ) "एरच्" इति भावेऽच्. गुणायादेशौ. अपरत्र. ३।३।५६॥
कौ०पृ०६५३
( ३ ) " अय, गतौ " धा०भ्वादिः कौ०पृ०४०२
( ४ ) " इण्, गतौ " वा. पचाद्यच्, धा०अदा० कौ०पृ०४४१ .
एतेर्गुणायादेशौ च. उभयत्रापि नञ्समासः नञो नलोपः. २०
( ५ ) उत्तरत्र, "तस्मान्नुडचि " इति, नुट् च. ❀ ६।३।७४॥
कौ०पृ०१४७
रक्षसामतिभयचलनहेतुतया तानि, अजति—क्षिपतीति,—

निरु०—४०१ असुहृद्भिर्नयो यस्य नास्ती ( त्यनय ) उच्यते ।
अथवा जगतां यस्मान्नान्योस्ती ( त्यनयो ) ऽथवा ॥ ३०१ ॥ २५

{४०२ / ६६५} वीरः, (४०३) शक्तिमतांश्रेष्ठः,

ॐ वीराय नमः। ॐ शक्तिमतांश्रेष्ठाय नमः।

भा०—( वीरः ).

५ (१) " अज, गतिक्षेपणयोः " धा०भ्वादिः कौ०पृ०३९१

(२)"स्फायितञ्चिवञ्चि०"इत्यादिना रक्.उणा०पा०२कौ०पृ०६१९

(३)"अजेर्व्यघञपोः"इति,वीभावः.यथा,२।४।५६॥कौ०पृ०३९१

(४) " ब्रह्मदण्डप्रकाशानां विद्युज्ज्वलितवर्चसाम् । स्मरन् राघवबाणानां, विव्यथे राक्षसेश्वरः" रा०यु०६०—३।

(५) " मातङ्ग इव सिंहेन गरुडेनेव पन्नगः । अभिभूतोऽभवद्राजा

१० राघवेण महात्मना" यथा च मारीचः, रा०यु०६०—२।

(६) " वृक्षे वृक्षे च पश्यामि ! चीरकृष्णाजिनाम्बरम् । गृहीतधनुषं रामं पाशहस्तमिवान्तकम् " इत्यादि. ❀ रा०आ०३९—१४।

शक्तिमतां सुरादीनामतिशयेन प्रशस्य इति—

( शक्तिमतांश्रेष्ठः ). यथाह परशुपरिकर्मा रामः,

१५ निवं०—( वीरः ).

(१) " अज, गतिक्षेपणयोः" धा०भ्वादिः कौ०पृ०३९१

(२) " स्फायितञ्चिवञ्चि० " उणा०पा०२कौ० पृ०६१९

इत्यादिना प्रागुदाहृतसूत्रेण रक्.

(३) "अजेर्व्यघञपोः" इति, वीभावः.२।४।५६॥कौ०पृ०३९१

२० कित्त्वाद्गुणः. निहतत्वान्नेट्. ❀

शक्तिमताम्— बलिनां— सुरादीनाम्. अतिशयेन प्रशस्य इति—

( शक्तिमतांश्रेष्ठः ). शंसतेः प्रपूर्वात्. प्रशस्यस्येति निर्देशात्,

निरु०—४०२ ( वीरः ) कम्पनहेतुत्वाद्रक्षसामतिभीमतः ।

४०३ सुरादीनां शक्तिमतां यः प्रशस्यतमः स्मृतः ॥ ३०२ ॥

२५ तस्मा ( च्छक्तिमतांश्रेष्ठो ) दशार्णः श्रेष्ठदो मनुः ।

१. रसदश ।

( ४०४ ) धर्मो,

ॐ धर्माय नमः ।

भा०—( १ ) "अक्षयं मधुहन्तारं जानामि त्वां सुरेश्वरम्" रा० बा० ७६—१७ । ५

इति, ब्रह्मा च,

( २ ) "कथं देवगणश्रेष्ठ ! नात्मानमवबुध्यसे" रा०यु०१२०—६।

( ३ ) " देवाश्च दैत्याश्च निशाचरेन्द्रगन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य स्थातुं न शक्तास्समरेषु सर्वे" रा० ।

( ४ ) " सर्वान् लोकान् स संहृत्य संहृतान् सचराचरान् । १०
पुनरेव तथा स्रष्टुं शक्तो रामो महाशरैः" रा० ।

इति. ❀

अभ्युदयनिःश्रेयसाभ्यां सर्वस्य साक्षाद्धरणात्—
( धर्मः )—

निर्व०— क्यपि नलोपे च प्रागेव व्युत्पादितात् प्रशस्यशब्दात् १५
आतिशायनिक इष्ठन्. तत्र परतः,

(१)"प्रशस्यस्य श्रः" इति, श्रादेशः ५।३।६०॥कौ०पृ०३४१

( २ ) "प्रकृत्यैकाच्" इति प्रकृतिभावादिष्ठनि, ६।४।१६३॥
कौ०पृ० ३४१

( ३ )"टेः" इति, टिलोपो न. गुणः. ६।४।१४३॥कौ०पृ०५६ २०

( ४ ) " शक्ल, शक्तौ" धा० स्वादिः कौ०पृ० ४६३

( ५ )"स्त्रियां क्तिन्" इति, क्तिन्. ३।३।९४॥कौ०पृ०६५८
अनिट्. ततो मतुप्. आमिर्त्यादि. ❀

अभ्युदयनिःश्रेयसाभ्यां, सर्वं साक्षाद्धरतीति—
( धर्मः ). २५

निरु०—४०४ निःश्रेयसाभ्युदयाभ्यां(धर्म)स्सर्वस्य धारणात्॥२०

( ४०५ ) धर्मविदुत्तमः, ॥

ॐ धर्मविदुत्तमाय नमः ।

भा०—( १ ) " अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनी—भ्यो मन्"
५ इति, मन् प्रत्ययः. उणा०पा० १कौ०पृ०६१६
एवं सोम इत्यादयः. ( क्षेमकृदित्यादिः ) तदाह तमेव ब्रह्मा,
( २ )"ब्रह्मविदां वरः लोकानां त्वं परो धर्मः" रा०यु०१२०—१४।
इति, लक्ष्मणश्च,
( ३ ) " धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । पौरुषे चाप्रति-
१० द्वन्द्वश्शरैनञ्जहि रावणिम् " इति. अन्ये च, रा०यु० ९१—३७।
( ४ ) " ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति
महात्मानं कृष्णं धर्मं सनातनम्" भा०आ० ८८—२५ ।
( ५ ) " पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः"
(६)"साक्षाद्देवः पुराणोसौ स हि धर्मस्सनातनः"भा०आ०८८—२४।
१५ इत्यादि. अन्ये,
( ७ ) " साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह "
इति. ❋
धर्मवित्सूत्तमः—
( धर्मविदुत्तमः )—धर्मज्ञाने[१] वसिष्ठवामदेवमार्कण्डेया—

२० निर्व०—( १ ) " धृञ्, धारणे" धा०भ्वादिः कौ०पृ० ४२३
( २ ) " अर्तिस्तुसुहुसृधृक्षि०" उणा०पा०१कौ०पृ० ६१६
इत्यादिना मन्. गुणो रपरः. अनिट्. स्वस्य वसिष्ठमार्कण्डेयादिशिष्य-
त्वेपि धर्मज्ञाने तदुपजीव्यतया, धर्मवित्सु धर्मज्ञेषु तेभ्यो वा, उत्तमः.
उत्कृष्टतमः. इति—( धर्मविदुत्तमः ). एकनाम, उच्छब्दादुत्कृष्टवाचि-
२५ न आति—

निरु०—४०५ वसिष्ठाद्युपजीव्यो यो धर्मे ( धर्मविदुत्तमः ) ।

१ ज्ञानाम् ।

श्लो० ॥४४॥ (४०६) वैकुण्ठः,

ॐ वैकुण्ठाय नमः ।

भा०— दीनां शिष्योऽप्युपजीव्यः; यथा,
(१)"सर्वदाऽभिगतस्सद्भिः समुद्र इव सिन्धुभिः" रा०सं०१६। ५
(२) " धर्मज्ञस्सत्यसन्धश्च" रा०सं१२। "वेदविद्भिस्सुपूजितः"
रामा०सुं०३५—१४।
(३) " यथावत्साङ्गवेदवित् "रा० अ०१—२०।
(४) " त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च ।
अक्षय्यकीर्तिश्च विचक्षण क्षितिक्षमावान् क्षतजोपमाक्षः" १०
रा०कि०—२४—३१।
इत्यादिना. ❀
सर्वेषां संश्लेषयिता—( वैकुण्ठः ).

निर्व०—शायनिकस्तमप्. चर्वम्.
(१)"विद,ज्ञाने"क्विप्.अगुणः.इत्यादि.धा०अदा०कौ०पृ०४४३ १५
धर्मशब्दो हि, धरतेर्मनिनि व्युदपादि? ❀
निरुक्तानुसारात् सर्वेषां संश्लेषयितृतया, विकुण्ठानां विगतसंश्लेष-
विघातानाम् अयमिति—( वैकुण्ठः ).
(१)" शुठ,प्रतिघाते" शुठीत्यन्ये; कुठि चेति पठ्यते;धा०
भ्वादिः कौ०पृ०३९५ २०
चात् प्रतिघाते,
स च प्रतिघातोऽत्र संश्लेषविघातः इदित्त्वान्नुम्.अनुस्वारपरसवर्णौ.
भावे घञ्. को वा. विपूर्वो बहुव्रीहिः. ततो विकुण्ठशब्दात्,

निरु०—४०६ संश्लेषप्रतिघातश्च कुण्ठिधात्वर्थ उच्यते॥३०४॥
विगतः स च येषान्ते विकुण्ठाः स्युरुदीरिताः । २५
तेषामेवैष इति हि ( वैकुण्ठः ) परिकीर्तितः ॥ ३०५ ॥

भा०—( १ ) " कुठि, गतिप्रतिघाते " स चात्र संश्लेषविघातः स च विगतो येषान्ते विकुण्ठाः, तेषामेषः—( वैकुण्ठः ).
(२)"मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्द्धं
५ वैकुण्ठत्वं ततो मम" इति, भा०शा० ३४३–५० ।
ईदृशी हि शैली रामत्वेपि; यथा,
( ३ ) " राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् "
रा०यु० १३१–९५।
तदसन्निधौ परस्परनिर्व्यपेक्षा हि तत्रत्याः ? यथाहुः पौर्याः पतीन्,
१० (४)"राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत" रा०अ०४८–२७।
इति.
( ५ ) " व्यसृजन् कवलान्नागा गावो वत्सान्नपाययन् "
( ६ ) " नष्टं दृष्ट्वा नाभ्यनन्दन् विपुलं वा धनागमम् । पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत" रा० अ०४८–५ ।
१५ स्तनार्थिनस्सुताः स्त्रीणां भर्तारो भ्रातरस्तथा । सर्वे सर्वं परित्यज्य राममेवान्वयुस्तदा" इति. ❀ रा० ।
( १ ) " स यत् पूर्वोस्मात् सर्वस्मात् पाप्मन ओषत्तस्मात्पुरुषः " इति, परमपावनत्वात्—

---

निर्व०—( २ ) " तस्येदम् " इति, ४।३।१२०॥कौ०पृ०२७१
२० संबन्धसामा न्येऽण्. आदिवृद्धिरैकारः.
( ३ ) " यस्य०"इति,लोपः. ❀६।४।१४८॥कौ०पृ०५६
स च, परमपावनतया, निरुक्तानुसारात् पूर्वोस्मात् विश्वस्मात्, पाप्मनः सर्वानोषति दहतीति वा, पिपर्ति पृणाति च पालयति, पूरयतीति वा, पुरुषोत्तमतया सर्वेषां पुरति अग्रगामी भवतीति वा,—

---

१ दृष्ट्वा ।

( ४०७ ) पुरुषः,

ॐ पुरुषाय नमः ।

शा०—( पुरुषः ).
(१) "पावनस्सर्वलोकानां त्वमेव रघुनन्दन" इति. रा०उ०८२—९। ५
शबरी,
(२) "तवाहञ्चक्षुषा सौम्य ! पूता सौम्येन मानद" इति. रा०आ० ७४—१३ ।
( ३ ) " पॄ, पालनपूरणयोः" धा० जुहो०कौ०पृ०४४९
( ४ ) "पुरः कुषन्" इति कुषन्प्रत्ययान्तो वा—(पुरुषः).उणा० १० पा०४कौ०पृ०६३७ स हि, रामस्सर्वथा पुरुष इष्यते ?
( ५ ) " राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम्" रा० ।
( ६ ) " शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः" ❀ रा० यु०१२०—१५।

निर्व०—( पुरुषः ). सर्वत्र १५
( १ ) " उष, दाहे" इगुपधलक्षणः कः. अगुणः. धा०भ्वादिः कौ०पृ० ४०९
( २ ) " पुर, अग्रगमने" धा० तुदा० कौ०पृ० ४६६
( ३ ) " पॄ, पालनपूरणयोः" धा०जुहो० कौ०पृ० ४४९
( ४ ) " पूरी, आप्यायने" वा धा०दिवा०कौ०पृ०४५५ २०
अयं दिवादिश्चुरादिश्च पूर्वत्र उभयत्र,
(५) "अशूप्रुषि०" इत्यादिना कन्.उणा०पा०१कौ०पृ०६१७ बाहुलकादन्यतोपि भवति पृणातेः.
( ६ ) " उदोष्ठ्यपूर्वस्य०" ७।१।१०२ ॥ कौ०पृ० ४४९ इत्युत्वम्. रपरत्वम्. उभयत्राप्यगुणः. २५

निरु०—४०७ स यत्पूर्व इति श्रुत्या ( पुरुषः ) पावनत्वतः ।
पृधातोः पालनार्थाद्धि कुषन्प्रत्यययोगतः ॥ ३०६ ॥
सर्वपालकतालब्ध्या ( पुरुषः ) प्रोच्यते बुधैः ।

१ चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन ।

{ ६७ / ३७१ } (४०८) प्राणः,

ॐ प्राणाय नमः ।

भा०—सर्वप्राणनात्—
५ (प्राणः). ❋

निर्व०—(७) "नेट्०" इति, नेट्. ७।२।८॥ कौ०पृ० ५८१
(८) "हलि च" इति, दीर्घः. अपरत्र ८।२।७७॥कौ०पृ० ६३
एकत्र तत एव बाहुलकात् कन्.
(९) "इण्शीभ्यां वन्" वा अन्यतोपि भवति.उणा०पा०१कौ०
१० पृ० ६१७
नेट्. भागवत्. चुरादेरीदितः पक्षे णिलोपोपि. एवं व्युत्पादिते पूर्वशब्दे प्रत्ययलोपः ऊकारह्रस्वश्च. पृषोदरादिलक्षणः. अन्यत्र उभयत्र यथासंख्यम्
(१०)"पृ, पालनपूरणयोः" पक्षे स्वादिः. धा०जुहो०कौ०पृ०४४९
१५ क्र्यादिश्च इतरत्र,
(११) "पुर, अग्रगमने" धा०तुदा० कौ०पृ० ४६६
(१२) "पुरःकुपन्" इति, कुपन्. उणा०पा०४कौ०पृ० ६३५
(१३) "यजजपदशां यङः" इत्यत्र,३।२।१६६॥कौ०पृ०६०५
दशाम् इति नलोपनिर्देश इव भाव्यभिप्रायेण. सति चास्मिन् प्रत्यये,
२० पिपर्ति पृणात्योरपि प्रकृतिरूपसाम्यात् उभयोरपि ग्रहणात्, पिपर्ति-पृणात्योः.
(१) "उदोष्ठ्यपूर्वस्य" इत्युत्त्वम्. ७।१।१०२॥कौ०पृ०४४९
रपरत्वम्. उभयत्रापि किस्वान्न गुणः.
सर्वमाणनात् प्राणित्यस्मात् सर्वमिति–(प्राणः).

.२ निरु०—४०८ (प्राणः) सर्वप्राणनाद्धि तद्दानात्—

{४०९–६६ / ३७७–९५६} प्राणदः, {४१० / ९५६} प्रणमः,

ॐ प्राणदाय नमः। ॐ प्रणमाय नमः।

भा०—प्रसिद्धानपि प्राणान्ददातीति–(प्राणदः)–अतो हि तद्विरहे, ५
(१)"अपि वृक्षाः परिम्लानास्सपुष्पाङ्कुरकोरकाः"रा०अ०५९–४।
(२) "परिशुष्कपलाशानि वनान्युपवनानि च" इत्यादि. ❋ रा०
अ०५९–५।
(१) "प्रणामयति" अथ०शि०।
इति श्रौत्या निरुक्त्या स्वगुणैश्चराचरनामनात्–(प्रणमः). १०

निर्व०–(१)"अन, प्राणने" प्रपूर्वः. धा०अदा०कौ०पृ०४४६
(२)"अकर्तरि०" इत्यपादाने घञ्.३।३।१९॥कौ०पृ०६४७
उपधावृद्धिः. सांहितिको दीर्घः.
(३)"पूर्वपदात्०" इति, णत्वम्.❋८।४।३॥कौ०पृ०१६७
तद्विरहे वृक्षादीनामपि परिम्लानतया, तेषां प्रसिद्धानपि प्राणान् १५
ददातीति–(प्राणदः).
(१) "डु–दाञ्, दाने" धा०जुहो०कौ०पृ०४५१
(२) "आतोनुपसर्गे०" इति, कः. आल्लोपः.३।२।३॥कौ०
पृ०५७०
व्युदपादि हि प्राणशब्दः श्रौत्या निरुक्त्या? २०
स्वगुणैः चराचरप्रणम्रीकरणात्, प्रणमयति. प्रह्वीकरोति तदिति
वा, तत्प्रणौति तयैव निरुक्त्या प्रणामयतीति वा, तत एव हेतोः
तेन प्रणूयते प्रकर्षेण स्तूयतेसौ इति वा,–
(प्रणमः–प्रणवः). इति वा उभयथापि पाठः.प्रणव इत्येव वा.

निरु०–४०९ (प्राणदः) स्मृतः ॥ ३०७ ॥ २५
४१० गुणैश्चराचराणांहि नामनात् (प्रणमः) स्मृतः।

भा०—(२)"हृदयान्याममन्थेव जनस्य गुणवत्तया"रा०अ०२५—२। इति. ❀

यशसाऽपि विस्तीर्ण इति—

---

५ निर्व०—पूर्वत्र,

( १ ) " णमु, प्रह्वत्वे" प्रपूर्वः. धा०भ्वादिः कौ०पृ० ४३०

णो नः—णिचि वृद्धिः. तत उदात्तोपदेशात् ञ्णितः कृतःपरत्वाभावेन.

( २ ) " नोदात्तोपदेशस्य०" ७।३।३४ ॥ कौ०पृ० ५४१

इति निषेधानवकाशात्.

१० (३)"जनीजृष्क्नसुरञ्जोऽमन्ताश्च" घटादिगणसूत्रम् कौ०पृ०४१७

इत्यमन्तत्वात् मित्त्वम्. उपसृष्टतया,

( ४ ) " ज्वलह्वलह्मलनमामनुपसर्गाद्वा " घटादिगणसूत्रम् कौ० पृ०४१७

इति, विकल्पाप्रवृत्तेः. णौ,

१५ (५ ) " मितां ह्रस्वः" इति, ह्रस्वः. ६।४।९२॥ कौ०पृ०४८२

ततः पचाद्यच् . णिलोपः. णोपदेशतया,

( ६ ) " उपर्गादसमासेपि णोपदेशस्य" ८।४।१४ ।।कौ०पृ०३८६

इति. नस्य णत्वम्. अपरत्र,

( ७ )" णु, स्तुतौ" प्रपूर्वः. धा०अदा० कौ०पृ०४३९

२० ( ८ )"णो नः" आद्ये तु पक्षे, नौतिरय-६।१।६५॥कौ०पृ०३८६

मिहान्तर्भावितण्यर्थस्य नमेरर्थे वर्तते. अनेकार्था हि धातवः ? ततः पचाद्यच्. गुणावादेशौ. णत्वं प्राग्वत्. द्वितीये

( ९ )"अकर्तरिचकारके०"इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७

( १० ) " ऋदोरप्" इत्युवर्णान्तात्. ३।३।५७॥ कौ०पृ०६५३

२५ कर्मण्यप्. गुणावादेशौ—णत्वं च पूर्ववत्. ❀

यशोविस्तारवत्तया, प्रथते प्रख्यातो भवतीति—

( ४११ ) पृथुः ।

ॐ पृथवे नमः ।

भा०—( पृथुः ). ५
( १ ) " प्रथ,प्रख्याने"धा०भ्वादिः कौ०पृ०४१४
( २ ) " प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च"उणा०पा०१कौ०
पृ०६१०
इति, कुप्रत्ययः.
( ३ ) " पृथुश्रीः पार्थिवात्मजः" १०
( ४ ) " रामो नाम जनैः श्रुतः" रा०सं० ८।
( ५ ) " तेषामतियशा लोके रामः" रा०बा० ७७—२८ ।
( ६ ) "यशसश्चैकभाजनम्" इत्यादि. ❋ रा०कि०१५—२०।
अवतारासमकालवर्तिनामपि ध्यानादिना उपकारित्वमाह—

निर्व०—( पृथुः ). १५
( १ ) " प्रथ, प्रख्याने" धा०भ्वादिः कौ०पृ०४१४
( २ ) "इग्यणः संप्रसारणम्"इति,संप्रसारणसंज्ञायाम्, १।१।४५॥
कौ०पृ०५९
( ३ ) " कुर्भ्रश्च" इति प्रकरणे,उणा०पा०१कौ०पृ०६१०
(४)"प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च"उणा०पा०१कौ०पृ०६१०
इति,कुः. संप्रसारणं च. रेफस्य ऋकारः. २०
( ५ ) " संप्रसारणाच्च" इति-पूर्वरूपम् ६।१।१०८॥कौ०पृ०६०
एकादेशः. अगुणः. ❋
अवतारासमकालवर्तिनामपि ध्यानादिना उपकर्तृतया,
हिरण्यस्य हितरमणीयतया सुवर्णसाम्यात् तदुपलक्ष्यस्य ध्यातृहृद-
यस्य गर्भः शुभाश्रयतया निगीर्य इति वा,हिरण्यनिधिसाम्यात्तद्- २५
भ्रूण इति वा,—

निरु०—४११ यशोविस्तारवत्त्वाच्च (पृथु) रित्युच्यते बुधैः॥३०८॥

{४१२ / ७१} हिरण्यगर्भः, (४१३) शत्रुघ्नो,

ॐ हिरण्यगर्भाय नमः। ॐ शत्रुघ्नाय नमः।

५ भा०–( हिरण्यगर्भः ).–हिनरमणीयस्य ध्यातृहृदयस्य, शुभाश्रयत्वेन निगीर्यत्वाद्, हिरण्यनिधिसाम्याद्वा, तथा तन्मन्त्रवर्णः,
(१) "ध्येयस्स एव विश्वात्मा" इति. ❀
विषयेषु विक्षेपणात्तेषां रावणवत् शत्रुमिन्द्रियवर्गं विवेकशरैः हन्ति शमयतीति–
१० ( शत्रुघ्नः ).

निर्व०–( हिरण्यगर्भः ).
(१) "गॄ, निगरणे" धा०तुदा०कौ०पृ०४६८
(२) "अर्तिगॄभ्याम्०" इति, भन्. उणा०पा०३कौ०पृ०६३१
गुणो रपरः
१५ (३) "नेट्०" इति, नेट्. ७।२।८।।कौ०पृ०५८१
(४) "हर्य, गतिकान्त्योः" धा०भ्वादिः कौ०पृ०४०४
(५) "हर्यतेः कन्यन् हिरच" इति,कन्यन् उणा०पा०५कौ०पृ०६४४
धातोर्हिरादेशश्च. आदेशे अकार उच्चारणार्थः. अगुणः णत्वम्. ❀
तेषां शत्रुं रावणवत् विपक्षमिन्द्रियवर्गं हन्ति. विवेकशरजालेन
२० शमयतीति–
( शत्रुघ्नः ).
(१) "हन, हिंसागत्योः" धा०अदा०कौ०पृ०४३५

निरु०–४१२ हिनस्य रमणीयस्य ध्यातॄणां हृदयस्य हि।
( हिरण्यगर्भ ) स्तनस्थः स शुभाश्रयणः स्मृतः ॥ ३०९ ॥
२५ यद्वा ( हिरण्यगर्भो )ऽसौ हिरण्यनिधिसाम्यतः।
४१३ शत्रूनिन्द्रियवर्गान्यो हन्ति ( शत्रुघ्न ) उच्यते ॥ ३१० ॥

भा०—( १ ) " अमनुष्यकर्तृके च" इति, टक्. ३।२।५३॥
कौ०पृ० ५७९
(२)"गमहन०"इत्यादिना उपधालोपः.६।४।९८॥कौ०पृ०४२१
( ३ )" होहन्तेः०" इति, कुत्वम्. ७।३।५४॥ कौ०पृ०६४ ५
( ४ ) " दशेन्द्रियाननं घोरं यो मनोरजनीचरम् । विवेकशरजालेन शमन्नयति योगिनाम्" इति. ❋ सात्वतसंहिता १२-१५४

निर्व०—( २ ) " आशिषि हनः" ३।२।४९॥ कौ०पृ० ५७९
( ३ ) " लक्षणे जायापत्योष्टक् " ३।२।५२॥ कौ०पृ०५७९
इत्यतो हनष्टगिति वर्तमाने, १०
(४)"अमनुष्यकर्तृके च"इति, टक्. ३।२।५३॥कौ०पृ०५७९
( ५ ) " गमहनजनखनघसां लोपः क्ङित्यनङि" ६।४।९८॥
कौ०पृ० ४२१ इति, कित्युपधालोपः.
(६)"हो हन्तेर्ञ्णिन्नेषु" इति नकारे परे ७।३।५४॥ कौ०पृ०६४
हन्तेर्हस्य कुत्वम्. आन्तरतम्यात् घः. न च, १५
(७)"अचः परस्मिन् पूर्वविधौ" इत्युपधा—१।१।५७॥कौ०पृ०८
लोपः स्थानिवत्. नकारे परे कुत्वविधानसामर्थ्यात्.
(८) "शद्लृ, शातने" णिचि वृद्धिः. धा०तुदा०कौ०पृ०४६९
( ९ ) "शदेरगतौ तः" इत्यगतौ ७।३।४२॥कौ०पृ०४९६
शातने णिचि दस्य तः. ततो, २०
(१०)"रुशातिभ्यां क्रुन्"इति क्रुन्. उणा०पा०४कौ०पृ०६३६
(११)"नेट्०"इति,नेट् .णिलोपःप्रज्ञादिगणे७।२।८॥कौ०पृ०५८१
ह्रस्वपाठात्. आकारस्य ह्रस्वः. यदा तु,
( १२ ) " आत्मानं मानुषं मन्ये" रा०यु०१२०—११॥
इति प्रक्रियया, मनुष्यत्वभावना; तदा, २५
( १३ ) " कप्रकरणेमूलविभुजादिभ्य उपसंख्यानम्" ३।२।५॥
कौ०पृ० ५७१इति. मूलविभुजादेराकृतिगणत्वात् कः.
शेषं प्राग्वत्. ❋

(४१४) व्याप्तो, (४१५) वायुर्,

ॐ व्याप्ताय नमः । ॐ वायवे नमः ।

५ भा०—तद्ध्याने मुग्धवृद्धभर्तृभृत्यशत्रुमित्रादिषु वात्सल्याविशेषात्—
(व्याप्तः)—यथा,
(१) "पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति । पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च" रा०आ०२—३७।
(२) "निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान्" रा०अ०२—३८।
१० (३) "रिपूणामपि वत्सल" इत्यादि. ❀ रा०य०५०—५६।
स्वयमेव तत्र तत्र तान् गच्छतीति—
(वायुः).
(१) "कृवापाजिमि०" इत्यादिना उण्. यथा, उणा०पा०१कौ०
पृ० ६०९

१५ निर्व०—शत्रुमित्रादिषु वात्सल्याविशेषात् व्याप्नोतीति—
(व्याप्तः).
(१) "आप्लृ, व्याप्तौ" विपूर्वः गत्यर्थात् धा०स्वादिः कौ०पृ०४६२
कर्तरि क्तः. निहतत्वान्नेट्. वेरिकारस्य सांहितिको यण्. ❀
स्वयमेव तत्र तत्र तांस्तान् वाति गच्छतीति—
२० (वायुः).
(१) "वा, गतिगन्धनयोः" धा०अदा० कौ०पृ० ४४३
(२) "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्युण्. उणा०पा०१
कौ०पृ० ६०९

निरु०—४१४ नीचपूज्यो विशेषेण व्यापनाद् (व्याप्त) उच्यते ।
४१५ तत्र तत्र स्थितान् सर्वान् भरद्वाजगुहादिकान् ॥ ३११ ॥
गच्छति स्वयमेवैनान् स (वायु) रिति शब्द्यते ।

(४१६) अधोक्षजः, ॥

ॐ अधोक्षजाय नमः ।

भा०—(२) " सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः " ५
सं०१—५७।
(३) " भरद्वाजाश्रमं गत्वा" वा०सं० १—८७।
(४) " गुहमासाद्य धर्मात्मा " इति. ❋ सं०१—२९।
एवम् अमृतोदधिवत्सर्वैस्सदोपयुज्यमनोपि
(१) "अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः" इति. भा० १०
उ० ८९—१०।
(अधोक्षजः)—यथा,
(२)"अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम्" वा०७६-१७।
(३) "अक्षय्यकीर्तिश्च" इत्यादि. ❋ रा०कि०२४—३१।

निर्व०—(३)" आतो युक्चिण्कृतोः"७।३।३३॥कौ०पृ०५३९
इति, णिति कृति आतो युक् कित्त्वादन्तावयवः. ❋ १५
एवममृतोदधिवत् सर्वैस्सदोपयुज्यमानोपि, निरुक्तानुसारात् अधो
न क्षीयते जात्विति वा जातु अधोऽक्षीयमाणः प्रादुर्भूत इति वा,—
(अधोक्षजः). पूर्वत्र,
(१) " क्षि, क्षये" धा०भ्वादिः कौ०पृ० ३९२
(२)"अन्येष्वपि दृश्यते"इति,डः.३।२।१०१॥कौ०पृ०५८५ २०
टिलोपः. नञ्समासः—नञो नलोपः.
(३)"धृञ्, धारणे" पचाद्यच्. :धा०भ्वादिःकौ०पृ०४२३
गुणो रपरः नञ्समासः—नञो नलोपः. एवं सिद्धादधरशब्दात्
(४) " पूर्वाधरावराणामसिपुरधवश्चैषाम्" ५।३।३९॥ कौ०
पृ०३३७ इत्यस्तात्यर्थे असिः. २५

निरु०—४१६ सदोपयुज्यमानोऽपि सर्वैरमृतमिन्दुवत् ॥ ३१२ ॥
अधो न क्षीयते जातु यस्मात्तस्मा (दधोक्षजः)।

श्लो० ॥ ४५ ॥ (४१७) ऋतुः,

ॐ ऋतवे नमः ।

भा०— सदाप्यपूर्वैस्सर्वोल्लासकरैरुत्तरोत्तरैः, गुणपर्यायैः ऋच्छतीति.—
५ (ऋतुः).
(१) "अर्तेश्चतुः" इति, तुः. उणा०पा०१कौ०पृ०६१२
इतो हि वसन्तशिशिरादीनामपि ऋतुत्वम् ! यथा,
(२) "घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः"रा०अ०३-२९।
इत्यादि. ❀

१० निर्व०— अथ् इत्यादेशश्च, स्वरादिपाठादव्ययत्वम् सोरुत्वम्. उत्वम्. गुणः. पूर्वरूपत्वम्. जात्वित्यव्ययस्य जादेशः. तस्य विपर्ययश्च. पृषोदरादिलक्षणः. अत्र च, आदेशस्य अव्ययवद्भावेऽव्ययसंज्ञायां च तदन्तविधौ लुकि च विहितविशेषणेपि उपसर्जनत्वात् गौणतायां च तदभावान्न,
१५ (५) "अव्ययादाप्सुपः" इति, सुपो लुक्. ११त्र २।४।८२॥ कौ०पृ०८८
(६) "जनी, प्रादुर्भावे" धा० दिवा० कौ०पृ०४५४
(७)"अन्येष्वपि०" इति. अत्रापि डः.३।२।१०१॥कौ०पृ०५८५
टिलोपः. अत्र च जात्वर्थोऽर्थसिद्धः; अतो न पृषोदरादित्वकल्पनादि-
२० क्लेशः. शेषं प्राग्वत्. ❀
सदाप्यपूर्वैस्सर्वोल्लासकरैरुत्तरोत्तरगुणपर्यायैः ऋच्छतीति,—
(ऋतुः).
(१) "ऋ, गतिप्रापणयोः" धा०भ्वादिः कौ०पृ०४२५

निरु०—४१७ ऋच्छतीति (ऋतुः) प्रोक्तः सर्वोल्लासकरैर्गुणैः॥३१३॥

(४१८) सुदर्शनः, (४१९) कालः,

ॐ सुदर्शनाय नमः । ॐ कालाय नमः ।

भा०—गुणप्रभावानभिज्ञानामपि दर्शनमात्रमेवास्य शोभनमिति— ५
(सुदर्शनः)—यथा,
(१) "सोमवत्प्रियदर्शनः" रा०बा०१—१८।
(२) "सदैकप्रियदर्शनः" इति च. ❋ रा०बा०१—१६।
एवंभूतैर्गुणैरात्मनि चराचरसंकलनात्— १०
(कालः). ❋
एवं राक्षसमृगयया, जगद्रक्षणेन चात्र विहृत्य,
पुनः परमे स्थाने तिष्ठतीति—

निर्व०—पः किद्वेति वर्तमाने,
(१)"अर्तेश्च तुः"इति,तुः.कित्.अगुणः.उणा०पा०१कौ०पृ०६१२
अनिट्; इतो हि हेतोः, वसन्तादिरपि ऋतुः ? ❋ १५
गुणप्रभावानभिज्ञानामपि सुशोभनं दर्शनमात्रम्, अस्येति—
(सुदर्शनः).
(१)"दृशिर्, प्रेक्षणे" भावे ल्युट्. अनः.धा०१वादिः कौ०पृ०४३०
गुणोरपरः- स्वित्यव्ययपूर्वो बहुव्रीहिः. ❋
एवंभूतैर्गुणैश्चराचरं, कल्यते संकलितं भवत्यस्मिन् इति,— २०
(कालः).
(१) "कल, शब्दसंख्यानयोः" धा०१वादिः कौ०पृ०४०३
(२) "हलश्च" इत्यधिकरणे घञ् वृद्धिः. ❋३।३।१२१॥कौ०
पृ०६६३ इत्थं राक्षसाखेटकेन, जगत्संरक्षणेन च अत्र विहृत्य पुनश्च
परमे स्थाने तिष्ठतीति,— २५

निरु—४१८ शुभं च दर्शनं यस्य मन्दानां स (सुदर्शनः)।
४१९ चिदचित्कलनात् (कालः) गुणगत्मनि चेटयेः ॥३१४॥

( ४२० ) परमेष्ठी,

ॐ परमेष्ठिने नमः ।

भा०– ( परमेष्ठी ).

५ ( १ ) "परमे कित्" इति,इनिप्रत्ययः. उणा०पा०४कौ०पृ०६३२

( २ )"अम्बाम्ब०" इत्यादिना षत्वम्. ८।३।९७॥कौ०पृ०५७१

( ३ ) " हलदन्तात्० " इति, सप्तम्या अलुक्, यथा, ६।३।९॥

कौ०पृ०१८७

( ४ ) "विवेशवैष्णवन्तेजः सशरीरस्सहानुगः"रा०उ०११०–१२।

१० तथा, सभापर्वणि.

( ५ ) " एवमेष महाबाहुरिक्ष्वाकुकुलवर्धनः । रावणं सगणं हत्वा दिवमाक्रमितां प्रभुः" ॥ इत्यादि. ❀ भा०स०५५–४७।

निर्व०– ( परमेष्ठी ).

(१)"ष्ठा, गतिनिवृत्तौ"परस्मैः. टोस्तुः. धा०भ्वादिः कौ०पृ०४२४

१५ (२)"गमेरिनिः, प्रेरथ इत्यतः"इनिः, उणा०पा०४कौ०पृ०६३२

स्थः इति वर्तमाने,

( ३ ) " परमे कित्" इति, परम उणा०पा०४कौ०पृ०६३२

इत्यस्मिन्शब्दे उपपदे तिष्ठतेरिनिः–कित्. आतो लोपः.

( ४ ) " अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमे-

२० बर्हिर्दिव्यग्निभ्यः स्थः" ८।३।९७॥कौ०पृ०५७१

इत्यत्र स्थ इति कप्रत्ययान्तानुकारात् षत्वाभावे,

( ५ ) " स्थास्थिन्स्थॄणामुपसंख्यानम् " ८।३।९७॥कौ०पृ०

५७१

इत्युपसंख्यानात्, स्थिनस्सस्य षः. ष्टुत्वम्, परमशब्दः पृषोदरादित्वा-

२५ त्स्यातः. ततो ङिः. तस्य,

निरु०–४२० परे पदे स्थितत्वाच ( परमेष्ठी ) प्रकीर्तितः ।

) १ सभिपूः ।

( ४२१ ) परिग्रहः, ।

ॐ परिग्रहाय नमः ।

भा०— अत्र तत्र च परितो ग्रहोऽस्येति—
( परिग्रहः ), स्वसंबन्धिपौरजानपदतत्संबन्धिनां तद्देवता तदाराम- ५
तरुदूर्वादेरपि परमपदप्रापणात्.
( १ ) " ये हि भगवद्देशेष्वनुरागिणः "
इत्यादि. अस्य सौशील्यन्तत्त्वम्. ❋
अथ, शीलदुस्साधासाधुसाधकस्संहाराधिकारः पातालशयनः क-
ल्की च. युगावसाने पापातिमसङ्गिषु संकीर्णवर्णाश्रमव्यवस्थेषु— १०

निर्व०—(६)"हलदन्तात् सप्तम्याः संज्ञायाम्"६।३।९॥को०पृ०१८७
इत्यलुक्. गुणः. ततः, इन्नन्तलक्षणो दीर्घ इत्यादि. ❋
अत्र तत्र च, परिपरितः, ग्रहः स्वसंबन्धिपौरजानपदतत्संबन्धि
देवतातरुदूर्वादीनामपि परमपदप्रापणात्. ग्रहणम् अस्येति—
( परिग्रहः ). १५
( १ ) " ग्रह, उपादाने " धा०क्र्यादिः को०पृ०४७८
( २ ) " ग्रहवृदनिश्चिगमश्च" इति, ३।३।५८॥को०पृ०६५३
भावे अप्. परिपूर्वो बहुव्रीहिः. ❋
अथ, शीलदुस्साधासाधुसाधकः संहाराधिकारी पातालशयनः क-
ल्की च प्रस्तूयते. मन्त्रवर्णानुरोधेन युगावसाने पापातिमसङ्गिषु २०
संकीर्णवर्णाश्रमव्यवस्थेषु जनेषु, उच्यति समवेनो भवति प्रचण्डो
भवतीति—

निरु०—४२१ इहामुत्र समं सर्वग्रहणात्स्यात् (परिग्रहः) ॥३१५॥

( ४२२ ) उग्रः, { ४२३ / ९२ } संवत्सरो,

ॐ उग्राय नमः । ॐ संवत्सराय नमः ।

५ भा०—( उग्रः )— प्रचण्डः.
( १ ) " उच, समवाये" धा०दिवा० कौ०पृ०४६०
" ऋज्रेन्द्राग्र० " उणा०पा०२कौ०पृ०६२०
इत्यादिना रन्प्रत्ययान्तो निपातः.
( २ ) " संहारमूर्तये कालवैश्वानरार्चिषे "
१० इति मन्त्रवर्णात्. श्रीपौष्करे,
(३) " कल्की च विष्णुर्भगवान्नष्टधर्मावतारकृत् । उर्व्यां म्लेच्छगण
हत्वाऽवस्थितो यः कलौ युगे " इति. ❀
पाताले संहारपरिकरैः कालप्रतीक्षोऽनन्ते संवसतीति—
( संवत्सरः )
१५ ( १ ) " संपूर्वाद्वसतेः "

निर्व०—( उग्रः ).
( १ ) " उच, समवाये " धा० दिवा० कौ०पृ०४६०
( २ ) "ऋज्रेन्द्राग्र०"इत्यादिना प्रागुक्त-उणा०पा०२कौ०पृ०६२०
सूत्रेण रन्. चस्य गः; गुणाभावश्च निपात्यते.
२० ( ३ ) " नेट्० " इति, नेट्. ❀ ७।२।८॥ कौ०पृ०५८१
ध्यानविधिना पाताले सहसंहारपरिकरैः,कालप्रतीक्षोऽनन्ते संवसतीति—
( संवत्सरः ).

निरु०—४२२ नष्टे धर्मे कल्किरूपो ह्यानतीर्य महीभृतः । म्लेच्छा-
दीन् हतवान्यो सा ( उग्र ) इत्युच्यते बुधैः ॥ ३१६ ॥
२५ ४२३ संहारस्योपकरणैस्साकं कालं प्रतीक्षयन् ।
( संवत्सरः ) स्यात्पाताले ह्यनन्ते वसतीति यः ॥ ३१७ ॥

{४२४ / ६१७} दक्षो,

ॐ दक्षाय नमः ।

भा०-(२)"संपूर्वाच्चित्" इति, सरप्रत्ययः, उणा०पा० ३कौ०पृ०६२८
( ३ )" अनन्तशयनारूढं " सात्त्वतसंहिता १२—१६८ । ५
" चक्राद्यायुधवृन्देन मूर्तेन परिवारितम्" सात्त्वतसंहिता १२-१६९ ।
इति तद्ध्यानविधेः.
( ४ )"कल्किश्चरिष्यति महीं सदा दस्युवधेरतः । आक्रोशमानान्
सुभृशं दस्यून्नेष्यति संक्षयम्" इति. ❀ भा०आर० १९१—१५।
दस्युवधे दक्षते शीघ्रकारीति—( दक्षः ). १०
( १ ) " दक्ष,वृद्धौ शीघ्रार्थे च" धा०भ्वादिः कौ०पृ०४०६
( २ ) " क्षिप्रकारी जनार्दनः" इति. ❀

पापतत्फलातिप्रसङ्गश्रान्तजन्तुविश्रामभूमिः—

निर्व०—(१)"वस,निवासे" संपूर्वः. धा०भ्वादिः कौ०पृ०४३२
व्युदपादि हि सरप्रत्ययान्तोऽयं शब्दः प्रागेव१ अनिट्. १५
( २ ) " सस्सि०" इति,तस्य तः. ७।४।४९॥ कौ०पृ०४१०
संहितायाम् अनुस्वारपाक्षिकपरसवर्णौ. ❀
अथ, कल्की क्षिप्रकारितया, दस्युवधे दक्षते. शीघ्रकारो भवतीति—
( दक्षः ).
( १ )"दक्ष,वृद्धौ शीघ्रार्थे च" पचाद्यच्. ❀ धा०भ्वादिः कौ० २०
पृ०४०६
पापतत्फलातिप्रसङ्गश्रान्तान् जन्तून् विश्रमयति स्वस्मिन् तेषां
विश्रान्तिं कारयतीति—

निरु०—४२४ शीघ्रार्थत्वादक्षधातोर्निमेषादस्यतो हनाः ।
येन स स्याच्छीघ्रकारी ( दक्ष ) इत्युच्यते बुधैः ॥ ३१८ ॥ २५

१ संवरेचों ।

(४२५) विश्रामो, (४२६) विश्वदक्षिणः, ॥

ॐ विश्रामाय नमः। ॐ विश्वदक्षिणाय नमः।

५ भा०— (विश्रामः).
(१)"धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया" भा०स०५४—५६।
इति सभापर्वणि. ❋
अपचरत्सु कथं हितकारी ? तत्राह विश्वदक्षिणः विश्वस्मिन्निष्टाऽनिष्ट-
कारिण्यविशेषेण दक्षत इति—(विश्वदक्षिणः).

१० निर्व०—(विश्रामः).
(१)"श्रमु, तपसि खेदे च" विपूर्वः.धा०दिवा० कौ०पृ०४५९
णिच्. उपधावृद्धिः. नच
(२)"नोदात्तोपदेश०" इत्यादिना तन्निषेधः; तस्य चिणि ञ्णिति- ७।
३।३४॥कौ०पृ०५४१
१५ कृति च विधानात्. प्रकृते तदभावात्. नाप्यमन्तत्वान्मित्त्वे,
(३) " मितां ह्रस्वः" ६।४।९२ ॥ कौ०पृ०४८२
(४)"वा चित्तविरागे" इत्यतो वेत्यनुवर्त्य,६।४।९१॥कौ०पृ०४९७
तस्य व्यवस्थितविभाषाश्रयणात्. ततः पचाद्यच्.णेर्लोपः. ❋
अपकारिष्वपि दयाक्षमत्वलक्षणेन दाक्षिण्येनापचरत्स्वपि हितकारितया,
२० विश्वस्मिन्निष्टानिष्टकारिणि जन्तावविशेषेण दक्षते शीघ्रकारी भवतीति
वा, वाजिमेधे विश्वं विश्वंभरालक्षणं द्विजेभ्यः प्रदेया दक्षिणाऽस्येति
वा,—(विश्वदक्षिणः).

निरु०— ४२५ पापानि तत्फलान्येव श्रान्त्वा भोक्तुं च ये जनाः।
तेषां विश्रामभूमित्वाद् (विश्रामः) परिकीर्तितः ॥ ३१९ ॥
२५ ४२६ अपकारिष्वपि क्षान्तो (विश्वदक्षिण) उच्यते।
यद्वाऽश्वमेधे पृथिवीं दक्षिणात्वेन दत्तवान् ॥ ३२० ॥
महीसुरेभ्यः कृत्स्नां यः स स्मृतो (विश्वदक्षिणः)।

श्लो०॥४६॥ ( ४२७ ) विस्तारः,

ॐ विस्ताराय नमः ।

भा०— " द्रुदक्षिभ्यामिनन् " उणा०पा०२कौ०पृ०६२१ ५
अपकारिष्वप्यतिक्षमत्वं हि दाक्षिण्यम् ?
( १ ) " स इमं सकलं लोकं प्रसादमुपनेष्यति " इति.
भा० आर० १९०—९६ ।
यद्वा, अश्वमेधे, विश्वं विश्वंभरा दक्षिणा अस्येति वा.
आरण्यपर्वणि,
( २ ) " ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् । वाजिमेधे
महायज्ञे विधिवत्कल्पयिष्यति " इति. ❋ भा०आ०१९१—१।१०
कलिप्रबलसंहारेण कृतं प्रवर्तयतोऽस्माद्वेदमर्यादा प्रथत इति—
( विस्तारः ).

निर्व०—( १ )"दक्ष, वृद्धौ शीघ्रार्थे च" धा०भ्वादिः कौ०पृ०४०६
( २ )" द्रुदक्षिभ्यामिनन्" इति, इनन्. उणा०पा०२कौ०पृ०६२१
णत्वम्.विश्वशब्दो व्युदपादि.पूर्वत्र तत्पुरुषः. अपरत्र व्युत्पादिता-१५
दक्षिणशब्दात्, स्त्रियामतष्टाप्. दीर्घः. ततो विश्वपूर्वो बहुव्रीहिः.
( ३ ) " गोस्त्रियोः०" १।२।४८॥कौ०पृ०१२९
इति, उपसर्जनह्रस्वः. ❋
कलिप्रबलसंहारेण कृतयुगप्रवर्तनात्, वेदमर्यादा विस्तीर्णा प्रथतेऽ २०
स्मादिति— ( विस्तारः ).
( १ ) " स्तॄञ्, आच्छादने " धा०क्र्यादिः कौ०पृ०४७५
विपूर्वः.

निरु०—४२७ प्रबलं यः कलिं हत्वा प्रवर्त्य च कृतं युगम्
॥३२१॥
विस्तार्य वेदमर्यादां स्थितो ( विस्तार ) उच्यते ।

## (४२८) स्थावरस्थाणुः,

ॐ स्थावरस्थाणवे नमः ।

भा०—"प्रथने वावशब्दे" इति, घञ्. यथा, ३।३।३३॥कौ०पृ०६५०

५ (१) "ततो धर्मविनाशो वै धर्मवृद्धिश्च भारत । भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा" इति. ❀भा०आ०१९१–७।
एवं धर्मे स्थावरीकृते शमे स्थास्यतीति–(स्थावरस्थाणुः).
(१) "स्थापयित्वा स मर्यादां स्वयंभूविहितां शुभाम्"

१० इत्यारण्यके. ❀ १९१–२ ।
अथ कार्तयुगानां हिताहितयोः.–

निर्व०–(२)"प्रस्रोऽयज्ञे" इत्यत स्र इति वर्तमाने, ३।३।३२॥कौ० पृ०६५०
(३) "प्रथने वावशब्दे" इति, ३।३।३३॥कौ०पृ० ६५०

१५ वौ अपादाने घञ्. वृद्धिः. रपरत्वम्. ❀
एवं स्थावरः स्थावरीकृतधर्मस्सन् शमे स्थास्यतीति स्थाणुश्चेति–
(स्थावरस्थाणुः)–एकं नाम.
(१) "ष्ठा" गतिनिवृत्तौ" परस्मै.धा०भ्वादिः कौ०पृ०४२४
(२) "टोस्तुः"

२० (३) "स्थोणुः" इति, बाहुलकात् उणा०पा०३कौ०पृ०६२६ भविष्यति णुः. अनिट्. भूयोऽप्ययमेव धातुः.
(४) "स्थेशभास०" इत्यादिना ३।२।१७५॥कौ०पृ०६०६ वरच्. अनिट्, कर्मधारयः. ❀
अथ, कार्तयुगानां हितमहितं च प्रमीयते व्यवस्थाप्यतेऽनेनेति–

२५ निरु०–४२८ स्थावरीकृत्य धर्मान्यश्शमे स्थास्यति नित्यशः॥३२२॥
येन केनाप्यचाल्यस्स (स्थावरस्थाणु)रुच्यते ।

१ हिताम् ।

{४२९ / ९९९} प्रमाणम्, (४३०) बीजमव्ययम्, ।

ॐ प्रमाणाय नमः । ॐ बीजायाव्ययाय नमः ।

भा०–(प्रमाणम्). व्यवस्थापकः. एतच्छक्तिप्रेर्पितं[1] हि,प्रत्यक्षाद्यपि प्रमाणं भवति? यथा,
(१) "तच्छीलमनुवर्तन्ते मनुष्या लोकवासिनः" इति. ❀ आर० १९१–३। एवं कलिकालाद्यवग्रहावसानेषु पुनःपुनर्धर्मप्ररोहणात्–(बीजमव्ययम्). ❀ ५ १०

निर्व०–(प्रमाणम्).
(१) "माङ्, माने" प्रपूर्वः. धा०जुहो० कौ०पृ० ४५०
करणे ल्युट्. अनः.
(२) "कृत्यचः" इति. णत्वम्. ८।४।२९॥कौ०पृ० ५५६
(३) "लिङ्गमशिष्यम्" इत्यादि. ॥ महाभाष्यम् ॥ १५
एतच्छक्त्या हि, प्रत्यक्षाद्यपि प्रमाणम्? ❀
इत्थं कलिकालाद्यवग्रहावसाने पुनः पुनः धर्मप्ररोहणात् अव्ययम् अविनाशम् बीजं कारणम् इति–
(बीजमव्ययम्)-एकन्नाम.
(१) "जनी, प्रादुर्भावे" विपूर्वः. धा०दिवा०कौ०पृ० ४५४
(२) "उपसर्गे च संज्ञायाम्" इति, डः. टिलोपः. ३।२।९९॥ २०
कौ० पृ०५८९
(३) "अन्येषामपि दृश्यते" ६।३।१३७॥ कौ०पृ० १६५
इति, वेरिकारस्य दीर्घः.

निरु०–४२९ हिताहितस्थापकत्वात्(प्रमाणं)स्यात्कृतादिषु॥३२३॥
४३० यो वै कलियुगस्यान्ते मुहुर्धर्मप्ररोहणम् । करोति भक्तर- २५
क्षार्थं सोऽच्यते (बीजमव्ययम्) ॥ ३२४ ॥

१ प्रेरितम् ।

(४३१) अर्थो,

ॐ अर्थाय नमः ।

भा०—एकभक्तेर्विशिष्टाधिकारिणस्सम्यग्ज्ञानिनस्स्वयंप्रयोजनत्वात्-
५ (अर्थः). अर्तेः,
(१) "उपिकुपिगार्तिभ्यस्थन्" इति, थन् प्रत्ययः. यथा, उणा० पा० २ कौ०पृ० ६१८
(२)"ज्ञानवान्मां प्रपद्यते । वासुदेवस्सर्वम्"इति. ❀ गी० ७–१९।
मन्दसुकृतेनार्थार्थिना निर्व्याजं नार्थ्यत इति—

१० निर्व०—बवयोरभेदः. विशेषणे,
(४) " इण्, गतौ" विपूर्वः. धा०अदा० कौ०पृ० ४४१
(५) "एरच्" इति भावे अच् गुणा—३।३।५६।। कौ०पृ०६५३
यादेशौ, वेरिकारस्य यण् यकारः. नञ्पूर्वो बहुव्रीहिः.
नञो नलोपः.
१५ (६) " लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्यम् ॥
एकभक्तैः विशिष्टाधिकारिणः सम्यग्ज्ञानिनः स्वयंप्रयोजनतया, तेनार्यते प्राप्यते इति—
(अर्थः).
(१) " ऋ, गतौ" धा० जुहो० कौ०पृ०४५२
२० (२) " उपिकुपिगार्तिभ्यस्थन्" इति, थन्. उणा०पा०२ कौ० पृ० ६१८
गुणो रपरः. अनिट्. मन्दसुकृतेनार्थार्थिना तद्व्याजेन अभ्यर्थनात्; निर्व्याजं नार्थ्यते न प्रार्थ्यत इति—

निरु०—४३१ परमैकान्तिभिर्नित्यमीपणत्रयवर्जितैः ।
५ स्वयंप्रयोजनतया प्राप्यमाणो(ऽर्थ)उच्यते ॥ ३२५ ॥

(४३२) ऽनथा,

ॐ अनर्थाय नमः ।

भा०—(अनर्थः)—स ह्यर्थव्याजेनेनमर्थयते यथा, ५
(१) "अर्थमेकपिङ्गः" इति.वि०ध०४३—४७।
(२) "ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः" इति च. ❀ भा०शां०३४२—३५।.
सदा सर्वेभ्यस्सर्वथा दानेप्यक्षयत्वात्, महान्तः शङ्खपद्मादिनिधिरत्नाकररोहणगिरिवरादयः कोशाः भाण्डागाराणि, अस्येति—

१०

निर्व०—(अनर्थः).
(१) "अर्थ, उपयाच्ञायाम्" धा०चुरा०कौ०पृ०४९०
चुरादौ कथादिः णिच्. अतो लोपः. ततः,
(२) "अकर्तरि च कारके०" इति३।३।१९॥कौ०पृ०६४७
कर्मणि घञ्. यदा १५
(३) "नानुबन्धकृतमसारूप्यम्" ॥परिभाषेन्दुशेख०॥
इति न वासरूपविधिः; तदा तदनुवृत्तौ,
(४) "एरच्" इत्यच्. यदि तु, ३।३।५६॥कौ०पृ०६५२.
(५) "बहुलमेतन्निदर्शनम्" चुरा०ग०सू०कौ०पृ० ४९१
इत्यस्य व्याख्याविकल्पनात्, अनित्यण्यन्ताश्चुरादयः; तदा तदभावे तेनैव वा घञ्.इत्थं परत्रापि बोध्यम्.नञ्समासः नञो नलोपः.नुट्. ❀ २०
सदा सर्वेभ्यस्सर्वथा दानेप्यक्षयत्वात्, महान्तः शङ्खपद्मादिनिधिरत्नाकररोहणभूधरादयः कोशाः भाण्डागाराण्यस्येति—

निरु०—४३२ अर्थार्थिनाल्पभाग्येन निर्व्याजं नार्थ्यते यतः।
तस्मा (दनर्थनामा) सौ वेदविद्भिः प्रकीर्तितः॥३२६॥

( ४३३ ) महाकोशो, (४३४)महाभोगो,(४३५) महाधनः, ॥

ॐ महाकोशाय नमः।ॐ महाभोगायनमः।ॐ महाधनाय नमः।

५ भा०—( महाकोशः )—अर्थसाध्यः
कामभोगोपि महानस्मादिति—( महाभोगः ).
( १ )" लभते च ततः कामान् मयैव विहितान् हितान्" इति. ❀
भग० गी० ७—२२।
अनिरूप्यातिकृपणप्रदेयमनन्तं धनमस्येति—
१० ( महाधनः )—सर्वंचैतत् प्रह्लादः प्राह,

निर्व०—( महाकोशः ).कुशिस्सौत्रः. ततो देवसेपादिवत् पचाद्यच्.
( १ ) " हलश्च " इति, घञ्वा. ३।३।१२१॥कौ० पृ० ६६३
गुणः. व्युत्पादि हि महच्छब्दः ? अन्यच्च- एवमुत्तरत्रापि. ❀
महान्, भोगः अर्थसाध्यः कामोपभोगोपि, अस्मादिति—
१५ ( महाभोगः).
( १ ) " भुज, पालनाभ्यवहारयोः" धा० रुधा० कौ० पृ० ४७१
भावे घञ्. गुणः.
( २ ) " चजोः०" इति, कुत्वम्. ७।३।५२॥कौ० पृ० ५६०
गः. अन्यत् प्राग्वत्. ❀
२० महदनन्तम्, अतिकृपणप्रदेयं धनं राः, अस्येति—
( महाधनः ).

निरु०—४३३ शङ्खपद्मादिनिधयो महान्तो रोहणो गिरिः ।
कोशा भाण्डगृहा यस्य ( महाकोशः ) स उच्यते॥३२७॥
४३४ अर्थसाध्यः कामभोगो यस्मादेषां महानिति ।
२५ ( महाभोगः ) स विज्ञेयो ह्यर्थार्णश्चिन्तितार्थदः ॥३२८॥
४३५ अनिरूप्यातिकृपणप्रदेयं धनमक्षयम् ।
यस्यैवास्तीति सततं स ( महाधन ) ईरितः॥३२९॥

श्लो० ॥४७॥ (४३६) अनिर्विण्णः,

ॐ अनिर्विण्णाय नमः ।

भा०—(१)"मरीचिमिश्रैर्दक्षेण तथैवान्यैरनन्ततः । धर्मः प्रशस्त-
थाचान्यैरर्थः कामस्तथापरैः" इत्यादि. वि०पु०१—१८—२३। ५
एवं सृष्ट्यादेः तत्तदिष्टदानस्य चासकृत्प्रयुक्तस्यापि, संसारिषु वि-
षयोन्मादादसंमुखीनेषु वैफल्येपि, पुनस्तत्तदावर्जनदुराशया—
(अनिर्विण्णः)—अनलसः; अत एव ह्यस्यानाद्यन्तो जगद्व्यापारः१
(१) "अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इति. ❀ १०
वि०पु०१—९—१।

निर्व०—(१) "धन, धान्ये" छान्दसश्चायम्. धा०जुहो०
कौ०पृ०४५२
जौहोत्यादिकः. पञ्चमो ह्ययं वेदः! तथाप्ययं भाषायामपि प्रयुज्यते.
तादृशस्य
(२) "ऋ, सृ, गतौ" इत्यस्य, धा०जुहो०कौ०पृ०४५२ १५
(३)"बहुलंछन्दसि"इत्येव इत्वसिद्धौ,७।४।७८॥कौ०पृ०७१०
(४) "अर्तिपिपर्त्योश्च" इति श्लावि—७।४।७७॥कौ०पृ०४४९
त्त्वविधानस्य पाक्षिकभाषाप्रयोगज्ञापकस्य सामान्यापेक्षत्वात्.
पचादिलक्षणोऽच्. शेषं पूर्ववत्. ❀
इत्थं सृष्ट्यादेस्तत्तदिष्टदानस्याप्यसकृत्प्रयुक्तस्य,संसारिषु विषयो- २०
न्मादादसंमुखीनेषु वैफल्येपि, पुनस्तदावर्जनदुराशया अनुच्छिन्नज-
गद्व्यापारत्वेन, निर्विण्णोऽलसो नेति—
(अनिर्विण्णः).

निरु०—४३६ (अनिर्विण्णो) जागरूको जगद्व्यापारतन्त्रनी ।
शिशुमाराकृतिनया ताराप्रेण सर्वदा ॥ ३३० ॥ २५

(४३७) स्थविष्ठो,

ॐ स्थविष्ठाय नमः।

भा०—अथानिर्वेदोदाहरणं, स्वाध्यायब्राह्मणोत्तमानुवाके वैष्णवे
५ च पुराणे प्रसिद्धम्. ताराशिशुमाराकृतिः ताराप्रकारेण स्थौल्यात्-
(स्थविष्ठः); यथा,
(१)"तारामयं भगवतः शिंशुमाराकृति, प्रभोः" वि०पु०२—९—१।
इति. ❁

निर्व०—(१) "विद,विचारणे" निर्पूर्वः.धा०रुधा०कौ०पृ०४७१
१० (२)"गत्यर्थ०" इत्यादिना कर्तरिक्तः.३।४।७२॥कौ०पृ०५९६
भवन्ति हि, अविवक्षितकर्माणोप्यकर्माणः? निहतत्वान्नेट्.
(३)"रदाभ्यां निष्ठातो नः पूर्वस्य च दः" ८।२।४२॥कौ०पृ०५८६
इति प्रकरणे,
(४) "नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्याम्" ८।२।५६॥ कौ०
१५ पृ०५८९
इति, वैकल्पिकं निष्ठातस्य नत्वम्; पूर्वस्य च दकारस्य. रौधादिकेनो-
न्दिना साहचर्यात् तादृशस्य विन्देरेव ग्रहीतुमुचितत्वात्.
(५)"कृत्यचः" इत्यचः परत्वाभावात् ८।४।२९॥कौ०पृ०५५६
अप्राप्ते णत्वे,
२० (६)"निर्विण्णस्योपसंख्यानम्" इति, ८।४।२९॥कौ०पृ०५५६
औपसंख्यानिको णः. पूर्वस्य तु नकारस्य ष्टुत्वेन, णः नञ्-समासः.
नञो नलोपः. ❁
अथ, अनिर्वेदोदाहरणम्- तत्र श्रुतिपुराणप्रसिद्धशिंशुमाराकृतिताराप्र-
कारेणातिस्थूल इति—
२५ (स्थविष्ठः).

निरु०—४३७ स्थौल्यात् (स्थविष्ठ)स्तंभोक्तः समार्णः पापनाशनः।

(४३८) भूर्, (४३९) धर्मयूपो,

ॐ भुवे नमः। ॐ धर्मयूपाय नमः।

भा०— ध्रुवानुबन्धेन सर्वाधारो भवतीति— ५
(भूः).
(१) "तस्य पुच्छे ध्रुवः स्थितः" इति,वि०पु०२।
धर्मतत्त्वं शिरोवयवतया यौतीति—
(धर्मयूपः).
(१) "यु ,मिश्रणे" धा०अदा० कौ०पृ०४३९ १०

निर्व०— (१) "स्थूल, परिबृंहणे" धा०चुरा० कौ०पृ०४९०
चुरादौ कथादिः णिच्- अतो लोपः ततः पचाद्यच्. णिलोपः
एवं निष्पन्नात् स्थूलशब्दात् आतिशायनिक इष्ठन्. तत्र,
(२)"स्थूलदूर०" इत्यादिना यणादिपर-६।४।१५६॥कौ०पृ०३४२
लोपः. पूर्वस्य च गुणः. अव्. ❀ १५
ध्रुवानुबन्धेन सर्वाधारो भवतीति—(भूः).
(१) "भू, सत्तायाम्"धा० भ्वादिः कौ०पृ०३६८
(२) "भुवः संज्ञान्तरयोः" ३।२।१७९॥ कौ०पृ०६०७
इति, संज्ञायां क्विप्,तस्य सर्वस्य लोपः. ❀
स एव धर्मं धर्मतत्त्वं शिरोवयवतया यौति मिश्रयतीति—(धर्मयूपः).२०
(१)"यु, मिश्रणे" अन्तर्भावितण्यर्थः.धा० अदा०कौ०पृ०४३९
(२)"पानीविषिभ्यः पः" "च्युवःकिच्च" उणा०पा० ३कौ०पृ०६२६

निरु०—४३८आचानपादिसंबन्धात् सर्वाधारतया तया॥३३१॥
भवतीति च (भूः) प्रोक्तो भक्तानां भूमिदो मनुः।
४३९ उत्तमाङ्गतया धर्मतत्त्वं यौतीति सर्वदा॥ ३३२॥ २५
(धर्मयूप) स्समाख्यातो ह्यष्टाङ्गो धर्मनायकः।

( ४४० ) महामखः, । ( ४४१ ) नक्षत्रनेमिर्,

ॐ महामखाय नमः । ॐ नक्षत्रनेमये नमः ।

५ भा०— " कुयुभ्याश्च" इति यप्रत्ययः. बहुलवचनादीर्घश्च.
( २ ) " धर्मो मूर्धानमाश्रितः"
( ३ ) " तच्छिरो धर्मः" इति च. ❀
धर्मशरीरतया पूज्यो यज्ञोऽस्यावयव इति— ( महामखः ). यथा,
( १ ) " यज्ञो धर्मश्च विज्ञेयः" इति. ❀
१० ज्योतिश्चक्रनयतीति—
( नक्षत्रनेमिः ). " नियो मिः " इति मिः; यथा,

निर्व०— इति वर्तमाने, "कुयुभ्याश्च" इति,वः. कित्. उणा०पा०२
कौ० पृ०६२६
( २ ) " श्युकः किति" इति, नेट्. बहुलवचनात् ७।२।११ ॥
१५ कौ० पृ० ४२५
दीर्घः. कित्त्वान्न गुणः. धर्मशब्दो हि धरतेः
( ४ ) " अर्तिस्तुसुहु० " उणा० पा०२ कौ०पृ०६२३
इत्यादिना मनि व्युत्पादि? ❀
महान् पूज्यः, मखो यज्ञोऽवयवोऽस्येति—
२० (महामखः).मखिर्गत्यर्थः. पचाद्यच्. महच्छब्दोन्यत्रापि अन्यत्र ज्यो-
तिषां निर्वाहकतया, नक्षत्राणि ज्योतींषि नयति निर्वहतीति—
( नक्षत्रनेमिः )

निरु०—४४०धर्मदेहतया पूज्यो यज्ञोऽस्यावयवो यतः ॥ ३३३ ॥
ततो ( महामखः ) प्रोक्तो ह्यष्टार्णः कर्मकारकः ।
२५ ४४१ यन्नक्षत्रात्मकं चक्रं ज्योतीरूपमनामयम् ॥ ३३४ ॥
यस्मिन्नित्यं भ्रामयति भ्रमन्तमनुयाति च ।
( नक्षत्रनेमि ) र्विज्ञेयो नवार्णो भ्रमनायकः ॥ ३३५ ॥

( ४४२ ) नक्षत्री,

ॐ नक्षत्रिणे नमः ।

भा०–(१)"अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः" इति. वि०पु०२–१२–२८। ५
(२) "एष भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् । भ्रमन्तमनुतं यान्ति नक्षत्राणि च चक्रवत्" इति. ❀वि०पु०२–९–२।
(१)"शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि । नारायणो नयन्धाम्नां तस्याधारः स्वयं हृदि" इति–वि०पु०२–९–४।
( नक्षत्री ). ❀ एवमखिलभुवनभारमनायासेन क्षमते वहतीति– १०

निर्व०–(१)"णीञ्, प्रापणे"णो नः.धा०भ्वादिः कौ०पृ०४२२
(२) "नियो मिः" इति, मिः. गुणः.अनिट्.उणा०पा०४कौ०पृ०६३४
प्रकरणान्तरेपि तु, अयं धात्वन्तरादपि व्युत्पादयिष्यते. १५
(३) " णक्ष, गतौ" नः.धा०भ्वादिः कौ०पृ०४०९
(४) " अमिनक्षियजिवधिपतिभ्योऽत्रन्" उणा०पा०३ कौ०पृ०६२९
इति,अत्रन्. ❀
स्वस्याधारतया नक्षत्रं शिशुमाराकृति ज्योतीरूपम् अस्मिन्नस्तीति– २०
( नक्षत्री ).
(१) " णक्ष,गतौ" नः ततः, धा० भ्वादिः कौ०पृ०४०९
प्रागिव व्युत्पन्नान्नक्षत्रशब्दात् मत्वर्थीयः– ❀ अतइनिः.
(२) " यस्य० " इति, लोपः. इन्नन्तलक्षणो–दीर्घ इत्यादि ६।४।१४८॥ कौ०पृ०५६ ❀
एवमखिलभुवनभारमनायासेन क्षमते सहते वहतीति– २५

निरु०–४४२ शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि ।
तदस्यास्ति स ( नक्षत्री ) समार्णो लोकपावनः ॥ ३३६ ॥

(४४३) क्षमः, (४४४) क्षामः,

ॐ क्षमाय नमः । ॐ क्षामाय नमः ।

भा०— (क्षमः).
(१) " यस्माज्ज्योतींषि वहति प्रवहस्तेन स स्मृतः" वि० पु० २—१२—२२ । ५
इति. ❀
अवान्तरक्षये नक्षत्रान्तरैः क्षीणस्तिष्ठतीति— (क्षामः).
(१) " क्षै, क्षये " धा० भ्वादिः कौ० पृ० ४२४ १०
(२) " क्षायो मः" यथा, ८।२।५३ ॥ कौ० पृ० ५८८
(३) "तारकाशिंशुमारस्य नास्तमेति चतुष्टयम्" वि० पु० २—९—५।
इति.

निर्व०— (क्षमः).
(१) "क्षमूष्, सहने" पचाद्यच्. ❀ धा० भ्वादिः कौ० पृ० ३९९ १५
अवान्तरक्षये नक्षत्रान्तरैः क्षामः क्षीण इति— (क्षामः).
(१) " क्षै, क्षये " धा० भ्वादिः कौ० पृ० ४२४
(२) " आदेच उपदेशेऽशिति " इत्येच आत्वम्. ६।१।४५॥ कौ० पृ० ४२३
(३) " गत्यर्थ०" इत्यकर्मकात् कर्तरि क्तः. ३।४।७२॥ कौ० पृ० ५९६ निष्ठात इत्यनुवृत्तौ, २०
(४) " क्षायो मः " इति, मः. ८।२।५३ ॥ कौ० पृ० ५८८
अनिट्. ❀

निरु०— ४४३ अनायासेन निखिलभारं च भुवनस्य यः ।
सहते स (क्षमः) प्रोक्तः षड्वर्णः क्षान्तिदायकः ॥ ३३७॥ २१
४४४ अवान्तरक्षये केश्चित् क्षीणस्तारागणैः स्मृतः ।
(क्षामो) ध्रुवसमीपस्थश्चतुर्नक्षत्रसंयुतः ॥ ३३८ ॥

## (४४५) समीहनः,॥

ॐ समीहनाय नमः ।

भा०—(४) "यावन्मात्रे प्रदेशे तु मैत्रेयावस्थितो ध्रुवः।क्षयमायान्ति तावत्तु भूमेराभूतसंप्लुव " इति. ॐ वि०पु०२—८—९७ । ५
अथ सृष्टौ सर्वान् सर्वदा स्वेषु अधिकारेषु समीहयतीति—
(समीहनः).
(१) " त्वां भूतान्युपपर्यावर्तन्ते " इति. आरणम् २ ।
उद्योगे,
(२) "पृथिवीञ्चान्तरिक्षञ्च दिवं च पुरुषोत्तमः । विचेष्टयति भू- १०
तानि क्रीडन्निव जनार्दनः " इति. भा०उ०६७—१० ।
(३) " ध्रुवो यत्र प्रतिष्ठितः। एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि
भास्वरम् " इत्यारभ्य, वि०पु०२—८—९८ ।
ध्रुवज्योतिर्मेघवृष्टयादिपरम्परया
(४) " इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता " १५
(५) " ततश्चाज्याहुतिद्वारा पोषितास्ते हविर्भुजः " वि०पु०
२—८—१०९ ।
इति यज्ञतत्साधनतत्फलावधित्वेन प्रतिपादितः; अतः—

निर्व०—अथ, सृष्टान् सर्वान् सर्वेष्वधिकारेषु समीहयति प्रेषयतीति— २०
(समीहनः).
(१) " ईह, चेष्टायाम् " धा०भ्वादिः कौ०पृ०४०७
संपूर्वः. णिच्. नन्द्यादिल्युः; ल्युड्वा बाहुलकादिति
अनः. णिलोपः. यज्ञतत्साधनतत्फलसाधनतया प्रतिपादित-
तया यज्ञरूपोऽयमिति—

निरु०—४४५ स्वस्याधिकारे सर्वान् हि यस्समीहेत सृष्टिषु । २५
(समीहन) ससंदिज्ञेयस्त्वष्टार्णः कार्यदायकः ॥ ३३९ ॥

श्लो० ॥ ४८ ॥ {४४६ / ९७१} यज्ञ, ( ४४७ ) इज्यो,

ॐ यज्ञाय नमः । ॐ इज्याय नमः ।

भा०—( यज्ञः ).

५ (१) "यजयाचयतविच्छप्रच्छरक्षोनङ्" ३।३।९०॥कौ०पृ०६५८

( २ ) "यज्ञो वै विष्णुः" इति. ॥य०वे० ।

कामाधिकारैरिन्द्रादिद्वारा इज्यामर्हतीति—( इज्यः ).

( १ ) "ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान्. ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते" भा०शा०३४६—२९ ।

१० ( २ ) "येऽप्यन्यदेवताभक्ताः" गी०१०—२३ ।

( ३ ) "वर्णाश्रमाचारवतो" इत्यादि. ॥ म०स्मृ० ।

निर्व०—( यज्ञः ).

(१)"यज,देवपूजासङ्गतिकरणदानेषु"भ्वादिः,धा०भ्वादिःकौ०पृ०४३२

(२)"अकर्तरि च कारके०" इत्यनुवृत्तौ,३।३।१९॥कौ०पृ०६४७

१५ ( ३ ) "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति, नङ्. निहतत्वान्नेट् ३।३।९०॥कौ०पृ० ६५८

( ४ ) "स्तोश्चुनाश्चुः" इति, चुत्वेन नस्य ञः. ॥ ८।४।४०॥ कौ०पृं०१८

इन्द्रादिद्वारा इज्यां कामाधिकारयजनम् अर्हतीति—

२० ( इज्यः ). धातुः. प्राग्वत्. ततस्त्रियामित्यनुवृत्तौ,

(१)" व्रजयजोर्भावे क्यप्" इति, स्त्रियां- ३।३।९८॥कौ०पृ०६५९
भावे क्यप्. संप्रसारणसंज्ञायाम् प्रागुक्तायाम्,

( २ ) "वचिस्वपियजादीनां किति" ६।१।१५॥ कौ०पृ०४३२
इति, संप्रसारणे. यकारस्य इकारः.

२५ निरु०—४४६ यज्ञाराध्यतया ( यज्ञः )—
४४७ ( इज्यः )कर्मभिरर्चितः ॥ ३४० ॥

१ इन्द्रा ।

(४४८) महेज्यश्च,

ॐ महेज्याय नमः।

भा०—अकामहता महती इज्या अस्याव्यवधानेनेति—
(महेज्यः). ५
(१) "ये तु सर्वाणि कर्माणि" गी०१२—६।
(२) "मयि सर्वाणि कर्माणि" इत्यादि. ❀ गी०३—३०।

निर्व०—(२) "संप्रसारणाच्च" इति, पूर्वरूपम् ६।१।१०८॥
कौ०पृ०६०
एकादेशः. कित्त्वाद्गुणः. अदन्तलक्षणटाप्. दीर्घः. १०
एवन्निष्पन्नात् इज्याशब्दात्,
(३) "तदर्हति" इत्यधिकारे, ५।१।६३॥कौ०पृ०३०१
(४) "दण्डादिभ्यो यः" इति, अर्हार्थे यस्तद्धितः. ५।१।६६॥
कौ०पृ०३०१
अथवा. "छन्दसि च" इति प्रातिपदिकप्रकृतिकः. अयं हि, १५
पञ्चमवेदः!
(५) "यस्य०" इत्यालोपः ६।४।१४८॥कौ०पृ०५६
(६) "हलो यमां यमि लोपः" इति, ८।४।६४॥कौ०पृ०१०
पाक्षिकः प्रथमयलोपः. ❀
तथा महती अकामहता इज्या अव्यवधानेन यजनमस्येति— २०
(महेज्यः)
प्राग्वदेव धातुप्रत्ययादि. सर्वं यप्रत्यय वर्जम्. व्युत्पादितान्-
महतश्शतृवदित्यातिदेशिकः स्त्रियाम् उगिल्लक्षणो ङीप्. ततः,
(१) "स्त्रियाः पुंवद्०" ६।३।३४॥कौ०पृ०१६०
इत्यादिना पुंवद्भावः ततो महत आत्वादि. सांहितिक आद्गुणः. २५

निर्व०—४४८ इज्या हि महती यस्य स (महेज्य) उदाहृतः।

( ४४९ ) क्रतुः,

ॐ क्रतवे नमः ।

भा०—पञ्च महायज्ञाः औपासनादयः; सप्त पाकयज्ञाः श्रौताग्निहोत्रा-
५ दयः; सप्त हविर्यज्ञाश्च यज्ञपदेनोपात्ताः अग्निष्टोमादयः; सप्त सोमसंस्थाः
क्रतवः, तैराराध्यः
क्रियते इति—
( क्रतुः ). " कृञः कतुः " इति कतुः.उणा०पा०१कौ०पृ०६१४
दीर्घकालबहुयजमानकमासचोदनालक्षणं सत्रम्, तत्र चाराध्यतया
१० सततं सीदतीति—

निर्व०—( २ ) " गोस्त्रियोः० " १।२।४८॥कौ०पृ०१२९
इति, उपसर्जनह्रस्वः. ❀
देवयज्ञादयः पञ्च महायज्ञाः; औपासनादयस्सप्त पाकयज्ञाः ;
अग्निहोत्रादयः सप्त हविर्यज्ञाः; अग्निष्टोमादयस्सप्त सोमसंस्थाः
१५ क्रतवः; ते च परिगणितयज्ञाः; तैर्यज्ञक्रतुभिराराध्यः क्रियत इति—
( क्रतुः ).
( १ ) " डुकृञ्, करणे " धा०तना०कौ०पृ०४७३
( २ ) " कृञः कतुः " इति, कतुः. कित्त्वाद्गुणः. उणा०पा०१
कौ०पृ०६१४
२० ( ३ )" इकः० " इति यण् ऋकारस्य रेफः.❀६।१।७७॥कौ०
पृ०८
दीर्घकालबहुयजमानकमासोपवासचोदनालक्षणे सत्रे समाराध्यतया,
२५ सततं सीदति संगच्छत इति—

निरु०—४४९ अग्निष्टोमादयस्सप्त संस्थाः क्रतव ईरिताः ॥ ३४१ ॥
आराध्यः क्रियते [illegible] तः ।

( ४५० ) सत्रम्, ( ४५१ ) सतांगतिः, ।

ॐ सत्राय नमः । ॐ सतांगतये नमः ।

भा०—( सत्रम् ). सीदतेः गतिकर्मणः, ५
(१)"गुधुवीपचिवचियमिसदिक्षदिभ्यस्त्रः"उणा०पा०४कौ०पृ०६४०
एवमेष प्रवृत्तिधर्मनिष्ठानां गतिः. ❀
अथ निवृत्तिधर्मनिरतानां—( सतांगतिः ); तत्रैव,
( १ ) "निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम् । स्थानं तत्परमं विप्र पुण्यपापपरिक्षये " इति. ❀ वि०पु०२—८—९९ । १०

निर्व०—( सत्रम् ).
(१)"षद्लृ, विशरणगत्यवसादनेषु" परस्मै.धा०भ्वादिःकौ०पृ०४२०
( २ ) " गुधुवीपचिवचियमिसदिक्षदिभ्यस्त्रः " उणा०पा०४
कौ०पृ०६४० इति, त्रः. अनिट्.
( ३ ) " खरिच " इति, चर्त्वम्. ८।४।५५॥कौ०पृ०२० १५
दस्य तः. आविष्टलिङ्गोयमि"ति"दि. एवमेष प्रवृत्तिधर्मनिष्ठानां गतिः.
अथ सतां निवृत्तिधर्मनिरतानां गतिः प्राप्य इति—
( सतांगतिः ). गतिशब्दो हि,
( १ ) " *गम्लृ, गतौ* " *परस्मै.धा०भ्वादिः कौ०पृ०४३०*
( २ ) " अकर्तरि च कारके० " इत्यनुवृत्तौ, ३।३।११९॥कौ० २०
पृ०६४७ स्त्रियां कर्मणि क्तिनि निहलत्वादिडभावे,
( ३ ) " अनुदात्तोपदेश०" इत्यादिना अनुनासिक- ६।४।३७।
कौ०पृ०४३५

निरु०—४५० बहुकालानेकयजमानके विधिचोदिते ॥ ३४२ ॥
सत्रे सदाराध्यतया ( सत्रं )स्यात्सीदतीति च । २५
४५१ प्रवृत्तिधर्मनिष्ठानां गतिर्यस्स ( सतांगतिः ) ॥ ३४३ ॥
निवृत्तिधर्मनिष्ठानां गतिर्यस्स ( सतांगतिः ) ।

{४५४ / ८२८} सर्वज्ञो,

ॐ सर्वज्ञाय नमः ।

भा०–( १ ) " अन्तर्निविष्टभावं च " मन्त्रे च,
( २ ) " आत्मध्यानपरायणाय " इति.
( ३ ) " शान्तं हृत्पद्मार्पितमानसम् " इति च. ❀
तथा सर्वात्मनाऽऽत्मानं जानातीति–( सर्वज्ञः ).
( १ ) " युञ्जानं च स्वमात्मानं परस्मिन्नव्यये पदे " इति. ❀ ५

निर्व०–( १ ) " अत, सातत्यगमने " धा०भ्वादिः कौ०पृ०३८३
अतो मनिनि व्युत्पादितो ह्यात्मशब्दः१ पूर्ववत्, १०
( २ ) " वृतु, वर्तने " निपूर्वः.धा०भ्वादिः कौ०पृ०४१२
( ३ )"गत्यर्थ०" इत्यादिना कर्तरि क्तः.३।४।७२॥कौ०पृ०५९६
( ४ ) " उदितो वा"इति, क्त्वायामिड्विकल्पात्, ७।२।५६॥कौ० पृ०६६८
( ५ )"यस्य विभाषा" इति निष्ठायां नेट्. अपरत्र, ७।२।१५॥ १५ कौ०पृ०५८७
( ६ ) " मुच्लृ, मोक्षणे " विपूर्वः. धा०तुदा०कौ०पृ०४७०
ततः प्राग्वदेव अविवक्षितकर्मतया, अकर्मकात् क्तः.
इह कर्मणि वा अनिट्.
( ७ ) " चोः कुः " इति झलि कुत्वम्. क्तः उभयत्रापि अगुणः. २०
ततो–८।२।३०॥कौ०पृ०६८
बहुव्रीहिः. दीर्घः. ततो नान्तलक्षणो दीर्घ इत्यादि.
तथा आत्मानं सर्वं सर्वात्मानं जानातीति–( सर्वज्ञः ).
( १ ) " ज्ञा, अवबोधने " धा०क्र्यादिः कौ०पृ०४७७

निरु०-४५४ सर्वात्मना स्वमात्मानं यश्च जानाति केवलम्।३४६।२५
( सर्वज्ञ )स्स तु विज्ञेयस्समार्णो ज्ञानदो मनुः ।

१ सर्वात्मानं, सर्वात्मनि । २ युञ्जानश्च ।

( ४५२ ) सर्वदर्शी, ( ४५३ ) निवृत्तात्मा,

ॐ सर्वदर्शिने नमः । ॐ निवृत्तात्मने नमः ।

५ भा०—सर्वौ द्विविधावपि धर्मौ अध्यक्षयितुं शीलमस्येति—( सर्वदर्शी ).
( १ ) " सुप्यजातौ णिनिस्ताच्छील्ये " इति, णिनिः. ❀
३।२।७८॥कौ०पृ०५८२
तत्र निवृत्तिधर्माचार्यो नरनारायणादिः, परमवैराग्य-
ख्यापनाय विषयेभ्यः प्रत्याहृतमनाः—( निवृत्तात्मा )—तद्व्याने,

१० निर्व०—लोपे च व्युत्पादितः. प्रागेव असेश्शतरि व्युत्पादितात् सच्छ-
ब्दात् आम्. संहितायाम् अनुस्वार पाक्षिकपरसवर्णावुक्तौ. ❀
सर्वौ द्विविधावपि प्रवृत्तिनिवृत्तिधर्मौ द्रष्टुमध्यक्षयितुं शीलमस्येति-
( सर्वदर्शी ).
( १ ) " दृशिर्, प्रेक्षणे " धा०भ्वादिः कौ०पृ०४३०
१५ ( २ ) " सुप्यजातौ णिनिस्ताच्छील्ये " इति, णिनिः. ३।२।७८॥
कौ०पृ०५८२
गुणो रपरः सर्वशब्दो व्युत्पादितः. तत इन्नन्तलक्षणो दीर्घ इत्यादि.
तत्र निवृत्तिधर्माचार्यो नरनारायणादिः.
निवृत्तो विमुक्तो वा, परमवैराग्यप्रख्यापनाय विषयेभ्यः
२० प्रत्याहृतः, आत्मा— मनः, अस्येति—
( निवृत्तात्मा ).

निरु०—४५२ धर्माधर्मौ च तौ सर्वावध्यक्षयितुमादरात्॥ ३४४ ॥
सर्वदा शीलमस्येति ( सर्वदर्शी ) ततः स्मृतः ।
४५३ निवृत्तिधर्माचार्यत्वात् विषयेभ्यो निवृत्तिमत् ॥ ३४५ ॥
२५ मनो यस्य ( निवृत्तात्मा ) नरनारायणात्मकः ।

१ विमुक्तात्मा ।

{४५४ / ८२८} सर्वज्ञो,

ॐ सर्वज्ञाय नमः ।

भा०—( १ ) " अन्तर्निविष्टभावं च " मन्त्रे च,
( २ ) " आत्मध्यानपरायणाय " इति.
( ३ ) " शान्तं हृत्पद्मार्पितमानसम् " इति च. ❀
तथा सर्वात्मनाऽत्मानं जानातीति–( सर्वज्ञः ).
( १ ) " युञ्जानं च स्वमात्मानं परस्मिन्नव्यये पदे " इति. ❀

निर्व०—( १ ) " अत, सातत्यगमने " धा०भ्वादिः कौ०पृ०३८३
अतो मनिनि व्युत्पादितो ह्यात्मशब्दः[1] पूर्वत्र,
( २ ) " वृतु, वर्तने " निपूर्वः.धा०भ्वादिः कौ०पृ०४१२
( ३ )"गत्यर्थे०" इत्यादिना कर्तरि क्तः.३।४।७२॥कौ०पृ०५९६
( ४ ) " उदितो वा"इति, क्त्वायामिड्विकल्पात्, ७।२।५६॥कौ०
पृ०६६८
( ५ )"यस्य विभाषा" इति निष्ठायां नेट्. अपरत्र, ७।२।१५॥ १५
कौ०पृ०५८७
( ६ ) " मुच्लृ, मोक्षणे " विपूर्वः. धा०तुदा०कौ०पृ०४७०
ततः प्राग्वदेव अविवक्षितकर्मतया, अकर्मकात् क्तः.
इह कर्मणि वा अनिट्.
( ७ ) " चोः कुः " इति झलि कुत्वम्. क्तः उभयत्रापि अगुणः. २०
ततो–८।२।३०॥कौ०पृ०६८
बहुव्रीहिः. दीर्घः. ततो नान्तलक्षणो दीर्घ इत्यादि.
तथा आत्मानं सर्वं सर्वात्मानं जानातीति–( सर्वज्ञः ).
( १ ) " ज्ञा, अवबोधने " धा०क्र्यादिः कौ०पृ०४७७

निरु०-४५४ सर्वात्मना स्वमात्मानं यश्च जानाति केवलम्[2] ३४६।२५.
( सर्वज्ञ ) स्स तु विज्ञेयस्त्वनार्णो ज्ञानदो मनुः ।

१ सर्वात्मानं, सर्वात्मनि । २ युञ्जानश्च ।

## (४५५) ज्ञानमुत्तमम्, ॥ श्लो०॥४१॥ {८५६ / ४२८} सुव्रतः,

ॐ ज्ञानायोत्तमाय नमः । ॐ सुव्रताय नमः ।

५ भा०—ज्ञायतेऽस्मिन् सर्वः परो वैष्णवो धर्म इति—
(ज्ञानमुत्तमम्).
(१) "पठन्तमनिशं शास्त्रं पञ्चरात्रपुरस्सरम्"
इति.
(२) "न मे पार्थास्ति कर्तव्यम्" ❀ गी०३—२२।
१० इति न्यायेन केवलपरार्थत्वात्. शोभनं व्रतमस्येति—
(सुव्रतः).

निर्व०—(२) "आतोऽनुपसर्गे कः" इति, कः. आल्लोपः.
३।२।३॥कौ०पृ०५७०
व्युदपादि हि सर्वशब्दः? ❀ तथैव च—
१५ उत्तमम् अत्युत्कृष्टं, सर्वः परो वैष्णवो धर्मः, ज्ञायतेऽस्मिन्निति
ज्ञानमिति—(ज्ञानमुत्तमम्).
एकन्नाम.
(१) "ज्ञा, अवबोधने" धा०त्रया०कौ०पृ०४७७
अधिकरणे ल्युट्. अनः. दीर्घः. उत्कृष्टवाचिनः
२० उच्छब्दात् अतिशायने तमप्. चर्त्वम्.दस्य तः.
आविष्टलिङ्गोऽयमित्यादि. ❀
स्वार्थकर्तव्याभावेन केवलपरार्थतया,
सु-शोभनं, व्रतं नियमोऽस्येति—(सुव्रतः).

निरु०—४५५ परश्च वैष्णवो धर्मः सर्वऽस्मिन् ज्ञायते यतः॥३४७॥
२५ सर्वेषां श्रेयसां मूलं तज्जर्य (ज्ञानमुत्तमम्).
४५६ भक्तार्थं व्रतवान् योऽसौ (सुव्रत) स्स प्रकीर्तितः॥३४८॥

(४५७) सुमुखः,

ॐ सुमुखाय नमः ।

भा०—(१)"एकपादेन तिष्ठन्तमाहरन्तं च मारुतम् । पक्षमासोपवासांश्च दिशन्तमनुचिन्तयेत् " इति. ❀ ५
जपादावविकृतप्रसन्नमनोहरमुखत्वात्—( सुमुखः ).
( १ ) " ओंकारलक्षणं मन्त्रं जपन्नान्तरलक्षितम् " इति.
( २ ) " कृष्णाय कमलदलामलनेत्राय " इति,
तन्मन्त्रवर्णाः. ❀

निर्व०—व्रतिस्तोत्रः. अज्विधौ, १०
( १ ) " भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् " इत्यच्. ३।३।५६॥कौ०पृ०६५३
सुपूर्वो बहुव्रीहिः. ❀
जपादावविकृतप्रसन्नमुखतया वा,
वीरबाहुरित्यादावुत्तरत्र १५
प्रस्तोष्यमाणस्य अमृताहरणकर्मणोऽत्रापि
प्रतिपाद्यत्वेन तदानीमानन्दामृतसंपूर्णवदनतया वा सु—मनोहरं. मुखमस्येति—( सुमुखः ).
( १ ) " खनु, अवदारणे " धा०भ्वादिः कौ०पृ०४२१
( २ ) " उदिदणातेरजलौ०" इति वर्तमाने, उणा०पा०५कौ० २०
पृ०६४३
( ३ ) " डित्खनेर्मुट् चोदात्तः " इत्यच्.अट् वा डित्. धातोः
उणा०पा०५कौ०पृ० ६४३

निर्व०—४५७ ध्यातॄणां विषये यस्य सुप्रसन्नं मनोहरम् ।
मुखमस्तीति ( सुमुखः )— २५

१ जपन,नन,स्पमान्नम । २ अमल्नि । ३ पर्याय ।

( ४५८ ) सूक्ष्मः,

ॐ सूक्ष्माय नमः ।

भा०—निरुपाधिकसमाधिसाक्षात्कृतसुसूक्ष्मत्वरूपत्वात्—( सूक्ष्मः ).
५ ( १ ) " सूचेः स्मन् " उणा०पा०४कौ०पृ०६४०
इति,स्मन् प्रत्ययः.
( २ ) " सर्वे ब्रह्मपरायणाः "
इति. ❀

निर्व०—मुट् च. उदात्तः, टिलोपः. सुपूर्वो बहुव्रीहिः. ❀
१० निरुपाधिसमाधिसाक्षात्कृतसुसूक्ष्मरूपतया,
अन्यत्रासुरेषु निरूढाभिसन्धितया वा,
सूचयतीति—( सूक्ष्मः ).
( १ ) "सूच, पैशुन्ये" चुरादौ कथादिः. धा०चुरा०कौ०पृ०४८१
णिच्. अतो लोपः.
१५ ( २ ) "सूचेः स्मन् " इति, स्मन्—बाहुलकात्—उणा०पा०४कौ०
पृ०६४०
( ३ ) "लिङ्सिचि" इत्यत्र ३।४।११६॥कौ०पृ०३७४
लकारस्येव स्मन्निति द्विसकारकनिर्देशमाश्रित्य, अयं सादिरेवेति
२० व्याख्यानान्नानिट्. एवमेवान्यत्रापीदृशे प्रदेशेऽवधेयम्. णिलोपः.
( ४ ) " चोः कुः" इति, झलि कुत्वम्. चस्य कः. ततः,८।२।३०॥
कौ०पृ०६८
( ५ ) " आदेशप्रत्यययोः " ८।३।५९॥कौ०पृ०३४
इति, कोः परस्य प्रत्ययावयवस्य सस्य षः. ❀

२५ निरु०—४५८ ( सूक्ष्म ) स्सूक्ष्मस्वरूपतः ॥ ३४१ ॥ अथवा ॥
असुरेषु निगूढाभिप्रायत्वात् ( सूक्ष्म ) उच्यते ।

## ( ४५९ ) सुघोषः, ( ४६० ) सुखदः,

## ॐ सुघोषाय नमः । ॐ सुखदाय नमः ।

भा०—औपनिषदः स्वाध्यायघोषः अस्येति— ५
( सुघोषः ). ❋
एवं सदाचारसमाध्यनुष्ठापनेन तन्निष्ठेभ्यः फलं परमसुखं ददातीति—
( सुखदः ). ❋

निर्व०—सु—शोभनो घोषः औपनिषदस्वाध्यायघोषः
मथनाद्भुतगोचरसुरासुरादिघोषो वाऽस्येति— १०
( सुघोषः ).
( १ ) " घुषिर्, अविशब्दने " धा०चुरा० कौ०पृ०४८५
चुरादिः.
( २ ) " अनित्यश्चास्य णिच् "
( ३ ) " घुषिरविशब्दने " ७।२।२३॥कौ०पृ०५९२ १५
इति निष्ठायामिण्निषेधाल्लिङ्गात् तदभावे, घञि लघूपधगुणः णिचि तु,
( ४ ) " एरच् " इति भावे अच्. णेर्लोपो विशेषः ३।३।५६॥
कौ०पृ०६५२
सुपूर्वो बहुव्रीहिः. ❋
एवं सदाचारसमाध्यनुष्ठापनेन तन्निष्ठेभ्यः. सुखं परमं फलम्, २०
अमृतदानादिना सुरेभ्यः सुखं वा ददातीति—( सुखदः ).
( १ ) " डुदाञ्, दाने " धा०जुहो० कौ०पृ०४५१
( २ ) " आतोनुपसर्गे कः " ३।२।३॥कौ०पृ०५७०

निरु०—४५९ स्वाध्यायघोषो यस्यास्ति ( सुघोषः )स तु कीर्तितः
॥ ३५० ॥ २५
समाध्यनुष्ठापनेन तदनुष्ठानशीलिनाम् ।
४६० सुखं बहु ददातीति ( सुखदः ) परिकीर्तितः ॥ ३५१ ॥

( ४६१ ) सुहृत्, ।

ॐ सुहृदे नमः ।

भा०—कुत इदं परोपकारव्यसनित्वम्; यतः,
५ ( सुहृत् ).
अनुपकारिण्यपि किमस्य भविष्यति ?
किं करवाणीति शुभाशंसि शोभनहृदयत्वं सुहृत्त्वम्. ❋

निर्व०—इति, कः.
आल्लोपः.
१० ( ३ ) " स्वनु, अवदारणे " धा०भ्वादिः कौ०पृ०४२१
सुपूर्वः.
( ४ ) " अन्येष्वपि दृश्यते " ३।२।१०१॥कौ०पृ०५८५
इत्यपिशब्दात् सर्वोपाधिव्यभिचारार्थात् उपपदान्तरकारकान्तरयोः
धात्वन्तरादपि डः.
१५ टिलोपः.
उभयत्रापि. ❋
कुत इदं परोपकारव्यसनित्वम्. तत्रोच्यते,
यतोऽपनुकारिण्यपि सु-शोभनं किमस्य भविष्यति; किं वा करवाणीति
शुभाशंसि, हृदयमस्येति—
२० ( सुहृत् ).
( १ ) " हृञ्, हरणे " धा०भ्वादिः कौ०पृ०४२३
( २ ) " चलिमलितनिभ्यः कयन् " उणा०पा०४कौ०पृ०६३६
इति वर्तमाने,

निरु०—४६१ किमस्मिन् करवाणीति ह्यपकारिणि शोभनम् ।
२५ यस्यास्ति हृदयं सोयं ( सुहृदि ) त्यभिधीयते ॥ ३५२ ॥

## (४६२) मनोहरो,

ॐ मनोहराय नमः ।

भा०— एवं निसर्गसौहार्देन तेषां मनो हरतीति—
(मनोहरः). ५
(१) "हरतेरनुद्यमनेऽच्" ※ ३।२।९॥कौ०पृ० ५७२
जिताश्च तेषां क्रोधादयोऽनेनेति—

निर्व०—(३) "वृहोष्पुकदुकौच" उणा०पा०४कौ०पृ०६३६
इति, कयन्. धातोः दुगागमश्च. कित्त्वान्न गुणः.
इत्थं निष्पन्नस्य हृदयशब्दस्य सुपूर्वस्य इह बहुव्रीहौ, १०
(४) "सुहृद्दुर्हृदौमित्रामित्रयोः" ५।४।१५०॥कौ०पृ०१७१
इति, मित्रार्थे हृद्भावो निपात्यते.
पाक्षिकमवसाने चर्त्वम्. ※
एवं निसर्गसौहार्देन, असुरव्यामोहनीयनिजरूपत्वेन वा तेषां मनोऽन्तः-
करणं हरतीति— १५
(मनोहरः).
(१) "हृञ्, हरणे" धा०भ्वादिः कौ०पृ० ४२३
(२) "हरतेरनुद्यमनेऽच्" ३।२।९॥कौ०पृ०५७२
इति, अच्. गुणः रपरः.
(३) "मन, ज्ञाने" धा०दिवा० कौ०पृ० ४५६ २०
(४) "सर्वधातुभ्योऽसुन्" उणा०पा०४ कौ०पृ०६४०
इति, असुन्. सोरुत्वम्.

निरु०—४६२ एवं निसर्गसौहार्देनेषां हृदपहारकः ।(मनोहरः)
समाख्यातो ह्यष्टार्णः शान्तिदायकः ॥३५३॥

( ४६३ ) जितक्रोधो,

ॐ जितक्रोधाय नमः ।

भा०-( जितक्रोधः ).

५ अथवा , अमृताहरणे.

( १ ) "आनन्दामृतसंपूर्णवदनेनेन्दुकान्तिना ।

कलशाकृतिरूपेण करस्थेन विराजितम् "

इति. ❀

( सुमुखः ).

१० असुरेषु गूढाभिप्रायत्वात्-

( सूक्ष्मः ). ❀

सुरासुरादिघुष्यमाणमथनाद्भुतत्वात्-

( सुघोषः ). ❀

अमृतदानादिना सुरेभ्यः सुखं ददातीति-

१५ ( सुखदः ). ❀

तत्र हेतुः-

( सुहृत् ). ❀

असुरव्यामोहनीयरूपत्वात्-

( मनोहरः ).यथा,

२० ( १ ) "त्रैलोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत् "

इति. ❀

तेन विस्मयविहस्तचेतसामसुराणां सुरेषु क्रोधो जित इति-

निर्व०-(५) "हशि च " ६।१।११४॥कौ०पृ०२७

इति, उत्वम्. आद्गुणः. ❀

२५ निरु०-४६३ रक्षसां देवविषये येन क्रोधो विनिर्जितः ।

स ( जितक्रोध )आख्यातो ह्यर्थार्णः क्रोधनाशकः ॥३५४ ॥

१ हावहानिज ।

( ४६४ ) वीरबाहुर्,

ॐ वीरबाहवे नमः ।

भा०—( जितक्रोधः ).
स्फुरत्कटककेयूरमालमथनखेलाऽहमहमिकाव्यतीहारविक्रान्तबाहवः ५
सहस्रमस्येति—
( वीरबाहुः ). ❀

निर्व०—तथा जितः क्रोधः, तदुपलक्ष्यः क्रोधलोभादिः,
विस्मयविहस्तचेतोऽसुरकर्तृकसुरकर्मकक्रोधो वा अनेनेति—
( जितक्रोधः ). १०
( १ ) "क्रुध, क्रोधे" धा० दिवा० कौ० पृ० ४५७
भावे घञि गुणः.
( २ ) "जि, जये" कर्मणि क्तः. धा० भ्वादिः कौ० पृ० ४०५
अनिट्. अगुणः. ❀
अथ केवलममृताहरणधर्माः वीराः. मथनखेलाऽहमहमिका १५
व्यतीहारविक्रान्ताः बाहवः भुजाः सहस्रम्, अस्येति—
( वीरबाहुः ).
( १ ) "बाधृ, विलोडने" धा० भ्वादिः कौ० पृ० ३८२
( २ ) "कुर्भ्रश्च" इतिप्रकरणे, "अर्जिदृशिकम्यमिपंसिबाधामृजिपशि
तुग् धुग् दीर्घहकाराश्च" उणा० पा० १ कौ० पृ० ६१० २०
इनि, कुः. धस्य हश्च,
( ३ ) "वीर, विक्रान्तौ" चुरादौ कथादिः अदन्तः. कौ० पृ० ४९०
( ४ ) "आधृषीयः" णिच्. अतो लोपः.

निरु०—४६४ विक्रान्ता बाहवो यस्य ( वीरबाहुः ) स्तु स स्मृतः ।

(४६८) व्यापी, (४६९) नैकात्मा,

ॐ व्यापिने नमः । ॐ नैकात्मने नमः ।

५ भा०— सुरासुरमन्दरवासुकिप्रभृतिषु शक्त्याप्यायनाय व्यापनात्—
(व्यापी). ❀
तदातनैः ब्राह्मकौर्ममोहिनीमुखैः रूपैः—
(नैकात्मा). ❀

निर्व०— सुरासुरमन्दरवासुकिप्रभृतिषु शक्त्याप्यायनाय व्याप्तुं शीलम-
१० स्यास्तीति—
(व्यापी).
(१) "आप्लृ, व्याप्तौ" विपूर्वः. धा० स्वादिः कौ०पृ०४६२
(२) "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८॥कौ०पृ०५८२
इति, णिनिः.
१५ वेः इकारस्य यण्. यकारः.
इन्नतलक्षणो दीर्घ ईत्यादि. ❀
तदातनाः नैके ब्राह्मकौर्ममोहिनीमुखाः
इह चात्मानो रूपाण्यस्येति—
(नैकात्मा).
२० (१) "अत, सातत्यगमने" धा०भ्वादिः कौ०पृ०३८२
अतो मनिणि व्युत्पादित आत्मशब्दः. एतेः,
(२) "इण्भीकापा०" उणा०पा०२ कौ०पृ०६२७

निरु०—४६८ देवरक्षोमन्दरेषु वासुकिप्रभृतिष्वपि । आप्यायनाय
शक्त्या च (व्यापी) स्याद्व्यापनादसौ । ३५८ ॥
२५ ४६९ तदातनैर्ब्रह्मकौर्ममोहिन्याद्यवतारकैः ।
(नैकात्मे) ति श्रुतस्सम्यङ्मुन्यर्णो बहुरूपदः ॥ ३५९॥

( ४७० ) नैककर्मकृत्, ।

ॐ नैककर्मकृते नमः ।

भा०—मथनधारणवैरिविदारणसुधादानाद्यनेककर्मा—
( नैककर्मकृत् ). ❀ ५
अथ धर्मात्मा पुरुषार्थव्यवस्थापनाय सर्वान्तर्वसतीति—

निर्व०—इत्यादिना कनि गुणे च व्युत्पादितश्चैकशब्दः.
नञः, नशब्दस्य वा समासः. पूर्वत्र,
( ३ ) " नभ्राण्नपात्० " ६।३।७५॥ कौ०पृ०१४८
इत्यस्योपलक्षणतया नञः प्रकृतिभावः. १०
अन्यत्र तु, अनञ्त्वादप्रसक्त एव नलोपः. वृद्धिः. दीर्घः.
ततो नान्तलक्षणो दीर्घ इत्यादि. ❀
तथानैकानि अनेकानि मथनधारणवैरिवारणसुधादानादीनि
कर्माणि कार्याणि करोतीति—
( नैककर्मकृत् ). १५
( १ ) " डुकृञ्, करणे " धा०तना० कौ०पृ०४७३
( २ ) " सुकर्मपाप० " ३।२।८९॥कौ०पृ०५८४
इत्यादिना क्विपि तुक्.
अगुणः.पुनरप्ययमेव धातुः.
( ३ ) " सर्वधातुभ्यः० " उणा०पा०४कौ०पृ०६३९ २०
इति, मनिन्. गुणो रपरः. अनिट्. नलोपः. नैकशब्दः प्राग्वत्.
कर्मधारयः. ❀
अथ धर्मात्मा मन्त्रवर्णानुरोधात् पुरुषार्थव्यवस्थापनाय
सर्वान्तर्वसतीति—

निरु०—४७० समुद्रमथने नैककर्मकृत् ( नैककर्मकृत् )। २५

१ वारण ।

( ४७१ ) वत्सरो, ( ४७२ ) वत्सलो,

ॐ वत्सराय नमः । ॐ वत्सलाय नमः ।

५ भा०—( वत्सरः ).
( १ ) "वसेश्च" इति, सरन् प्रत्ययः. उणा०पा० ३ कौ०पृ०६२८
( २ ) " सर्वान्तश्चारिणे धर्मात्मने "
इति हि तन्मन्त्रवर्णः. ❀
तत्र हेतुः.
१० ( वत्सलः ).
वत्सान् स्वोत्सुकान् कामयते इति—
( १ ) " वत्सांसाभ्यां कामबले " ५।२।९८॥कौ०पृ०३२७
इति, लच् प्रत्ययः.
स हि चिरं परिचीयमानेष्वपि शरणागतेषु, कस्यापि हेतोः

१५ निर्व०—( वत्सरः ).
( १ ) " वस, निवासे " धा०भ्वादिः कौ०पृ०४३२
( २ ) " अशेस्सरन् " " वशेश्च " उणा०पा०३कौ०पृ०६२८
इति, सरन्. अनिट्.
( ३ ) " सस्सि ० " इति, तः. ❀ ७।४।४९॥कौ०पृ०४१०
२० तत्र हेतुरुच्यते. वत्साः तदुपलक्ष्याः स्वोत्सुकाः काम्यमानाः
शरणागताः अस्य सन्तीति—
( वत्सलः ).

निरु०—४७१ पुरुषार्थस्थापनाय सर्वान्तर्वसनाच्च यः ॥ ३६० ॥
धर्मात्मा ( वत्सर ) स्स स्यान्मुन्यर्णोऽभीष्टदो मनुः ।
२५ ४७२ सर्वस्यान्तर्निवसने हेतुस्स्याद् ( वत्सलः ) स्मृतः ॥ ३६१ ॥
वत्से धेनोरिव यतो वत्सलश्शरणागते ।

(४७१) वत्सरो, (४७२) वत्सलो,

ॐ वत्सराय नमः । ॐ वत्सलाय नमः ।

५ भा०—(वत्सरः).
(१) "वसेश्च" इति, सरन् प्रत्ययः. उणा०पा०३ कौ०पृ०६२८
(२) "सर्वान्तश्चारिणे धर्मात्मने"
इति हि तन्मन्त्रवर्णः. ❀
तत्र हेतुः.
१० (वत्सलः).
वत्सान् स्वोत्सुकान् कामयते इति—
(१) "वत्सांसाभ्यां कामबले" ५।२।९८॥कौ०पृ०३२७
इति, लच् प्रत्ययः.
स हि चिरं परिचीयमानेष्वपि शरणागतेषु, कस्यापि हेतोः

१५ निर्व०—(वत्सरः).
(१) "वस, निवासे" धा०भ्वादिः कौ०पृ०४३२
(२) "अशेस्सरन्" "वशेश्च" उणा०पा०३कौ०पृ०६२८
इति, सरन्. भनिट्.
(३) "सस्ति ०" इति, तः. ❀ ७।४।४९॥कौ०पृ०४१०
२० तत्र हेतुरुच्यते. वत्साः तदुपलक्ष्याः स्वोत्सुकाः काम्यमानाः
शरणागताः अस्य सन्तीति—
(वत्सलः).

निरु०—४७१ पुरुषार्थस्थापनाय सर्वान्तर्वसनाच्च यः ॥ ३६० ॥
धर्मात्मा (वत्सर) स स्यान्मुन्यर्णोऽभीष्टदो मनुः ।
२५ ४७२ सर्वस्यान्तर्निवसने हेतुस्स्याद् (वत्सलः) स्मृतः ॥ ३६१ ॥
वत्से धेनोरिव यतो वत्सलश्शरणागते ।

## (४७५) धनेश्वरः, ॥

ॐ धनेश्वराय नमः।

भा०– (धनेश्वरः).
आशुकर्मणि ह्यश्नोतेर्वरट्? ❀ ५
दत्तावप्यर्थकामो दुर्विषयान्निवर्त्य ताभ्यां हितधर्मरक्षणात्–

निर्व०– (१) "रमु,क्रीडायाम्" धा०भ्वादिः कौ०पृ०४२०
अन्तर्भावितण्यर्थश्च- अत्रायम्.
(२) "धापॄवस्यज्यतिभ्यो नः" उणा० पा०३ कौ०पृ०६२५
इति प्रकरणे, १०
(३) "रमेस्त च" उणा०पा०३ कौ० पृ० ६२५
इति, नः. तश्चान्तादेशः. अनिट्. ❀
क्षिप्रकारितया धनस्य तत्तदिष्टविभवस्य ईश्वरः दाने
आशुकारीति–
(धनेश्वरः). १५
(१) "अशू,व्याप्तौ संघाते च" धा० स्वादिः कौ०पृ०४६३
(२) "क्लिशेरीच्चोपधायाः०" उणा०पा०५ कौ०पृ०६४४
इति वर्तमाने,
(३) "अश्नोतेराशुकर्मणि वरट् च" उणा०पा०५कौ०पृ०६४४
इति,वरट्,चादुपधाया ईत्वं च. २०
(४) "नेट्०" इति,नेट्. ७।२।८॥कौ०पृ०५८१
(५) "धन, धान्ये" धा० जुहो०कौ०पृ०४५२
च्छान्दसश्चायम्. अस्त्येव चात्र च्छन्दस्त्वम्. उक्ता वा अस्य

निरु०– ४७५ तत्तदिष्टद्रव्यदाने शीघ्रकारी (धनेश्वरः) ॥३६४॥

( ४७४ ) रत्नगर्भो,

ॐ रत्नगर्भाय नमः।

भा०— ( १ ) " अत इनिठनौ " इति भूमनित्ययोगयोः इनिः, ❀
५ ५।२।११५॥ कौ०पृ० ३३०
तेषु ❀ धनायद्भ्यः प्रदेयधनाधिक्यात्— ❀ ७।४।३४॥
( रत्नगर्भः ).
यथा,
( १ ) " कामार्थार्थुद्वहन्तं च शङ्खचक्रच्छलेन तु "
१० इति. ❀
तत्तदिष्टधनादाने आशुकारित्वात्—

निर्व०— ( १ ) "वद, व्यक्तायां वाचि " धा०भ्वादिः कौ०४३४
ततो व्युत्पादितात् वत्सशब्दात् ❀ भूमनित्ययोगयोः
मत्वर्थीयोऽत इनिः.
१५ ( २ ) " यस्य० "६।४।१४८॥कौ०पृ०५६
इति,लोपः.इन्नन्तलक्षणो दीर्घ ईत्यादि. ❀
रत्नं तदुपलक्ष्यं धनायद्भ्यः. ❀
प्रदेयमधिकं धनं गर्भोऽस्य तद्गर्भः
तद्वद्धि यभाणमनेनेति वा—
२० ( रत्नगर्भः ).
( १ ) " गृ, निगरणे " धा०क्र्यादिः कौ०पृ०४७६
( २ ) " अर्तिगृभ्यां भन् " उणा० पा० ३ कौ०पृ०६३१
इति भनि व्युत्पादितः अयं शब्दः.

निरु०— ४७४ धनायद्भ्य यथाकामं प्रदेयधनवत्त्वतः ॥ ३६२ ॥
५ ( रत्नगर्भ ) स्समाख्यातो ह्यष्टार्णो धनदो मनुः ।

१ उपवर्हं च।

(४७५) धनेश्वरः, ॥

ॐ धनेश्वराय नमः।

भा०– (धनेश्वरः).
आशुकर्मणि ह्यश्नोतेर्वरट् ? ❀ ५
दत्तावप्यर्थकामौ दुर्विषयान्निवर्त्य ताभ्यां हितधर्मरक्षणात्–

निर्व०– (१) "रमु,क्रीडायाम्" धा०भ्वादिः कौ०पृ०४२०
अन्तर्भावितण्यर्थश्च- अत्रायम्.
(२) "धापॄवस्यज्यतिभ्यो नः" उणा० पा०३ कौ०पृ०६२५
इति प्रकरणे, १०
(३) "रमेस्त च" उणा०पा०३ कौ० पृ० ६२५
इति, नः. तश्चान्तादेशः. अनिट्. ❀
क्षिप्रकारितया धनस्य तत्तदिष्टविभवस्य ईश्वरः दाने
आशुकारीति–
(धनेश्वरः). १५
(१) "अशू,व्याप्तौ संघाते च" धा० स्वादिः कौ०पृ०४६३
(२) "क्लिशेरीच्चोपधायाः०" उणा०पा०५ कौ०पृ०६४४
इति वर्तमाने,
(३) "अश्नोतेराशुकर्मणि वरट् च" उणा०पा०५कौ०पृ०६४४
इति,वरट्,चादुपधाया ईत्त्वं च. २०
(४) "नेट्०" इति,नेट्. ७।२।८॥कौ०पृ०५८१
(५) "धन, धान्ये" धा० जुहो०कौ०पृ०४५२
च्छान्दसश्चायम्. अस्त्येव चात्र च्छन्दस्त्वम्. उक्ता वा अस्य

निरु०– ४७५ तत्तदिष्टद्रव्यदाने शीघ्रकारी (धनेश्वरः) ॥३६४॥

श्लो०॥५१॥ ( ४७६ ) धर्मगुब्, ( ४७७ ) धर्मकृद्,

ॐ धर्मगुपे नमः। ॐ धर्मकृते नमः।

५ भा०– ( धर्मगुप् )–
( १ ) " साधुमार्गे स्थितानां च संयच्छन्तं धिया च तौ" इति.
एवं सर्वान् धार्मिकयन्नकारणादनुग्रहेहेतुं धर्मं
करोतीति–( धर्मकृत् ).

१० निर्व०– आपायामपि प्रयोगे गतिः. पचाद्यच्. गुणः. ❀
दत्तावप्यर्थकामौ दुर्विषयान्निवर्त्य, ताभ्यां हितधर्मरक्षणात् धर्मं गोपायति रक्षतीति– ( धर्मगुप् ).
( १ ) " गुपू, रक्षणे " क्विप्. धा०भ्वादिः कौ०पृ०३९७
१५ ( २ )" गुपूधूपविच्छिपणिपनिभ्य आयः " इत्यायप्रत्ययो न भवति.
३।१।२८॥ कौ०पृ०३९७
( ३ ) " आयादय आर्धधातुके वा " ३।१।३१॥कौ०पृ० ३९७
इति तस्य आर्धधातुकविवक्षायां वैकल्पिकतया, इह तदभावपक्षाश्रयणात्. अगुणः.
२० ( ४ ) " धृञ्, धारणे " धा०भ्वादिः कौ०पृ०४२३
( ५ ) " अर्तिस्तुसुहु० " उणा०१।०१कौ०पृ०६१६
इत्यादिना मन्. गुणो रपरः. अनिट्. ❀
इत्थं सर्वान् धार्मिकयन् अकारणादनुग्रहदेहं धर्मं करोतीति–
( धर्मकृत् ).

२५ निरु०–४७६ कामं दत्वाऽप्यर्थकामौ निवर्त्य विषयान्तरात्।
ताभ्यां हि तस्य धर्मस्य रक्षणाद् ( धर्मगुप् ) स्मृतः ॥ ३६५ ॥
४७७ सर्वं जनं धार्मिकयन् लीलानुग्रहलक्षणम्।
धर्मं करोति यस्माद्धि तस्माद् ( धर्मकृदु ) च्यते ॥ ३६६ ॥

१ देहम्।

( ४७८ ) धर्मी, ( ४७९ ) सत्,

ॐ धर्मिणे नमः । ॐ सते नमः ।

भा०— "धर्मसामान्यममलमनादिनिधनं विभुम् । दुर्लभं यत्प्रबुद्धानां ५
तत्प्रसादधिया विना " इति. ❀
प्रसिद्धोऽपि धर्मोऽस्य सर्वसाधारणोपकरणमिति—
( धर्मी ). ❀
उक्तधर्मप्रशस्तत्वात्—( सत् ).

निर्व०—( १ ) " डुकृञ्, करणे " धा०तना०कौ०पृ०४७३ १०
क्विपि तुक्, अगुणः, धर्मशब्दो व्युत्पादितः. ❀
सर्वसाधारणोपकरणं प्रसिद्धोऽपि धर्मोऽस्यास्तीति—
( धर्मी ).
व्युत्पादिताद्धर्मशब्दात् प्रशंसायाम्,
( १ ) " संज्ञायां मन्माभ्याम् " ५।२।१३७॥कौ०पृ०३३३ १५
इति मत्वर्थीयः इनिः इह ठनः असमावेशार्थः.
( २ ) " यस्य० " इति, लोपः. ६।४।१४८॥कौ०पृ०५६
इन्नन्तलक्षणो दीर्घ इत्यादि. ❀
इत्थं प्रशस्तधर्मतया, धर्मिणां सताम् अपक्षयविनाशादिरहिततोपहि-
तनिरुपाधिकसद्भावसाद्गुण्याभ्यां सत् सदिति वेदनार्हमिति— २०
( सत् ).
( १ ) " अस्, भुवि " धा०अदा०कौ०पृ०४४४
ततः, " वर्तमाने लट् " ३।२।१२३॥कौ०पृ०३६६

निरु०—४७८ साधारणोपकरणं धर्मो यस्यास्ति केवलम् ।
स वै ( धर्मी ) ति विज्ञेयष्षडर्णो धर्मदो मनुः ॥ ३६७ ॥ २५
४७९ निरुपाधिकसद्भावान्नित्यसाद्गुण्ययोगतः ।
( स ) च्छब्देनोच्यते विष्णुर्वेदवेदान्तपारगैः ॥ ३६८ ॥

(४८०) (सत्) अक्षरम्,

ॐ अक्षरसते नमः ।

भा०—(१) " प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते " इति.
५ गी०१७—२६ ।
तस्य च प्राशस्त्यं साध्यस्य भगवतस्सत्त्वात्;
तस्य च सत्त्वं निरुपाधिकात् सद्भावात्, साद्गुण्याच्च.
(२) " सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते " इति. ❀
गी०१७—२६ ।
एवम् नित्यनिरुपाधिकसद्भावसाद्गुण्याभ्याम्—
{सत् / अक्षरम्} अस्य च विशेषणम्.
१० क्षरं हि कचिद्देशे काले वा व्याहन्यते ?
ताद्रूप्यं यथा;
(१) " अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः । वर्जितश्शक्यते वक्तुं यस्सदाऽस्तीति केवलम्" इति.वि०पु०—४—१०।

निर्व०—इत्यतो लडिति वर्तमाने,
१५ (२) " लटश्शतृशानचौ० " ३।२।१२४॥कौ०पृ०५९९
इति पुनर्लड्ग्रहणात् अधिकविधानार्थात् कचित् प्रथमासामानाधिकरण्येऽपि शता इत्यादि. शेषं पुरस्तादेव न्यरूपि.
(३) " लिङ्गमशिष्यम् " इत्यादि. ॥ भाष्ये ॥ ❀
तथा अधर्मिणाम् असताम् अप्रशस्तपापातिप्रसक्त्यनुगुणनित्यनिरवधि-
२० कभवदुरितप्रदतया,तेषां कुमनीषिक्रयासंगत्या असदिति वेदनार्हमिति-

निरु०—४८०अपक्षयविनाशादिवर्जितो (ऽक्षर) उच्यते ।
तस्मा(दक्षरसदि)ति होकनाम्ना च शस्यते ॥ ३६९ ॥

१ निरुपाधिकसद्भावनित्य । २ अस्यैव । सदसत्क्षरमक्षम. सत्-अक्षरम्-अक्षरसत्. । सदक्षरमसत् क्षरम् इति केषांचित्पाठः.(सत्) पदमर्थवशान्मूले द्विरावृत्तम् सकृदेव पाठ्यम् ।

(४८१) (असत्), (४८२) असतक्षरम्, ।

ॐ असते नमः । ॐ असतक्षराय नमः ।

भा०— एतदेव हि श्रूयते,
(२) "सदेव सोम्येदमग्र आसीत्" इति. ❀ छां०उ०६—२—१। ५
अप्रशस्तपापप्रसक्तेषु—
{असत्, क्षरम्.} च
असतां नित्यनिरवधिकभवदुरितप्रदत्वात्. आम्नातं हीदं द्वयम्.
(१) "एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति,
एष एवाऽसाधुकर्म कारयति तं यमधो निनीषति" कौ०उ०३—९। १०
(२) " असच्च सच्चैव च यद्विश्वं सदसतः परम् " इति. ❀
तत्र साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति
क्षमते चेति नैतावदेव, किंतु तेषाम्—

निर्व०— (असत्).
प्राग्वदेव धातुप्रत्ययादि; नलोपस्त्विहेति तु विशेषः, नाम्नोः १५
सांहितं जश्त्वम्.
इदमेव द्वयं विशेष्यते. तत्र च प्रतियोगिप्रक्रमप्रकरणात्,
विपरिवृत्तिप्रत्यासत्त्या च प्रथमम् असद्विशेष्यते.
येषाम् असत् तेषां तत एव क्षरम्— क्षरणार्हमिति—
(क्षरम्). २०
(१) " क्षर,संचलने " धा०भ्वादिः कौ०पृ० ४१९
पचाद्यच्. लिङ्गं प्राग्वत्. ❀

निरु०— ४८१ असतां यस्सदाऽनन्तभवाख्याऽघप्रदानतः ।
(असदि) त्युच्यते सद्भि (४८२) स्तस्मादेव(क्षरं)च सः॥३७०॥

१ असत्यानित्य। २ परम् ।३ (असत्) पदं सत्पदवत् । नञ्समासनलोपा-
विह विशेष इति ध्येयम् ।

## (४८३) अविज्ञाता,

ॐ अविज्ञात्रे नमः।

भा०— (अविज्ञाता)—

५ (१)"उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते" रा०अ० १—१०।
इतिवत्, प्रपन्नापराधापरिगणनं गुण एव.
अतो हि तातपादाः,
(२) "सर्वज्ञतामिवमुपालभामहे त्वं ह्यज्ञ एवाश्रितदोष-
जोषणः" इति.

१० ये पुनः ज्ञप्तिमात्रत्वात् सर्वज्ञस्य सर्वथा अज्ञत्वपरं व्याचक्षते, ते
श्रुत्याचार्यसेवौचित्यन्यायबधिराः शोच्याः न निरसनार्हाः.

निर्व०— अथ पारिशेष्यात्, सद्विशेष्यते. येषां सत्; तेषां तत एव
क्षरं नेति—
(अक्षरम्).

१५ क्षरशब्दो हि निरुक्तः[1] ततो नञ्समासः. नञो नलोपः. लिङ्गं प्राग्वत्.
यद्वा, सविशेषणे इमे द्वे नामनी, अक्षरं- सत्. क्षरम्— असत्.
इति उक्त एवार्थः- अस्मिन् पक्षेऽत्र उभयत्रापि अर्थवशात् विशेषण-
विशेष्ययोः यथासंख्यं नेष्यते. ❀
तत्र साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति क्षमते चेति.

२० नैतावदेव परंतु तदपराधेषूपेक्षया परुषभाषणेऽपि
प्रत्युत्तरादानेन तेषां विज्ञाता नेति—
(अविज्ञाता).

निरु०—४८३ प्रपन्नकृतपापानां किञ्चिदप्यविचारणात्।
(अविज्ञाते) ति कथितः बुधैस्तद्गुणपारगैः ॥ ३७१ ॥

१ नामैव।

## ( ४८४ ) सहस्रांशुः,

ॐ सहस्रांशवे नमः ।

भा०— अथ च सर्वज्ञः–( सहस्रांशुः )–
सहस्रम्- अपरिमिताः, अंशवः- ज्ञानानि, अस्येति. ननु आश्रितापराधव्यतिरिक्तसर्वज्ञ इति विप्रतिषिद्धम्, न तैदपराधेष्वतात्पर्येणोपेक्षा ह्यज्ञानं विवक्षिता ? उपेक्षते हि तेषां दोषम् ५
( १ ) " दोषो यद्यपि तस्य स्यात् " इति. रा०यु०१८–३ ।
(२)"अपि चेत्सुदुराचारो भजते मामनन्यभाक्"इति.गी०९-३०।
न चैवं पापफलनियततन्नियामकयमतद्यातनादयो भगवत्क्षमायामपि कृतापराधं बाधेरन्, तेषामपि तदधीनत्वात् इत्यभिप्रेत्याह– १०

निर्व०–( १ ) " ज्ञा, अवबोधने"विपूर्वः. तृच्. धा०क्र्यादिः कौ०पृ०४७७
अनिट्. नञ्समासः. नञो नलोपः. अनङादि. ❋
अथ सर्वज्ञः सहस्रं सहस्रसंख्याकाः अपरिमिताः, १५
अंशवः तदुपलक्ष्याणि ज्ञानानि, अस्येति–( सहस्रांशुः ).
( १ ) " अशू ,व्याप्तौ " धा०स्वादिः कौ०पृ०४६३
( २ ) "कुर्भश्च" इति प्रकरणे, उणा०पा० १कौ० पृ०६१०
(३)"खरुशङ्कंशुपीयुनीलङ्गुलिगु" उणा०पा०१कौ०पृ०६११
इति कुः; नुम् च निपात्यते. अनुस्वारः. यदि त्वंशुशब्दः प्रायेणात्र न पठ्यते; तदा बाहुलकात्, " कुर्भश्चे " ति चकाराद्वा अश्नोतेरपि कुः. पृषोदरादित्वात् वर्णागमः. सहस्रशब्दो व्युत्पादितः;दीर्घः. यथोक्तव्याख्याने २०

निरु०–४८४अंशवो बुद्धयः प्रोक्ताः सहस्रं सन्ति यस्य ते ।
(सहस्रांशु) रिति ख्यातो ह्यष्टार्णो धीप्रदो मनुः॥३७२॥ २५

१ नतावदपराधेष्वतात्पर्यकृपोपेक्षाद्य ।

( ४८५ ) विधाता,

ॐ विधात्रे नमः ।

भा०— ( विधाता )—आह हि यम एव,

५ ( १ ) " अहममरवरार्चितेन धात्रा सम इति लोकहिताहिते नियुक्तः " ॥३४॥ इत्यादि. वि०पु०३–७–१५ ।

अत्र, ब्राह्म, वैष्णव, वामन, नारसिंह, लैङ्ग, वैष्णवधर्म, श्रीविष्णुतत्त्व, भागवतप्रभृतिषु, यमकिंकरसंवादस्सर्वो द्रष्टव्यः.

१० यद्येष दोषसहः, किं तर्हि हेयाद्वर्गादुपादेयस्य व्यावर्तकम्, तत्राह.

निर्व०— नाम्नोरविरोधः. ❀

प्रपन्नापराधविषये, सत्यां हि स्वक्षमायां, पापफलनियततन्नियामकयमतद्यातनादीनामकिञ्चित्करतायै,

१५. तेषाम् आर्थिस्वाधीनताप्रख्यापनाय तानपि विदधातीति— ( विधाता ).

( १ ) " डुधाञ् , धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१ विपूर्वः.तृच्. अनिट्. अनङित्यादि.

यद्येष दोषसहः.

२० किं तर्हि हेयादुपादेयस्य व्यावर्तकं; तत्रोच्यते कृतमुपादेयानां लक्षणम् आभिमुख्यमानलक्षणं चिह्नमनेनेति—

निरु०—४८५ तादर्थ्यान्यायमादीना (विधाते)त्युच्यते बुधैः ॥३७३॥

## (४८६) कृतलक्षणः, ॥

ॐ कृतलक्षणाय नमः ।

भा०—( कृतलक्षणः ).
कृतं हि तेन लक्षणमुपादेयानाम्, ५
( १ ) " मित्रभावेन संप्राप्तम् " रा०यु०—१८—३ ।
( २ ) " सम्यग्व्यवसितो हि सः " इति. गी०९—३० ।
स्वाभिमुख्यमात्रं.श्रीहरीवंशे, भा०हरि० ।
( ३ ) " चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम । नामुद्रिताः प्रवेष्टव्या यावदागमनम्मम " भा०हरि० । १०
श्रीविष्णुधर्मे.
( ४ ) " भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया । विनाऽऽज्ञाभङ्गकृन्नैव भविष्यति नरः कचित् " ॥
श्रीविष्णुतत्त्वे,
( ५ )"चक्रादिधारणं पुंसां परसंबन्धवेदनम् । पतिव्रतानिमित्तं हि १५ वलयादि विभूषणम् " १ पां०वि०त० ।
इति.

निर्व०—( कृतलक्षणः ).
( १ ) " लक्ष, दर्शनाङ्कनयोः " चुरादिः. णिच्.धा०चुरा०कौ० पृ०४८४ २०
( २ ) " धापॄवस्यज्यतिभ्यो नः " उणा०पा०३कौ०पृ०६२५ इति प्रकरणे,
( ३ ) " लक्षेरट् च " उणा०पा०३कौ०पृ०६२५
इति, नः. तस्याडागमश्च. णिलोपः. णत्वम्.
( ४ ) " डुकृञ्, करणे " धा०तना० कौ०पृ०४७३ २५

निरु०—४८६ कृतं हि लाञ्छनं येन चोपादेयेषु जन्तुषु ।
परमात्मा हृषीकेशः स तु स्यात् ( कृतलक्षणः ) ॥ ३७४ ॥

श्लो० ॥ ५२ ॥ (४८७) गभस्तिनेमिः,

ॐ गभस्तिनेमये नमः ।

भा०—एवं वा वैष्णवलक्षणम् अन्यद्धेयलक्षणम्; अतो न वैषम्यनै-
५ र्घृण्यादिदोषप्रसक्तिः.
एवं कृतलक्षणाः यमतर्किंकराणाम् अप्रधृष्याः; यतस्तद्रक्षकोऽयम्.
( गभस्तिनेमिः ). भास्वरसहस्रारचक्रः.

निर्व०—कर्मणि क्तः. अगुणः. अनिट्. इदमुपादेयलक्षणम्;
अन्यच्च हेयलक्षणम्.
१० अतो न वैषम्यनैर्घृण्यप्रसक्तिः. एवं कृतलक्षणाः यमतर्किंकराणा-
मप्रधृष्याः कुतः; यतस्तद्रक्षकोऽयम्. ❀
गभस्तिः मयूखः, तन्मयो भास्वरो नेमिः तदुपलक्षितं सहस्रारचक्रम-
स्येति—
( गभस्तिनेमिः ).
१५ ( १ ) " णमु, प्रह्वत्वे शब्दे च " धा०भ्वादिः कौ०पृ०४३०
( २ ) " णो नः " ६।१।६५॥कौ०पृ०३८६
छन्दोभावानाकलनेन. ❀
( ३ ) " —किकिनौ लिट् च " ३।२।१७१॥कौ०पृ०६०६
इति वर्तमाने,
२० ( ४ )"गापायां धाञ्कृसृगमिजनिनमिभ्यः" वार्ति० कौ०पृ०६०६
इति, किकिनौ. स्वरे भेदः. तौ च लिङ्वत्. ततः,
( ५ ) " लिटिधातोरनभ्यासस्य " ६।१।८॥कौ०पृ०३६१

निरु०—४८७ ज्योतिर्विशिष्टनेम्या यल्लक्षितं चक्रमुत्तमम् ।
( गभस्तिनेमि ) र्यस्यास्ति नवार्णः पापनाशकः ॥ ३७५ ॥

भा०—गभस्तिः दीप्यते ज्योतिर्मयं नेमिलक्षितं चक्रं, यस्येति—

यथा;

(१) " वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य नतस्य दृ-
ष्टिपाते। तव गतिरथ वा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्य- ५
लोक्यः " वि०पु०३—७—३५।

इति. ❋

---

निर्व०—इति द्वित्वम्.

अभ्याससंज्ञायां हलादिशेषः. ततः,

(६) " अत एकहल्मध्येऽनादेशादेर्लिटि " ६।४।१२०॥कौ० १०
पृ०३८२

इति लिण्निमित्तकादेशरहितत्वात् एत्वाभ्यासलोपौ. यद्वा,

(७) " णीञ्,प्रापणे " धा०भ्वादिः कौ०पृ०४२३

(८) " णो नः " ६।१।६५॥कौ०पृ०३८६

(९) " नियो मिः " उणा०पा०४ कौ०पृ०६३४ १५

इति,मिः.गुणः. अनिट्. ❋

(१०) " भस, भर्त्सनदीप्त्योः " धा०जुहो०कौ०पृ०४५२

ह्वादिः छान्दसश्चायम्.

(११) " अस्त्येव हीह च्छन्दोभावः" धनवदस्यापि उक्तयुक्त्या
भाषायामपि वा प्रयोगः २०

(१२) " वसेस्तिः " उणा०पा०४ कौ०पृ०६४०

इति, तिः बाहुलकात् भसेरपि भवति.

(१३) " तितुत्र० " ७।२।९॥कौ०पृ०६०८

इति, नेट्.

पृषोदरादित्वात् वर्णागमेन गः. ❋ २५

( ४८८ ) सत्त्वस्थः,

ॐ सत्त्वस्थाय नमः।

भा०—किं च कर्मणो निमित्तस्याऽप्यभावाच्च यमाद्यप्रधृष्याः,कुत-
५ स्तदभावः यस्मादेष तेषाम्—
( सत्त्वस्थः ).
( १ ) "सुपि स्थः" इति, कः. ३।२।४॥कौ० पृ०५७१
( २ ) "हृदये स्थितः"
( ३ ) "हृदि यदि भगवाननादिरास्ते हरिरपि चक्रगदाधरोऽव्ययात्मा।
१० तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के" वि०पु०
२-२-२५॥ ॥अभियुक्तः ॥
( ४ )"स्फटिकमणिशिलाऽमलः कविष्णुर्मनसि नृणां क च मत्सरादि-
दोषः" वि०पु०-३-७-२२।
इत्यादि. तथा श्रीविष्णुधर्मे,
१५ ( ५ )"किंकरा दण्डपाशो वा न यमो न च यातनाः। समस्तास्तस्य य-
स्यात्मा केशवालम्बनस्सदा"वि०पु०२-२-२८।
श्रीवामने प्रह्लादः. पं०वि०ध०

निर्वं०—इतोप्येते यमादेरप्रधृष्याः. यदेष तेषां तत्प्रधर्षणहेतुकर्मनिर्लु-
ञ्छनाय सत्त्वे हृदये तिष्ठतीति—
२० ( सत्त्वस्थः ).
( १ ) "ष्ठा, गतिनिवृत्तौ" परस्मै. धा०भ्वादिः कौ०पृ०४२४
"तोः ष्टुः"
( २ ) "आतोऽनुपसर्गे कः" ३।२।३॥ कौ०पृ०५७०

निरु०—४८८ सत्त्वे हृदि स्थितत्वाद्धि ( सत्त्वस्थः ) समुदीरितः।



(४८९) सिंहो,

ॐ सिंहाय नमः ।

भा०—(१) " तथाऽन्यदुक्तं नरसत्तमेन इक्ष्वाकुणाभक्तियुतेन नूनम् । ये विष्णुभक्ताः पुरुषाः पृथिव्यां यमस्य ते निर्विषया भवन्ति " वा०पु० । ५
इति. ❀
यदिदमविदन्तो यमादयः तान् प्राकृतवत् धर्षयेयुः;
तान् हिनस्तीति—
(सिंहः). यथा, १०

निर्व०—इत्यतः कः इत्यनुवृत्तौ,
(३) " सुपि स्थः " ३।२।४॥कौ०पृ०५७१
इति, कः, आल्लोपः.
(४) " असु, भुवि " धा०अदा०कौ०पृ०४४४
अतश्शतरि व्युत्पादितो हि सच्छब्दः ? ततः, १५
(५) " तस्य भावस्त्वतलौ " ५।१।११९॥कौ०पृ०३०९
इति, त्वस्तद्धितः—
जस्त्वचर्त्वे. ततो मत्वर्थीयः अर्शआद्यच्.
(६) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति, लोपः. ❀ २०
यदिचेदमविदन्तः, यमादयः स्वभक्तान् प्राकृतवत् प्रधर्षयेयुः ?
तदा तानपि सिञ्चति हिनस्ति वा हन्तीति—
(सिंहः).

निरु०—४८९ हरिभक्तानविज्ञाय दण्डे प्रयतमानसान् ॥ ३७६ ॥
हिनस्ति च यमादीन् यः स (सिंहः) परिकीर्तितः । २५

भा०—( १ ) " प्रभवति संयमने ममापि विष्णुः " इति.
वि०पु०३—७—१५ ।
अतश्च लैङ्गे मार्कण्डेयः,
५ ( २ ) " वासुदेवपरं दृष्ट्वा वैष्णवं दग्धकिल्बिषम् । देवा विभीतास्सं-
यान्ति प्रणिपत्य यथागतम् ॥ दृष्ट्वा यमोपि वै भक्तं वैष्णवं दग्धकि-
ल्बिषम् । उत्थाय प्राञ्जलिर्भूत्वा ननाम रविनन्दनः ॥ तस्मात् संपूजयेद्भ-
क्त्या वैष्णवान् विष्णुवन्नरः । स याति विष्णुसायुज्यं नात्र कार्या
विचारणा " लै०पु० ।
१० तत्रैव कौशिकोपाख्याने भगवद्गायकान्;
( ३ ) " कौशिकादींस्तथा दृष्ट्वा ब्रह्मा लोकपितामहः । प्रत्युद्गम्य
यथान्यायं स्वागतेनाभ्यपूजयत् " लै०पु० ।
इत्युपक्रम्य प्रस्तुतम्. यथेष्टं द्रष्टव्यम्.
श्रीविष्णुतत्त्वे नरकप्रस्तावे,
१५ ( ४ ) " हरिपादप्रपन्नानां दूरीभूताः स्वभावतः । तेषां तु सर्वभूतानां
हरिरेव पतिर्यतः ॥ वैष्णवेभ्योपि बिभ्यन्ति देवा नरकरक्षकाः ।
अवमानक्रिया तेषां संहरत्यखिलं जगत् ॥ कालेनैतावता तेषु नरकेषु
हि कश्चन । न दृश्यते महावीर्यप्रभावात्परमेष्ठिनः " ष०वि०त० ।
इति.

---

२० निर्य०—( १ ) " पिच, क्षरणे " धा०तुदा० कौ०पृ०४७०
पस्सः.
( २ ) " हिंसि, हिंसायाम् " वा. धा०रुधा०कौ०पृ०४७१
पूर्वत्र धातूनामनेकार्थत्वादुक्तार्थोपपत्तिः.
अन्यत्र न यत्नः- उभयत्रापि यथासंख्यम्.
२५ ( ३ ) " सिचेस्संज्ञायाम्० " उणा०पा०५कौ०पृ०६४४
इति, के, हे ष अन्तादेशे नुमि, तथा पृषोदरादिलक्षणे.

---

१ प्रणतो मू ।

( ४९० ) भूतमहेश्वरः, ।

ॐ भूतमहेश्वराय नमः ।

भा०— श्रीविष्णुधर्मे—

( १ ) " नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चि- ५
तो देवः केशवः क्लेशनाशनः " इत्यादि.

यथोक्ते समर्थः यस्मात्—

( भूतमहेश्वरः ).

निर्व०— वर्ण विपर्यये, इदित्वान्नुमि, पचाद्यचि च,
उभयत्राप्यनुस्वारे सिंहशब्दः प्रागेव हि व्युत्पादि ? ❀ १०
यतो भूतानां ब्रह्मयमादय ईश्वराः;
अयं तु तेषामपि ईश्वरतया
महांश्चासौ ईश्वरो नियन्ता चेति—
( भूतमहेश्वरः ).
( १ ) " ईश,ऐश्वर्ये " धा०अदा०कौ०पृ०४३८ १५
( २ ) " स्थेशभास० "३।२।१७५ ।। कौ०पृ०६०६
इत्यादिना वरच्.
( ३ ) " नेट्० " ७।२।८।। कौ०पृ०५८१
इति, नेट्. महच्छब्दो व्युत्पादितः. भूतशब्दोपि. सं-
हितायां गुणः. ❀ २०

निरु०—४९० भूतेश्वराणां सब्रह्मयमादीनां नियन्त्रणात्।।३७७।।
कारणं जगतां यश्च स स्याद् ( भूतमहेश्वरः ) ।

(४९१ )आदिदेवो, (४९२ ) महादेवो,

ॐ आदिदेवाय नमः। ॐ महादेवाय नमः।

५ भा०— भूतेश्वराणां ब्रह्मयमादीनामपि नियन्ता तेषामपि
कारणं तदभिभवपटुप्रतापश्च.
( आदिदेवः ).
आदिः द्योतमानश्चेति.
( १ ) " भीषास्माद्वातः पवते " तै०उ०आ० ८–१।
१० इत्यादि. ❀
तैः क्रीडनकैः कन्दुकादिभिरिव क्रीडतीति–
( महादेवः ).

निर्व०–तेषामप्यादिः कारणं च असौ देवः तदभिभव–
पटुप्रतापतया द्योतमानश्चेति–
१५ ( आदिदेवः ).
( १ ) " दिवु,क्रीडादौ० " धा०दिवा०कौ०पृ०४५२
पचादिपाठादच्. गुणः.
( २ ) " डुदाञ्,दाने " आङ्पूर्वः. धा०जुहो०कौ०पृ०४५१
( ३ ) " उपसर्गे घोः० " ३।३।९२॥ कौ०पृ०६५८
२० इति किप्रत्यये आल्लोपे चायमर्थस्तादेव न्यरूपि.
महानत्यधिकः, पूज्यो वा स चासौ देवः तैः क्रीडनकैः क्रीड–
श्चेति–
( महादेवः ).

निरु०–४९१ (आदिदेवो) हि भवति ब्रह्मादिभ्यो विशेषतः॥३७८॥
२५ ४९२ ब्रह्मादिभिः क्रीडति यो ( महादेव ) स्स उच्यते।

(४९३) देवेशो, (४९४) देवभृत्, (४९५) गुरुः, ॥

ॐ देवेशाय नमः । ॐ देवभृते नमः । ॐ गुरवे नमः । ५

भा०—तेषां स्वामी च—
(देवेशः). ❀
तेषां यथार्हविनियोगक्षमः तान् बिभर्तीति—
(देवभृद). ❀
तेषां वेदैः स्वस्वाधिकारबोधनात्— १०
(गुरुः).

निर्व०—प्राग्वदेव धात्वादि सर्व. न्यत्रपि च महच्छब्दः. ❀
तेषां च यथार्हविनियोगक्षमतया देवानां ब्रह्मादीनाम् ईशः स्वामीति—
(देवेशः).
(१) "ईश, ऐश्वर्ये" धा०अदा०कौ०पृ०४३८ १५
इगुपधलक्षणः कः. व्युदपादि हि देवशब्दः ? एवमुत्तरत्रापि.
गुणः. ❀
तथा तान् देवान् बिभर्तीति—
(देवभृद).
(१) "डुभृञ्, धारणपोषणयोः" धा०जुहो० कौ०पृ०४५० २०
क्विपि तुक्. अगुणः. ❀
तेषां वेदैस्स्वाधिकारबोधनाद्गुरुराचार्य इति वा,
कालेनानवच्छेदात्, सर्वेषामपि गुरुः अधिक इति वा—
(गुरुः).

निरु०—४९३ ब्रह्मादीनां च (देवेशो) यथार्हविनियोजकः॥३७९॥ २५
४९४ ब्रह्मशक्र्यमादीनां भरणाद् (देवभृद) स्मृतः ।
४९५ ब्रह्मेन्द्रवरुणादीनां (गुरु) र्वेदोपदेशनाद ॥ ३८० ॥

श्लो० ॥ ५३ ॥ (४९६) उत्तरो,

ॐ उत्तराय नमः ।

भा०—(१) "यो वै देवांश्च प्रहिणोति तस्मै" श्वे०उ०५—१—१४।
५ (२) "हरिगुरुवशगोऽस्मि" इत्यादि; वि०पु०३—७—१५।
(३) "अग्निस्सुवर्णस्य गुरुः" इत्यादि च.
(४) "सर्वेषामपि गुरुः कालेनानवच्छेदात्" इति.पातं०सू०१-१-२७।
इदं गुरुत्वं हयशिरोपाख्याने प्रसिद्धम्.
(५) "जग्राह वेदानखिलान् रसातलगतान् हरिः । प्रादाच्च
१० ब्रह्मणे राजन् ततः स्वां प्रकृतिं गतः" इति; "रसातलाद्येन
पुरा समाहृतास्समस्तवेदाः" इत्यादौ च. ❀
एवं ब्रह्मादेरासुरापदुत्तारणात्—
(उत्तरः).

निर्व०—(१) "गॄ,निगरणे" धा०तुदा०कौ०पृ०४६८
१५ कुम्भकरणे,
(२) "कृग्रोरुच्च" उणा०पा०१कौ०पृ०६१०
इति,कुः. उकारश्चान्तादेशः. रपरत्वम्. अगुणः. ❀
एवं ब्रह्मादेरासुरापदुत्तारणतया, ते विपदमुत्तरन्त्य-
स्मादिति वा, ब्रह्मादिस्तुत्यनन्तरं देवकार्यार्थमुत्थिततर इति वा—
२० (उत्तरः).

पूर्वत्र,
(१) "तॄ,प्लवनतरणयोः" धा०भ्वादिः कौ०पृ०४२७
उत्पूर्वः,
(२) "अकर्तरि च कारके०" इत्यनुवृत्तौ; ३।३।१९।।कौ०पृ०६४७

२५ निरु०—४९६ आपदुत्तारणाद्योऽसौ ब्रह्मादे (रुत्तरः) स्मृतः ।

१ पूर्वपा ।

(४९७) गोपतिः,

ॐ गोपतये नमः ।

भा०—(१)" एवं स्तुतस्स भगवान् पुरुषस्सर्वतोमुखः।जहौ निद्रामथ तदा देवकर्यार्थमुत्थितः" इति च.भा०शा०३४८—४७। ५
(उत्तरः). ❀
अशेषच्छन्दोभाषावेषवाङ्निर्वाहकः—
(गोपतिः).
(१)" वाक्पतये "
इति तन्मन्त्रवर्णे. ❀ १०
एवं सर्वविद्यापालनात्—

निर्व०—(३)"ऋदोरप् " ३।३।५७॥कौ०पृ०६५३
इत्यपादाने अप् गुणः रपरः. चर्त्वम्. दस्य तः.इतरत्र उच्छब्दादुत्थितवाचिनः.
(४)"द्विवचनविभज्योपपदे तरबीयसुनौ "५।३।५७॥कौ०पृ० १५ ३४१
इति, द्वयोरेकस्यातिशये तरप्. चर्त्वम् प्राग्वत्. ❀
मन्त्रवर्णानुगुण्येन गवाम् अशेषच्छन्दोभाषावेषाणां वाचां,पतिः स्वामी निर्वाहकः इति—
(गोपतिः). २०
(१)" पा, रक्षणे " धा०अदा० कौ०पृ०४४३
(२)" पातेर्डतिः " इति, डतिः. टिलोपः. उणा०पा०४कौ०पृ०६३४
(३)"गम्लृ,गतौ"धा०भ्वादि: कौ०पृ०४३०
(४)" गमेर्डोः "इति,डोः. उणा०पा०२कौ०पृ०६२२ २५
टिलोपः. प्राग्वत्. ❀

निरु०—४९७छन्दोभाषावेषवाचां निर्वाहाद्(गोपतिः)स्मृतः॥३८१॥

(४९८) गोप्ता, (४९९) ज्ञानगम्यः,

ॐ गोप्त्रे नमः । ॐ ज्ञानगम्याय नमः ।

५ भा०—(गोप्ता).
(१) " सर्वविद्येश्वराय " इति तन्मन्त्रवर्णः. ❋
परविद्यावेद्यः समाधिगम्यः—
(ज्ञानगम्यः).

निर्व०—मन्त्रवर्णानुरोधेन सकलविद्यां गोपायति रक्षतीति—
१० (गोप्ता).
(१) " गुपू, रक्षणे " तृच्.तत्र च,धा०भ्वादिः कौ०पृ०३९७
(२) " गुपूधूप० " ३।१।२८॥कौ०पृ०३९७
इत्यायप्रत्ययः.
(३) " आयादयः० " ३।१।३१॥कौ०पृ०३९७
१५ इति वैभाषिकतया न भवति.
(४) " स्वरतिसूतिसूयतिधूञूदितो वा"७।२।४४॥कौ०पृ०३८५
इत्यूदित्वाद्विट्कतयेह नेट्.
(५) " तृन्तृचौ० " उणा०पा०३कौ०पृ०६२३
इत्यनिडेव वा अनङादि. ❋
२० वरवाजिमुखस्य ध्येयतया च अयं ज्ञानेन परविद्यावेद्यसमाधिना गम्यः
प्राप्य इति—
(ज्ञानगम्यः).

निरु०—४९८ पालनात् सर्वविद्यानां (गोप्ते) ति परिकीर्तितः ।
४९९ परया विद्यया वेद्यो (ज्ञानगम्य) इति स्मृतः ॥ ३८२ ॥

(५००) पुरातनः, ।

ॐ पुरातनाय नमः ।

भा०—(१) " पोरदुपधात् " ३।१।९८॥कौ०पृ०५५७
इति, यत्प्रत्ययः. ५
(२) " वरवाजिमुखं ध्यायेत् अथ वागीश्वरं प्रभुम् "
इति. ❀
नेदं विद्याप्रद्योतनम् अद्यैव; किं तु प्रतिकल्पम् इति—
(पुरातनः).
भा०—(१) " सायंचिरम्० " ४।३।२३॥कौ०पृ०२५६ १०
इत्यादिना ट्युटयुलौ; तुडागमश्च. ❀

## इति श्रीमद्विष्णुनामसहस्रविवरणे,
भगवद्गुणदर्पणे
**पञ्चमं शतकं समाप्तम्।**

निर्व०—(१) " गम्लृ, गतौ " धा०भ्वादिः कौ०पृ०४२० १५
(२) " पोरदुपधात् " ३।१।९८॥कौ०पृ०५५७
इति, यत् कृत्यः.
(३) " शकि लिङ् च " ३।३।१७२॥कौ०पृ०५५२
इति चात् शक्यार्थे.
(४) " ज्ञा, अवबोधने " धा०क्र्यादिः कौ०पृ०४७७ २०
भावे ल्युट्. अनः. दीर्घः. ❀
इत्थं प्रतिकल्प विद्याप्रद्योतनादिनैव पुरा पूर्व भवतीति—
(पुरातनः).

निरु०—५०० विद्याप्रद्योतनाद्योर्ता प्रतिकल्प (पुरातनः)।

निर्व०—( १ ) "स्वरादिनिपातमव्ययम्" १।१।३७॥कौ०पृ०८६ इत्यव्ययसंज्ञात् पुराशब्दात्,

( २ ) "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्च" ४।३।२३॥ कौ०पृ०२५६

इति, ट्युः; ट्युल्वा. स्वरे विशेषः. तयोस्तुडागमश्च. टित्त्वादाद्यवयवः. योरनः. तत्र चायं विवेकः. तुटः प्रागादेशः;

( ३ ) "घकालतनेषु कालनाम्नः" इत्यादिनिर्देशादिति. ❀ ६।३।१७॥कौ०पृ०१८८

---

१५ इति श्रीकुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरदेदशिकतनयवरदगुरुवरसूनुवरदार्यसूरिविरचिते,
श्रीपराशरभट्टार्यभाषित-
श्रीमद्विष्णुसहस्रनामभाष्यानुगे,
भगवन्नामसहस्रनिर्वचने,
पञ्चमं शतकं संपूर्णम्।

---

गंगाविष्णु श्रीकृष्णदास
"लक्ष्मीवेङ्कटेश्वर" छापाखाना
कल्याण-(मुंबई)

श्रीः ।

# विक्रय्य पुस्तकोंकी संक्षिप्त सूची ।

## श्रीमहाभारत ।

### सटीक मोटेअक्षरका ।

महर्षिश्रीवेदव्यासप्रणीत और पंचमवेदसंज्ञा होनेसे विशेष प्रशंसाकरना निरर्थकहै ये वहपुस्तक गणपत कृष्णाजीके छापेकीहै जो पूर्वकालमें ६० वा ८० रुपयेको मिलताथा उसीको हमने सवलेकर ४० रुपयेमें देतेहैं टपाल महसूल ५ रु० अलग है परंतु अब थोडी पुस्तकें रहगईहैं महाभारतके प्रेमीलोगोंको शीघ्र लेनाचाहिये कुछकालके पीछे मूल्य अधिक होजायगा ऐसा ग्रंथ उत्तम छपनेकी आशाभी कमतीहै–लीजिये तो टपाल खर्चासहित मूल्य (४५) पैतालीसही रुपयेमें अभी देतेहैं.

## मार्कण्डेयपुराण (खुलापत्रा)

नवीन छपाहुआ टाईप उत्तम कागज और इयादीका क्लिष्टशब्दोंकी टिप्पणीभी है इसके अंतर्गत जो दुर्गासप्तशती है उसपर शांतनवीटीका जो अतिउत्तमहै लगाई गई है मूल्य केवल ५ मुद्रा.

## भजनामृत ।

यह साधु वैष्णवों तथा हरिभक्तोंकेलिये अधिक प्रयोजनीयग्रंथ है इसमें नित्यकीर्तन, प्रभाती, होरी, विनय, आरती, हिंडोल, गौरी, नव,धुनि इत्यादि सुंदर भजनहैं कीमत १ रु०

# रागरत्नाकर-भक्तचिन्तामणि-रागमालासहित।

६ राग ३६ रागिनीका पूर्ण गानविद्याका घर है परम मनोहर चुचुहाते रसभरे रोज मर्रहकी गवनई लिखी है नीतिविषयक तथा सामयिक ५०० दोहे सोरठेभी हैं १००२ राग हैं और नाजनियोंके गानेलायक गजलें हैं कीमत २ रु०

# भक्तमालरामरसिकावली।

सत्ययुग त्रेता द्वापर कलियुगके हरिचरणानुरागी परम भक्तोंका जीवनचारित्र चौपाई दोहा सोरठा इत्यादिमें लिखा है इसके रचयिता श्रीमन्महाराज रघुराज सिंहजू देवबहादूर रीवांधिपति हैं इनकी बनाईपुस्तकोंमें यह किताब परम पवित्र और अग्रगण्य गिनीजाती है की० ४ रु०

# श्रीमद्भागवतम्।

## (श्रीमद्वीरराघवीयटीकासमन्वितम्)

संमति श्रीमद्भागवतं महापुराणं बहुविधटीकासमन्वितं सर्वत्र सुप्रसिद्धं विद्यते। तथापि सर्वटीकानां मध्ये श्रीवीरराघवीया टीकाऽत्यन्तं सरला सुबोधा नववि (९०) सहस्रग्रन्थात्मिका सविस्तरा सुप्रसिद्धा श्रीवैष्णवजनादरणीयाऽतिप्रशस्तास्ति। तया वीरराघवीयया टीकया समन्वितमेतत्पुस्तकं सर्वसज्जनविद्वज्जनसंप्रदायिजनपौराणिकजनानां त्वत्यन्तोपयोगित्वात्—अस्माभिः तैलङ्ग्द्राविडादिलिपिलिखितपुस्तकान्युपलभ्य तिरुपतिनगरस्थ वेदमार्गप्रतिष्ठापकाचार्योभयवेदान्ताचार्यश्रीमदनन्तपूरुषसिंहासनासीनातिरुपतिश्रीरङ्गाचार्यद्वारा शोधयित्वा स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये स्थूलस्थूलैरतिविशदवर्णविन्यासैरायसाक्षरैः पुष्टघनचिक्कणपत्रेषु मुद्रयितुं समारभ्यते। तत्र च प्रथमं श्रीदशमस्कन्धो मुद्रयितुमुपक्रम्यते।

येषां येषामेतत्समग्रग्रन्थसंग्रहणेच्छास्ति। ते स्वस्वनामग्राामस्थलमत्यभिज्ञ

एकं पत्रं प्रेषयन्तु । यथा यथा पुस्तकं मुद्रयिष्यते तथा तथा प्रेषयिष्यामः । प्रतिस्कन्धं मुद्रिते सति तावदेव ग्रन्थं प्रेषयित्वा तावदेव वा मूल्यं तत्तत्समये ग्रहीष्याम । येषां तु प्रथमं एतद्ग्रन्थजिघृक्षा स्यात् येच वा प्रतिस्कन्धं संगृह्णीयुः—तेऽतीव स्वल्पमूल्येन समग्रं ग्रन्थं लभेरन् । पश्चाद्मूल्यं वर्द्धयिष्यते । अतस्त्वर्यतामेतद्लभ्यस्वल्पमूल्य श्रीवीरराघवीयटीकासमन्वित श्रीमद्भागवतमहापुराणग्रन्थसंग्रहणेच्छयेति शम् ।

## शाक्तप्रमोद ।

### दशमहाविद्याओंका और पञ्चदेवोंका पञ्चाङ्ग ।

सम्पूर्ण भारतनिवासि द्विजोत्तमोंपर विदित हो कि, यह अलभ्य क्लिष्टवासे प्राप्त परमगुप्त अत्युत्तम नवीन ग्रंथ हमारे यहां छपा है; इसमें आदिशक्ति जगन्माताके दशोस्वरूप अर्थात् काली, तारा, त्रिपुरसुंदरी, भुवनेश्वरी, छिन्नमस्ता, त्रिपुरभैरवी, धूमावती, बगलामुखी, मातंगी, कमलात्मिका, तथा पंच देवता दुर्गा, शिव, गणेश, सूर्य, विष्णु और वेदोक्त, शास्त्रोक्त, मंत्रोक्त, तंत्रोक्त, विस्तारपूर्वक लिखीहै, जिनके चित्र ( तस्वीरें ) भी फोटूग्राफानुसार यथावत् खींचीगईहैं. इस ग्रंथका मूल्य पञ्च ( ५ ) मुद्रा.

# सूचना।

## १ श्रीमद्गोस्वामितुलसीदासकृत

## रामायण (सटीक)·

### पंडित–ज्वालाप्रसादकृतटीका ।

लीजिये रामायण सटीकभी लीजिये असल पुस्तक श्रीगुसाईजीकी लिपिके अनुसार व सम्पूर्ण क्षेपकों सहित जिसमें शंका-समाधान आद्यपर्य्यंत विस्तारपूर्वक लिखे हैं इसके टीकाकी रचना ऐसी उत्तम और अपूर्व मनभावन सुखउपजावन राम यशपावन है कि, पढते २ कदापि तृप्ति नहीं

होती तुलसीदासजीका जीवनचरित्र रामवनवास तिथिपत्र माहात्म्यभी सम्मिलितहैं कीमत ८ रु० डाकमहसूल १॥। रु०

## २ रामायण वडा।

सहित श्लोकार्थ गूढार्थ छन्दार्थ स्तुत्यर्थ शंकासमाधान और तुलसीदासजीका जीवनचरित्र, रामवनवासतिथिपत्र, रामाश्वमेध, लवकुशकाण्ड, माहात्म्य और वरवारामायणके जिस्में पंचीकरणका वडा नक्शा और ३८०० कठिन २ शब्दोंके अर्थ लिखेहैं अक्षर अत्यंत मोटा ग्लेजकागजका की० ५ रु० रफ् कागजका की० ४ रु०

## ३ रामायण मझोला।

ऊपरके सव अलंकारोंसहित इसका सांचा छोटाहै अक्षर सामान्यहै कीमत २॥ रु० रफ् १॥। रु.

## ४ रामायण गुटका।

यहभी पूर्वोक्त सव अलंकारोंसे पूरितहै साधु तथा देशाटन करनेवालोंको अत्यंत उपयोगीहै कीमत वहुतही थोडी केवल १ रु०

## शार्ङ्गधरसंहिता ( भाषाटीकासह )

यह टीका आढमल्ली और गूढार्थप्रकाशिका जो इस्की संस्कृतटीका है उनके अनुसार भाषाटीका करीगई है यद्यपि इसग्रंथकी टीका कईभिषग्वरोंने कीहै परन्तु इस रीतिसे विस्तारपूर्वक किसीने नहींकीहै तिसपरभी मूल्य केवल ( तीन मुद्रा ) ३ रु० रक्खाहै विलायतीकपडेकी जिल्दसहित ये १ छपाहै।

## मनुस्मृतिः ।

सान्वय अत्युत्तम सरल हिंदीभाषाटीकासहित छपकर विक्रयार्थ प्रस्तुतहै
सा उत्तमग्रंथ अद्यावधिपर्यंत कहीं नहीं छपाथा भारतवर्षके राजा महाराजा
था विप्रगण इसीके अनुसार राजनीति और प्रजापालन धर्मशासन करते हैं
हाँतक कि, श्रीमन्महाराज अंग्रेजबहादूरभी इसका अवलम्ब लेते हैं यहग्रंथ
रमसुंदर मोटे टैप् और जाडे विलायती कागजपर छपाहै की. ३ रु०

## ब्रह्मवैवर्त्तपुराण संपूर्ण ।

ब्रह्मखण्ड, प्रकृतिखण्ड, गणेशखण्ड और श्रीकृष्णजन्मखण्ड संपूर्ण
चारोंखंडोका मूल्य ८ रुपया आदिके तीनखंडोंका मूल्य ५ रुपया केवल
श्रीकृष्णजन्मखंडका मूल्य रु० ३ है.

## ब्रजविलास ।

ब्रजमण्डलसे प्राप्त यह ग्रंथ अत्यंत शुद्धतापूर्वक बडे २ अक्षरोंमें मोटे
कागजपर छपाहै कठिन शब्दोंकी टीप्पणीभी है कीमत ९ रु०

## श्रीमद्भागवत संस्कृत तथा भाषाटीकासहित ।

श्रीवेदव्यासप्रणीत श्रीमद्भागवत अठारहों पुराणोंमेंसे श्रीमद्भागवत सबसे
कठिनहै और इसका प्रचार भारतखण्डमें सबसे अधिक है यह ग्रंथ क्लिष्टताके
कारण सर्व साधारण लोगोंको टीका होनेपरभी अच्छीरीतिसे समझना कठिनथा.
कोई २ स्थलमें बडे २ पण्डितोंकी बुद्धि चक्करमें उडजातीथी इसलिये विनासं-
स्कृत पढे सर्व साधारण पण्डित व स्वल्पविद्या जाननेवाले भगवत्भक्तोंके ला-
भार्थ संस्कृतमूल अतिप्रिय ब्रजभाषाटीकासहित जो कि हिन्दीभाषाओंमें शिरो-
मणि और माननीयहै उसी भाषामें टीका बनवाकर प्रथमावृत्ती छपायाथा ओ
श्रीकृष्णचन्द्र आनन्दकंदकी कृपाकटाक्षसें बहुतही जल्दी हाथोंहाथ बिकगई
अब इस्की द्वितीयावृत्ती प्रथमावृत्तीकी अपेक्षा अच्छीतरह शुद्ध करवाके मोटे
अक्षरमें छपायाहै और संबंधित कथाओंके शिवाय उत्तमोत्तम भक्तिज्ञानमार्गी
१०० अतीव मनोहर दृष्टांत दिये हैं कि जिनके श्रवणसे श्रोताओंका मन
भावनानुसार मग्न होजाता है कागज विलायती बढिया लगायाहै माहात्म्य
पंचाध्यायी भाषाटीका सहित इस्के साथही है प्रथमावृत्तीमें मूल्य १९ रुपयेथा
इस आवृत्तीमें केवल १२ बाराही रुपया रक्खाहै ज्यादा प्रशंसा बाहुल्यमात्रहै.

(दोहा) एकपढी आधीपढी, ताहूकी पुनिआध ॥
नेमसहित जो नितपढे, कटै कोटि अपराध ॥ १ ॥

# हारीतसंहिता—( वैद्यकग्रन्थ )

## ( मूल संस्कृत और भाषाटीकासहित )

समस्त महाशयोंको विदित करनेमें आताहै कि,— "हारीतसंहिता" नामक वैद्यक ग्रन्थ सरल हिन्दीभाषानुवाद बनवाकर और शास्त्रियोंद्वारा शुद्ध करवाकर सुन्दर मध्यमअक्षरोंमें छपाकर विक्रयार्थ प्रस्तुतहै,—लीजिये तो यह ग्रन्थ बहोतही उपकारक और स्वल्पहोकरभी सर्ववैद्योंको सबतरहके औषधज्ञान तथा रोगोंकी चिकित्सा करनेमें अप्रतिम साह्य होगा इस्में कुछ संदेह नहींहै इसवास्ते वैद्य महाशयजी ! अभी ज्यादा लिखना बाहुल्यमात्रहै,तथापि इस अपूर्व ग्रन्थको अवश्य संग्रहमें रखकर रोगनिवारणद्वारा निर्मलकीर्तिको प्राप्त करेंगे. इस ग्रन्थका मूल्य केवल ३ रु.

---

विशेषसूचना—संपूर्णपुस्तकोंका सूचीपत्र आध आनेका टिकट भेजनेसे विनादाम वडासूचीपत्र भेजाजाताहै.

---

पुस्तकें मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास

"लक्ष्मीवेङ्कटेश्वर" छापाखाना

कल्याण-(मुंबई)

## (५०१) शरीरभूतभृत्,

ॐ शरीरभूतभृते नमः।

भा०— (१) "शरीरभूतं तत्त्वजातं बिभर्तीति"
(शरीरभूतभृत्). ५
(२) "तच्छिरः" आरण-२।
(३) "तस्य मूर्धा समभवत् द्यौस्सनक्षत्रदेवता" इत्यारभ्य—
(४) "एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम्"
इत्यन्तम् ❀ भा०शां०३४८—४९।,
(५) "यत्तु तत्कथितं पूर्वं त्वया हयशिरो महत्। हव्यकव्यभु- १०
जो विष्णोरुदक्पूर्वे महोदधौ" भा०शां०३४८—३।
इति. ❀

निर्व०—स एव च हयशिरसा शरीरभूतं शरीरतयावस्थितं बिभर्ति
भरति वेति—
(शरीरभूतभृत्). १५
(१) "डुभृञ्, धारणपोषणयोः" धा०जुहो०कौ०पृ०४५०
(२) "भृञ्, भरणे" वा धा०भ्वादिः कौ०पृ०४२२
क्विपि, तुक्. अगुणः.
भवतेः कर्तरि क्तः.
(३) "श्र्युकः०" इति, नेट्. ७।२।११॥कौ०पृ०४२५ २०
(४) "शॄ, हिंसायाम्" धा०क्र्यादिः कौ०पृ०४७६
(५) "कॄशॄपॄकटिपटिशौटिभ्य ईरन्"उणा०पा०४कौ०पृ०६३३
इति, ईरन्. गुणः रपरः. ❀

निरु०—५०१ देहभूतं जगत्तत्त्वं प्रकृत्यादिधरान्तकम्॥ ३८३॥
(शरीरभूतभृत्) प्रोक्तो बिभर्तीति दशाऽक्षरः। २५

{५०२ / १४५} भोक्ता, (५०३) कपीन्द्रो,

ॐ भोक्त्रे नमः । ॐ कपीन्द्राय नमः ।

५ भा०— ( भोक्ता ). ❀
अथैवं स्ववर्धितवेदविहितकर्मप्रवर्तकः पुरा रामः स्वविसदृशलीलामनुजावतारे स्वदासानां विसदृशतरकपिरूपं प्रपन्नानां देवानामिन्द्रः—
( कपीन्द्रः ).
( १ ) " सर्वलोकेश्वरस्साक्षाल्लोकानां हितकाम्यया । सर्वैः परिवृतो
१० देवैर्वानरत्वमुपागतैः " रा०यु०१४४—१६ ।
इति. ❀

निर्व०— हयशिराश्च हव्यं कव्यं च भुङ्क्ते इति—
( भोक्ता ).
( १ ) " भुज, पालनाभ्यवहारयोः " धा०रुधा०को०पृ०४७१
१५ तृच्. गुणः. अनिट्.
झलि कुत्वम्. गः.
तस्य चर्त्वम्. कः. अनङादि. ❀
अथैवं स्ववर्धितवेदविहितकर्मप्रातिस्विकप्रवर्तकः मुखभेदेन अपौनरुक्त्यात्मना रामः प्रस्तूयते.
२० कपीनां स्वविसदृशलीलामनुजावतारे स्वदासानां तदानुगुण्येन विसदृशतरकपिरूपं प्रपन्नानां देवानामिन्द्रः
स्वामीति—
( कपीन्द्रः ).

निरु०—५०२हव्यं कव्यं च यो भुङ्क्ते स(भोक्ता)परिकीर्तितः॥ ३८४॥
कपिरूपं प्रपन्नानां देवानामीश्वरत्वतः ।
५०३ ( कपीन्द्र ) इति विख्यातः सनाणां मनुनायकः ॥ ३८५ ॥

(५०४) भूरिदक्षिणः, ॥

ॐ भूरिदक्षिणाय नमः ।

भा०—स एव, जगदाचार्यकाय हयमेधादिभिर्यजमानः—
(भूरिदक्षिणः). ५
(१) "अश्वमेधशतैरिष्ट्वा" इत्यादि. ❀रा०वा०१–९४ ।

निर्व०—(१) "इदि, परमैश्वर्ये" धा०भ्वादिः कौ०पृ०३८७
इदित्वान्नुम्. अयम्,
(२) "ऋज्रेन्द्राग्र०" इत्यादिना, उणा०पा०२ कौ०पृ०६२०
रन्नन्तो निपातितः. १०
(३) "नेट्०" इति, नेट्. ७।२।८॥कौ०पृ०५८१
इति पूर्वमेवोदैरिराम.
(४) "कपि, चलने" इदित्वान्नुम्. धा०भ्वादिः कौ०पृ०३९६
(५) "अच इः" इति प्रकरणे, उणा०पा०४कौ०पृ०६३८
(६) "कुण्डिकम्प्योर्नलोपश्च" उणा०पा०४कौ०पृ०६३९ १५
इति, इः; नलोपश्च. दीर्घस्सांहितः. ❀
स एव जगदाचार्यकाय महादक्षिणैः हयमेधादिभिः यज्ञमानतया
भूरयो दक्षिणाः अस्येति वा, उक्तव्युत्पत्त्या भूरिदक्षिणोऽश्वमेधादिः
सोऽस्यास्तीति वा—
(भूरिदक्षिणः). २०
(१) "दक्ष, वृद्धौ शीघ्रार्थे च" धा०भ्वादिः कौ० पृ०४०६
(२) "द्रुदक्षिभ्यामिनन्" उणा०पा०२ कौ०पृ०६२१
इति, इनन्. णत्वम्. ततः स्त्रियाम्, अतष्टाप्. दीर्घः.

निरु०—५०४ हयमेधादिभिर्यज्ञैर्जगदाचार्यकाय वै ।
यजमानस्स विज्ञेयस्सर्वदा (भूरिदक्षिणः) ॥ ३८६ ॥ २५

श्लो० ॥ ५४ ॥ ( ५०५ ) सोमपो,

ॐ सोमपाय नमः ।

भा०— तत्रैव सोमपीथी—

५ ( सोमपः ).

( १ ) " यत्किंचिद्धूयते वह्नौ हविर्मन्त्रैर्विधानतः । तत्सर्वममृतं कृत्वा विष्णवे संप्रयच्छति " ॥ इति.

( २ ) " अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" गी०९–२४ । इति. ❀

१० निर्व०— ( ३ ) " भू, सत्तायाम् " धा०भ्वादिः कौ०पृ०३६८

( ४ ) " अदिशदिभूशुभिभ्यः क्रिन् " उणा०पा०४कौ०पृ०६३५ इति, क्रिन्. अगुणः.

( ५ ) " श्युकः० " इति, नेट्. पुंवद्भावः. ततः, ७।२।११॥ कौ०पृ०४२५

१५ ( ६ ) " गोस्त्रियोः० " १।२।४८॥कौ०पृ०१२९

इति, उपसर्जनह्रस्व इत्यादि. अनुकल्पे तु, व्युत्पादितादेव भूरिदक्षिण-शब्दात् मत्वर्थीयोऽर्शआद्यच् विशेषः

( ७ ) " यस्य० " इति, लोपः. ❀ ६।४।१४८॥कौ०पृ०५६

तत्रैव सोमपीथितया, सोमं लतात्मकं सोमराजानं पिबतीति—

२० ( सोमपः ).

( १ ) " पा, पाने " भ्वादिः कौ०पृ०४२४

( २ ) "आतोऽनुपसर्गे कः"इति,कः. न च३।२।३॥कौ०पृ०५७०

( ३ ) " गापोष्टक् " इति, टक्; ३।२।८॥कौ०पृ०५७२

( ४ )"पिबतेस्सुराशीध्वोरिति वक्तव्यम्"३।२।८॥कौ०पृ०५७२

२५ इत्युपपदनियमात्. आल्लोपः.

निरु०—५०५ ह[illegible] सोमपः ) परिकीर्तितः ।

१ पाः ।

(५०६) ऽमृतपः,

ॐ अमृतपाय नमः।

भा०—हविःपरिणामरूपम् अमृतं स्वयमेव पिबति चेति—
(अमृतपः). ५
स्वानुष्ठानानुविधायिभ्यः स्वानुभवरूपममृतं परमे व्योम्नि पातीति वा—
(अमृतपः).
(१) "यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त"
इति. तै०उ०ना०—६—१५।

निर्व०—(५) "पुञ्, अभिषवे" पस्तः. धा०स्वादिः कौ० १०
पृ०४६१
(६) "अर्तिस्तुसुहु०" उणा०पा०१ कौ०पृ०६१६
इत्यादिना मन्. गुणः. अनिट्. ❀
स एव च सर्वयज्ञभोक्तृतया अमृतं तद्वदास्वाद्यं वह्नौ हूयमानं
यत्किंचिद्धविः पिबतीति वा, १५
स्वानुष्ठानानुविधायिभ्यः परमे व्योम्नि स्वानुभवरूपममृतं पाति
रक्षतीति वा—
(अमृतपः). एकत्र,
(१) "पा, पाने" अन्यत्र, धा०भ्वादिः कौ०पृ०४२४
(२) "पा, रक्षणे" उभयत्रापि, धा०अदा०कौ०पृ०४४३ २०
(३) "आतोऽनुपसर्गे कः" इति, कः.आल्लोपः.३।२।३॥कौ०
पृ०५७०
(४) "मृङ्, प्राणत्यागे" धा०तुदा०कौ०पृ०४६८

निरु०—५०६ परिणामोऽस्य हविषां पीयूषमिति चोच्यते ॥३८७॥
तत्पानात्स्या (दमृतपः) परमे व्योम्नि वा स्थितः। २५
मुक्तेभ्यो यः स्वानुभवं पाती (त्यमृतपः) स्मृतः॥ ३८८ ॥

( ५०७ ) सोमः,

ॐ सोमाय नमः ।

भा०–( २ ) " अमृतस्यैष सेतुः " मुं०उ०२–२–५ ।
५ ( ३ ) " यस्य च्छायाऽमृतम् " इति. ❀
स्वस्मै, स्वानुभवितृभ्यश्च अमृतायमानः–
( सोमः ).
सोमशब्दो ह्यमृतवाची ?
( १ ) " तृतीयस्यामितो दिवि सोम आसीत् " अष्ट–३–१ ।
१० ( २ ) " स खल्वमृतोपमः "
( ३ ) " महता तपसा राम महता चापि कर्मणा । राज्ञा दशरथेनाति लब्धोऽमृतमिवामरैः " इति. रा०आ०६६–३ ।
( ४ ) " अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम् " इति.
१५ ( ५ ) " शान्तिसमृद्धममृतम् " इति च. ❀ तै०उ०शि०६–२ ।

निर्व०–( ५ ) " हसिमृग्रिण्वाऽमि० " उणा०पा०३कौ०पृ०६२८ इत्यतः तन्. इति वर्तमाने,
( ६ ) " तनिमृङ्भ्यां किच्च " उणा०पा०३ कौ०पृ०६२९ इति, तन्-किच्. अगुणः. अनिट्. नञ्समासः.
२० नञो नलोपः. अयमन्यथा चापि प्रागुक्तः. ❀
स चातृप्तिकरत्वादिनाऽमृतोपमतया स्वस्मै स्वानुभवितृभ्यश्च.सोमःअमृतं भवतीति–
( सोमः ).
( १ ) " षुञ्, अभिषवे " परस्मै. धा०स्वादिः कौ०पृ०४६१
२० ( २ ) " अर्तिस्तुसुहु० " उणा०पा०१कौ०पृ०६१६

निरु०–५०७ ( सोमः ) सुधायमानत्वान्मुक्तानां परिकीर्तितः ।

(५०८) पुरुजित्,

ॐ पुरुजिते नमः ।

भा०—(१) "सत्येन लोकाञ्जयति दीनान् दानेन राघवः ।
गुरून् शुश्रूषया वीरो धनुषा युधि शात्रवान्" रा०अ०१२—२९।५
इति बहूनां जयात्—
(पुरुजित्). ❀
(१) "स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीर! भावो नान्यत्र गच्छति" उत्त० रा०४०।
(२) "यावद्रामकथा वीर!" इत्यादिवत्, रा० । १०

निर्व०—इत्यादिना मनु. गुणः. अनिष्ट. श्रौत्या च प्रसिद्ध्याऽयमृतवचनः. अतिमधुरिम्णा च तत्तादात्म्येनेह निर्देशः. ❀
तथा पुरून् बहून् लोकदीनगुरुशात्रवान्सत्यदानशुश्रूषाशरासनैः जयतीति—
(पुरुजित्). १५
(१) "जि, जये" धा०भ्वादिः कौ०पृ०४०५
क्विपि तुक्. अगुणः. ईत्यादि.
(२) "पॄ, पालनपूरणयोः" धा०जुहो०कौ०पृ०४४९
(३) "कुर्भ्रश्च" इति प्रकरणे, उणा०पा०१कौ०पृ०६१०
(४) "पॄभिदिव्यधिगृधिधृषिभ्यश्च" उणा०पा०१कौ०पृ०६१० २०
इति, कुः. ऋत इत्यनुवृत्तौ,
(५) "उदोष्ठ्यपूर्वस्य" ७।१।१०२॥ कौ०पृ०४४९
इत्युत्वम्. रपरत्वम्. अगुणः. ❀

निरु०—५०८ लोकान् दीनान् गुरून् शत्रून् सत्यदानानुवर्तनैः ॥ ३८९ ॥ धनुषा जितवान्यश्च (पुरुजित्) स स्मृतो बुधैः । २५

(५०९) पुरुसत्तमः, । (५१०) विनयो,

ॐ पुरुसत्तमाय नमः । ॐ विनयाय नमः ।

५ भा०— स्वगुणामृतसमुद्रपिपासुषु हनुमदादिषु महत्सु अस्ति-
तम इति—
( पुरुसत्तमः ).
मारीचादयोऽपि वीर्यादिनाऽस्माद्विनीयन्ते दम्यन्ते इति—
( विनयः ). ❀

१० निर्व०— तथैव पुरुषु महत्सु स्वगुणामृतोदधिपिपासुषु हनुमदादिषु
सत्तमः अस्तितमः इति—
( पुरुसत्तमः ).
( १ ) " अस्, भुवि " धा० अदा० कौ०पृ०४४४
ततश्शतरि व्युत्पादितो हि सच्छब्दः ? तत आतिशायनिकस्तमप्.
१५ जश्त्वचर्त्वे. पुरुशब्दः पूर्ववत्. ❀
वीर्यादिना मारीचादयोऽपि विनीयन्ते दम्यन्तेऽस्मादिति—
( विनयः ).
( १' ) " णीञ्, प्रापणे " धा०भ्वादिः कौ०पृ०४२३
विपूर्वः. णो नः.
२० ( २ ) " अकर्तरि च कारके० " ३।३।१९॥कौ०पृ०६४७
इत्यनुवृत्तौ,
( ३ ) " एरच् " इत्यपादानेच्. ३।३।५६॥कौ०पृ०६५३

निरु०—५०९ महत्स्वस्तितमत्वाद्यो ह्याञ्जनेयादिषु स्वयम्॥३९०॥
( पुरुसत्तम ) आख्यातो नवार्णः स्वस्तिदो मनुः ।
२५ ५१० कुम्भकर्णमहाकायखरमारीचरावणाः ॥ ३९१ ॥
दम्यन्ते विक्रमैर्येन ( विनयः ) सउदाहृतः ।

(५११) जयः, (५१२) सत्यसन्धो,

ॐ जयाय नमः । ॐ सत्यसन्धाय नमः ।

भा०— आश्रितैर्जीयते विधेयी क्रियते इति— ५
(जयः). यथा,
(१) "आज्ञाप्योऽहं तपस्विनाम्" रा०बा०३—३७।
(२) "ततो नारायणो विष्णुः नियुक्तस्सुरसत्तमैः" इति. ❀
रा०बा०१६—१।
तेषु सत्या सन्धा प्रतिज्ञा अस्येति— १०
(सत्यसन्धः). यथा,
(१) "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः" रा०आ०१०—१९।
(२) "सत्यसन्धो जितेन्द्रियः" इति च. ❀ रा०सं०३९।

निर्व०— (४) "श्रिणीभुवः०"३।३।२४॥कौ०पृ०६४९ १५
इति घञ् तु न; अनुपसर्ग इति प्रतिषेधात्. गुणायादेशौ. ❀
आश्रितविधेयतया तैर्जीयते आज्ञाप्यतेऽयमिति—
(जयः).
(१) "जि, जये" धा०भ्वादिः कौ०पृ०४०५
(२) "अकर्तरि०" इत्यनुवृत्तौ, ३।३।१९॥कौ०पृ०६४७ २०
(३) "एरच्" इति, कर्मण्यच्. गुणः. ❀ ३।३।५६॥कौ०
पृ० ६५३
अथ तेषु सत्या अकैतवा, सन्धा प्रतिज्ञा, अस्येति—(सत्यसन्धः).
(१) "डुधाञ्, धारणपोषणयोः" धा०जुहो०कौ०पृ०४५१
संपूर्वः. अनुस्वारपरसवर्णौ अङिति वर्तमाने, २५

निरु०—५११ आश्रितैर्जीयते यस्माद्विधेयी क्रियते (जयः)॥३९२॥
५१२ सत्या प्रतिज्ञा यस्येति (सत्यसन्धः) स उच्यते ।

## ( ५१३ ) दाशार्हः,

ॐ दाशार्हाय नमः ।

भा०—दाशः दानम् भक्तैः स्वस्मै स्वात्मनिवेदनरूपम्, तेभ्यो वा स्वात्म-
५ समर्पणरूपम् अर्हतीति—
( दाशार्हः ).
( १ ) " अर्हः " इत्यच्. एवं ( महार्ह ) इत्यादि. ३।२।१२॥
कौ०पृ०५७२
कृष्णत्वे दशार्हाणामपत्यत्वाद्वा. ❀

१० निर्व०—( २ ) " आतश्चोपसर्गे " ३।३।१०६॥कौ०पृ०६६०
इति. स्त्रियामङ् ङित्त्वादातो लोपः ततः
अतष्टाप्. दीर्घः. अस्तेश्शतरि व्युत्पादिताव् सच्छब्दात्,
( ३ ) " तत्र साधुः " इति, यत्.-४।४।९८॥कौ०पृ०२८९
१५ भत्वाज्जश्त्वाभावः. स्त्रियामतष्टाबित्यादि. ततः स्त्रियां पुंवद्भावः.
( ४ ) " गोस्त्रियोः० " १।२।४८॥कौ०पृ०१२९
इति, उपसर्जनह्रस्वः. छन्दोभावाच्छन्दसि वर्णाधिक्यमदोषः. तद्भावश्च
दर्शितः. ❀
अयं च,दाशं भक्तकर्तृकस्वसंप्रदानकस्वात्मनिवेदनरूपम्, स्वकर्तृकभा-
२० क्तसंप्रदानकस्वात्मसमर्पणरूपं वा दानम्,
अर्हतीति वा, दाशन्ति यस्मै भक्ताः स्वात्मनः
कर्म स चासावर्हः पूज्यश्चेति वा, कृष्णत्वे दशार्हापत्यमिति वा, तत्सम्ब-
न्धीति वा—
( दाशार्हः ).

२५ निरु०—५१३ आत्मनो वाऽर्पणं भक्तैस्तेभ्यो वा स्वात्मनोऽर्पणम्
॥ ३९३ ॥ दाशस्तमर्हति च यो ( दाशार्हः ) स तु कीर्तितः ।

भा०—परंब्रह्म सत्त्वं वा सत्.
( २ ) " तदस्यास्ति० " इति, मतुप्. ५।२।९४॥कौ०पृ०३२५
( ३ ) " संज्ञायाम् " मतुपोवकारः ८।२।११॥कौ०पृ०३२६
( ४ ) "तसौ मत्वर्थे" इति, भसंज्ञा. १।४।१९॥कौ०पृ०३२५ ५
सत्त्वान्-ब्रह्मवित्, सात्त्विको वा. तस्येदं कर्म शास्त्रं वा सात्वतम्. ततः,
( ५ ) "तत्करोति तदाचष्टे "इति, णिच्. चुरादौ-गणसूत्रम् कौ० पृ०४९०
( ६ ) "णाविष्ठवत् प्रातिपदिकस्य"६।४।१५५॥कौ०पृ०३१०
इतीष्ठवद्भावात् टिलोपः. ❀ १०

निर्व०-( १ ) " अर्ह, पूजायाम् " धा०भ्वादिः कौ०पृ०४११
पूर्वत्र अजित्यनुवृत्तौ,
( २ ) " अर्हः "इति, ३।२।१२॥कौ०पृ०५७२
कर्मण्युपपदेऽणोपवादोऽच्. स्त्रियां विशेषः.
( ३ ) " दाशृ, दाने " धा०भ्वादिः कौ०पृ०४२२ १५
भावे घञ्. उत्तरत्रार्हतेः कर्तरि पचाद्यच्, दाशतेरपि स एवाच्.
( ४ ) "दाशगोघ्नौ संप्रदाने" इति, ३।४।७३॥कौ०पृ०६४५
संप्रदाने कारके निपात्यते. कर्मधारयः. उभयत्रापि सांहितिको दीर्घः.
अपरत्र जित्वरतया दशापि दिशोऽर्हतीति दशार्हो नाम यदुवंश्यो
राजा. अर्हतेः प्रथमकल्पवदेवाऽच्. २०
( ५ ) " दंश, दशने " धा०भ्वादिः कौ०पृ०४३१
( ६ ) " कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः " उणा०पा०१ कौ०पृ०६१८
इति, कनिन्. प्राक् प्रत्ययनिर्देशाद्बाहुलकाद्वा, अन्यतोपि भवतीति कनिन्. २५
( ७ ) " अनिदिताम्० " इति; नलोपः. ततः, ६।४।२४॥ कौ०पृ०७६

( ५१४ ) सात्वतांपतिः, ॥

ॐ सात्वतांपतये नमः ।

भा०—ततः क्विपि सति, णिलोपे च कृते, सात्वतः-भागवताः तेषां पतिः
५ ( सात्वतांपतिः ).

निर्व०—( ८ )"नलोपः प्रातिपदिकान्तस्य " ८।२।७॥कौ०पृ० ३१
इति, नलोपः. सांहितिको दीर्घः. न च तत्र कर्तव्ये नलोपोऽसिद्धः.
( ९ ) " नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति " ८।२।२॥कौ०
पृ०६२
१० इति नियमात्. संज्ञाशब्दोऽयं नातीवात्रावयवार्थेऽभिनिवेष्टव्यम्. एव-
मवेदेशे अन्यत्रापि तत्र तत्रावधातव्यम्. एवं सिद्धाद्दशार्हशब्दात्,
( १० ) "ऋष्यन्धकवृष्णिकुरुभ्यश्च " ४।१।११४॥कौ०पृ०२१२
इति, अपत्येऽर्थे इञपवादोऽण्. अन्यत्र संबन्धसामान्यविवक्षायाम्,
( ११ ) " तस्येदम् " इति वा. ४।३।१२०॥कौ०पृ०२७१
१५ उभयत्राप्यादिवृद्धिः.

( १२ ) " यस्य० " इति, लोपः. ❀ ६।४।१४८॥कौ०पृ०५६
तथा निराशीः कर्मकारिणां निर्वाहकतया, कृष्णत्वे यादवधुरंधरतया
वा सात्त्वतां, सत् ब्रह्म, सत्त्वं वा. तद्वन्तः सत्त्वन्तः ब्रह्मविदः, सात्त्विका
वा तेषामिदं कर्म, शास्त्रं वा सात्त्वतं; तत्कुर्वाणाः तदाचक्षाणाश्च वा,
२० सातयति सुखयत्याश्रितानिति सात्-परमात्मा; स एषामस्तीति वा
सात्त्वतः सात्त्वन्तो वा महाभागवताः; तेषां पतिः स्वामीति—
( सात्वतांपतिः ).

निरु०—७.१४ ये सात्त्वतो भागवतास्तेषां यः पतिरीश्वरः ॥ ३९४ ॥
( सात्त्वतापति ) रित्युक्तो नराणांस्ताप्तुरक्षकः ।

भा०—( १ ) " निराशीः कर्मसंयुक्तान् सात्वतांश्चाप्यकल्पयम् ।
सात्वतज्ञानदृष्टोऽहं सात्वतः सात्विकीपते "
इत्युक्तं ध्वनयति अनयैव व्युत्पत्त्या. यादवधुरंधरत्वाद्वा. ❀

---

निर्व०—( १ ) " पा, रक्षणे " धा०अदा० कौ०पृ०४४३ ५
( २ ) " पातेर्डतिः " इति, डतिः. उणा०पा०४कौ०पृ०६३४
टिलोपः. पूर्वत्र,
( ३ ) " अस, भुवि " धा०अदा० कौ०पृ०४४४
ततश्शतरि व्युत्पादितो हि सच्छब्दः[१] ततः,
( ४ ) " तदस्य० " इति, मतुप्. ५।२।९४॥कौ०पृ०३२५ १०
( ५ ) " तसौ मत्वर्थे " १।४।१९॥कौ०पृ०३२५
इतिभत्वाज्जश्त्वाभावः. ततोत्र,
(६) "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति, ८।२।९॥कौ०पृ०३२५
( ७ ) " झयः " ८।२।१०॥कौ०पृ०३२६
( ८ ) " संज्ञायाम् " इति वा. ८।२।११॥कौ० पृ० ३२६ १५
यथायथं मतोर्मस्य वः. ततः,
( ९ ) " तस्येदम् " इत्यण्. आदिवृद्धिः ततश्च, ४।३।१२०॥
कौ०पृ०२७१
( १० ) " तत्करोति तदाचष्टे " इति, णिच्. चुरादौ-गणसूत्रम्.
कौ०पृ०४९० २०
(११) "णाविष्ठवत् प्रातिपदिकस्य" ६।४।१५५॥कौ०पृ०३१०
इति, आतिदेशिकटिलोपः. ततः क्विपि णिलोपः. उत्तरत्र सातिस्सौ-
त्रः सुखार्थः.ततः,
( १२ ) " हेतुमति च " ३।१।२६॥कौ०पृ०४९२
इति हेतुमण्ण्यन्तात् शः इति स्थिते, २५
( १३ ) " अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहि-
भ्यश्च " इति, शस्य, ३।१।१३८॥कौ०पृ०५६८
( १४ ) " वाऽसरूपोऽस्त्रियाम् " ३।१।९४॥कौ०पृ०५५५

---

१ त्वती ।

श्लो०॥५५॥ (५१५) जीवो, (५१६) विनयिता,

ॐ जीवाय नमः। ॐ विनयित्रे नमः।

५ भा०-तान् भागवतान् आत्मनाशाद्व्यावर्त्य, स्वपरिचर्यया जीवयतीति (जीवः).
(१)"आनन्दमूर्तिर्भगवान् हरिस्त्रैलोक्यपूजितः। द्रष्टुं न सहते देवि! क्लिष्टान् स्वपरिचारकान्" इति. ❀
तान् राजकुमारल्लालनेन रक्षतीति—
१०(विनयिता).
(१) "णय, गतौ, रक्षणे च" ❀ धा०भ्वादिः कौ०पृ०४०२

निर्व०—इति वासरूपविधिना अभावे, कर्तरि क्विप्. णिलोपः. ततो मतुप् भत्वाज्जश्त्वाभावः. ततो वत्वम् उभयत्रापि तत्र आम्. अनुस्वारपाक्षिकपरसवर्णौ. ❀
१५ स्वस्य स्वपरिचारकक्लेशासहतया तान् भागवतानात्मनाशाद्व्यावर्त्य स्वपरिचर्यया जीवयति सञ्जीवयतीति—
(जीवः).
(१) "जीव, प्राणधारणे" धा०भ्वादिः कौ०पृ०४०५
णिच्. ततः पचाद्यच्. णेर्लोपः. ❀
२० तान् राजकुमारवल्लालयन् विनयते विशिष्य प्राप्नोति रक्षतीति—
(विनयिता).
(१) "णय, गतौ" धा०भ्वादिः कौ०पृ०४०२

निरु०—५१५ तानात्मनाशाद्व्यावर्त्य सत्वान्यश्च स्वसेवया॥३९५॥
उज्जीवयति (जीवः) स भक्तक्लेशासहो मनुः।
२५ ५१६ भक्तान्नित्यं राजपुत्रलालनन्यायतस्सुखम् ॥ ३९६ ॥
रक्षत्यतो (विनयिता) नयते रक्षणार्थतः।

(५१७) साक्षी, (५१८) मुकुन्दो,

ॐ साक्षिणे नमः । ॐ मुकुन्दाय नमः ।

भा०—तदर्थं तद्वृत्तसाक्षात्कारात्— ५
(साक्षी). ❀
तैरैकान्त्यगरिम्णा प्रार्थितः स्वयं मुक्तिभूमिं ददातीति—(मुकुन्दः).
पृषोदरादित्वात्साधुः. ❀

निर्व०—विपूर्वः. णो नः. तृच्. इट्. अनङादि. ❀
तदर्थं तद्वृत्तस्य साक्षाद्द्रष्टा भवतीति— १०
(साक्षी).
साक्षादित्यव्ययम्. ततः,
(१) "पूर्वादिनिः" इति वर्तमाने,५।२।८६॥कौ०पृ०३२४
(२) "साक्षाद्द्रष्टरि संज्ञायाम्" ५।२।९१॥कौ०पृ०३२४
इति द्रष्टरि इनिस्तद्धितः. भत्वम्. १५
(३) "अव्ययानां भमात्रे टिलोपः" इति,६।४।१४४॥कौ०
पृ०१३३ टेर्लोपः. इन्नन्तलक्षणो दीर्घ ईत्यादि. ❀
तैरैकान्त्यगरिम्णा प्रार्थितः स्वयं तेषां मुक्तिं ददातीति—
(मुकुन्दः).
(१) "डुदाञ्, दाने" धा०जुहो० कौ०पृ०४५१ २०
(२) "आतोऽनुपसर्गे०" इति, कः. आल्लोपः ३।२।३॥
कौ०पृ०५७०
(३) "मुच्लृ, मोक्षणे" धा०तुदा०कौ०पृ०४७०

निरु०—५१७ साक्षात्करोति यः (साक्षी) तद्वृत्तं रक्षणाय सः
॥ ३९७ ॥ २५
५१८ तैः प्रार्थितस्स्वयं मुक्तिं (मुकुन्दः) स्याद्ददाति सः ।

१ अप्रार्थितोपि ।

{५१९ / ६४७} ऽमितविक्रमः, ।

ॐ अमितविक्रमाय नमः ।

भा०—तेषां ध्यानाराधनानुसन्धेयतत्वनिकराधारशक्तिधारणात्—
५ ( अमितविक्रमः ). श्रीपौष्करे,
( १ ) "कालवैश्वानरस्थायी नाना स्वाधो निवासिनः । आधारशक्तिसंज्ञस्य ह्यमूर्तस्य च वै विभोः॥ अभिमानतनुर्या वै नानाभेदैश्च वर्तते"
इति. ❀ पं०पौ०सं० ।

निर्व०—( ४ ) " स्त्रियां क्तिन् " ३।३।९४॥कौ०पृ०६५८
१० इति, भावे क्तिन्. अनिट्. झलि,
( ५ ) " चोः कुः " इति, कुत्वम्. चस्य कः. तत्र तेः ८।२।३०॥
कौ०पृ०६८
उम्. इति वर्णविकारः पृषोदरादिलक्षणः. अनुस्वारपरसवर्णौ. ❀
तेषां ध्यानाराधनानुसन्धेयतत्वनिकराधारशक्तिधारणात्—
१५ अमितः— अपरिमितः, विक्रमः पराक्रमः बलम् अस्येति—
( अमितविक्रमः ).
( १ ) " क्रमु, पादविक्षेपे " धा०भ्वादिः कौ०पृ०४०१
विपूर्वः भावे घञ्.
( २ ) " अत उपधायाः " ७।२।११६॥कौ०पृ०३८६
२० इत्युपधावृद्धिः प्राप्ता;
( ३ ) " नोदात्तोपदेशस्य मान्तस्यानाचमेः " ७।३।३४॥कौ०पृ०
५४१
इति प्रतिषिध्यते.

निरु०—५१९ तेषा ज्ञानानुसंधेयतत्वसन्दोहधारिणीम् ॥ ३९८ ॥
२५ ता शक्तिं धृतवान् योऽसौ स्मृतो ( ह्यमितविक्रमः ) ।

१ ध्यातो ।

(५२०) अम्भोनिधिः,

ॐ अम्भोनिधये नमः।

भा०—पातालाम्भसि अखिलजगदाधारपीठकमठात्मना निधीयत इति-
(अम्भोनिधिः). ५
(१) "अनन्तबलशक्तये भुवनभृते कच्छपात्मने"
इति तन्मन्त्रवर्णात्. ❀

निर्व०—(४) "माङ्, माने" धा०जुहो०कौ०पृ०४५०
कर्मणि क्तः. अनिट्.
(५) "द्यतिस्यतिमास्थामित्तिकिति" ७।४।४०॥कौ०पृ०५९४ १०
इति, इत्वम्-अगुणः. नञ्समासः. नञोनलोपः. नाम्नोः संहितं
पूर्वरूपम्. ❀
मन्त्रवर्णानुरोधात् अखिलजगदाधारपीठकमठात्मतया, अम्भसि पाता-
लार्णवपयसि निधीयते स्वयं निक्षिप्यत इति—
(अम्भोनिधिः). १५
(१) "डुधाञ्, धारणपोषणयोः" धा० जुहो०कौ०पृ०४५१
निपूर्वः.
(२) "अकर्तरि च कारके संज्ञायाम्" ३।३।१९॥कौ०पृ०६४७
इत्यनुवृत्तौ,
(३) "उपसर्गे घोः किः" इति, किः. आतो लोपः.३।३।९२॥ २०
कौ०पृ०६५८
(४) "आप्लृ, व्याप्तौ" धा०स्वादिः कौ०पृ०४६२
(५) "सर्वधातुभ्योऽसुन्" उणा०पा०४कौ०पृ०६४०
इति प्रकरणे,

निरु०— ५२० आधारशक्तिकमठस्वरूपेणार्णवाम्भसि ॥३९९॥ २५
निधीयते स्वयं येन स (ह्यम्भोनिधि) रुच्यते।

(५२१) अनन्तात्मा,

ॐ अनन्तात्मने नमः ।

भा०— तदुपरि जगदाधारस्तम्भभोगीन्द्रस्य आत्मतया तिष्ठतीति-
५ (अनन्तात्मा). श्रीजयायाम्,
(१) " आधारशक्तेरुपरि विमलं दीप्तविग्रहम् । ज्वालाशतसमाकीर्णं शङ्खचक्रगदाधरम् ॥ अनन्तेशं न्यसेद् " इति. पं०ज०सं० ।
(२) " चक्रलाङ्गलहस्तं च प्रणमन्तं परावरम् " पा०सं० ।
इति च. ❀
१० निर्व०—(६) "आपः कर्माख्यायां ह्रस्वो नुट् च वा" उणा०पा०४ कौ०पृ०६४१
इत्यतः, आपो ह्रस्वः इति वर्तमाने,
(७) " उदके नुम्भौ च " उणा०पा०४कौ०पृ०६४१
इत्यसुन्. धातोः ह्रस्वः. भश्चान्तादेशः. नुम् च; मित्त्वादन्त्यादचः परः.
१५ अनुस्वारपरसवर्णौ. सो रुत्वम्. उत्वम्. गुणः. ❀
तदुपरितनजगदाधारस्तम्भभूतभोगीन्द्रात्मतया, अनन्तस्य नास्तितमगुणान्तस्य आधारतया सर्वप्राणनस्य वा शेषस्यात्मा अन्तरात्मेति-
(अनन्तात्मा).
(१) " अन, प्राणने " धा०भ्वादिः कौ०पृ०३८२
२० ततो मनिणि न्यत्वपि ह्यात्मशब्दः ? पूर्वत्र,
(२) " अम, गत्यादिषु " धा० भ्वादिः कौ०पृ०४०१
(३) " हसिमृग्रिण् वाऽमिदमिलूपूधुर्विभ्यस्तन् " उणा०पा०३ कौ०पृ०६२८
इति, तन्.

२५ निरु०— ५२१ कमठस्योपरि जगदाधारस्तम्भभोगिनः ॥ ४०० ॥
स्वरूपेण स्थितो योऽसा (अनन्तात्मा) प्रकीर्तितः ।

## (५२२) महोदधिशयो,

ॐ महोदधिशयाय नमः ।

भा०—स एवान्तकाले तस्मिन्नेवानन्तभोगपर्यङ्के महोदधौ शेते इति-
(महोदधिशयः). ५
(१) "अधिकरणे शेतेः" इत्यच्. एवं भूशय इत्यादि. ❀
३।२।१५॥कौ०पृ०५७३

निर्व०—(४) "तितुत्र०" ७।२।९॥कौ०पृ०६०८
इति, नेट्. अनुस्वारपरसवर्णौ. नञ्पूर्वो बहुव्रीहिः.
नञो नलोपः. नुट्. उत्तरत्र, १०
(५) "अन, प्राणने" धा०अदा०कौ०पृ०४४६
(६) "जृविशिभ्यां झच्" बाहुलकात्,उणा०पा० ३कौ०पृ०६३०
अन्यतोऽपीति, अनेरपि भवति.
(७) "झोऽन्तः" ७।१।३॥कौ०पृ०३६८
इति, अन्तादेशः. आदेशे अकार उच्चारणार्थः. चित्त्वात्, १५
(८) "चितः०" इत्यन्तोदात्त. ततः ६।१।१६२॥कौ०पृ०७२३
दीर्घः सांहितः. ततश्च नान्तलक्षणो दीर्घः इत्यादि. ❀
स एवान्तकाले अस्मिन्नेवानन्तपर्यङ्के महोदधौ महार्णवे शेत इति—
(महोदधिशयः).
(१) "शीङ्, स्वप्ने" अच्प्रकरणे, धा०अदा० कौ०पृ०४३८ २०
(२) "अधिकरणे शेतेः" ३।२।१५॥कौ०पृ०५७३
इत्यच्. गुणायादेशौ,

निरु०—५२२ तस्मिन्ननन्तपर्यङ्के समुद्रे शयनाच्च यः ॥ ४०१ ॥
(महोदधिशयः) ख्यातो दशार्णो मनुरुत्तमः ।

१ शयने । २५

(५२३) ऽन्तकः, ॥

ॐ अन्तकाय नमः ।

भा०— तदा सर्वस्य अन्तं करोतीति—
५ (अन्तकः).
(१) " तत्करोति० " इति, णिच्. ण्वुल्. चुरादौ-गणसूत्रम्. कौ०पृ०४९०
(२)"अन्ते पृथिव्यां सलिले दृश्यसे त्वं महोरगे" रा०यु०१२०-२३। इति.

१० निरु०—(३)" डुधाञ्, धारणपोषणयोः" धा०जुहो० कौ०पृ०४५१
(४) " कर्मण्यधिकरणे च " इति, ३।३।९३॥कौ०पृ०६५८
कर्मण्युपपदे अधिकरणेऽर्थे धोः किः, आल्लोपः.
(५) " उन्दी, क्लेदने " इदित्. धा०रुधा०कौ०पृ०४७२
(६) " कुन् शिल्पिसंज्ञयोरपूर्वस्यापि" उणा०पा०२ कौ०पृ०६२१
१५ इति संज्ञायां कुन्.
(७) " उदकं च " इति सूत्रं तु. उणा०पा०२ कौ०पृ०६२१
एतत्प्रपञ्चार्थं नान्यथयितव्यम्.
(८) " युवोरनाकौ" इति, वोः अकः.७।१।१॥कौ०पृ०२३३
(९) " अनिदिताम्० " ६।४।२४॥कौ०पृ०७६
२० इति, नलोपः. अगुणः. एवं सिद्धस्योदकशब्दस्य
(१०) "उदकस्योदः० " इति वर्तमाने, ६।३।५७॥कौ०पृ०११९
(११) " पेषंवासवाहनाधिषु च " इति, ६।३।५८॥कौ०पृ०११९
धौ उदादेशः. न्यरूपि हि महच्छब्दः १ आत्वादि. गुणः. ❀
तदा, अन्तयति सर्वस्यान्तं करोतीति—
२५ (अन्तकः).
अमतेस्तनि व्युत्पादितो ह्यन्तशब्दः १ ततः,

निरु०—५२३ अन्तं करोति जगतो योसा (वन्तक) ईरितः ॥४०२॥

श्लो० ॥ ५६ ॥ {२०६ / ६६} (५२४) अजो,

ॐ अजाय नमः ।

भा०— वैष्णवे,

( ३ ) " आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः " इति.वि० ५
पु०२–५–२०।

( ४ ) " यस्यैषा सकला पृथ्वी फणामणिशिखारुणा । आस्ते कु-
सुममालेव कस्तद्वीर्यं वदिष्यति " वि०पु०२–५–२२।

( ५ ) " गन्धर्वाप्सरसःसिद्धाः सकिन्नरमहोरगाः । नान्तं गुणानां
गच्छन्ति तेनानन्तोऽयमुच्यते " वि०पु०२–५–२४। १०

( ६ ) "तस्य वीर्यं प्रभावं च स्वरूपं रूपमेव च । न हि वर्णयितुं
शक्यं ज्ञातुं वा त्रिदशैरपि " वि०पु०२–५–२१।

( ७ ) "कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः । संकर्षणात्म-
को रुद्रो निष्क्रम्यात्ति जगत्त्रयम् " वि०पु०२–५–१९।

इत्यादि. ❋ १५

अस्मिंस्तत्त्वावसाने प्रणवप्रकृतिभूताकारवाच्यतया स्मर्तव्यत्वात्–
(अजः). अकारवाच्यतया जात इति.

निर्व०– ( १ ) "तत्करोति० " इति णिच्. चुरादौ-गणसूत्रम् कौ०
पृ०४९०

(२)"णाविष्ठवत्"इति, टिलोपः.ततः,६।४।१५५॥कौ० पृ०३१० २०

( ३ ) " ण्वुल्तृचौ " ३।१।१३३॥कौ०पृ०५६६
इति, ण्वुल्. अकः णिलोपः. ❋

अस्मिन्तत्त्वावसाने प्रणवप्रकृतिभूताकारवाच्यतया स्मरणीयत्वात् अः
अकारवाच्यः जः जातः प्रादुर्भूतः, इति–( अजः ).

निरु०–५२४ तत्त्वावसानकाले च प्रणवप्रकृतित्वतः । २५
स्मर्तव्यत्वा ( दजः ) प्रोक्तः पडर्णो ह्यूर्मिनाशकः ॥ ४०३ ॥

१ सने । .

( ५२५ ) महार्हः,

ॐ महार्हाय नमः ।

भा०— ( १ ) " तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः " तै०उ०
५ धा०अ०१०—२४।
इति. ॐ
तत्र प्रणवेन- महम्- आत्मनिवेदनपूर्वकं पूजनम्, अर्हतीति—
( महार्हः ).
( १ ) "ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदं
१० देवानां गुह्यमिति " ॐ तै०उ०ना०६—५१।

निर्व०— ( १ ) " जनी, प्रादुर्भावे " धा०दिवा०कौ०पृ०४५४
(२)"अन्येष्वपि०" इति,डः. टिलोपः.३।२।१०१॥कौ०पृ०५८५
( ३ ) " अव, रक्षणादौ " धा०भ्वादिः कौ०पृ०४०६
तत्रापि तथैव डः. टिलोपश्च. सर्वोपि ह्ययमपि शब्दमहिमेत्युदैरिराम.
१५ न तु क्विप्;
( ४ ) " लोपोव्योर्वलि" इति, वलोपे ६।१।६६॥कौ०पृ०१६९
( ५ ) " ह्रस्वस्य० " इति, तुगापत्तेः. ६।१।७१॥कौ०पृ०५५९
( ६ ) " अनित्यमागमशासनम् "
इति तु अगतिकगतिः. इह च गत्यन्तरमुक्तमेव. ॐ
२० तत्र, प्रणवेनात्मनिवेदनपूर्वकं महं पूजनमर्हतीति—
( महार्हः ).
( १ ) " अर्ह, पूजायाम् " धा०भ्वादिः कौ०पृ०४११
( २ ) " अर्हः " ३।२।१२॥कौ०पृ०५७२
इति कर्मण्यणोऽपवादोऽच्. तत्फलं चोक्तमेव.
२५ ( ३ ) "मह, पूजायाम् " धा०भ्वादिः कौ०पृ०४११

निरु०—५२५ स्वरूपादिकृतार्थेन तारेणात्मनिवेदनम् ।
महं पूजामर्हतीति ( महार्ह ) इति कथ्यते ॥ ४०४ ॥

(५२६) स्वाभाव्यो,

ॐ स्वाभाव्याय नमः ।

भा०— एवमनेन मन्त्रेण स्वभूतैरात्मभिः स्वामित्वेन आभिमुख्येन अवश्यं भावनीयत्वात्— ५
(स्वाभाव्यः).
(१) " ओरावश्यके " इति, ण्यत्. ३।१।१२५॥कौ०पृ०५६४
(२) " स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि । आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर " इति. वि०त० ।
(३) " नान्यो हेतुर्विद्यते ईशनाय " इति. श्वे०उ०६—१७ । १०

निर्व०— भ्वादिः. चुरादौ कथादिर्वा. आद्ये कल्पे,
(४) " घञर्थे कविधानम् " ३।३।५८॥कौ०पृ०६५३
इति, भावे कः. द्वितीये णिच्.अतो लोपः. तस्य स्थानिवद्भावान्नो-पधावृद्धिः. ततः,
(५) " एरच् " इति, भावे अच्. ३।३।५६॥कौ०पृ०६५२ १५
णिलोपः. उभयत्रापि दीर्घस्सांहितः. ❋
एवमनेन मन्त्रेण स्वैर्नित्यस्वभूतैरात्मभिः अवश्यमाभाव्यते स्वामितया आभिमुख्येन भाव्यते इति वा, तैः स्वेन नित्यत्वेन स्वाभाविकेन स्वामिभावेन आभाव्यत इति वा, नित्यस्य स्वस्वामिभावस्य स्वाभाविकतया, सुतरामाभाव्यते इति वा— २०
(स्वाभाव्यः).
(१) " भू, सत्तायाम् " धा०भ्वादिः कौ०पृ०३६८

निरु०—५२६ मन्त्रेणानेनात्मभिस्तु स्वभूतैराभिमुख्यतः ।
अवश्यं भावनीयत्वात् (स्वाभाव्यः) परिकीर्तितः ॥ ४०५ ॥

## (५२७) जितामित्रः,

ॐ जितामित्राय नमः ।

भा०— नित्यस्य स्वस्वामिभावस्य स्वाभाविकत्वेन भाव्यत्वाद्वा. ❀
५ एतद्रहस्यावबोधविरोध्यहंममकारकामादयो जिताः तेषामनेनेति—
(जितामित्रः). कामादयो हि एषाम् अमित्राः ?
(१) "काम एष क्रोध एष रजोगुणसमुद्भवः" गी० ३—३७।
इति उपक्रम्य,
(२) "जहि शत्रुं महाबाहो ! कामरूपं दुरासदम्" गी० ३—४३।
१० इत्यन्तम्. ❀

निर्व०—प्रथमद्वितीययोः कल्पयोः आङ्पूर्वः तृतीये तु सुपूर्वश्च,
कल्पत्रयेपि ण्यदित्यनुवृत्तौ,
(२) "ओरावश्यके" इति, ३ । १ । १२५ ॥ कौ० पृ०५६४
अवश्यंभावे द्योत्ये ण्यत्. वृद्धिरौकारः .
१५ (३) "वान्तो यि प्रत्यये" इति; वान्तादेशः६।१।७९॥कौ०पृ०१०
आव्. प्रथमद्वितीययोः,
(४) "स्वृ, शब्दोपतापयोः" धा० भ्वादिः कौ०पृ० ४२५
अतो डप्रत्यये व्युदपादि हि स्वशब्दः ? दीर्घः. तृतीये अव्ययस्य सोरू-
कारस्य यण् वः अन्यत्प्राग्वत्. ❀
२० तथा जिताः अमित्राः शत्रवः तद्रूपाः तेषामेतद्रहस्या-
वबोधविरोधिभूताः अहंकारममकारकामक्रोधादयः ,अनेनेति—
(जितामित्रः).
(१) "अम, गत्यादिषु" धा० भ्वादिः कौ०पृ० ४०१

निरु०—५२७ एतद्रहस्यविज्ञानविरोधिममतादयः ।
२५ जितास्तेषामनेनेति (जितामित्रो) ऽ ष्टवर्णकः ॥४०६॥

( ५२८ ) प्रमोदनः । ( ५२९ ) आनन्दो,

ॐ प्रमोदनाय नमः । ॐ आनन्दाय नमः ।

भा०—स्वसंबन्धिनां तत्प्रथमानुसन्धानप्रहर्षः प्रयोजनमिति— ५
( प्रमोदनः ). ❋
अथ कपिलमूर्तिः; आनन्दवल्लीमीमांस्यमानवाङ्मनसदुर्ग्रहो महान-
न्दोऽस्यास्तीति—( आनन्दः ).

निर्व०—( २ ) " अशित्रादिभ्य इत्रोत्रौ " उणा० पा० ४ कौ०
पृ० ६४० १०
इत्यतः, आदिशब्दस्य प्रकारार्थतया इत्र,
इत्यवयुत्यानुवर्तमाने,
( ३ ) " अमेर्द्विषति चित् " इति, उणा० पा०४कौ०पृ०६४०
इत्रः चित्. ततोन्तोदात्तः.
( ४ ) " जि, जये " कर्मणि क्तः. अगुणः. अनिट्. दीर्घः. ❋ १५
धा०भ्वादिः कौ०पृ० ४०५
अथ स्वसंबन्धिनः तत्प्रथमानुसन्धानेन प्रमोदयति प्रहर्षयतीति—
( प्रमोदनः ).
( १ ) " मुद, हर्षे " प्रपूर्वः. धा०भ्वादिः कौ०पृ० ३८२
णिच्. गुणः. ल्युः ल्युड्वा. इत्यादि अनः. णिलोपः. ❋ २०
अथ कपिलमूर्तिः; आनन्दः आनन्दवल्लीमीमांस्यमानो वाङ्मनसदुर्ग्र-
हो महानानन्दथुरस्यास्तीति—
( आनन्दः ).

निरु०—५२८ ध्यानासक्तेषु भक्तेषु मोदमानः ( प्रमोदनः ) ॥
५२९ वल्यामानन्दसंज्ञायामवाङ्मनसगोचरः ॥ ४०७ ॥ २५
आनन्दो यस्य यस्यास्ती-( त्यानन्दः ) परिकीर्तितः ।

( ५३० ) नन्दनो,

ॐ नन्दनाय नमः ।

भा०—अर्शआदित्वात्—अच्. ❀
५ तमानन्दं यथोक्तायां मुक्तौ प्रापय्य नन्दयतीति—
('नन्दनः ).
( १ ) " एष ह्येवानन्दयाति " तै०उ०आ० ७ ।
( २ ) " एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति "
इति वा. ❀
१० एवमनन्तभोग्यभोक्तृभोगतदुपकरणैः समृद्ध्यते तस्मिन्निति—

निर्व०—( १ ) "टुनदि, समृद्धौ" धा०भ्वादिः कौ०पृ० ३८७
आङ्पूर्वः, इदित्त्वान्नुमित्यादि. भावे घञ्, ततो मत्वर्थीयोऽर्शआद्यच्.
( २ ) "यस्य०" इति, लोपः. ❀ ६।४।१४८॥ कौ०पृ० ५६
तमानन्दं यथोक्तायां मुक्तौ प्रापय्य तान्नन्दयतीति वा, सर्वभूतानामपि,
१५ तदानन्दमात्रोपजीवकतया, तानि नन्दयतीति वा—
( नन्दनः ).
धातुः प्राग्वत्, नुमादि. णिच्. ततो ल्युः. ल्युड्वा इत्यादि.
अनः. णिलोपः.- ❀
एवमनन्तभोग्यभोक्तृभोगभोगोपकरणैः नन्द्यते सन्तोष्यते, तानि वा-
२० नन्दन्ति समृद्धानि भवन्त्यस्मिन्निति—

निरु०—५३० तमानन्दमथोक्तायाम्मुक्तौ प्रापय्य यस्सदा ॥ ४०८ ॥
मुक्तान्नित्यान्नन्दयते ( नन्दनः ) स तु कीर्तितः ।

(५३१) नन्दः, (५३२) सत्यधर्मा,

ॐ नन्दाय नमः। ॐ सत्यधर्मणे नमः।

भा०– ( नन्दः ). ५
( १ ) " अधिकरणे घञ् " ❀
एवमा च प्रक्रमात्- आ च स्वप्राप्तेः, आर्जवात्–
( सत्यधर्मा ). सत्यवृत्तः. ❀
ईदृशेन महामहिम्ना वाच्येन विक्रान्तत्रिवेदः–

निर्व०– ( नन्दः ). धातुः पूर्ववत्. नुमादि च. उभयत्रापि, १०
( १ ) " हलश्च " इत्यधिकरणे घञ्. ❀ ३।३।१२१॥
कौ० पृ० ६६३
इत्थमा च प्रक्रमात्- आ च स्वप्राप्तिलक्षणपरिसमाप्तेः,
आर्जवात्-सत्यः अकुटिलः, धर्मः वृत्तम्, अस्येति–(सत्यधर्मा).
धरतेर्मनि, अस्तेश्शतरि निष्पन्नात् सच्छब्दात् यति च धर्मसत्य- १५
शब्दौ हि प्रागेव व्युदपादिषाताम् ? बहुव्रीहिः.
( १ ) " धर्मादनिच् केवलात् " ५।४।१२४॥ कौ०पृ०१६८
इति अनिच् समासान्तः.
( २ ) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति, लोपः. नान्तत्वाद्दीर्घ इत्यादि. ❀ २०
इत्थमार्षनिर्वचनात्रिवेदीविक्रान्तमहामहिमशालितया त्रयाणां वे-
दानां विक्रमः ईदृशेन वाच्येन महिम्ना क्रमणमस्येति–

निर्व०– ५३१ भोग्यैर्भोगोपकरणैर्भोगैर्भोक्तृभिरेव च ॥४०९॥
तस्मिन् समृध्यते नित्यमिति ( नन्दः ) प्रकीर्तितः।
५३२ आ प्रक्रमादा स्वप्राप्तेरार्जवात्सत्यवर्तनः ॥ ४१० ॥ २५
ना० म्नात्म ( सत्यधर्मा ) च वस्त्वर्णस्सत्यधर्मदः।

(५३३) त्रिविक्रमः ॥ श्लो० ॥ ५७ ॥ (५३४) महर्षिः,

ॐ त्रिविक्रमाय नमः । ॐ महर्षये नमः ।

५ भा०— ( त्रिविक्रमः ). यथा,
( १ ) " त्रिरित्येवं त्रयो वेदाः कीर्तिता मुनिसत्तमैः । क्रमते तांस्तथा सर्वान् त्रिविक्रम इति स्मृतः "
( २ ) " सर्वे वेदा यत्रैकं भवन्ति " आर० ३ ।
( ३ ) " नारायणपरा वेदाः " इति. ❀
१० यथोक्तवेददर्शनात्—
( महर्षिः ). कपिलमूर्तिः,

निर्व०— ( त्रिविक्रमः ).
( १ ) " क्रमु, पादविक्षेपे " धा०भ्वादिः कौ०पृ०४०१
विपूर्वः. ततो भावे घञि
१५ ( २ ) " नोदात्त० " ७।३।३४॥ कौ० पृ० ५४३
इत्यादिना वृद्धिप्रतिषेधे च- विक्रमशब्दः,
( ३ ) " तॄ, प्लवनतरणयोः " ततः, धा०भ्वादिः कौ० पृ० ४२७
( ४ ) " तरतेर्ड्रिः " इति ड्रिप्रत्यये टिलोपे, उणा० पा०५
कौ०पृ०६४४
२० ( ५ ) " नेड्वशि० " इति, अनिटि च ७।२।८॥कौ०पृ०५८१
त्रिशब्दोपि पूर्वमेव हि न्यस्तपिपाताम् ? बहुव्रीहिः. ❀
ध्यानविधाने श्रोष्ठीर्यमाणक्रमादिवक्तृतया कपिलमूर्तिः. महांश्चासौ ऋषिः, यथोक्तवेदद्रष्टा चेति—
( महर्षिः ).

२५ निरु०-५३३त्रीन् वेदान् क्रमते यो हि महिम्ना स (त्रिविक्रमः)४११
५३४ साक्षाद्द्रष्टा मन्त्रवेदान्यो ( महर्षिः ) स च स्मृतः ।

(५३५) कपिलाचार्यः,

ॐ कपिलाचार्याय नमः

भा०—(१) " श्रुतीर्ऋगाद्या वक्त्रेभ्यः प्रोद्गिरन्तमतः स्मरेत् " इति तद्ध्याने. ५

(२) " ऋषिंप्रसूतं कपिलं महान्तम् "

(३) " सांख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते " इति च. ❋

कपिलश्चासावाचार्यश्चेति—

(कपिलाचार्यः).

(१) " कबृ, वर्णे " धा० भ्वादिः कौ० पृ० ३९६ १०

(२) "कबेः पश्च" इति, इलच् प्रत्ययः. उणा० पा० १ कौ० पृ० ६१३ पकारश्चान्तादेशः.

निर्व०—(१) "ऋषी, गतौ" इदित् धा० तुदा० कौ० पृ० ४६४

(२) "इन् सर्वधातुभ्यः" इति, इन्. उणा० पा० ४ कौ० पृ० ६३७

(३) " इगुपधात् कित् " इति, स कित्. अगुणः. उणा० १५ पा० ४ कौ० पृ० ६३७

महच्छब्दो व्याख्यातः. आत्वादि.

(४) " ऋत्यकः " ६ । १ । १२८ ॥ कौ० पृ० १६ इति पाक्षिकत्वादिह न प्रकृतिभावः.

(५) " आद्गुणः " ६ । १ । ८७ ॥ कौ० पृ० ११ २० इति, गुणोऽकार एकादेशः रपरः. ❋

ध्यानविधौ निर्धूमाङ्गारवर्णतया, कपिलः पिङ्गलश्चासौ मन्त्रवर्णात् स्वतत्त्वसंविदाचयनात् आचार्यश्चेति—

(कपिलाचार्यः).

(१) " चर, गतिभक्षणयोः " धा० भ्वादिः कौ० पृ० ४०५ २९

निर्व०—५३५ तत्त्वप्रवचनादेव(कपिलाचार्य)उच्यते ॥ ४१२॥

१ कबेः ।

{५३६ / ८३} कृतज्ञो,

ॐ कृतज्ञाय नमः ।

भा०— (३) " निर्धूमाङ्गारवर्णाभं शङ्खपद्माक्षसूत्रिणम् "
५ इति तद्ध्याने स्वतत्त्वसंविदाचयनात्— ( आचार्यः )
(४) " संवित्प्रकाशनाय " इति तन्मन्त्रवर्णे ❀
सापराधसगरापत्येप्यंशुमति स्वाभिनम्रत्वसुकृतमेव,
ज्ञातवान् इति—
( कृतज्ञः ). वैष्णवे ,

१० निर्व०— आङ्पूर्वः.
(२) " चरेराङि चागुरौ " इति , ३।१।१०० ॥कौ०पृ० ५५८
गुरौ प्रतिषेधान्न यत्. ततः ,
(३) " ऋहलोर्ण्यत् " ३ । १ । १२४ ॥ कौ०पृ०५६२
इति हलन्ता ण्यत्. उपधावृद्धिः.
१५ (४) " कमु , कान्तौ " धा० भ्वादिः कौ० पृ०३९९
(५) " कवृ, वर्णे " वा धा० भ्वादिः कौ०पृ०३९६
(६) " सुलिकल्यनिमहिभडिशण्डिपिण्डितुण्डिकुडिभूम्य इलच् "
उणा० पा०१ कौ०पृ० ६१३
इति , वर्तमाने ,
(७)"कमेः पश्च " कवेरिति वा पाठः. उणा०पा०१ कौ०पृ०६१३
२० इति , इलच्. उभयत्रापि पकारोन्तादेशश्च दीर्घः. ❀
सापराधसगरापत्येपि अंशुमति कृतं स्वाभिनम्रत्वसुकृतमेव जानातीति—
( कृतज्ञः ).

निरु०— ५३६ स्वाभिनम्रत्वसुकृतं किंचिदंशुमता कृतम् ।
विदितं येन कारुण्यात ( कृतज्ञः ) सोभिधीयते ॥ ४१३ ॥

५ १ वह्निरूपं ।

## (५३७) मेदिनीपतिः।

ॐ मेदिनीपतये नमः।

भा०—(१) " कपिलमुपगम्य भक्तिनम्रः तदा तुष्टाव सचैनं भगवानाह " वि०पु०४—४—२४ । ५
(२) " वरं वृणीष्व " इति च इति. ❀ वि०पु०४—४—२६
(३) " यस्येयं वसुधा सर्वा वासुदेवस्य धीमतः । कापिलं रूपमास्थाय धारयत्यनिशं धराम् " इति. रा०वा० ।
(मेदिनीपतिः). ❀

निर्व०—(१) " ज्ञा, अवबोधने " धा०क्र्यादिः कौ०पृ०४७७ १०
(२) " आतोऽनुपसर्गे कः " ३ । २ । ३ ॥ कौ०पृ०५७०
इति, कः. आल्लोपः. करोतेः कर्मणि क्तः. अगुणः. अनिट्. ❀
कपिलरूपास्थानेन धराधारणात्, मेदिन्याः नैरुक्त्या प्रसिद्धया मधुकैटभमेदस्संयोगात् तत्पदवाच्यायाः भुवः, पतिः निर्वोढेति—
(मेदिनीपतिः). १५
(१) " पा, रक्षणे " धा०अदा०कौ०पृ०४४३
ततो डत्यन्तोऽयं व्याख्यातः.
(२) " ञिमिदा, स्नेहने " ञिः इत्. धा०भ्वादिः कौ०पृ०४११
(३) " सर्वधातुभ्योऽसुन् " उणा०पा०४ कौ०पृ०६४०
इत्यसुन्. गुणः. निरुक्तबलात् पृषोदरादिलक्षणः सलोपः. यदा तु, २०
रजशिरादिवत्. अदन्तस्याप्यस्याभिधानं; तदा घञि गुणः. नैवचात्र सलोपे यत्नः. त उभयतश्च, ततो मत्वर्थीयोऽत इनिः.

निरु०—५३७ कापिलं रूपमास्थाय यो धारयति मेदिनीम् ।
स (मेदिनीपतिः) ख्यातो नवार्णो भूप्रदो मनुः ॥ ४१४ ॥

## (५३८) त्रिपदस्,

ॐ त्रिपदाय नमः ।

भा०—भोग्यभोक्तृनियन्तॄणि तत्त्वानि ज्ञाप्यतया पदानि अस्येति-
५ (त्रिपदः). यथा,
(१) " सत्त्वानामुपकाराय प्रधानं पुरुषं परम् । दर्शयिष्यामि लोकेषु कापिलं रूपमास्थितः " इति.
प्रणवे त्रीणि पदानि तद्वाचकानि इति वा,
(२) " तथैवासं त्रिककुदो वाराहं रूपमास्थितः "
१० इति वा त्रिपदः. ❀

निर्व०—(४) " यस्य० " इति, लोपः. ततः स्त्रियाम्, ६ । ४ । १४८ ॥ कौ०पृ०५६
(५) " ऋन्नेभ्यो ङीप् " ४ । १ । ५ ॥ कौ०पृ०५५
इति नान्तलक्षणो ङीप्. ❀
१५ तथैव कापिलं रूपमास्थाय तत्त्वत्रयाभिव्यञ्जनात्, त्रीणि भोक्तृभोग्यनियन्तॄणि चेतनप्रधानतदीश्वररूपाणि तत्त्वानि पदानि, पद्यतेर्गत्यर्थतया ज्ञानार्थत्वात् ज्ञाप्यानि, अस्येति वा, प्रणवे-त्रीणि-अकारोकारमकारात्मकानि. पदानि- तद्वाचकानि अस्येति वा, वाराहरूपास्थाने त्रीणि पदानि, ककुदान्यस्येति वा—
२० (त्रिपदः).
(१) " पद, गतौ " धा०दिवा०कौ०पृ०४५५

निरु०—५३८ भोक्तृभोग्यनियन्तॄणि ज्ञाप्यान्यस्य पदानि वा ।
प्रणवे त्रीणि वाच्यानि वाचकानि पदानि वा ॥ ४१५ ॥
वाराहरूपस्यास्थाने पदानि ककुदानि वा ।
२५ यस्य सन्ति ह्यसौ नित्यं (त्रिपदः) परिकीर्तितः ॥ ४१६ ॥

(५३९) त्रिदशाध्यक्षो,

ॐ त्रिदशाध्यक्षाय नमः ।

भा०— स एव ब्रह्मादेः प्रलयापत्सखत्वात्—
( त्रिदशाध्यक्षः ). ❀ ५
अग्रलग्नमहीमण्डलदंष्ट्रः—

निर्व०— (२) " खनो घ च " ३।३।१२५॥कौ०पृ०६६४
इति चकारात् डित्करणाद्वा, प्रकृत्यन्तरलाभात् यथा—
योगं- करणाधिकरणयोः, बाहुलकात् कर्मणि वा घः—
तरतेः ड्रिप्रत्यये त्रिशब्दो निरूपितः. ❀ १०
स एव ब्रह्मादीनां प्रलयापत्सखतया, त्रिदशानां देवानां
ब्रह्मादीनाम् अध्यक्षः स्वामीति—
( त्रिदशाध्यक्षः ).
(१) " अक्षू, व्याप्तौ " धा०भ्वादिः कौ०पृ०४०८
अधिपूर्वः. पचाद्यच्. अधेरिकारस्य यण् यकारः. १५
(२) " दंश, दशने " स्त्रियां, धा०भ्वादिः कौ०पृ०४३१
(३) " गुरोश्च हलः " ३।३।१०३॥कौ०पृ०६६०
इति, अप्रत्ययः. पृषोदरादित्वान्नलोपः. यद्वा,
(४) " घञर्थे कविधानम् " ३।३।५८॥कौ०पृ०६५३
इति यथायथं घञर्थे कर्मादौ कः. २०
(५) "अनिदितां हल उपधायाः क्ङिति "६।४।२४॥कौ०पृ०७६
इति किति नस्य लोपः. ततः स्त्रियामुभयतोऽतष्टाप्. दीर्घः.
त्रिशब्दो व्याख्यातः. बहुव्रीहिः. उपसर्जनह्रस्वः. सांहितो
दीर्घः. ❀

निरु०—५३९ सखा स्यात् (त्रिदशाध्यक्षो) ब्रह्मादेः प्रलयापदि । २५

(५४०) महाशृङ्गः,

ॐ महाशृङ्गाय नमः ।

भा०— (महाशृङ्गः).
५ (१) "एकशृङ्गो वराहस्त्वम्" रा० यु० १२०—१४।
(२) "दंष्ट्राग्रविन्यस्तमशेषमेतद्भूमण्डलं नाथ विभाव्यते ते।
विगाहतः पद्मवनं विलग्नं सरोजिनीपत्रमिवोढपङ्कम्"
इति. ❀ वि० पु० १—४—३६।
कृतान्तमन्तकाभं हिरण्याक्षं कृन्तवान् इति—

१० निर्व०— अचलमहीमण्डलदंष्ट्रतया महान् अद्वितीयः,
शृङ्गः अस्योपलक्षणतया दंष्ट्रा अस्येति—
(महाशृङ्गः).
(१) "शॄ, हिंसायाम्" धा० क्र्यादिः कौ०पृ०४७६
(२) "गन्गम्यद्योः" उणा० पा०१ कौ०पृ०६१६
१५ (३) "मुञ्जः किन्नुट् च" इत्यतः गन्-किन्नुट्, उणा० पा०१
कौ०पृ०६१६
चेति वर्तमाने,
(४) "शृणातेर्ह्रस्वश्च" उणा० पा०१कौ०पृ०६१६
इति, गन्. कित्. तस्य नुट्. धातोः—ह्रस्वश्च. विधानादिना
२० नग इदिति वक्ष्यते.
(५) "नेड्०" इति नेट्. ७।२।८॥कौ०पृ०५८१
अगुणः. अनुस्वारपरसवर्णौ. निरूपितो महच्छब्दः.
आत्वम् दीर्घः. ❀
स एव कृतान्तम् अन्तकाभं हिरण्याक्षं कृन्तति- छिनत्ती-
२५ ति वा, कृतान्तं स्वराद्धान्तं वाराहस्मृतिपुराणाख्यं करोतीति वा—

निरु०—५४०मही यस्य च शृङ्गाग्रे (महाशृङ्गः) स कथ्यते॥४१७॥

१ मूणादि गो।

(५४१) कृतान्तकृत्, ॥

ॐ कृतान्तकृते नमः ।

भा०— ( कृतान्तकृत् ). यथा,
( १ ) " हतो हिरण्याक्षमहासुरः " इति. ५
वाराहस्मृतिपुराणयोः स्वसिद्धान्तकरणाद्वा. ❀
( २ ) " ततस्समुत्क्षिप्य धरां स्वदंष्ट्रया महावराहस्फुटपद्मलोचनः । रसातलादुत्पलपत्रसन्निभः समुत्थितो नील इवाचलो महान् " इति, वि० पु० १—४—२६ ।

निर्व०— ( कृतान्तकृत् ). पूर्वत्र, १०
( १ ) " कृती, च्छेदने " उत्तरत्र, धा०तुदा०कौ०पृ०४७०
( २ ) " डुकृञ्, करणे " धा० तना० कौ०पृ० ४७३
उभत्रापि क्विप्. करोतेस्तुगपि. अगुणः.
( ३ ) " अम, गत्यादिषु " धा० भ्वादिः कौ०पृ० ४०१
ततस्तनि न्यरूपि ह्यान्तशब्दः ? कृतशब्दश्च करोते- १५
र्निष्ठायामुक्तः. बहुव्रीहिः. अनुकल्पे तत्पुरुषोऽपि.
दीर्घः. जश्त्वचर्त्वे. ❀
स एव भूम्युद्धरणान्महान् निस्समाभ्यधिकश्चासौ वराहो भूदारश्चेति—

निरु०—५४१ अन्तकार्थं हिरण्याक्षं कृतवान् यः (कृतान्तकृत्)। २०
स्वसिद्धान्तकरत्वाद्वा स्वास्यस्मृतिपुराणयोः ॥ ४१८ ॥
कृतान्तकृदिति ख्यातो वरवर्णाभीष्टदायकः ।

श्लो० ॥ ५८ ॥ (५४२) महावराहो ,

ॐ महावराहाय नमः ।

भा०– ( महावराहः ).

५ ( १ ) " नष्टां च धरणीं पूर्वमविन्दं च गुहां गताम् । गोविन्द इति तेनाहम् " इति. भा०शां० ३४३–४१ ।

निर्व०– ( महावराहः ).

( १ ) " हन, हिंसागत्योः " धा०अदा० कौ०पृ० ४३५

( २ ) " अन्येष्वपि० " ३ । २ । १०१ ॥ कौ०पृ०५८५।

१० इति डः, टिलोपः.

( ३ ) " वृञ् ,वरणे " धा० स्वादिः कौ०पृ०४६२

( ४ ) " ग्रहवृदृनिश्चिगमश्च " ३ । ३ ।५८ ॥ कौ०पृ०६५३

इत्यप्. गुणः रपरः. स्त्रियामतटाप्. दीर्घः.

(५)"ऊर्णुञ् , आच्छादने " कुमकरणे धा० अदा०कौ०पृ०४३९

१५ ( ६ ) " ऊर्णोतेर्नुलोपश्च " उणा०पा०१ कौ०पृ० ६११

इति , वर्तमाने,

( ७ ) " महति ह्रस्वश्च " उणा०पा०१ कौ० पृ० ६११ ,

इति , कुः. नुलोपः. ह्रस्वश्च. अगुणः. पृषोदरादित्वात्

उकारलोपः. अत्र तु , तत एव उरित्यस्य लोपश्च.

२० यद्वा , हन्तिराङ्पूर्वः. अन्यत्समम्. उक्तव्युत्पत्त्या

वरशब्दस्सिद्धः. न चान्यत्र प्रयतितव्यम् ; दीर्घः. महच्छब्दो

हि न्यरूपि ? आत्वम्. दीर्घः. ❀

आर्षनिर्वचनात् गां पूर्वं नष्टां धरणीं विन्दते लभत इति–

निरु०–५४२ रसातलगतामुर्वीं यश्चोद्धृत्योत्थितः क्षणात् ॥४१९॥

२५ ( महावराह ) इति सः स्मृतो ह्युर्वीमितो मनुः ।

(५४३) गोविन्दः, (५४४) सुषेणः,

ॐ गोविन्दाय नमः । ॐ सुषेणाय नमः ।

ना०-( गोविन्दः). ❀ ५
अथान्यद्रहस्यम्. शोभना शुद्धसत्त्वमयी बद्धमुक्तनित्यविजयोपक-
रणत्वात् सेनेव पञ्चोपनिषत् कायः अस्येति- ( सुषेणः ).

निर्व०-( गोविन्दः ). ❀
(१) " विद्लृ, लाभे " धा०तुदा०कौ०पृ०४७०
(२) " गवादिषु विन्देः संज्ञायाम् " ३ । १ । १३८॥कौ० १०
पृ०५६८
इति, शः. ततः,
(३) " तुदादिभ्यश्शः " ङित्त्वादगुणः. ३ । १ । ७७ ॥ कौ०
पृ०४६४
(४) "शे मुचादीनाम्" इति, नुम्. ७।१।५९॥कौ०पृ०४७० १५
अनुस्वारपरसवर्णौ. पररूपमित्युक्तमेव.
(५) " गमॢ, गतौ " धा० भ्वादिः कौ०पृ०४३०
(६) " गमेर्डोः " इति, डोः. टिलोपः. ❀ उणा०पा०२कौ०
पृ०६२२
अथान्यद्रहस्यम्. सुशोभना शुद्धसत्त्वमयी सेना-बद्धमुक्तनित्यवि- २०
जयोपकरणतया तदुपमः- तदुपलक्ष्यः पञ्चोपनिषत्कायोऽस्येति-
( सुषेणः ).
(१) " षिञ्, बन्धने " षत्सः. धा०स्वादिः कौ०पृ०४६१
(२) " धापृवस्यज्यतिभ्यो नः " इति प्रकरणे, उणा०पा०३
कौ०पृ०६२५ २५

निरु०-५४३ नष्टां च धरणीं पूर्वं (गोविन्दो) यस्स लब्धवान्॥४२०॥
५४४ पञ्चोपनिषदङ्गत्वात् ( सुषेणः ) परिकीर्तितः ।

(५४५) कनकाङ्गदी, ।

ॐ कनकाङ्गदिने नमः ।

भा०—तन्मयैः उक्तरूपसौन्दर्यसन्धुक्षणैः अङ्गदोपलक्षितैः दिव्यभूषणैर्नित्ययोगात्—
(कनकाङ्गदी). ❀

निर्व०— (३) "कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्" उणा०पा०३ कौ०पृ०६२५
इति नः. नित्. अनिट्. गुणः. ततस्त्रियामतष्टाप्. दीर्घः.
० सुपूर्वो बहुव्रीहिः. उपसर्जनह्रस्वः.
(४) "इण् कोः" इत्यधिकृत्य. ८।३।५७॥कौ०पृ०३४
(५) "आदेशप्रत्ययोः" इति षत्वस्य ८।३।५९॥कौ०पृ०३४
(६) "सात्पदाद्योः" इति निषेधे प्राप्ते, ८।३।१११॥कौ० पृ० ३५८
५ (७) "सुषामादिषु च" ८।३।९८॥कौ०पृ०१९५
इति, सुषामादित्वात् षः. तत्र हि,
(८) "एति संज्ञायामगात्" ८।३।९९॥कौ०पृ०१९६
इति, पठयते ? ततः,
(९) "अट् कुप्वाङ्"० इति, णत्वम्. ❀८।४।२॥कौ०पृ०३२
० कनकानि सुवर्णानि, अस्य च अप्राकृतयथोक्तविलक्षणद्रव्यपञ्चकोपलक्षणतया, तन्मयान्यङ्गदानि तदुपलक्षितानि उक्तरूपसन्धुक्षणानि दिव्यभूषणानि, तानि नित्यमस्य सन्ति अस्मिन्वेति—
(कनकाङ्गदी).
(१) "डुदाञ्, दाने" धा० जुहो० कौ०पृ०४५१

५ निरु०— ५४५अप्राकृतानि दिव्यानि भूषणानि च नित्यशः॥४२१॥
रत्नानि सन्ति यस्यासौ सोच्यते (कनकाङ्गदी)।

(५४६) गुह्यो,

ॐ गुह्याय नमः।

भा०— नित्ययोगे इनिः. कनकशब्दः अप्राकृतपञ्चोक्तविलक्षण-
द्रव्यपञ्चकलक्षकः. ❀ 5
एवं परमोपनिषद्विषयेण वपुषा–
(गुह्यः).
(१) " शंसिदुहिगुहिभ्यो वेति वक्तव्यम् " ३।१।१०९॥कौ०
पृ०५५९
इति क्यप्. ❀ १०

निर्व०— अनेकार्था हि धातवः. तद्बीजं चान्यथापि. अतः
उक्तार्थोपपत्तिः. फलितार्थकथनं वेदम्.
(२) " आतोनुपसर्गे० " इति, ३।२।३॥कौ०पृ०५७०
कः. आल्लोपः. अङ्गिर्गत्यर्थः. इदित् नुम्. अनुस्वारपरसवर्णौ.
पचाद्यच्. १५
(३) "कनी, दीप्तिकान्तिगतिषु " धा० भ्वादिः कौ०पृ०४०१
(४) "कुन् शिल्पिसंज्ञयोरपूर्वस्यापि" उणा०पा०२कौ०पृ०६२१
इति कुन्. वोरकः. दीर्घः. ततो नित्ययोगे मत्वर्थीयो अत इनिः,
" न कर्मधारयान्मत्वर्थीयः" इति न्यायो हि न नियत इत्युक्तम्.
(५) " यस्य०" इति लोपः. ६।४।१४८॥कौ०पृ०५६ २०
इन्नन्तत्वात् दीर्घः इत्यादि. ❀
एवं परमोपनिषद्विषयेण वपुषा गुह्यते संवियत इति–
(गुह्यः).
(१) " गुहू, संवरणे " धा० भ्वादिः कौ०पृ०४२२

निरु०—५४६पञ्चोपनिषदङ्गेन गूढत्वाद् (गुह्य)उच्यते ॥४२२॥ २५

(५४७) गभीरो,

ॐ गभीराय नमः ।

भा०— तदभिव्यक्तैश्वरमहागाम्भीर्यः—
५ (गभीरः).
(१) "गभीरगम्भीरो" उणा० पा०४ कौ०पृ०६३३
इति गाहेरिरन् प्रत्ययः. ह्रस्वत्वम्, भकारादेशश्च
निपात्यते. तत्संपृक्तो हि, कतकसंकालितमिव सलिलम्,
अनाद्यविद्याकलुषोपि संसारी प्रसीदति? किं पुनः स्वभाव·
१० दीप्तो भगवान्. ❋

निर्व०—(२) "शंसिदुहिगुहिभ्यो वा०" ३।१।१०९॥कौ०पृ०५५९
इति काशिकानुरोधात् क्विप्. अगुणः.
(३) "प्रशस्यस्य श्रः" ५।३।६०॥ कौ० पृ०३४१
(४) "ईडवन्दवृशंसदुहां ण्यतः" इति,६।१।२१४॥कौ०पृ०७२७
१५ सूत्रद्वयबलात् शंसिस्सिद्धम्. इतरयोस्तु मूलं मृग्यम्.
अस्य तु अयं निर्देश एव वा मूलम्. ❋
तदभिव्यक्तैश्वरमहागाम्भीर्य इति—
(गभीरः).
(१) "गम्लृ, गतौ" ईरन्प्रकरणे, धा०भ्वादिः कौ० पृ० ४३०
२० (२) "गभीरगम्भीरो" इति, ईरन् उणा० पा०४कौ०पृ०६३३
भश्चान्तादेशः. पक्षे नुम् च निपात्यते. इह च नुम्वर्जमन्यत्सर्वम्.
तत्संपर्के कतकसंकलितसलिलवत् अनाद्यविद्याकलु—
षस्यापि संसारिणः प्रसादे, किमु वक्तव्यम् स्वभावदीप्तस्य
भगवतः. ❋

२५ निरु०— ५४७ महागाम्भीर्ययुक्तत्वाद् (गभीर) इति कथ्यते।

१ परम ।

(५४८) गहनो, (५४९) गुप्तश्,

ॐ गहनाय नमः। ॐ गुप्ताय नमः।

भा०— अथ च— ५
( गहनः ). दुरवगाहः. नहि स्वच्छसुग्रहान्तर्वृत्तोपि
रत्नाकरो जानुदघ्नः? ❀
( गुप्तः ). च तद्द्वारवद्भिः पूर्वगुरुभिः. ❀
कुत्र किंवा लक्षणो गुप्तः;
( १ ) " तमसः परमो धाता शङ्खचक्रगदाधरः " इति,रा० १०
यु० ११४–१५।

निर्व०— अथ यथा स्वाच्छयसुग्रहान्तर्वृत्तोपि रत्नाकरो न जानुद-
घ्नः; तथा गहनः दुरवगाहो भवतीति–( गहनः ).
( १ ) " गाहू, विलोडने " धा० भ्वादिः कौ० पृ०४०७
( २ ) " बहुलमन्यत्रापीति युच्" उणा०पा० ३ कौ०पृ०६२६ १५
बाहुलकाद्ध्रस्वश्च. अनः. ❀
तथैव च तद्द्वारवद्भिः गुप्तः सुरक्षितो भवतीति–( गुप्तः ).
( १ ) " गुपू, रक्षणे " कर्मणि क्तः. धा०भ्वादिः कौ०पृ०३९७
( २ ) " यस्य विभाषा " इति तत्रोत्र तदभावः. ७। २।१५॥
कौ० पृ० ५८७ २०
( ३ ) " आयादयः० " ३। १।३१॥ कौ०पृ०३९७
इति वैभाषिकतया नायप्रत्ययः. अगुणः. ❀
कुत्र किंलक्षणो गुप्तः. तदेवोच्यते-चक्रगदे तदुपलक्ष्याणि च पूर्वो-
क्तनित्यरूपविभूषणवत् पञ्चशक्तिमयदिव्यायुधानि तानि धरतीति–

निरु०—५४८ बालैर्दुरवगाहत्वाद् (गहनः) परिकीर्तितः॥४२३॥ २५
५४९ अन्यैर्दुरवबोधो यो ( गुप्त ) इत्यभिधीयते।

(५५०) चक्रगदाधरः, ॥ श्लो० ॥५१॥ (५५१) वेधाः,

ॐ चक्रगदाधराय नमः। ॐ वेधसे नमः।

५ भा०—(चक्रगदाधरः). उक्तनित्यरूपविभूपणवत् पञ्चशक्तिमयनित्यदिव्यायुध इत्यर्थः. ❀
एवं विविधमनन्तमहाविभवं नित्यं विदधातीति—
(वेधाः).

निर्व०—(चक्रगदाधरः).
१० धरतेः पचाद्यचि व्याख्यातोयं शब्दः.
(१) "गद, व्यक्तायां वाचि" धा० भ्वादिः कौ०पृ०३८६
पचाद्यच्. स्त्रियामतष्टाप्. इत्यादि.
(२) "चक, तृप्तौ, प्रतिघाते च" रक्प्रकरणे, धा० भ्वादिः कौ०पृ०३८८
(३) "चकिचम्योरुचोपधायाः" उणा०पा०५ कौ० पृ० ६४३
१५ इति, रक्. बाहुलकादत्रोत्वं न नेडिति नेट्. यद्वा,
करोतेः क इति, वर्तमाने करोतेर्द्वे चेति कः.
कृञो द्वित्वं च. बाहुलकादभ्याससंज्ञा. उरदत्वं- रपरत्वं-
हलादिशेषः. अगुणः. यण्. ऋतो रेफः. अथवा तत एव
बाहुलकात् सिचेस्संज्ञायां कोन्यत्रापि भवति. द्वित्वं च.
२० उताहो घञर्थे कविधानमिति कः. द्वित्वप्रकरणे,
(४) "के कृञादीनामुपसंख्यानम्"
इति द्वित्वमित्यादि. ❀
एवंविधमनन्तमङ्गलं महाविभवं विदधातीति—
(वेधाः).

२५ निरु०—५५०यश्शक्तिमद्दिव्यहेतिः स स्या-(चक्रगदाधरः) ॥४२४॥
५५१ महाविभवकल्याणं सततं विदधाति यः।
भक्तेभ्यः परमं (वेधाः) षडर्णो मङ्गलप्रदः ॥ ४२५ ॥

(५५२) स्वाङ्गो,

ॐ स्वाङ्गाय नमः।

भा०— (१) " विधाञो वेध च " इति, उणा०पा० ४ कौ० पृ०६४२ ५
असिप्रत्ययो वेधादेशश्च.
(२) "तमसः परमो धाता " इति, ※ रा०यु०१२०-१४।
यथा तत्रैव समग्रस्वासाधारणमङ्गं छत्रचामरादिसर्वाधिराज्यपरि-
बर्हजातं नित्यमस्येति–
(स्वाङ्गः). ※ १०
प्राकृतैः उत्पत्तिमरणादिभिः न जिता

निर्व०— " डुधाञ्, धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१
विपूर्वः.
(२) " मिथुनेऽसिः " इत्यतोऽसिरिति वर्तमाने, उणा० पा० ४
कौ०पृ०६४२ १५
(३) " विधाञो वेध च" इति, उणा०पा०४ कौ०पृ०६४२
असिः असुनोपवादः स्वरे भेदः. उपसृष्टस्य वेधादेशश्च.
तत्राकार उच्चारणार्थः असन्तलक्षणो दीर्घः इत्यादि. ※
तमसः परमो ह्ययं धाता, तत्रैव स्वमात्मीयं
स्वासाधारणमङ्गं छत्रचामरादिसर्वाधिराज्यपरिवर्ह– . २०
जातमस्येति–
(स्वाङ्गः).
अङ्गिर्गत्यर्थः. इदित्. नुम्. अनुस्वारपरसवर्णौ. पचाद्यच्,
(१) " स्वृ, शब्दोपतापयोः " धा० भ्वादिः कौ०पृ०४२५
(२)"अन्येष्वपि०"इति डः.टिलोपः.३।२।१०१॥कौ०पृ०५८५२५

निरु०— ५५२ स्वासाधारणमङ्ग हि छत्रादिपरिवर्हणम्।
यस्यास्ति नित्यं स (स्वाङ्ग.) षडर्णः परिवारदः ॥ ४२६ ॥

(५५३) अजितः,

ॐ अजिताय नमः ।

भा०—यथोक्तद्रव्योपादाना पुरी अजिता अस्यास्तीति-
५ (अजितः). अर्श आद्यजन्तं वा.
(१) " पुरं हिरण्मयीं ब्रह्मा विवेशापराजिता " इति. आ०१-
११६ ।

तन्मयमेघमेचकचारुवर्णः—

निर्व०—उक्तं चैतद् प्रागेव. दीर्घः. बहुव्रीहिः. यद्वा,
१० (३) " तत्पुरुषः समानाधिकरणः० " १ । २ । ४२ ॥ कौ०
पृ०१४४
ततो नित्ययोगे मत्वर्थीयोर्श आद्यच्.
(४) " यस्य० " इति लोपः. ६ । ४ । १४८॥कौ०पृ०५६
(५) " न कर्मधारयात्० " इति न्यायो ह्यनित्यः. ॐ
१५ यथोक्तद्रव्योपादानाऽपराजिताख्यपुरीकतया. न-नास्ति जिता,प्राकृतै-
रुत्पत्तिमारणादिभिः पराजितास्येति वा,
तैर्न जिता अजिता- अपराजिताख्यप्रख्याता पुरी सास्यास्तीति वा-
(अजितः).
(१) "जि, जये"क्तः. अगुणः. अनिट्.धा०भ्वादिः कौ०पृ०४०५
२० (२) " स्त्रियाम् " अतष्टाप् ४ । १ । ४ ॥ कौ०पृ०८८
दीर्घः. पूर्वत्र, नञ्पूर्वो बहुव्रीहिः. उपसर्जनह्रस्वः.
उत्तरत्र. तत्पुरुषः. उभयत्रापि नञो नलोपः.
तत्पुरुषपक्षे मत्वर्थीयः अर्श आद्यच्.
(३) " यस्य० " इत्यालोपः. ॐ ६ ।४।१४८॥ कौ०पृ०५६
२५ आर्षनिर्वचनात् (कृष्णः) तन्मयमेघमेचकचारुवर्णो भवतीति—

निरु०—५५३ प्राकृतैर्न जिता या सा यस्यास्तीत्यजिता पुरी ।
(अजित) स्तेन विज्ञेयः भक्तानां मुक्तिदो मनः ॥ ५२७ ॥

{५५४ / ५८} कृष्णो,

ॐ कृष्णाय नमः।

भा०— ( कृष्णः ).
(१)"कृषेर्वर्णे"इति, नक् प्रत्ययः, उणा०पा०३कौ०पृ०६२५ ५
तन्मयरूप एव वाराहाद्यवतारोपि इति च निरूचे.
( २ ) " कृषामि मेदिनीं पार्थ भूत्वा कृष्णायसो महान्। कृष्णो
वर्णश्च मे यस्मात्तेन कृष्णोहमर्जुन " भा० शां०१४३—४९।
इति. यथोक्तं सर्वं व्यनक्ति श्रीविष्णुतत्त्वादौ.
( ३ ) " एकैव पञ्चधा भूता प्रधाना विग्रहात्मिका। सर्वशक्तिस— १०
मेतापि पुरुषो नियतीरिमाः ॥ न जहाति स्वभावोत्थकारुण्येन
समाश्रितः। परमेष्ठी पुमान् विश्वो निवृत्तिरसर्व एव च ॥ पञ्चैताः
शक्तयः प्रोक्ताः परस्य परमात्मनः " पा० विष्णुतत्त्वसंहिता।
तेषां तत्त्वं द्विविधमुक्त्वा.
( ४ ) " मत्स्यकूर्मवराहाणामाविर्भावो महात्मनः। अनयैव द्वि- १५
जश्रेष्ठ नान्यया तद्विरोधतः " इति. ❀ पा० वि० त० सं०।
अनयैव नित्यव्यक्तौ, उपासकानामनुग्रहाय व्यूहोपि
किञ्चित् स्थूलः—

निर्व०— ( कृष्णः ).
(१)"कृष, विलेखने" नक् इत्यनुवृत्तौ. धा०तुदा०कौ०पृ०४६४ २०
( २ ) " कृषेर्वर्णे " उणा० पा०३ कौ० पृ०६२५
इति, नक्, अगुणः, अनिट्.
(३)" रषाभ्यां० " इति णत्वम्. ❀ ८।४।१।।कौ०पृ०३९
अथ उपासकानामनुग्रहाय व्यूहेपि- किंचित् दृढः-
स्थूलो भवतीति— २५

निरु०— ५५४ अप्राकृतातिरुचिरमेचकः ( कृष्ण ) ईरितः।

(५५५) दृढः, (५५६) संकर्षणो,

ॐ दृढाय नमः। ॐ संकर्षणाय नमः।

५ भा०— (दृढः).
(१) "दृह दृहि, वृद्धौ" धा० भ्वादिः कौ०पृ०४११
(२) "दृढः स्थूलबलयोः" इति निपातितः. ❀ ७।२।२०॥
कौ० पृ० ५१३
क एवम्— (संकर्षणः).
१० (१) "संसारे चिदचितोरात्मनि समं कर्षणात् समं कर्म नयति" इति, मौलाः. ❀ पाञ्च०मूलसंहिता।

निर्व०— (दृढः).
(१) "दृह दृहि, वृद्धौ" क्तः. धा० भ्वादिः कौ० पृ० ४११
(२) "दृढः स्थूलबलयोः" इति, ७।२।२०॥कौ०पृ०५१३
१५ तस्येडभावः. लाघवात्तकारस्य ढः. हस्य लोपः. इदितस्त्विदित्त्वान्नुमो नलोपश्चास्मिन्नर्थे निपात्यते. अगुणः. ❀
क एवम्—संसारे चिदचितो वात्मनि संकृषति, समं कृषतीति वा, निरुक्तानुसाराद् तयोस्संकर्षं समं कर्षं स्वात्मनि कर्षणं नयतीति वा—
२० (संकर्षणः). पूर्वत्र,
(१) "कृष, विलेखने" धा० तुदा० कौ०पृ०४६४
संपूर्वः ल्युः. ल्युड्योर्"दि. अनः- लघूपधगुणः रपरः.
(२) "अट्कुप्वाङ्०" इति णत्वम्. ८।४।२॥ कौ०पृ०३२
समो मः. अनुस्वारः- पाक्षिकः परसवर्णः. अपरत्र,
२५ निरु०— ५५५ स्थूलत्वाद्बलवत्त्वाच्च (दृढ) इत्यभिधीयते॥ ४२८॥
५५६ यः कर्षते चिदचितौ स (संकर्षण) उच्यते।

[१] संहारे। [२] कर्षं।

{१०१ / ४२०} (५५७) ऽच्युतः, ।

ॐ अच्युताय नमः ।

भा०— व्यूहेपि,
(१) " च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु । यस्मान्न च्यवसे ५
स्थानात् तस्मात् संकीर्त्यसेऽच्युतः "
इति—
(अच्युतः). ❀
(१) " येनावृत खं च दिवं महीं च " तै०उ०१—१।
(२) " तेनेदमावृतम् " इति, १०

निर्व०—(३) "णीञ् , प्रापणे " णो नः.धा०भ्वादिः कौ०पृ०४२३
(४) " अन्येष्वपि० " इति डः. टिलोपः- ३।२।१०१।।
कौ०पृ०५८५
कर्मभावे पञ्. अन्यत्प्राग्वत्.
(५) " पूर्वपदात्संज्ञायामगः " ८।४।३॥कौ०पृ०१६७ १५
इति णत्वं. विशेषः. ❀
आर्षनिर्वचनात् व्यूहेपि हि नायं च्यवनधर्मा तत-
श्च्युतो नेति—
(अच्युतः).
(१) " च्युङ्, गतौ " धा०भ्वादिः कौ०पृ०४२७ २०
कर्तरि क्तः. अनिट् अगुणः. नञ्समासे नञो नलोपः. ❀
तथा म्रियते आम्रियते सर्वमनेनेति वा, तत् वृणोत्यावृणोत्य-
यमिति वा—

निरु०— ५५७ यस्मान्न च्यवते स्थानाद्ब्रह्मादिस्तो (ऽच्युतः)
स्मृतः ॥ ४२९ ॥ २५

( ५५८ ) वरुणो, ( ५५९ ) वारुणो,

ॐ वरुणाय नमः । ॐ वारुणाय नमः ।

५ भा०—( वरुणः ).
( ३ ) " वृञ् , वरणे " धा०स्वादिः कौ०पृ०४६२
( ४ ) "कृवृदारिभ्य उनन्" ❀ उणा०पा०३ कौ०पृ०६२७
तं स्वामित्वेन वृणुत इति वरुणः तत्र भवः—
( वारुणः ).
१० ( १ ) " तेषु चाप्यहम् " इति, ❀ गी०९—२९ ।
तेषु छायातरुवदावृतानाम् उपजीव्यसर्वस्वः
तत्कृतोपमर्दसहस्रसहो वृक्षत इति—

निर्व०—( वरुणः ).
( १ ) " वृञ्, वरणे " धा०स्वादिः कौ०पृ०४६२
१५ ( २ ) " कृवृदारिभ्य उनन् " उणा०पा०३ कौ०पृ०६२७
इति उनन्. गुणः. रपरः, णत्वम्. ❀
तस्य वरणीयाधिष्ठानलब्धसत्ताकया वरुणेषु- तं स्वामितया
वृणानेषूपासकेषु भव इति—
( वारुणः ).
२० वृञः -कर्तृकरणयोरुनन्नन्तो निरूढे हि वरुणशब्दः. ततः.
( १ ) " तत्र भवः " इति भवार्थे अण्. आदिवृद्धिः. ४।३।५३॥
कौ०पृ०२६१
( २ ) "यस्य०" इति लोपः. ❀ ६।४।१४८॥कौ०पृ०५६
तांश्च छायातरुवत्तदुपजीव्यसर्वस्वतया तत्कृतो—
२५ पमर्दसहस्रसहश्च वृक्षते- वृणाति इति—

निरु०—५५८ यस्स्थितस्सर्वमावृत्य ( वरुणः ) स तु कथ्यते ।
५५९ आपस्था वरुणास्तासु स्थितो ( वारुण ) ईरितः ॥४२०॥

(५६०) वृक्षः, {५६१ / ४०} पुष्कराक्षो,

ॐ वृक्षाय नमः । ॐ पुष्कराक्षाय नमः ।

भा०— ( वृक्षः ). ५
( १ ) " वृक्ष , वरणे " धा० भ्वादिः कौ० पृ० ४०६
( २ ) " निवासवृक्षस्साधूनामापन्नानां परा गतिः " रा० ।
( ३ ) " वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः" तै०उ० ११—२०।
( ४ ) " समाश्रिताद्रूलतरोरनन्तान्निःसंशयः पक्कफल-
प्रपातः " इत्यादिवत्. ❀ १०
तेषां प्रसादवर्षण पोषके अक्षिणी यस्य सः—
( पुष्कराक्षः ). पुष्करम् ,
( १ ) " पुषः करन् " इति करन् प्रत्ययः , किद्भावः

निर्व०— ( वृक्षः ).
(१)"वृक्ष, वरणे " पचाद्यच्. ❀ धा० भ्वादिः कौ०पृ०४०६ १५
तेषां पुष्करे प्रसादवर्षण पोषके- अक्षिणी अस्येति—
( पुष्कराक्षः ).
अक्षेः क्सावक्षिशब्दः. प्रागेव हि निरूचे.
(१) "पुष, पुष्टौ" करन्नित्यनुवृत्तौ-धा०क्र्यादिः कौ०पृ०४७८
( २ ) " पुषः कित् " इति करन्. उणा०पा०४कौ०पृ०६२२ २०
कित्. कित्त्वविधानान्न क इत् अगुणः. अनिट् दीर्घः. ततः

निरु०— ५६० साधूनामाश्रयत्वाच्च सर्वैनस्सहनादपि ।
सर्वसर्वोपजीव्यत्वाद् ( वृक्ष ) इत्यभिधीयते ॥ ४३१ ॥
५६१ सतां प्रसादवर्षण पोषके यस्य चाक्षिणी ।
( पुष्कराक्ष ) स्स विज्ञेयो ह्यष्टार्णः प्रीतिवर्धकः ॥४३२॥ २५

१ ससंशयः । २ भावाभ्याम् ।

(५६२) महामनाः, ॥ श्लो० ॥ ६० ॥ (५६३) भगवान्,

ॐ महामनसे नमः । ॐ भगवते नमः ।

५ भा०— तेष्वगाधोदारविस्मृतमनाः—
( महामनाः ).
एवमशेषदोषविद्वेषिकल्याणस्वरूपतया परमपूज्यः—
( भगवान् ).

निर्व०—(३) "बहुव्रीहौ सक्थ्यक्ष्णोः०" ५।४।११३॥ कौ०पृ०१६६
१० इति षच्- समासान्तः अन्यथापीति प्रागुक्तम्.
( ४ ) " यस्य० " इति लोपः. ❀ ६।४।१४८॥ कौ०पृ०५६
तेषु महत् अगाधोदारविस्मृत मनोऽस्येति—
( महामनाः ).
( १ ) " मन . ज्ञाने " धा० दिवा० कौ०पृ० ४५६
१५ ( २ ) " सर्वधातुभ्यः० " इत्यसुन्. उणा०पा०४ कौ०पृ०६४०
महच्छब्दो निरुक्ते-अन्यच्च प्राग्वत्. असन्तत्वाद्दीर्घ इत्यादि ❀
अथास्य स्वरूपतः परमपूज्यतोच्यते. अशेषदोषविद्वेषि-
कल्याणस्वरूपतया भगः गुणः- तदुपलक्ष्यं च स्वरूपमस्यास्तीति—
( भगवान् )
२० ( १ ) " भज , सेवायाम् " धा०भ्वादिः कौ०पृ०४३१
( २ ) " खनो घ च " ३ । ३ । १२५ ॥ कौ०पृ०६६४
इति चकाराद् विकरणाद्वा , अन्यतोपि यथायथ
करणाधिकरणयोर्घः

निरु०— ५६२ अगाधोदारविस्तार मनो यस्य ( महामनाः )।
२५ ५६३ सर्वहेयप्रत्यनीककल्याणगुणवत्तया ॥ ४३३ ॥
पूज्यात्पूज्यतमो योऽसौ ( भगवान् ) इति शब्द्यते ।

(५६४) भगहा,

ॐ भगघ्ने नमः ।

भा०— गुणतोपि तथा— ५
(भगहा).
(१) " ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा " वि०पु०६—५—७४।
तं हन्ति गच्छतीति हन्तिर्गमनकर्मा अत्र वैष्णवे षष्ठंशे भगवच्छब्दनिर्वचनप्रकरणं लेख्यम्. ❀

निर्व०— (३) " चजोः० " इति कुत्वम्. गः. ७।३।५२॥ १०
कौ०पृ०५६०
एवं सिद्धात् भगशब्दात्
(४) " तदस्य० " इति मतुप्. ५।२।९४॥कौ०पृ०३२५
(५) " मादुपधायाः० " ८।२।९॥कौ०पृ०३२५
इति, मतोर्मस्य वः. अत्वन्तत्वादीर्घः. उगित्त्वान्नुमित्यादि. ❀ १५
अथ गुणतोपि सोच्यते. कल्याणगुणैकतानतया भगमैश्वर्यादिगुणं हन्ति गच्छति प्राप्नोतीति—
(भगहा).
(१) " हन, हिंसागत्योः " धा० अदा० कौ०पृ०४३५
गतिकर्महायम्. उपपदनियमस्य प्रायोभिप्रायत्वात् २०
(२) " ब्रह्मभ्रूण० " ३।२।८७॥कौ०पृ०५८४
इति वा, सार्वकालिको वा क्विप्. वस्तुतस्तु ब्रह्मभ्रूणेति सूत्रे प्रकृत्युपपदप्रत्ययकालनियमाश्चत्वारो हि फलिताः. तत्र च प्रकृतिनियमादभूते चोक्तोपपदव्यावृत्तेः

निरु०—५६४ भगैस्तु कल्याणगुणैः सर्वं सर्वत्र गच्छति॥४३४॥ २५
यश्चासौ (भगहा) नाम्नः षडर्णः सुखदायकः ।

१ गतिक

## (५६५) नन्दी, (५६६) वनमाली.

ॐ नन्दिने नमः । ॐ वनमालिने नमः ।

५ भा०— एवम् असौ व्यूहे संकर्षणः स्वावतारे नन्दगोपेन पितृमान्–
(नन्दी). मधुवल्लवीसेवाऽनन्दवान् वा. ❀
स्वसृज्यभूतसूक्ष्मसारसौराख्याभिमानिन्या वैजयन्त्या नित्ययोगी–
(वनमाली). ❀

निर्व०— उपपदान्तरेपि भवतीत्यवधेयम्. तत्प्रकारस्तु स्पष्टमाकरे
१० द्रष्टव्यः. प्रागपीदमवोचाम, भगशब्दो हि निरूपितः. इन्नन्तत्वाद्दी-
र्घः-इत्यादि. यथोक्तव्याख्यानेन नाम्नोरपुनरुक्तिः. ❀
एवमसौ व्यूहे सकर्षणः स्वस्यावतारे नन्दगोपन पितृमत्तया नन्दः
नन्दगोपः पितास्यास्तीति वा आनन्दी इति छित्वा तत्रानन्दः म-
धुवल्लवीसेनानन्दथुरस्यास्तीति वा–
१५ (नन्दी) (आनन्दी) वा.
(१) "टुनदि, समृद्धौ" धा० भ्वादिः कौ०पृ०३८७
टुरित्. इदित्त्वान्नुमित्यादि. पूर्वत्र पचाद्यच्.
अपरत्र स एवधातुराङ्पूर्वः अन्यत्प्राग्वत्. भावे घञ्
विशेषः उभयत्रापि मत्वर्थीयोऽत इनिः
२० (२) "यस्य०" ६।४।१४८॥कौ०पृ०५६
इति लोपः. इन्नन्तत्वात् दीर्घ इत्यादि. ❀
तथा वनमाला स्वसृज्यभूतसूक्ष्मसारसौराख्याभिमानि–
नी वैजयन्ती नित्यमस्यास्तीति–
(वनमाली).

२५ निरु०— ५६५ नन्दगोपेन पितृमान् (नन्दी) ति परिगीयते॥४३५॥
५६६ स्वसृज्यभूतसूक्ष्माणां माल्या नित्ययोगतः ।
(वनमाली) समाख्यातो ह्यक्षाणां भूपणप्रदः ॥ ४३६ ॥

(५६७) हलायुधः, ।

ॐ हलायुधाय नमः ।

भा०— उक्तभूतसमृद्धिकृपीवलहलपरिकरः—
(हलायुधः). यथा, ५
(१) " बलाद्र समृद्ध्यर्थं सीरकर्मणि कीर्तयेत् " इति,

निर्व०— (१) " माङ्, माने " धा० जुहो०कौ०पृ०४५०
(२) " ऋज्रेन्द्राग्र० " उणा०पा०२ कौ०पृ०६२०
इत्यादिना रन्नन्तो निपातः. अनिट्. रलयोरभेदः.
स्त्रियामतटाप्. दीर्घः. १०
(३) " वन, पण, संभक्तौ " धा०भ्वादिः कौ० पृ० ४०१
पचाद्यच्. इत्थं सिद्धाद्वनमालाशब्दात्,
(४) " व्रीह्यादिभ्यश्च " ५ । २ । ११६ ॥ कौ०पृ ३३०
इति, तस्याकृतिगणत्वात्, मत्वर्थीय इनिः.
(५) " यस्य० " ६ । ४ । १४८ ॥ कौ०पृ०५६ १५
इत्यालोपः. इन्नन्तत्वादीर्घ इत्यादि. ❀
उक्तभूतसमृद्धिकृपीवलहलपरिकरतया हलं सीरः
आयुधमस्येति—
(हलायुधः).
(१) " युध, संप्रहारे " धा० दिवा० कौ० पृ० ४५६ २०
आङ्पूर्वः.
(२) " घञर्थे कविधानम् " ३ । ३ । ५८ ॥ कौ०पृ०६५३
(३) " स्थास्नागापाव्यधिहनियुध्यर्थम् "
इति, करणे कः. अगुणः.

निरु०— ५६७ हलं च मननं सीर धत्ते योऽसौ (हलायुधः) । २५
सीरकार्यसमृद्ध्यर्थो स्तरणां मन्त्रनायकः ॥ ४३७ ॥

{ ५६८ / ३७ } आदित्यो ,

ॐ आदित्याय नमः ।

भा०— स्ववाचकात् आवर्णात् आतः इत्यः प्राप्यः इति—
५ ( आदित्यः ).
( १ ) " एतिस्तुशास्वृदृजुषः क्यप् " ३।१।१०९॥कौ०पृ० ५५९
आकारो हि संकर्षणबीजमन्त्रः.
भूतपूर्वाऽदितिभावायाः देवक्याः अपत्यमिति वा—
( आदित्यः ).

१० निर्व०— ( ४ ) " हल , विलेखने " धा० भ्वादिः कौ०पृ० ४३९
पचाद्यच्. दीर्घः. ❀
आकारस्य संकर्षणबीजमन्त्रतया स्ववाचकेन
आता तपरोयम् असन्देहार्थो निर्देशः पाक्षिकार्थान्तरलाभा-
र्थश्च. आकारेण इत्यः प्राप्य इति वा. अदितेः आर्षवचन-
१५ सिद्धभूतपूर्वादितिभावायाः देवक्याः अपत्यमिति वा—
( आदित्यः ). पूर्वत्र ,
( १ ) इण् , गतौ " धा०अदा० कौ०पृ० ४४१
(२)" एतिस्तुशास्वृदृजुषः क्यप् " ३ ।१। १०९ ॥कौ०पृ०५५९
इति क्यप्. अगुणः.
२० ( ३ ) " ह्रस्वस्य० " ६ । १ । ७१ ॥ कौ०पृ०५५९
इति , तुक्. तृतीयायाः सामासिको लुक्. पदत्वान्नत्वम्.
अपरत्र,

निरु०— ५६८ आवर्णादेव प्राप्यो यः स ( आदित्यः ) प्रकीर्तितः ।
अदितिर्देवकी तस्याः ( आदित्यो ) वा ह्यपत्यतः ॥४३८ ॥

भा०— यथा, वैष्णवे धर्मे देवकीं प्रति भगवान्,
(१) " दाक्षायणी त्वमदितिः संभूता वसुधातले। नित्यैव त्वं जगद्धात्री प्रसादं ते करोम्यहम् " इति. ※ भ० वि०ध० ९३–४४।                                                    ५
अथ नरायणविषयः. दिव्याश्चर्यज्योतिर्मयत्वात् अपूर्वः—

---

निर्व०— (४) " दो, अवखण्डने" धा०दिवा०कौ०पृ०४५४
(५)"आदेचः०"इत्यनैमित्तिकमात्वम्६।१।४५॥कौ०पृ०४२३
(६) " स्त्रियां क्तिन् " अनिट्. ३।३। ९४॥ कौ०पृ०६५८
(७)" द्यतिस्यति०" इति, इत्वम्. ७।४।४०॥कौ०पृ०५५४ १०
अगुणः नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. यद्वा,
(८) " इण्, गतौ " धा० अदा० कौ०पृ० ४४१
अदिति दान्ताव्ययपूर्वः. ततः क्तिन्. अनिट्. अगुणः.
अथवा,
(९) " अद, भक्षणे " धा० अदा०कौ०पृ०४३५                                                    १५
(१०) " हसृरुहियुषिभ्यः० " उणा०पा०१ कौ०पृ०६१५
इति बाहुलकादन्यतोपीति, इतिः. तत एव बाहुलकादन्यत्र क्वचिदन्त्योपीकारः नेट्. प्रागपीदमवोचाम. एवं सिद्धात् अदितिशब्दात्,
(११)" दित्यदिति०" इत्यादिना, ४।१।८५॥कौ०पृ०२०५ २०
अपत्यार्थे ण्यः. आदिवृद्धिः. भत्वम्,
(१२) "यस्य०" इति लोपः. ※ ६।४।१४८॥कौ०पृ०५६
अथ नरनारायणविषयः. तयोश्च भवेन सह युध्यतोः सतोः तत्तेजसि सिद्धस्याप्यादित्यस्य तमायमानतया अयमपूर्वो ज्योतिः. दिव्याश्चर्यज्योतिर्मयश्चासौ आदित्यो                                                    २५
भानुश्चेति—

## (५६९) ज्योतिरादित्यः, { ५७० / १४६ } सहिष्णुर्,

ॐ ज्योतिरादित्याय नमः । ॐ सहिष्णवे नमः ।

५ भा०— ( ज्योतिरादित्यः ).
प्रसिद्धो ह्यादित्यः तत्तेजसि तमायेत, श्रीनारायणीये,
( १ ) " तयोर्भवेन युध्यतोः " निष्प्रभाणि च तेजांसि ब्रह्मा चैवा-
सनाच्युतः " इति. ❋ भा०शा०३४४–९०।
तत्र तदपराधसहनात्—
१० ( सहिष्णुः ). तत्रैव,
( १ ) " प्रसादयामास भवो देवं नारायणं प्रभुम् । शरणं जगता-
माद्यं वरेण्यं वरदं हरिम् ॥ तथैव वरदो देवो जितक्रोधो जिते-
न्द्रियः । प्रीतिमानभवत्तत्र रुद्रेण सह संगतः "
इति. ❋ भा० शा० ३४४–११९।

१५ निर्व०— ( ज्योतिरादित्यः ).
एकनाम-निरुक्ते ह्यादित्यशब्दः.
( १ ) " द्युत दीप्तौ " धा० भ्वादिः कौ० पृ०४११
( २ ) "द्युतेरिसिन्नादेशश्च जः" इति. उणा०पा०२कौ०पृ०६२४
इसिन्नादेर्दस्य जश्च गुणः रुत्वम्. ❋
२० तत्र तदपराधं तच्छीलस्सहत इति—
( सहिष्णुः ).
( १ ) " षह, मर्षणे " परस्मै. धा० भ्वादिः कौ०पृ०४१९

निरु०— ५६९ समस्ततेजोहरणज्योतिषा दीव्यते च यः ।
स वै स्याज् ( ज्योतिरादित्यो ) नवार्णो ज्ञानदायकः ॥ ४३९ ॥
२५ ५७० ब्रह्मादिमन्तुसहनात् ( सहिष्णु ) रिति कथ्यते ।

(५७१) गतिसत्तमः, ॥ श्लो० ॥ ६१ ॥ (५७२) सुधन्वा,

ॐ गतिसत्तमाय नमः । ॐ सुधन्वने नमः ।

भा०— स एव परमधर्माध्वदेशिकत्वेन— ५
(गतिसत्तमः).
गतौ प्रत्ययिततमः इति,
(१)"अहो ह्यनुगृहीतो ह्यधर्म एभिस्सुरैरिह" भा०शा० ३३५—१७।
इति. ❀
सुधानिमित्तसुराऽसुरसमरसंहारिशरासनत्वात्— १०
(सुधन्वा).

निर्व०— (२) "अलंकृञ्०" ३।२।१३६॥कौ०पृ०६०१
इत्यादिना प्रागुक्तसूत्रेण ताच्छीलिक इष्णुच्. ❀
स एव परमधर्माध्वदेशिकत्वेन गतौ सत्तमः अस्तितमः
प्रत्ययिततम इति— १५
(गतिसत्तमः).
अस्तेश्शतरि व्युत्पन्नात् सच्छब्दात् आतिशायनिके तमपि सत्तमशब्दः-
गमेः क्तिनि अनिटि, अनुनासिकलोपे, गतिशब्द-
श्च व्युदपादिषाताम्. ❀
सुधानिमित्तसुराऽसुरसमरसंहारिशरासनतया सु-शोभनं धनुरस्येति—२०
(सुधन्वा).
(१) "धन, धान्ये" उक्षिरित्यनुवृत्तौ, धा०जुहो०कौ०पृ०४५२
(२) "अर्तिपृवपियजितनिधनितपिभ्यो नित्" उणा० पा० २
कौ०पृ०६२४
इति उसिः. नित्. नित्त्वादाद्युदात्तः. सुपूर्वो बहुव्रीहिः. २५

निरु०— ५७१ धर्मे प्रत्ययिततमो (गतिसत्तम) उच्यते ॥ ४४० ॥
५७२ सुशोभनं धनुर्यस्य (सुधन्वा) परिकीर्तितः ।

(५७३) खण्डपरशुः,

ॐ खण्डपरशवे नमः।

भा०— (१) "धनुपश्च" इति समासान्तो नञ्. ❀ ५।४।१३२॥
५ कौ०पृ०१६९
(२) " तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि "
(३) " नरस्तनो वरकण्टकाभ्यनूपर्णैर्महेषुभिः पवनपदं समावृणोत् " इति. ❀
परशुना रौद्रसंग्रामखण्डनात्—
१०-(खण्डपरशुः). तत्रैव,
(१) " अथ रुद्रविघातार्थमिषीकां नर उद्धरन् । मन्त्रैश्च संयुयोजाशु सोऽभवत् परशुर्महान् ॥ क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा । ततोऽहं खण्डपरशुस्ततः परशुखण्डनात् "
इति. ❀ भा०शा०३४४—८६।

१५ निर्व०— ततः,
(३) " धनुपश्च " इत्यनुवर्तमाने, ५।४।१३२॥कौ०पृ०१६९
(४) " वा संज्ञायाम् " ५।४।१३३॥कौ०पृ०१६९
इत्यनङ् पाक्षिकस्समासान्तः. छिन्त्वादन्त्यादेशः. तत उवर्णस्य यण् वकारः. नान्तलक्षणो दीर्घः इत्यादि. ❀
२० स एवार्पनिर्वचनात् खण्डः रौद्रसंग्रामखण्डनः परशुः परश्वधोऽस्येति—
(खण्डपरशुः).
(१) " शॄ, हिंसायाम् " धा०क्र्यादिः कौ०पृ०४७८
परशब्दे उपपदे कुप्रकरणे,

२१ निरु०— ५७३ तीव्रकोपात् परशुना रौद्रसंग्रामखण्डनात् ॥४४१॥
इत्युक्तः (खण्डपरशु) र्नेमार्णश्शोकनाशकः।

१ कनक।

(५७४) दारुणो,

ॐ दारुणाय नमः ।

भा०— एवं बाह्याभ्यन्तरारिदारणात्— (दारुणः).
(१) " कृवृदारिभ्य उनन् " ❀ उणा०पा०३कौ०पृ०६२७५

निर्व०—(२) " आङ्परयोः खनिशृभ्यां डिच्च " उणा० पा०१ कौ०पृ०६११
इति, कुः. स डिच्च. टेर्लोपः. पृणातेरचि परशब्दो व्युत्पादितः.
(३) " खनु, अवदारणे" धा०भ्वादिः कौ०पृ०४२१
(४) " ताभ्यामन्यत्रोणादयः" इति स्थिते, ३।४।७५॥कौ० पृ०६४५ १०
(५) " यमन्ताड्डः " इति, उणा०पा०१ कौ०पृ०६१५
करणे कर्तरि वा डः. बाहुलकान्न डस्येत्संज्ञा.
(६) " नेड्वशि० " इति, नेट्. ७।२।८।।कौ०पृ०५८३
अनुस्वारपरसवर्णौ. ष्टुत्वस्यासिद्धत्वान्न च विप्रतिषेधः. १५
(७) " पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य "
इति हि स्थितिः. यद्वा,
(८) " खडि, भेदने " चुरादिः, इदित्. तुमादि. धा० चुरा० कौ०पृ०४८१
ततो णिचि पचाद्यच्. णेर्लोपः. इदित्करणाल्लिङ्गाण्णिचः २०
पाक्षिकत्वे तु तल्लोपवर्जमन्यस्याघवत्. लिङ्गत्वं तूपपादयिष्यते. ❀
एवं भीषणः. बाह्यानाभ्यन्तरांश्चारीन् दारयति विदारयतीति—
(दारुणः).
(१) " दॄ, विदारणे " धा० क्र्यादिः कौ०पृ०४७३
णिच् वृद्धिः. रपरत्वम्. ततः, २५

निरु०— ५७४ बाह्याभ्यन्तरशत्रूणां दारणादपि (दारुणः)॥५४२॥

(५७५) द्रविणप्रदः, ।

ॐ द्रविणप्रदाय नमः ।

भा०— अथ व्यासावतारः,

५ समग्रं शास्त्रतदर्थरूपद्रविणं प्रददातीति—

( द्रविणप्रदः ). यथा,

( १ ) " पहन्वे वामहस्तेन सर्वशास्त्रार्थसंचयम् । दक्षिणेन च शास्त्रार्थानादिशंश्च यथास्थितान् "

इति तद्ध्याने. ❀

१० परविद्यया दिवि च परमपदे स्थितं स्वतत्त्वरहः स्पृशतीति—

निर्व०—(२)"कृवृदारिभ्य उनन्" इति, उणा०पा० ३ कौ०पृ०६२७, उनन्. णिलोपः. णत्वम्. ❀

अथ व्यासावतारः. तद्ध्यानविधिना द्रविणं समग्रं शास्त्रतदर्थरूपं धनं प्रददातीति—

१५ ( द्रविणप्रदः ).

( १ ) " डुदाञ्, दाने " प्रपूर्वः धा० जुहो० कौ० पृ०४५१ क इत्यनुवृत्तौ,

( २ ) " प्रे दाज्ञः " इति कर्मण्युपपदे ३।२।६।।कौ०पृ०५७२ प्रोपसृष्टादस्मात् कः. आल्लोपः.

२० ( ३ ) " द्रु, गतौ " धा०भ्वादिः कौ०पृ०४२६

( ४ ) "द्रुदक्षिभ्यामिनन्" इति इनन्. उणा०पा० २ कौ०पृ०६२१ गुणः. अव्. णत्वम्. ❀

मन्त्रवर्णाद्विदितपदार्थतया, दिवि परमे पदे ततश्च तदधिकरणकं स्वतत्त्वं रहः स्पृशतीति—

२५ निरु०— ५७५ शास्त्रं तदर्थं द्रविणं प्रददाति जनाय यः ।
व्यासो भूत्वा हरिस्साक्षाद् ( द्रविणप्रद ) उच्यते ॥ ४४३ ॥

( ५७६ ) दिविस्पृक्,

ॐ दिविस्पृशे नमः ।

भा०—( दिविस्पृक् ).
( १ ) " स्पृशोऽनुदके क्विन् " ३ । २ । ५८॥ कौ० पृ०७९ ५
( २ ) " हलदन्तात्० " इत्यलुक्. ६ ।३।९॥कौ०पृ०१८७
( ३ ) " विदितपरमार्थः " इति तन्मन्त्रे. ❀

निर्व०—( दिविस्पृक् ).
" स्पृश , संस्पर्शने " धा० तुदा० कौ० पृ० ४६९
( १ ) " स्पृशोऽनुदके क्विन् " ३ । २ । ५८ ॥कौ०पृ०७९ १०
इति क्विन्.
( २ ) " क्विन्प्रत्ययस्य कुः " ८ । २ । ६२ ॥कौ०पृ०६८
इति कुत्वस्यासिद्धत्वात्.
( ३ ) " व्रश्च० " इत्यादिना पूर्वं षः. ८।२।३६॥कौ०पृ०५१
तस्य जश्त्वेन डः, तस्य कुत्वेन गः- तस्य पाक्षिकचर्त्वेन कः. १५
( ४ ) " दिवु, क्रीडादौ" उणादिषु, धा०दिवा०कौ०पृ०४५२
(५)"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे। कार्याद्०"श्लो०वा०।
इत्यादिन्यायावलम्बनात्.
(६)" दिवेर्डिविः " इति न्यासोहितसूत्रेण डिविः. उणा०सूत्रम्।
टिलोपः. ततो ङिः. तस्यालुक्प्रकरणे, २०
( ७ ) " हद्युभ्यां च " ८ । ३ । ९४ ॥ कौ० पृ० १८७
इति सत्यपि प्रतिपदोक्ते तस्यासंज्ञार्थत्वात्, इह
( ८ )"हलदन्तात् सप्तम्याः संज्ञायाम्"६।३।९॥कौ०पृ०१८७
इत्यलुक्.

निरु०—५७६ परया विद्यया यः स्वं स्पृशतीति परे पदे । २५
( दिविस्पृक् ) सोच्यते नित्यम्—

{५७७ / २०१} सर्वदृग्, (५७८) व्यासो,

ॐ सर्वदृशे नमः । ॐ व्यासाय नमः ।

५ भा०—अन्यदपि सर्वं वैभवं पश्यतीति—
(सर्वदृक्).
(१) " दृशेश्चेति वक्तव्यम् " इति क्विन्प्रत्ययः.
(२) " क्विन्प्रत्ययस्य कुः " इति कुत्वम्.८।२।६२॥कौ०पृ०६८
(३) " विदुषे " इति तन्मन्त्रे. ❀
१० (१) " युगानुसारबोधानामखेदजननाय वै । विभजंस्तु चतुर्धा वै वेदमेकं त्रिकालवित् " इति—
(व्यासः). ❀

निर्व०— मन्त्रवर्णादिदुष्येणान्यच्च सर्वं वैभवं पश्यतीति—
(सर्वदृक्).
१५ (१) " दृशिर् प्रेक्षणे " धा० भ्वादिः. कौ०पृ०४२०
(२) " दृशेश्चेति वक्तव्यम् "
इति, क्विन्. क्विप् वा. पडगकाः प्राग्वत्. सर्वशब्दो व्याख्यातः.
अन्यदप्यत्र वक्तव्यं प्रागेव सप्रपञ्चमवोचाम. ❀
युगानुसारबोधानामखेदजननाय विभक्तवेदतया व्यस्यन्ते
२० विभज्यन्ते वेदाः अनेनेति—
(व्यासः).
(१) " असु, क्षेपणे " विपूर्वः. धा० दिवा० कौ० पृ० ४५१
(२)"हलश्च" इति करणे घञ्. वृद्धिः. ३।३।१२१॥कौ०पृ०६६१
वेरिकारस्य यण् यकारः. नाम्नोः सांहितं जश्त्वम्. ❀

निरु०—५७७ (सर्वदृक्) सर्वदर्शनात् ॥ ४४४ ॥
५७८ त्रय्याश्चतुर्धा करणाद् (व्यास) इत्युच्यते बुधैः ।

{५७९ / २१८} वाचस्पतिर्, (५८०) अयोनिजः, ॥

ॐ वाचस्पतये नमः। ॐ अयोनिजाय नमः।

भा०— पञ्चमवेदरूपायाः वाचः स्वामी— ५
( वाचस्पतिः ). ❀
सारस्वतावतारे भगवद्वाक्संभवत्वात्—
( अयोनिजः ).

निर्व०—स एव पञ्चमवेदरूपाया वाचो भारत्याः पतिः स्वामीति—
( वाचस्पतिः ). भिन्नं पदम्. समस्तं वा. १०
( १ ) "पा, रक्षणे" धा० अदा० कौ० पृ० ४४३
अतो डत्यन्तः पतिरुक्तः.
( २ ) "वच, परिभाषणे" धा० अदा० कौ० पृ ४४३
( ३ )"क्विब्वचि०"इत्यादिना क्विप् दीर्घः३।२।१७८॥कौ०
पृ० ६०७ १५
( ४ ) "वचिस्वपि०" इत्यादिना प्राप्तसंप्रसारणाभावश्च. ६।
१।१५॥कौ० पृ ४३२
ततो ङस्. सोरुत्वम्. विसर्गः, तस्य षष्ठ्याः
( ५ ) "पतिपुत्र०" इत्यादिना २।३।५३ ॥ कौ०पृ० १२१
सकारश्छान्दसः. तथा समासपक्षे षष्ठ्याः अलुक् च. पञ्चमो २०
ह्ययं वेदः सर्वमिदं सविस्तरं प्रागेव प्रत्यपीपदाम. ❀
सारस्वतावतारे भगवद्वाक्संभवतया, योनौ भगे
जायत इति योनिजः स नेति— ( अयोनिजः ).

निरु०—५७९ वाचःपञ्चमवेदस्य स्वामी वाचस्पतिः स्मृतः॥४४५॥
५८० सारस्वतावतारे हि भगवन्मुखसंभवात्। २५
स्मृतो ( ह्ययोनिज ) इति वस्वर्णः कर्मनाशकः ॥ ४४६ ॥

श्लो० ॥ ६२ ॥ (५८१) त्रिसामा,

ॐ त्रिसाम्ने नमः ।

भा०–( १ ) "अथ भूयो जगत्स्रष्टा भोशब्देनानुनादयन् । सर-
५ स्वतीमुच्चचार तत्र सारस्वतोऽभवत् " इति, ❀ भा० शा०-
३५०–३७ ।
स्वगायकबृहद्रथन्तरवामदेव्यप्रधानसामकत्वात्–
( त्रिसामा ).
स्वयं च स्वानुभवमीत्या तादृशि गायतीति–

१० निर्व०–( १ ) " जनी, प्रादुर्भावे " धा० दिवा०कौ०पृ०४५४
( २ ) " सप्तम्यां जनेर्डः " ३।२।९७ ॥कौ०पृ०५८५
इति, डः. टिलोपः.
( ३ ) " यु, मिश्रणे " निप्रकरणे, धा०अदा०कौ०पृ०४३९
( ४ ) " वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् " उणा०पा०४कौ०
१५ पृ०६३४
इति, निः, नित्. तत्फलं चोक्तमेव. गुणः.
( ५ ) " नेट्० " इति, नेट्. ७ । २ । ८ ॥कौ०पृ०५८१
नञ्-समासः नञो नलोपः. ❀
स्वगायकप्रधानानि त्रीणि सामानि बृहद्रथन्तरवामदेव्यान्यस्येति–
२० ( त्रिसामा ).
( १ ) " षो, अन्तकर्मणि " षस्सः. धा०दिवा०कौ०पृ०४५४
( २ ) " आदेचः० " इति आत्वम्. ६।१।४५॥कौ०पृ०४२३
( ३ ) " सातिभ्यां मनिन्मनिणौ " इति, मनिन्. उणा०पा०४
कौ०पृ०६३९
२५ अनिट्. तरतेर्ड्रौ, त्रिशब्दश्चोक्तः. बहुव्रीहिः. नान्तलक्षणो दीर्घः.
इत्यादि. ❀
स्वयमपि स्वानुभवमीत्या सामानि तादृशि गायतीति–

निरु०–५८१ प्रोक्त ( त्रिसामा ) यश्चासौ बृहदादित्रिसामकः ।

(५८२) सामगस्, (५८३)साम,

ॐ सामगाय नमः। ॐ साम्ने नमः।

भा०—(सामगः). ५

(१) "गापोष्टक्" इति टक्, तदनुभवाह्लादोपि हि ३।२।८॥ कौ०पृ०५७२

साम गापयते,

(२) "एतत्साम गायन्नास्ते" इति. ❀ तै०उ०१०—५।

स्वगायकानामपि पापं स्यतीति— १०

(साम).

(१) "षो, अन्तकर्मणि" इति, धा०दिवा०कौ०पृ०४५४

(२) "सातिभ्याम्०" इत्यादिना मनिन्. ❀ उणा०पा०४ कौ० पृ०६३९

एवमपहतपाप्मनां परमगतिनिमित्तम्— १५

निर्व०—(सामगः).

(१) "गै, शब्दे" आत्वम्. धा०भ्वादिः कौ०पृ०४२४

(२) "गापोष्टक्" इति, अनुपसर्गात् ३।२।८॥कौ०पृ०५७२

गायतेष्टक्. आतो लोपः. सामशब्दो निरुक्तः.नलोपः. ❀

स्वगायकानां पापं स्यति नाशयतीति— २०

(साम).

प्राग्वदेव सामशब्दः, नलोपश्च.

(१) "लिङ्गमशिष्यम्" इत्यादि. ❀ ॥ महाभाष्ये ॥

एवमपहतपाप्मनां परमगतिनिमित्ततया निर्वाणं निश्रेयसमिति—

निरु०—५८२ स्वयं स्वानुभवप्रीत्या गायतीति च(सामगः)।४४७॥२५

५८३ स्वगायकानां कालुष्यनाशक (स्साम) ईरितः।

(५८४) निर्वाणम्, (५८५) भेषजम्,

ॐ निर्वाणाय नमः। ॐ भेषजाय नमः।

५ भा०—( निर्वाणम् ).
( १ ) " निर्वाणोवाते " इति निपातितः. ❀ ८। २। ५० ॥
कौ०पृ०५८८
अतः असाध्यसंसारव्याधेः परमम्—
( भेषजम् ). स्तवराजे,
१० ( १ ) " नारायणादृषिगणास्तथा सिद्धा महोरगाः। देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् " इति. ❀

निर्व०—( निर्वाणम् ).
तन्निमित्ततया चात्र तद्व्यपदेशः.
( १ ) " वा, गतिगन्धनयोः " निपूर्वः क्तः. धा०अदा०कौ०
१५ पृ०४४३
ततो निष्ठातस्य,
( २ ) " निर्वाणोवाते " अवाते कर्तरि निपातनात् नत्वम्. अनिट्.
८। २। ५० ॥ कौ०पृ०५८८
( ३ ) " कृत्यचः " इति णः. ८। ४। २९ ॥ कौ०पृ०५५६
२० ( ४ ) " लिङ्गमशिष्यम् " इत्यादि. ❀ ॥ महाभाष्ये ॥
अतः असाध्यसंसारव्याधेः भेषजम् परममौषधमिति—
( भेषजम् ). ततः,
( १ ) " भिषज्, चिकित्सायाम् " धा० कण्ड्वादिः कौ०पृ०५२१
( २ ) " कण्ड्वादिभ्यो यक् " इति, स्वार्थे यक्. ततः क्विप्. तन्,
२५ ३। १। २७ ॥ कौ०पृ०५२०

निरु०—५८४ ( निर्वाण )स्यात्परगतेर्निमित्त निर्गतेनसाम् ॥४४८॥
५८५ असाध्यभवरोगस्य ( भेषजं ) यत्सदौषधम्।

(५८६) भिषक्, । (५८७) संन्यासकृत्,

ॐ भिषजे नमः । ॐ संन्यासकृते नमः ।

भा०— सम्यग्विदितनिदानचिकित्सः— ५
(भिषक्). ❀
कथं चिकित्सति, सात्त्विकेन संन्यासेन रजस्तमसी कृन्ततीति—
(संन्यासकृत्).

निर्व०—(३)"यस्य हलः"इत्यार्धधातुके ६।४।४९॥कौ०पृ०५०४
यशब्दस्य संघातस्य लोपः, स च, १०
(४) "आदेः परस्य" इति यकारमात्रस्य १।१।५४॥कौ०पृ०७
(५) "अतो लोपः" इत्यकारलोपः. ६।४।४८॥कौ०पृ०३९७
एवं सिद्धात् भिषज्शब्दात् तस्येदमिति संबन्धसामान्येन अण्,
वृद्धिरैकारः. तस्य च पृषोदरादित्वात् वर्णविकार एकारः—
आविष्टलिङ्गोयमित्यादि. ❀ १५
सम्यक् विदितनिदानचिकित्सतया भिषज्यति चिकित्सतीति
भिषक् वैद्य इति—
(भिषक्).
निरूचे ह्ययं शब्दः ? ततोणवर्जम्.
(१) "चोः कुः" इति, कुत्वं, गः. ८।२।३०॥कौ०पृ०६८ २०
तस्य पाक्षिकमवसानचर्त्वम्. कः, इति चात्र विशेषः. ❀
कथं चिकित्सति तत्रोच्यते. संन्यासेन समीचीनेन सात्त्विकेन
भवचिकित्सारूपेण भर्तरि भरन्यासेन रजस्तमसी कृन्ततीति—
(संन्यासकृत्).

निरु०—५८६ भवरोगनिदानज्ञो योऽसौ (भिषग्) दीरितः॥४४९॥२५
५८७ त्यागेन सात्त्विकेनाशु रजसस्तमसः पदम् ।
यः कृन्तति स (संन्यासकृन्) नवार्णो मनुरस्मृतः ॥ ४५० ॥

(५८८) शमः,

ॐ शमाय नमः ।

भा०— भर्तरि भरन्यासः. संन्यासः. स हि भवचिकित्सा.
५ (१) " वेदान्तविज्ञानसुनिश्चितार्थाः " तै०उं० ११–२२।
इत्यादिश्रुतेः. ❀
तदर्थम्
(१) " भोक्तारं यज्ञतपसाम् " इत्यादिना, गी०५–३७।
इच्छाभयक्रोधशान्त्युपायमाचष्ट इति—
१० (शमः).
(१) " तदाचष्ट " इति णिच्. चुरादिगणसूत्रम् कौ०पृ०४९०
पचाद्यचि कृते-रूपम्. ❀

निर्व०— (२) " कृती, छेदने " क्विप्. अगुणः. धा० तुदा०
कौ०पृ०४७०
१५ (३) " असु, क्षेपणे " धा० दिवा० कौ०पृ०४५९
निपूर्वः, भावे घञ्. वृद्धिः. नेरिकारस्य यण् यकारः.
ततस्संपूर्वः कर्मधारयः. अनुस्वारपाक्षिकपरसवर्णौ.
जश्त्वचर्त्वे. ❀
तदर्थं शमं तदुपादेयतद्व्यपदेशादिच्छाभयक्रोधशान्त्युपाय-
२० माचष्टे इति—
(शमः).
(१) " शमु, उपशमे " भावे घञ्. धा०दिवा०कौ०पृ०४५९
(२) " नोदात्त०" ७।३।३४॥कौ०पृ०५४२
इत्यादिना न वृद्धिः. ततश्शमशब्दात्,
२५ (३) " तत्करोति तदाचष्टे " चुरादिगणसूत्रम्, कौ०पृ०४९०
इति, णिच्.

निरु०— ५८८ अनुष्टुनः (शमः) प्रोक्तः—

(५८९) शान्तः,

ॐ शान्ताय नमः।

भा०— स्वयं च—
(शान्तः). ५
सत्यपि समुद्रेकहेतौ महिमसमुद्रे निस्तरङ्गसमुद्रवदनुद्रिक्तः. तद्दर्शिनां हि प्रभावः. यं जगौ पतञ्जलिः,
(१) "तत्सन्निधौ वैरत्यागः" इति, पात० सू० ४—३५।
अर्वाचीनश्च.
(२) "परितः पटुबिभ्रदेनसां दहनं धाम विलोकनक्षमम्। १०
मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः" ❋ किरा० २—५५।
ततः ❋ व्युत्थितचित्तैः शुभाश्रयभूतैरस्मिन्निष्ठीयत इति—
❋ पा० सू० ४—२९।

निर्व०— (४) "-णाविष्ठवत्" ६।४।१५५॥कौ०पृ०३१० १५
, इति, टिलोपः. ततः पचाद्यच्. णिलोपः. ❋
स्वयं च सत्यपि समुद्रेकहेतौ महिमसमुद्रे निस्तरङ्ग-
समुद्रवदनुद्रिक्ततया शाम्यतीति—
(शान्तः).
पूर्ववद्धातुः. कर्तरि क्तः. उदित्त्वेन क्त्वायां वेट्कत्वादिह नेट्. २०
(१)" अनुनासिकस्य क्विझलोः क्ङिति "६।४।१५॥कौ०पृ०५१५
इति, किति दीर्घः. अनुस्वारादि. ❋
अतो व्युत्थितचित्तैः निष्ठीयते शुभाश्रयभूतेऽस्मिन् इति—

निरु— ५८९ (शान्तो )ऽविकृतमानसः।

(५९०) निष्ठा, (५९१) शान्तिः,

ॐ निष्ठायै नमः। ॐ शान्तये नमः।

५ भा०— (निष्ठा).
(१) "आतश्चोपसर्गे" इत्यङ्. ❀ ३।२।३॥कौ०पृ०५७०
तत्र ❀ परमसमाधौ विस्मृतसर्वाधिकाराः शाम्यन्तीति—
(शान्तिः). ❀ पा० सू० ३—५५।

निर्व०— (निष्ठा).
१० (१) "ष्ठा, गतिनिवृत्तौ" धा० भ्वादिः कौ०पृ०४२४
निपूर्वः षस्सः. टोस्तुः.
(२)"अकर्तरि च कारके०" इत्यनुवृत्तौ,३।३।१९॥कौ०पृ०६४७
(३) "आतश्चोपसर्गे" ३।३।१०६॥ कौ०पृ०६६०
इत्यधिकरणे अङ्. आल्लोपः.
१५ (४) "उपसर्गात्सुनोति०" ८।३।६५॥ कौ० पृ० ३८४
इत्यादिना षत्वम्. ष्टुत्वम् स्त्रियामतष्टाबादि
आविष्टलिङ्गोयमित्यादि. ❀
तत्र परमसमाधौ विस्मृतसर्वाधिकाराः शाम्यन्ति अस्मिन्निति—
(शान्तिः). धातुः प्राग्वत्.
२० (१) "अकर्तरि च कारके०" ३।३।१९॥ कौ०पृ०६४७
इत्यनुवृत्तौ, अधिकरणे स्त्रियां क्तिन्.
(२) "तितुत्र०" इति नेट्. ७।२।९॥ कौ० पृ० ६०८
(३) "अनुनासिकस्य०" ६।४।१५॥ कौ०पृ० ५१५
इति, दीर्घः. अनुस्वारपरसवर्णौ लिङ्गं प्राग्वत्. ❀

२५ निरु०—५९० निष्ठीयते ह्यर्थिनां यो हृदि (निष्ठा) स कथ्यते ॥४५१॥
५९१ सर्वाधिकाराः शाम्यन्ति समाधौ परमे यतः।
अतः (शान्ति) रिति प्रोक्त स्तवर्णो भक्तिनो मनुः॥ ४५२॥

## (५९२) परायणम्, ॥

ॐ परायणाय नमः ।

भा०— समाहितानां परमयनम् अव्यवहितप्रापिका परमा भक्तिरस्मात् इति— ५
(परायणम्). यथा,
(१) " निर्ममः शान्तः " इत्युपक्रम्य, गी० १८—५३।
(२) " मद्भक्तिं लभते पराम् " इत्यन्तम्. गी० १८—५४।
(३) "भक्त्या त्वनन्यया शक्यः" इति च. ❀ गी० ११—५४।
एवं स्वभक्तिभावनाशुभानि १०
❀ यमसमाध्यवधीनि अष्टाङ्गानि. पा०सू० ३—२९।
तस्मात् इति—

निर्व०— तत्र समाधिमतां परम् अतिशयितम् अयनम् अव्यवहित-प्रापिका परमा भक्तिरस्मादिति—
(परायणः). (परायणं) वा. १५
(१) " इण्, गतौ " धा० अदा० कौ०पृ०४४१
(२) " अय, गतौ " धा धा०भ्वादिः कौ०पृ०४०२
करणे ल्युट् योरनः. एतेर्गुणायादेशौ च. पृणातेः
पचाद्यच्. गुणो रपरः. सांहितिको दीर्घः—
(३) " पूर्वपदात्० " इति, णत्वम्. क्लीबपाठे ८।४।३॥ कौ० २०
पृ० १६७
(४) " लिङ्गमशिष्यम् " इत्यादि. यद्वा, ॥ महाभाष्ये ॥
तेषां परमुत्कृष्टम् अयन तादृशपरमभक्त्युत्पादकं
स्थानमिति तत्पुरुषः. आविष्टलिङ्गोयम्. ❀

निरु०— ५९२ यस्मात्तु परमा भक्तिः चरमप्रापिका मता । २५
तस्मात् (परायण) मिति स्मृतो ह्यष्टार्ण उत्तमः ॥ ४५३ ॥

## श्लो० ॥ ६३ ॥ {५९३ / ७८८} शुभाङ्गः, ( ५९४ ) शान्तिदः,

ॐ शुभाङ्गाय नमः । ॐ शान्तिदाय नमः ।

५ भा०— ( शुभाङ्गः ).
स हि स्वयोगयोगक्षेमवहः. ❋
एवं निष्पन्नभक्तिभ्यः अप्रतिप्रसवनिर्मूलितभवोपप्लवां स्वसायुज्य-
रूपां शान्तिं ददाति इति—
( शान्तिदः ). यथा,
१० ( १ ) " विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति "
इति, श्वे०उ०२—७।

निर्व०— एवं तस्य स्वयोगक्षेमवहतया शुभानि स्वभक्तिभावना-
शोभनानि अङ्गानि यमादिसमाध्यवधीनि अष्टाङ्गान्यस्मादिति—
( शुभाङ्गः ).
१५ अङ्गिर्गतिकर्मा. इदित्वान्नुमि"त्यां"दि. पचाद्यच्.
( १ ) " शुभ शुम्भ, शोभार्थे " धा० तुदादिः कौ०पृ०४६६
इगुपधलक्षणः कः अगुणः. दीर्घः. ❋
एवं निष्पन्नभक्तिभ्यः अप्रतिप्रसवोऽन्मूलितभवोपप्लवां स्वसायुज्यरूपां
शान्तिं ददातीति—
२० ( शान्तिदः ).

निरु०— ५९३ स्वशक्त्युद्भवकल्याणयमाद्यष्टाङ्गसंभवः ।
यस्मात् ( शुभाङ्गः ) समोक्तः समार्णां ध्यानदायकः ॥ ४५४ ॥
५९४ एवं निष्पन्नभक्तिभ्यः शान्तिं सायुज्यसंज्ञिकाम् ।
महानन्दां ददातीति ( शान्तिदः ) परिकीर्तितः ॥ ४५५ ॥

{५९५ / ९९०} स्रष्टा,

ॐ स्रष्ट्रे नमः ।

भा०—( २ ) " मत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् " गी० १८—५९। ५
( ३ ) "तमीशानं वरदं देवमीड्यं निचाय्यात्मानं शान्तिमत्यन्तमेति " इत्यादि. ❀ श्वे० उ० ३—११।
एवं मुमुक्षून् मुञ्चन् सिसृक्षूंश्च प्रचितचिरन्तनकर्मवैचित्र्योचितपरिकरैर्योजयन् सृजतीति—
( स्रष्टा ). १०
( १ ) " सृजिदृशोर्झल्यमकिति " इत्यम्. ❀ ६।१।५८॥ कौ० पृ० ४३०

निर्व०—( १ )"डुदाञ्, दाने " धा० जुहो० कौ० पृ० ४५१
( २ ) " आतोनुपसर्गे० " ३।२।३॥ कौ० पृ० ५७०
इति, कः. आल्लोपः. शमेर्भावे क्तिन्. अन्यदनुपदमेवावादि. ❀ १५
इत्थं मुमुक्षून् मुञ्चन् संसिसृक्षूंश्च प्रचितचिरन्तनकर्मवैचित्र्योचितपरिकरैर्योजयन् सृजतीति—
( स्रष्टा ).
( १ ) " सृज, विसर्गे " धा० तुदा० कौ० पृ० ४६९
तृच्. अनिट्. २०
( २ ) " सृजिदृशोर्झल्यमकिति " ६।१।५८॥ कौ० पृ० ४३०
इति, झलादावकिति. अम्. मित्त्वादन्त्यादचः परः. ऋतो यण् रेफः.
( ३ ) " व्रश्चभ्रस्जसृज० " ८।२।३६॥ कौ० पृ० ५१
इत्यादिना षत्वम्. ष्टुत्वम्. अनङित्यादि. ❀ २५

निरु०—५९५ कर्मवैचित्र्यतस्सृष्टीन् ( स्रष्टा ) स्यात्सृजतीति यः ।

{५९६ / ८१३} कुमुदः,

ॐ कुमुदाय नमः ।

भा०— एवं सृष्टस्य आब्रह्मस्तम्बस्य उच्चावचशब्दस्पर्शादिभोगवती
५ भूमिः कुः, प्राकृतमण्डलं तत्र भोक्तॄन् भोजयन् मोदत इति–
(कुमुदः).
मूलविभुजादित्वात् कः.
(१) " अनीशश्चात्मा बध्यते भोक्तृभावात् " श्वे०३०१–८।
(२) " ज्ञाज्ञौ द्वावजावीशनीशौ " इति. ❋ श्वे०३०१–९।
१० तत्र को कुत्सितं वा वलन्ते आससारं भ्राम्यन्ति इति कुवलाः जीवाः,
ते स्वदेहेन्द्रियादौ आपेक्षिकाभिमानिका ईशाश्चेति कुवलेशाः तांस्तथा
नियच्छन्यातीति–

निर्व०— एवं कौ आब्रह्मस्तम्बं सृष्टस्य उच्चावचशब्दादिभोगवत्यां
भूमौ तदुपलक्ष्ये प्राकृतमण्डले तदधिकरणभूतान् भोक्तॄन् भोजयन्
१५ मोदते इति–
(कुमुदः).
(१) " मुद. हर्षे " धा०भ्वादिः कौ०पृ०३८२
(२)" मूलविभुजादिभ्य उपसंख्यानम्" इति ३।२।५॥कौ०पृ०५७१
तस्याकृतिगणत्वात् कः. इगुपधलक्षणो वा गुणः.
२० (३) " कै, शब्दे " आत्वम्. धा० भ्वादिः कौ०पृ०४२४
(४) " कुर्भश्च " इति चकारात् उणा०पा०१कौ०पृ०६१०
बाहुलकाद्वान्यतोपि कुः. आक्षेपः. ❋

निरु०— ५९६ कौ प्राकृते मण्डले यत्स्वभोक्तॄनपि भोजयन्॥४५६॥
मोदते यस्सदा काले (कुमुदः) स तु गीयते ।

(५९७) कुवलेशयः, ।

ॐ कुवलेशयाय नमः ।

भा०— ( कुवलेशयः ).
( १ ) " आतोनुपसर्गे कः " ※ ३ । २। ३।। कौ० पृ० ५७० ५

निर्व०—तत्र कौ भूमौ कुत्सितं वा वलन्ते आसंसारं भ्राम्यन्ति इति कुवलाः जीवाः, ते च ते ईशाः, देहेन्द्रियादावाभिमानिकाः स्वामिनश्चेति कुवलेशाः तांस्तथा नियच्छन् पातीति वा.
उक्तव्युत्पत्त्या कुवलो जीवः, जातावेकवचनम्, तत्र तन्नियच्छन् शेते इति वा— १०
( कुवलेशयः ).
पूर्वत्र,
( १ ) " या, प्रापणे " धा० अदा० कौ० पृ० ४४३
(२) " आतोनुपसर्गे० " इति कः आल्लोपः. ३।२।३।। कौ० पृ० ५७०
(३) " ईश, ऐश्वर्ये " इगुपधलक्षणः कः. धा० अदा० कौ० पृ० ४३८ १५
(४) " वल वल्ल, संवरणे संचरणे च " धा० भ्वादिः कौ० पृ० ४०३
पचाद्यच्. एकत्र कुशब्दो निरुक्तः. अन्यत्राप्ययम्-सांहितो गुणः. अपरत्र,
( ५ ) " शीङ्, स्वप्ने " धा० अदा० कौ० पृ० ४३८
( ६ ) " अधिकरणे शेतेः " इत्यच्. ३।२।१५।। कौ० पृ० ५७३ २०
गुणायादेशौ, व्युत्पादितात् कुवलशब्दात् ङिः सप्तमी तस्याश्चालुक्प्रकरणे,
( ७ ) " शयवासवासिष्वकालात् " ६।३।१८।। कौ० पृ० १८८
इति अलुक् पाक्षिकः. ※

निरु०—५९७कुत्सितं वलमेषां ते कुवला जीवसंज्ञिताः।। ४५७।। २५
देहेन्द्रियादेरीशास्ते कुवलेशा इति स्मृताः ।
यस्तान्नियच्छन्यातीति ( कुवलेशय ) उच्यते ।। ४५८ ।।

## (५९८) गोहितो, {५९९ / ४९७} गोपतिः,

### ॐ गोहिताय नमः । ॐ गोपतये नमः ।

५ भा०— गोः, प्रकृतेः संसारबीजावापे क्षेत्रीभूतायाः
हितः- व्यवस्थापकः— ( गोहितः ).
( १ ) " यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सञ्च विचैति
सर्वम् । तमीशानम् " श्वे० उ० ४—११ ।
(२)"गौरनाद्यन्तवती सा जनित्री भूतभाविनी"मन्त्रोप०।३०—१८।
१० (३)"सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्"मन्त्रोप० ३०—१७।
इति. ❀
भोगभूमेः स्वर्गस्यापि पतिः— ( गोपतिः ).

निर्व०— तथा, गोः संसारबीजावापक्षेत्रभूतायाः प्रकृतेः हितः.
तदधिष्ठानेन तस्याः कार्यकरतया व्यवस्थापकः इति—
१५ ( गोहितः ).
(१)"हि, गतौ " क्तः. अगुणः. अनिट्. धा०स्वादिःकौ०पृ०४६२
( २ ) " गम्लृ, गतौ " धा० भ्वादिः कौ०पृ०४३०
( ३ ) " गमेर्डोः " उणा० पा०२ कौ०पृ०६२२
इति, डोः. टिलोपः.
२० तथा, गोः भोगभूमेः स्वर्गस्यापि पतिः स्वामीति—
( गोपतिः ).
( १ ) " पातेर्डतिः " उणा० पा०५ कौ० पृ०६४२
व्युत्पादितश्चाय. तथा गोशब्दश्च. ❀

निरु०—५९८संसारबीजक्षेत्रस्य प्रकृतेः स्थापक[१]श्च यः । स (गोहितः)
२५ ५९९ स्वर्गभूमेः पतित्वाद् ( गोपतिः ) स्मृतः ॥ ४५९ ॥

१ क्रमे ।

{६०० / ४९८} गोप्ता.

ॐ गोप्त्रे नमः।

भा०— अस्य कर्मफलचक्ररक्षिता— ५
(गोप्ता). ❀

इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः-
श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे
भगवद्गुणदर्पणे १०
षष्ठं शतकं समाप्तम्।

निर्व०—अस्य कर्मफलचक्रस्य रक्षितृतया तद्गोपायति रक्षतीति—
(गोप्ता).
(१) "गुपू, रक्षणे" तुच्. धा० भ्वा० कौ० पृ० ३९७
(२) "आयादयः०" ३। १। ३१॥ कौ० पृ० ३९७ १५
इत्यस्य वैभाषिकतया वाऽऽयप्रत्ययः. ऊदित्त्वादिट्.
कोयमित्यत्रप्रधाम. अनङित्यादि. ❀

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते
श्रीपराशरभट्टार्यभाषित- २०
श्रीमद्विष्णुसहस्रनामभाष्यानुगे भवन्नामसहस्रनिर्वचने
षष्ठं शतकं संपूर्णम्।

निरु०— ६०० यः कर्मफलचक्रस्य (गोप्ता) हि परिपालनात्।

# अथ सप्तमशतकप्रारम्भः ।

## ( ६०१ ) वृषभाक्षो, ( ६०२ ) वृषप्रियः, ॥

५ ॐ वृषभाक्षाय नमः । ॐ वृषप्रियाय नमः ।

भा०— तच्च धर्मद्वारेणेति—
( वृषभाक्षः ).
फलवर्षी वृषभो धर्मः, सोक्षः संसारचक्राधारो यस्मात्. ❋
एवं प्रवर्तकधर्मौ प्रियावस्येति—
१० ( वृषप्रियः ).

निर्व०— तच्च धर्मद्वारेणेति वृषभः, फलवर्षी धर्मः— अक्षः अस्य रथावयववाचिनः आधारोपलक्षणतया संसारचक्राधारोऽस्मादिति—
( वृषभाक्षः ).
( १ ) " अक्षू, व्याप्तौ " पचाद्यच्. धा०भ्वादिः कौ०पृ०४०८
१५ ( २ ) " वृष, सेचने " धा०भ्वादिः कौ०पृ०४१०
( ३ ) " कृशृशलिकलिगर्दिभ्योऽभच् " उणा०पा०३ कौ०पृ०६३०
इति वर्तमाने,
( ४ ) " ऋषिवृषिभ्यां कित् " उणा०पा०३ कौ०पृ०६३०
इति अभच्, कित्. अगुणः. दीर्घः. ❋
२० एवं वृषौ प्रवर्तकनिवर्तकौ धर्मौ प्रियाविष्टावस्येति—
( वृषप्रियः ).

निरु०— ६०१ यस्याक्षो वृषभो धर्मो (वृषभाक्ष)स्स उच्यते॥४६०॥
६०२ धर्मौ प्रियौ तावस्येति प्रवर्तकनिवर्तकौ ।
( वृषप्रिय ) स्स विज्ञेयो ह्यष्टार्णः फलदो मनुः ॥ ४६१ ॥

श्लो० ॥ ६४ ॥ ( ६०३ ) अनिवर्ती,

ॐ अनिवर्तिने नमः ।

भा०— तत्प्रियत्वेन हि द्वैधानां कर्मणां धर्मत्वम्.
तत्प्रियत्वख्यापनमेव च विध्यर्थः. इदञ्च ५
(१)"फलमत उपपत्तेः" इत्यत्र न्यरूपि. ब्र०सू०३—२—३७ ।
तथा च द्रमिडाचार्याः,
( २ ) " फलसंविभत्सया हि कर्मभिरात्मानं पिप्रीषन्ति. स प्रीतो-
लं फलाय इति हि शास्त्रे मर्यादा " इति. ॥ द्रमिडाचार्याः ॥
अतः कर्मतत्संस्कारशक्त्यपूर्वभावनाविधि- १०
पक्षा उपेक्ष्याः. ❀
तत्र प्रवृत्तिकर्मरतानां धूमादिपितृयाणपुनरावृत्त्या
संसारान्न निवर्तयतीति—
( अनिवर्ती ).

निर्व०—(१)"प्रीञ्, तर्पणे कान्तौ च"धा०क्र्यादिःकौ०पृ०४७४ १५
( २ ) " इगुपधज्ञाप्रीकिरः कः"३।१।१३५ ॥कौ०पृ०५६७
इति कः. अगुणः.
( ३ )"अचिश्नुधातु०"इति एः इयङ्. ६।४।७७॥कौ०पृ०४५
( ४ ) " ङिच्च " इत्यन्तादेशः. १ । १ । ५३ ॥ कौ०पृ०७
(५) " वृष, सेचने " तेनैव कः. तुदादिलक्षणो वा. अगुणः. ❀ २०
भा०भ्वादिः कौ०पृ०४१०
द्वैधानामपि कर्मणां तत्प्रियत्वेन हि धर्मत्वम्. तत्र
प्रवृत्तिरतान् धूमादिना पितृयाणेन पथा पुनरावर्तयन्
संसारान्निवर्तयतीति—
( अनिवर्ती ). २५

निरु०— ६०३ पितृयाणप्रवृत्तानां संसारान्न निवर्तनात् ।
( अनिवर्ती ) समाख्यातो ह्यधर्णोऽभयदो मनुः ॥ ४६२ ॥

( ६०४ ) निवृत्तात्मा,

ॐ निवृत्तात्मने नमः ।

भा०— ग्रहादित्वाण्णिनिः. एवं कामीत्यादयः. अतो हि संसारा-
५ नुच्छेदः. यथा,
( १ ) " धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायनम् । तत्र चा-
न्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते " गी०८—५ ।
( २ ) " कृतात्ययेनुशयवान् " ब्र० सू० ३—१—८ ।
इत्यादौ चैतद्व्याचारि. ❀
१० ततो निवृत्तानिवृत्तधर्माणोप्यात्मानोस्येति—
( निवृत्तात्मा ). ❀

निर्व० ( १ ) " वृतु, वर्तने " निपूर्वः. धा० भ्वादिः कौ०पृ०४१२
णिच्. गुणः. रपरः. ततः,
( २ ) " नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः " ३।१।१३४॥कौ०
१५ पृ० ५६७
इति ग्रहादित्वाण्णिनिः. णिलोपः. नञो नलोपः.
इन्नन्तदीर्घः. "इत्यादि. ❀
ततो निवृत्ताः निवृत्तिधर्माणोऽप्यात्मानोऽस्येति—
( निवृत्तात्मा ).
२० आत्मा व्युदपादि.
( १ ) " वृतु, वर्तने " धा०भ्वादिः कौ०पृ०४१२
निपूर्वः. कर्तरि क्तः. अगुणः. उदित्त्वान्निष्ठायां नेट्.
दीर्घस्सांहितः, ततो नान्तदीर्घ इत्यादि. ❀

निरु०— ६०४ निवृत्तिधर्माणा यस्य ह्यात्मानस्सन्ति स स्मृतः ।
२५ ( निवृत्तात्मे ) त्यष्टवर्णो दुष्कर्मफलमोचकः ॥ ४६३ ॥

( ६०५ ) संक्षेप्ता,

ॐ संक्षेप्त्रे नमः ।

भा०— तत्र प्रवृत्तान् संकुचितस्वाभाविकज्ञानप्रभावान् कर्तुं शीलमस्येति— ५
( संक्षेप्ता ). यथा,
( १ ) " यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा " ॥ वि० पु० ६–७६–२ ।
इत्यादौ. ❀
निवृत्तानां तत्संकोचनविमोचनं क्षेमं करोतीति— १०

निर्व०— तत्र प्रवृत्तिरतान् तच्छीलः संक्षिपति स्वाभाविकज्ञान-प्रभावाभ्यां संकोचयतीति—
( संक्षेप्ता ).
( १ ) " क्षिप, प्रेरणे " धा० तुदा० कौ० पृ० ४६४ संपूर्वः. १५
( २ ) " तृन् " ३ । २ । १३५ ॥ कौ० पृ० ६०१
इति ताच्छीलिकस्तृन्. गुणः. अनिट्, अनडादि. समो मः अनुस्वारः.
पाक्षिकः परसवर्णः. ❀
निवृत्तानां तु तत्संकोचनविमोचनलक्षणं क्षेमं कुशलं करोतीति— २०

निरु०— ६०५ स्वाभाविकासंकुचितमेधायाश्च प्रकाशनम् ।
निवृत्तिधर्मणां कर्तुं शीलं यस्यास्ति सर्वदा ॥ ४६४ ॥
स ( संक्षेप्ते ) ति कथितः षडर्णो धीविकासदः ।

( ६०६ ) क्षेमकृत् , ( ६०७ ) शिवः , ।

ॐ क्षेमकृते नमः । ॐ शिवाय नमः ।

५ भा०— ( क्षेमकृत् ). ❋
एवं सर्वबुभुक्षुमुमुक्षुशिवंकरत्वात्
( शिवः ). यथा ,
( १ ) " संसारमोक्षस्थितिबन्धहेतुः "
( २ ) " पितृलोके राज्यमनुशास्ति देवः "
१० ( ३ ) " शिवश्शिवानामशिवोऽशिवानाम् "इति. ❋ भा०उ० ४१–६।
अथ शिवत्वोपपादकानि. ईशितव्याद्विभाजक-
लक्ष्मीवाँल्लभ्यसौभाग्यचिह्नं श्रीवत्सोऽस्य वक्षसीति—

निर्व०— ( क्षेमकृत् ).
करोतेः क्विपि तुक्. अगुणः.
१५ ( १ ) " क्षि , क्षये " इत्यादि. धा० भ्वादिः कौ० पृ० ३९२
( २ ) " अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् "
इति मन्. गुणः. अनिट्. ❋ उणा० पा० १ कौ० पृ० ६१६
एवं सर्वे बुभुक्षवो मुमुक्षवश्च शेरते शिवंकरोस्मिन्निति—
( शिवः ).
२० ( १ ) " शीङ् , स्वप्ने " धा० अदा० कौ० पृ० ४३८
( २ ) " सर्वनिघृष्व० " उणा० पा० १ कौ० पृ० ६१७
इत्यादिना वन्प्रत्ययः. ह्रस्वश्चेत्याद्यवोचाम.
( ३ ) " नेड्वशि० " इति नेट्. ❋ ७ । २।८ ॥ कौ० पृ० ५८१

निरु०— ६०६ असंकोचज्ञानरूपक्षेमस्य करणात्सताम् ॥ ४६५ ॥
२५ ( क्षेमकृच् ) चापि सर्वेषां—
६०७ शिवस्य करणाच् ( शिवः ) ।

(६०८) श्रीवत्सवक्षाः,

ॐ श्रीवत्सवक्षसे नमः।

भा०— (श्रीवत्सवक्षाः).

(१) " श्रीवत्सवक्षाः " इति. ❀ रा०यु०११४—१५। ५

निर्व०— अथ शिवत्वोपपादकानि ईशितव्याद्विभाजकस्य लक्ष्मी-वाँछ्यसौभाग्यस्य चिह्नं श्रीवत्सः महापुरुषलक्षणश्वेतरोमावर्त-विशेषो वक्षसि हृदयेऽस्येति— (श्रीवत्सवक्षाः).

(१) "वच, परिभाषणे" असुन्प्रकरणे, धा०अदा०कौ०पृ०४४३

(२) "पचिवचिभ्यां सुट् च" इति, असुन्. उणा०पा०४कौ० १० पृ०६४१ तस्य सुट् च. टित्वादाद्यवयवः. अनिट्.

(३) "चोः कुः" इति, झलि कुत्वम्. कः. ततः ८।२।३०॥ कौ०पृ०६८

(४) "इण्कोः" इत्यधिकृत्य, ८।३।५७॥कौ०पृ०३४

(५) "आदेशप्रत्यययोः" ८।३।५९॥कौ०पृ०३४ १५ इति, प्रत्ययावयवस्य सस्य षत्वम्.

(६) "वद, व्यक्तायां वाचि" धा०भ्वादिः कौ०पृ०४३४

(७) "वृतॄवदिहनिकमिकषिभ्यस्सः" उणा०पा० ३कौ०पृ०६२७ इति डः.

(८) "तितुत्र०" इति नेट्. चर्त्वम्. ७।२।९॥कौ०पृ०६०८ २०

(९) "श्रिञ्, सेवायाम्" धा०भ्वादिः कौ०पृ०४२२

(१०) "क्विब्वचि०" इत्यादिना क्विप् प्रत्ययो दीर्घश्च. ३।२।१७८॥कौ०पृ०६०७

(११) "सप्तमीविशेषणे बहुव्रीहौ"२।२।३५॥कौ०पृ०१७३।

निरु०— ६०८ लक्ष्मीवाँछ्यसौभाग्यचिह्नं श्रीवत्सनामकम् २५ ॥४६६॥

(श्रीवत्सवक्षा) यस्यास्ति वक्षसीति स तु स्मृतः।

(६०९) श्रीवासः, (६१०) श्रीपतिः,

ॐ श्रीवासाय नमः। ॐ श्रीपतये नमः।

५ भा०—(१) "नित्यश्रीः" इति— रा० यु० ११४-१५।
तेन यत्सूच्यते तदुच्यते— (श्रीवासः).
(२) "श्रियो नित्यस्वैरविहारकल्पद्रुमोद्यानम्"
(३) "तुल्यशीलवयोवृत्ताम्" इतिवत्. ❀ रा०सु०१६-५।
तस्याः समुचितो नित्यस्वयंवरपतिः—
१० (श्रीपतिः). यथा,
(१) "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" पु०सू०।
(२) "अस्येशाना जगतो विष्णुपत्नी" ❀ श्रीसू०।

निर्व०—इति सप्तमीग्रहणात्, अस्ति हि व्यधिकरणानामपि बहुव्रीहिः. अन्यथाऽयुक्तम्. न च पूर्वनिपातः.
१५ (१२) "गड्वादिभ्यः परा सप्तमी" २।२।३५॥कौ०पृ०१७२
इति, निपाता देत्युक्तम्. असन्तलक्षण उपधादीर्घ इत्यादि. ❀
तेन च यत्सूचित तदुच्यते. स्वस्वश्रियो नित्यस्वैरविहार-कल्पद्रुमोद्यानतया श्रीर्वसत्यस्मिन्निति—
(श्रीवासः).
२० (१) "वस, निवासे" धा० भ्वादिः कौ०पृ०४२२
(२) "हलश्च" ३।३।१२१॥ कौ०पृ० ६६३
इत्यधिकरणे- घञ्. वृद्धिः. श्रीशब्दो व्याख्यातः. उत्तरत्रा-प्येवमवसेयम्. ❀
तस्याः श्रियः पतिः नित्यस्वयंवरवल्लभ इति—
२५ (श्रीपतिः). पतिर्व्याख्यातः. ❀

निरु०—६०९ श्रियो विहारस्थानत्वात् (श्रीवास) इति चोच्यते ॥४६७
६१० स्वयं श्रियः पतित्वेन युक्तत्वात् (श्रीपतिः) स्मृतः।

## (६११) श्रीमतांवरः, ॥

ॐ श्रीमतांवराय नमः ।

भा०— तस्याः सादरपूर्णनिर्वर्णननित्यपात्रं भगवान् ; ब्रह्मादय-
स्तु तन्नान्तरीयककटाक्षशीकरक्षणलक्ष्यम्. यथा , ५
(१) " शुक्लमाल्याम्बरधरा स्नाता भूषणभूषिता । पश्यतां
सर्वदेवानां ययौ वक्षस्थलं हरेः ॥ तयावलोकिता देवा
हरिवक्षस्थलस्थया । लक्ष्म्या मैत्रेय सहसा परां निर्वृति-
मागताः " इति , वि० पु० १९– १०६ ।
तस्मात्— १०
( श्रीमतांवरः ). ❋
नित्यनूतननिर्व्याजप्रणयनरसश्रियं तस्यै ददातीति—

निर्व०—भगवतस्तत्सादरपूर्णनिर्वर्णननित्यपात्रतया श्रीमत्त्वम्.
श्रियो नान्तरीयककटाक्षशीकरक्षणलक्षीभावसमासादित-
साम्राज्यलक्ष्मीकाणां ब्रह्मादीनां वरः श्रेष्ठ इति— १५
( श्रीमतांवरः ).
(१) " वृञ् , वरणे " धा० स्वादिः कौ० पृ० ४६२
(२) " ग्रहवृदनिश्चिगमश्च " ३ । ३ । ५८ ॥कौ०पृ०६५३
इत्यप्. गुणो रपरः. श्रीशब्दात्
(३) " तदस्य० " ५ । २ । ९४ ॥ कौ०पृ०३२५ २०
इति , मतुप्. तत आम्. अनुस्वारपाक्षिकपरसवर्णौ. ❋
स्वस्य तज्जीवातुतया तस्यै श्रियं नित्यनूतननिर्व्याज-
प्रणयरससंपदं ददातीति—

निरु०— ६११ देवानां श्रीमतां श्रेष्ठः (श्रीमतांवर)उच्यते ॥४६

श्लो० ॥ ६५ ॥ ( ६१२ ) श्रीदः, ( ६१३ ) श्रीशः,

ॐ श्रीदाय नमः । ॐ श्रीशाय नमः ।

५ भा०— ( श्रीदः ).
तस्या जीवातुरित्यर्थः. तच्छ्रयणेन हि सा श्रीर्निरुच्यते,
( १ ) " न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ " रा०अयो०५३–३१ ।
इति हि तस्याः प्रकृतिः.
१० ( २ ) " विष्णोरेषानपायिनी " वि०पु०१९–१४४ ।
( ३ ) " अनन्या हि मया सीता भास्करेण प्रभा यथा " रा० यु०१२१–१९।
( ४ ) " अनन्या राघवेणाहम् " रा० सु० २१–१५।
इति च. ❀
१५ ( १ ) " श्रियश्श्रीश्च भवेदग्र्या " इति.
तस्या अपि तथा स्वनिदानत्वात् श्रीशः, यद्वा श्रीरेवास्यापि ईशा सर्वावस्थाव्यवस्थापिकेति—
( श्रीशः ).

निर्व०— ( श्रीदः ).
२० ददातेः कः. आल्लोपः. ❀
स्वस्य श्रियोपि श्रीत्वनिदानतया श्रियः ईशः. निर्वाहक इति वा, सा हि
( १ ) " पुप्रधानेश्वरेश्वरी " पा० सनत्कुमार–सं० ११२ ।
ततः श्रीरीशा सर्वावस्थाव्यवस्थापिका अस्येति वा—
( श्रीशः ).

२२ निरु ०—६१२ योसौ श्रियै स्वप्रणयरसदः ( श्रीद ) ईरितः ।
६१३ ( श्रीशः ) स्याच्छ्रिय ईशत्वादीशा श्रीरस्य वा मतः ॥५६१॥

( ६१४ ) श्रीनिवासः, ( ६१५ ) श्रीनिधिः,

ॐ श्रीनिवासाय नमः । ॐ श्रीनिधये नमः ।

भा०— (२) " आदावात्मगुणत्वेन योग्यरूपेण विग्रहे । आधार- ५
कस्वरूपेण दासीभावेन वा सदा "
( ३ ) " पुंप्रधानेश्वरेश्वरी " पा० सनत्कुमार–सं० ११३ ।
इति हि तस्याः नाम. ❀
दिव्यवल्ल्या इव कल्पद्रुमः तस्या नित्योपपन्नः —
( श्रीनिवासः ). ❀ १०
रत्नमञ्जरीव मञ्जूषायां श्रीरस्मिन्निहितेति–
( श्रीनिधिः ). ❀

निर्व०— ईशः. कप्रत्ययान्त उक्तः. अनुकल्पे च स्त्रियामतष्टाप्.
दीर्घश्चेति विशेषः. तथा बहुव्रीहावुपसर्जनह्रस्वश्च दीर्घः. ❀
दिव्यवल्ल्या इव कल्पद्रुमः श्रियो निवासः. तस्या नित्योपपन्न इति– १५
( श्रीनिवासः ).
वसतिर्निपूर्वः. पूर्ववदधिकरणे घञ् वृद्धिः. ❀
रत्नमञ्जरीव मञ्जूषायां श्रीर्निधीयतेस्मिन्निति–
( श्रीनिधिः ).
( १ ) " डुधाञ्, धारणपोषणयोः " धा०जुहो०कौ०पृ०४५१ २०
निपूर्वः.
( २ ) " कर्मण्यधिकरणे च " ३।३।९३ ॥ कौ०पृ० ६५८
इति, घोः किः. आलोपः. ❀

निरु०—६१४ नित्योपपन्ननिवासत्वात् (श्रीनिवासः) श्रियः स्मृतः ।
६१५ श्रीरस्मिन्निहिता नित्यं (श्रीनिधिः) परिकीर्तितः॥४७०॥

## (६१६) श्रीविभावनः, । (६१७) श्रीधरः,

ॐ श्रीविभावनाय नमः । ॐ श्रीधराय नमः ।

१ भा०— सैवास्य विभावनी प्रख्योपख्याहेतुरिति—
(श्रीविभावनः).
(१) " अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा " इतिवत्. ❀
रा०आ० ३७—१८ ।
तां रत्नमिवार्चिषं पुष्पमिव सुरभिम् इन्दुरिव चन्द्रिकाम् अमृतमिव
१० स्वादुताम् औत्पत्तिकेन संबन्धेन धरतीति—
(श्रीधरः).
(१) " न हि हातुमियं शक्या कीर्तिरात्मवतो तथा " इति. ❀
रा० अ० ३० २९ ।

निर्व०— तस्याः तत्प्रख्योपाख्यहेतुतया श्रिया विभाव्यते निरूप्यत इति
१५ (श्रीविभावनः).
(१) " भू, सत्तायाम् " विपूर्वः. धा० भ्वादिः कौ०पृ० ३६८
णिच्. वृद्ध्यावादेशौ. ततः.
(२) " कृत्यल्युटो बहुलम् " ३।३।११३॥ कौ०पृ० ६६२
इति कर्मणि ल्युट्. अनः. णिलोपः. ❀
२० तां च श्रियं रत्नपुष्पेन्द्वमृतानि अर्चिस्सौरभचन्द्रिकास्वादुता इवौत्प-
त्तिकेन संबन्धेन धरतीति—
(श्रीधरः).
धृञोचि धर उक्तः. अन्यच्च वक्तव्यं प्रागेव प्रव्यक्तमभ्यधायि. ❀

निरु०— ६१६ यस्य प्रख्योपाख्यहेतुः श्रीःस्यात्स (श्रीविभावनः)।
५ ६१७ रुच्यर्चिः कौमुदीगन्धान् सुधारत्नेन्दुपुष्पवद् ॥४७१॥
श्रियं धरति नित्यं यः (श्रीधरः) स तु कीर्तितः ।

## (६१८) श्रीकरः, (६१९) श्रेयश्श्रीमान्,

ॐ श्रीकराय नमः। ॐ श्रेयश्श्रीमते नमः।

भा०— तां परत्व इव व्यूहावतारादिष्वपि स्वानुरूपां करोतीति— ५
(श्रीकरः).
(१) "कृञो हेतुताच्छील्यानुलोम्येषु" ३।२।२०॥ कौ० पृ० ५७४
इति आनुलोम्ये टः. एवं तीर्थंकर इत्यादि. यथा,
(२) "देवत्वे देवदेहेयम्" वि० पु० १-९-१४२।
इत्यादि. ※ १०
श्रेयसे सर्वपुरुषार्थाय श्रयणीया श्रीः श्रेयःश्रीः सा अस्य नित्य-
योगिनीति—
(श्रेयःश्रीमान्).
यथा,

निर्व०— तां श्रियं परत्व इव व्यूहादिष्वपि स्वानुरूपां करोतीति— १५
(श्रीकरः). करोतेः,
(१) "कृञो हेतुताच्छील्यानुलोम्येषु" ३।२।२०॥ कौ०
पृ० ५७४ इति आनुलोम्ये टः. गुणः रपरः. ※
तथा श्रेयसे सर्वपुरुषार्थाय तदर्थिभिः श्रीयते आश्रीयत इति श्रेयः-
श्रीः प्रकृता लोकमाता, सा नित्यमस्यास्तीति— २०
(श्रेयश्श्रीमान्).
एक नाम. श्रीशब्दोऽत्र बाहुलकात्;

निरु०—६१८परव्यूहावतारेषु स्वानुरूपां करोति ताम् ॥ ४७२ ॥
श्रियं योऽसौ (श्रीकरः) स्यान् मुन्यर्णः श्रीकरो मनुः।
६१९ श्रेयसे श्रयणीया श्रीः श्रेयश्रीर्नित्ययोगिनी ॥४७३॥ २५
(श्रेयःश्रीमान) सावस्य वस्वर्णः पुरुषार्थदः।

भा०—(१) " प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा। अल-
मेषा परित्रातुं राक्षस्या महतो भयात् " रा०सु०५८—९२।
(२) "शरीरारोग्यमैश्वर्यमरिपक्षक्षयस्सुखम्" वि०पु०१-९-१२४।
५ (३) " विमुक्तिफलदायिनी " वि०पु०१-९-१२०।
(४) " यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् " श्री०।
(५) " श्रियं लोके देवजुष्टामुदाराम् " श्री०सू०।
इति हि श्रियो निर्देशाः. ❋
सह तया जगन्मात्रा पितृवत् सर्वाश्रयः—

---

१० निर्वि०—(१) " ताभ्यामन्यत्र० " ३।४।७५॥ कौ०
पृ० ६४५
इति वा कर्मणि. क्विन्तः. अन्यत्समं-प्रशस्यशब्दो हि निरुक्तः ततो
(२) " द्विवचनविभज्योपपदे तरबीयसुनौ " इति ईयसुन्. तत्र
परतः ५।३।५॥ कौ०पृ०३४१
१५ (३) " प्रशस्यस्य श्रः " ५।३।६०॥ कौ०पृ०३४१
इति, आदेशः.
(४) " प्रकृत्यैकाच् " ६।४।१६३॥ कौ०पृ०३४१
इति, प्रकृतिभावात्.
(५) " टेः " ६।४।१४३॥ कौ०पृ०५६
२० इति, टिलोपः. गुणः. श्चुत्वम्. ततः श्रेयश्श्रीशब्दात्
(६) " तदस्य० " इत्युक्तार्थे मतुप्. ५।२।९४॥ कौ०
पृ० ३२५
अत्यन्तदीर्घः नुमित्यादि. ❋
सह तया जगन्मात्रा पितृवत् सर्वाश्रयतया लोकानां त्रयं लोकत्र-
२५ यम्. उपलक्षणं चेतत्. सर्वस्याप्याश्रय इति—

(६२०) लोकत्रयाश्रयः, ॥

ॐ लोकत्रयाश्रयाय नमः ।

भा०–(लोकत्रयाश्रयः).

यथा, ५

(१) " त्वम्माता सर्वलोकानां देवदेवो हरिः पिता " इति. ❀
वि०पु० १-९-१२५ ।

निर्व०–(लोकत्रयाश्रयः).

(१) " श्रिञ्', सेवायाम् " धा० भ्वादिः कौ०पृ०४२२
आङ्पूर्वः. १०

(२) " अकर्तरि च कारके०" ३।३।१९॥ कौ०पृ०६४७
इत्यनुवृत्तौ,

(३) " एरच् " इति कर्मण्यधिकरणे ३।३।५६॥ कौ०पु०६५६
वा अच्. अधिकरणे,

(४) " पुंसि संज्ञायाम् " ३।३।११८॥ कौ०पु०६६३ १५
इति, घो वा. गुणः अय्. तरतेर्ड्रौ त्रिशब्द उक्तः. ततः

(५) " संख्याया अवयवे तयप् " ५।२।४२॥कौ०पृ०३१९
इति तयप्. तद्धितः. तस्य

(६) " द्वित्रिभ्यां तयस्यायज्वा " ५।२।४३॥कौ०पृ०३१९
इति पाक्षिकोऽयजादेशः. भत्वम्. २०

(७) " यस्य०" इति लोपः. ६।४।१४८॥ कौ०पृ०५६

(८) " लोकृ, दर्शने " धा० भ्वादिः कौ०पृ०३८७

(९) " हलश्च " ३।३।१२१॥ कौ०पृ०६६३
इत्यधिकरणे घञ्. संहिताकार्यम्. ❀

निरु०–६२०श्रिया सहजगन्मात्रा पितृवत् सकलाश्रयः।४७४।२
(लोकत्रयाश्रयः) स स्यात् दशार्णो रक्षकत्वदः ।

श्लो० ॥ ६६ ॥ ( ६२१ ) स्वक्षस्, ( ६२२ ) स्वङ्गश्,

ॐ स्वक्षाय नमः । ॐ स्वङ्गाय नमः ।

५ भा०—तत्सौन्दर्यसुधोदधिपारीणदिव्यकरणः—
( स्वक्षः ).
अस्या अपि स्पृहणीयदिव्यदेहः—( स्वङ्गः ).
परस्परप्रणयप्रवहदपरिमितानन्दः—

निर्व०—तत्सौन्दर्यसुधोदधिपारीणदिव्यकरणतया सुशोभनमक्षि
१० तदुपलक्षितञ्च करणजातमस्येति—
( स्वक्षः ).
अक्षिशब्दो हि'अशेः क्सौ निरूचे. सुपूर्वो बहुव्रीहिः.
( १ ) " बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् " ५।४।११३॥
कौ०पृ० १६६
१५ इति षच्. "ईत्यादि.
( २ ) " यस्य० "६।४।१४८ ॥ कौ०पृ० ५६
इति लोपः, सोरुकारस्य यण् वः. ❀
तस्या अपि स्पृहणीयदिव्यदेहतया सुशोभनमङ्गमस्य इति—
( स्वङ्गः ).
२० अङ्गेरदितो गतिकर्मणः अचि अङ्गशब्द उक्तः. बहुव्रीहिः. सु-
पूर्वः. यण्. ❀
परस्परप्रणयप्रवहदानन्दतया शतम् अस्योपलक्षकत्वात् अपरिमितः
आनन्दोस्येति—.

निरु०—६२१ श्रीसौन्दर्यसुधासिन्धुपारीणकरणो हि यः॥४७५॥
२५ ( स्वक्षः )—
६२२ श्रियः स्पृहणीयदिव्याङ्गः ( स्वङ्ग ) उच्यते

( ६२३ ) शतानन्दः, ( ६२४ ) नन्दिः,

ॐ शतानन्दाय नमः । ॐ नन्दये नमः ।

भा०-(शतानन्दः ). ❋ ५
एवम्, सर्वदा सर्वत्र सर्वथा च अनया समृध्यतीति-
( नन्दिः ). इन्.
( १ ) "सर्वधातुभ्यः०" ❋ उणा०पा०४ कौ०पृ० ६३७
उभयानुकूलोज्ज्वलशेषशेषासनादिनित्यपरिचारकगणपरिचरणीय-
त्वात्- १०

निर्व०-( शतानन्दः ).
( १ ) " टुनदि, समृद्धौ " धा० भ्वादिः कौ०पृ० ३८७
आङ्पूर्वः नुम्. भावे घञ्. अनुस्वारपरसवर्णौ. शतशब्दो व्युत्पादितः. दीर्घः. ❋
एवं सर्वदा सर्वत्र सर्वथा चानया नन्दति समृद्धयतीति- १५
( नन्दिः ).
धातुः प्राग्वत्. नुमादि.
( १ ) " सर्वधातुभ्यः०" इति नुम्. ❋ उणा०पा०४कौ०पृ०६३७
उभयानुकूलोज्ज्वलशेषशेषासनादिनित्यपरिचारकगणपरिचरणीयतया ज्योतिर्गणस्य, ज्योतिश्शब्दो हि श्रौतमरीचिशब्दव्यपदेश्यसदाद्यो- २०
तमानसूरिवचनः, सूरिवृन्दस्य ईश्वरः स्वामीति-

निरु०-६२३ अन्योन्यभणयानन्दसिन्धोरभ्युदितो हि यः ॥४७६॥
(शतानन्दः ) स विज्ञेयो दम्पत्यानन्ददो मनुः ।
६२४( नन्दि ) स्सर्वत्र नित्यं स श्रिया ऋध्यति सर्वदा ॥४७७॥

( ६२५ ) ज्योतिर्गणेश्वरः, । ( ६२६ ) विजितात्मा,

ॐ ज्योतिर्गणेश्वराय नमः । ॐ विजितात्मने नमः ।

५ भा०—( ज्योतिर्गणेश्वरः ).
ज्योतिश्शब्दो हि,
( १ ) " मरीचीनां पदमिच्छन्ति वेधसः" पु०सू० ।
( २ ) " साध्यास्सन्ति देवाः" इति. पु०सू० ।
सदा द्योतमानसूरिपरिकरवाचकः. एवं परत्वं च काष्ठा. ❋
१० अथ सौशील्यपरमावधिः गुह्यतमः लक्ष्मीकमनीयत्वसम्पदुच्छृङ्खलमपि मनोस्य प्रणम्रैः प्रवणीकृतमिति—
( विजितात्मा ). ❋

निर्व०—( ज्योतिर्गणेश्वरः ). ईशेर्वरचि,
( १ ) " नेड्०" इति इडभावे च ईश्वरशब्द उक्तः ७।२।८॥ कौ०
१५ पृ० ५८१
( २ ) " गण, संख्याने" धा० चुरा० कौ०पृ० ४८८
चुरादौ कथादिः. णिच्यतो लोपः. तस्य स्थानिवत्त्वान्नोपधावृद्धिः. ततः
( ३ ) " एरच्" ३।३।५६॥ कौ०पृ० ६५६
इति भावे अच् णिलोपः. ज्योतिश्शब्दो द्युतेरिसिनि आदेश्च जकारे
२० व्युत्पादितः. तत्र सोरुत्वम्. अन्यत्र गुणः.
इत्थं परत्वं च परा काष्ठा. ❋
अथ सौशील्यपरमावधिरपि गुह्यतमः स्वस्य लक्ष्मीकमनीयत्वसम्पदुच्छृङ्खलमनस्त्वेपि विजितः प्रणम्रैः प्रवणीकृतः आत्मा मनोस्येति—
( विजितात्मा ).

२५ निरु०—६२५ नित्यसूरिगणानां य ईशो ( ज्योतिर्गणेश्वरः ) ।
६२६ सौशील्यस्य गुणस्याथ परमावधिवर्णनम् ॥ ४७८ ॥
मानसं प्रणतैर्यस्य ( विजितात्मा ) जितं च सः ।

( ६४७ ) विधेयात्मा,

ॐ विधेयात्मने नमः ।

भा०—तेषां विधेयं हि इहागच्छ इह तिष्ठ इहास्व इदं भुङ्क्ष्व
इति विधातुं च योग्यं स्वरूपमस्येति— ५
( विधेयात्मा ).
ईदृशसौशील्यसत्त्वेनास्य अतिमहती कीर्तिरिति—

निर्व०—निरूचे ह्यात्मा, विपूर्वाज्जयतेः कर्मणि क्तः. अनिट्. दीर्घः
ततो नान्तदीर्घः. "ईत्यादि. ❀
तथा तेषां विधेयः आगच्छ आस्व भुङ्क्ष्व इति विधातुं योग्यः १०
आत्मा स्वरूपमस्येति—
( विधेयात्मा ).
पूर्ववदात्मा.
( १ ) " डुधाञ्, धारणपोषणयोः" धा० जुहो० कौ० पृ० ४५१
विपूर्वः. १५
( २ ) " अचो यत्" इति यत्. कृत्यः. ३।१।९७ ॥ कौ०
पृ० ५५७
( ३ ) " अर्हे कृत्यतृचश्च " ३।३।१६९ ॥ कौ०पृ०५५२
इति अर्हार्थे यत्.
( ४ ) " ईद्यति " ६।४।६५ ॥ कौ०पृ० ५५७ २०
इति ईत्वम्. गुणः. दीर्घः. पुनश्च अन्यो दीर्घ "ईत्यादि. ❀
ईदृशसौशील्ये सत्ये वसति अर्थतोतिमहती कीर्तिरस्येति—

निरु०— ६२७ इहागच्छेह तिष्ठेदं भुङ्क्ष्वेति प्रणतैस्सदा॥४७१॥
योग्यं विधातुं यद्रूपं ( विधेयात्मा ) स कीर्तितः ।

(६२८) सत्कीर्तिश्,

ॐ सत्कीर्तये नमः ।

भा०— ( सत्कीर्तिः ).
५ एतावद्धि सुवचनम्,
( १ ) " यदस्य कीर्त्यते तदस्ति तावदिति । न तु यावदस्ति तावदिति तदधिकं वा " इति.
( २ ) " यथा सर्वेश्वरः कृष्णः प्रोच्यते सर्वपण्डितैः । तथापि स्वल्पमेवोक्तं भूतार्थे कतमा स्तुतिः "
१० ( ३ ) " स्थाने हृषीकेश तव प्रकीर्त्या " गी०११–३६ ।
इत्यादि च. ❀

निर्व०— ( सत्कीर्तिः ).
( १ ) " कॄत, संशब्दने " धा० चुरा०कौ०पृ०४८३
चुरादिः णिच्.
१५ ( २ ) " ऋत इत् " इत्यनुवृत्तौ, ७।१।१००॥ कौ०पृ०४२७
( ३ ) " उपधायाश्च " ७।१।१०१॥ कौ०पृ०४८३
इति इत्वम्. रपरत्वम्.
( ४ ) " उपधायाश्च " ८।२।७९॥ कौ०पृ०३८३
इति दीर्घः. ततः कीर्तयतेः
२० ( ५ )"ऊतियूतिजूतिसातिहेतिकीर्तयश्च"३।३।९७॥कौ०पृ०६५९
इति स्त्रियां ण्यासश्रन्थोयुचि प्राप्ते क्तिन्नन्तो निपातः.
( ६ ) " तितुत्र० " इति नेट्. ७।२।९॥ कौ०पृ०६०८
णेर्लोपः. यद्वा कीर्तयतेः. एवं सिद्धाव् इन्नन्तकरणे,

निरु०— ६२८ ईदृक्सार्थल्यसत्त्वाद्धि ( सत्कीर्ति ) रिति कथ्यते ॥ ४८० ॥

## (६२९) छिन्नसंशयः ॥

ॐ छिन्नसंशयाय नमः।

भा०—एवं सौशील्यप्रथया स्वविपर्यया सुज्ञानदुर्ज्ञानसुसाध-दुस्साधसुलभदुर्लभत्वादिसंशयाश्छिन्नोऽनेनेति— ५
(छिन्नसंशयः).
यथा,
(१) "तं हि देवमात्मबुद्धिप्रसादम्" श्वे०उ०५—१८।
(२) "त्वदन्यस्संशयस्यास्य छेत्ता न ह्युपपद्यते" गी० ६—३६।
इत्यादि. ❀ १०

निर्व०—(७) "हृपिषिरुहिवृतिविधिछिदिकीर्तिभ्यश्च" उणा० पा० ४ कौ० पृ० ६३७
इति इन्. इह.
(८) "अच इः" उणा० पा० ४ कौ०पृ० ६३८
इत्यस्यापवादः. स्वरे विशेषः. णिलोपः. प्राग्वत्. अस्तेश्शतरि १५ व्युत्पादितात् सच्छब्दात्. स्त्रियाम्,
(९) "उगितश्च" ४।१।६॥ कौ०पृ० ८९
इति ङीप्. बहुव्रीहिः. पूर्वस्य पुंवत्. ❀
एवमस्य प्रथितसौशील्यतया छिन्नोपाकृतः संशयः सुज्ञानदुर्ज्ञान-सुसाधदुस्साधसुलभदुर्लभत्वादिसंशयोऽनेनेति— २०
(छिन्नसंशयः).
(१) "शीङ् स्वप्ने" धा० अदा० कौ०पृ० ४३८
संपूर्वः. एरच्. इति भावे अच्. गुणायादेशौ. मो मोऽनुस्वारः.

निरु०—६२९ सौशील्यप्रथया चैवं दुष्करत्वादिसंशयः।
छिन्नो येन विशेषेण स प्रोक्तः (छिन्नसंशयः) ॥ ४८१ ॥ २५

श्लो० ॥ ६७ ॥ ( ६३० ) उदीर्णम् ,

ॐ उदीर्णाय नमः ।

भा०—कथं चर्मचक्षुपामपि प्रत्यक्षयोग्यत्वेन—

५ ( उदीर्णः ).

उल्लसितः. ❀

अतोऽस्मदादिचक्षूंष्यपि तत्साक्षात्कारकर्माणीति—

निर्व०—( २ ) " छिदिर्, द्वैधीकरणे " धा० रुधा० कौ० पृ० ४७१

कर्मणि क्तः अनिट्.

१० ( ३ ) " रदाभ्यां निष्ठातो नः पूर्वस्य च दः " ८।२।४२ ॥ कौ० पृ० ५८६

इति निष्ठातस्य नः, पूर्वस्य च दस्य. ❀

कथमेतत् तत्रोच्यते. यतश्चर्मचक्षुपामपि प्रत्यक्षयोग्यत्वेन उदीर्णः उद्गतः उल्लसितः इति—

१५ ( उदीर्णः ).

( १ ) " ॠ, गतौ " धा० क्र्यादिः कौ० पृ० ४७६

उदिति दान्ताव्ययपूर्वः. गत्यर्थत्वादिना क्तः अगुणः.

( २ ) " श्र्युकः०" ७।२।११ ॥ कौ० पृ० ४२५

इति व्यपदेशिवद्भावेन एकाच उगन्तात् कितो नेट्.

२० ( ३ ) " ॠतः०" ७।१।१००॥ कौ० पृ० ४२७

. इति अङ्गस्य इत्त्वम् रपरत्वम्.

( ४ ) " रदाभ्याम्०" ८।२।४२॥ कौ० पृ० ५८६

इति रेफान्निष्ठातो नः, णत्वम्.

(५) " हलि च" इति दीर्घः. ❀ ८।२।७७॥ कौ० पृ० ६३

२५ निरु०—६३० प्रत्यक्षविपयत्वेन स्फुटत्वश्चर्मचक्षुपाम् ।

( उदीर्णं ) इति न प्रोक्तस्सतार्णा नयनमदः ॥ ४८२ ॥

[ छन्न ]

( ६३१ ) सर्वतश्चक्षुः,

ॐ सर्वतश्चक्षुषे नमः ।

शा०–( सर्वतश्चक्षुः ).
अतश्छिन्नसंशयत्वं सिद्धम्. स हि स्पष्टप्रत्यक्षे संशयः. ❀ ५
तत्परेषु–

निर्व०–अतोस्मदादिचक्षुषामपि तत्साक्षात्कारकर्मतया सर्वतः सर्वेषां सर्वाणि चक्षूंष्यस्मिन्निति–
( सर्वतश्चक्षुः ).
( १ ) " चक्षिङ्, व्यक्तायां वाचि " धा०अदा०कौ०पृ०४३७१०
अयं दर्शनेपि इति इहायं दर्शनकर्मा. इदितोप्यस्य न नुम् अन्ते इदितः इति व्याख्यानात्, उसिप्रकरणे,
( २ ) " चक्षेः शिच " उणा० पा० २ कौ०पृ० ६२४
इत्युसिः. शित्. शित्वात्.
(३) " तिङ् शित्०" इति सार्वधातुकत्वेन ३।४।११३।।कौ० १५ पृ० ३६८
( ४ ) " चक्षिङः ख्याञ् " २।४।५४॥ कौ०पृ० ४३७
इत्यार्धधातुकविषयः ख्याञादेशः न. निरूचे हि सर्वशब्दः. ततस्तसिप्रकरणे,
( ५ ) " आद्यादिभ्य उपसंख्यानम् " ५।४।४४ ॥ कौ० २० पृ० ३५६
इति तस्याकृतिगणत्वात् सार्वविभक्तिकस्तसिः. श्चुत्वम्.
अतश्छिन्नसंशयः. ❀
तथा तत्पराधीनस्नानपरिकर्मगोष्ठ्यादिसर्वावस्थतया तेष्वीशो नेति–

निरु०–६३१ तत्साक्षात्कारकर्माणि सर्वचक्षूंष्यपि स्वतः । २५
अतस्स्यात् ( सर्वतश्चक्षु ) र्नवार्णो नेत्रशक्तिदः ॥ ४८३॥

## (६३२) अनीशः, (६३३) शाश्वतस्थिरः,।

ॐ अनीशाय नमः। ॐ शाश्वतस्थिराय नमः।

५ भा०—(अनीशः).
तदधीनस्नानपरिकर्मगोष्ठ्यादिसर्वावस्थत्वात्. ❀
तथा असकृत् प्रत्यक्षीकृतसदातननानाबिम्बेत्यव्यवहितश्च
तिष्ठति चेति—
(शाश्वतस्थिरः). तथा च श्रीसात्वते,
१० (१) "बिम्बाकृत्यात्मना बिम्बे समागम्यावतिष्ठते" पा०सा०।
इति. ❀

निर्व०—(अनीशः).
ईशेः इगुपधात् कः इत्युक्तम्. नञो नलोपः. नुट्. ❀
तथा शाश्वतः असकृत् प्रत्यक्षीकृतसदातननानाबिम्बाकृतिश्चासौ
१५ स्थिरः व्यवहितेतरस्तिष्ठंश्चेति—
(शाश्वतस्थिरः).
एकनाम. तिष्ठतः,
(१) "अजिरशिशिर०" उणा०पा०१कौ०पृ०६१२
इत्यादिना किरजन्तोयं निपातितः. आद्लोपः. शश्वत् इत्यव्ययात्
२० यथायथमण्. आदिवृद्धिः.
(२) "अव्ययानां भमात्रे०" ६।४।१४४॥कौ०पृ०१३३
इति टिलोपस्य,
(३) "येषां च विरोधः शाश्वतिकः" २।४।९॥कौ०
पृ०१७६
२५ इत्यादिनिर्देशात् अनित्यतया तदभाव इत्यवोचाम. ❀

निरु०—६३२ शक्तो (ह्यनीशो) यश्चासौ तदायत्ताखिलक्रियः।
६३३ बिम्बाकृत्यात्मना बिम्बे स्थितः स्यात्(शाश्वतस्थिरः)४८४

( ६३४ ) भूशयो, ( ६३५ ) भूषणो,

ॐ भूशयाय नमः । ॐ भूषणाय नमः ।

भा०—सन्निधियाच्ञया, तद्दर्शितायतनादिभूमिषु स्वय व्यक्तसि- ५
द्धमानुषादिलक्षणासु तदनुग्रहसुखेन शेत इति—
( भूशयः ). ❀
एवं विश्वजनीनेन शीलेन श्रियः पतिमात्मानं भूषयतीति—
( भूषणः ).
( १ ) " क्रुधमुण्डार्थेभ्यश्च " इति युच्. ❀ ३।२।१५१ ॥ १०
कौ०पृ० ६०३

निर्व०—सन्निधियाच्ञया भूषु स्वयं व्यक्तसिद्धमानुषादिलक्षणासु
तद्दर्शितायतनादिभूमिषु तदनुग्रहसुखेन शेत इति—
( भूशयः ). शीङः,
( १ ) " अधिकरणे शेतेः " ३।२।१५॥ कौ०पृ०५७३ १५
इत्यच्. गुणः. अय्. भवतेः,
( २ ) " भुवस्संज्ञान्तरयोः " ३।२।१७९॥ कौ०पृ०६०७
इति संज्ञायां क्विप्. स्त्रियां. संपदादिलक्षणो वा. ❀
एवं विश्वजनीनेन शीलेन श्रियः पतिमात्मानं भूषयति मण्डयतीति—
( भूषणः ). २०
( १ ) " अव-तंसि, भूष अलंकारे " धा०चुरा०कौ०पृ०४८५
चुरादिः. णिच्. ततो युच्प्रकरणे,
( २ ) " क्रुधमुण्डार्थेभ्यश्च " ३।२।१५१ ॥ कौ०पृ०६०३
इति मुण्डार्थत्वाद्युच्. अनः. णिलोपः. णत्वम्. ❀

निरु०—६३४ स्वय व्यक्तादिरूपेण कौ शेते ( भूशय ) श्च सः । २५
६३५ एव विश्वजनीनेन शीलेन च श्रियः पतिः ॥४८५॥
य आत्मानं भूषयति ( भूषणः ) परिकीर्तितः ।

## ( ६३६ ) भूतिर्, ( ६३७ ) अशोकः,

### ॐ भूतये नमः । ॐ अशोकाय नमः ।

५ भा०—न हि श्रीमतां अनाथगृहातिथित्वतत्संविभज्यभोज्यत्वसमानयोगक्षेमत्वादिदूषणं, किन्तु भूषणमेव.
सर्वबाह्यान्तरोपायरिक्तानां तेषामेव सर्वसमृद्धा विभूतिरिति—
( भूतिः ).
तेषां सुतसुरभिसुहृद इव तद्विभूतिभूत इत्यर्थः. ❀
१० एवं कस्य चिदप्यनाथस्याह्वानात्तद्विषये—
( अशोकः ). ( विशोकः ) वा. ❀

निर्व०—सर्वबाह्याभ्यन्तरोपायरिक्तानां तेषामेष भूतिः सर्वसमृद्धा सुतसुरभिसुहृद इव विभूतिरिति—
( भूतिः ).
१५ भवतेः स्त्रियां क्तिन्.
( १ ) " श्र्युकः० " इति, ७ । २ । ११ ॥ कौ० पृ० ४२५
नेट्, अगुणः. नियतलिङ्गत्वात् यथायथं ब्रह्मात्मादिविशेष्योपादानम्. देवताभिप्रायकं वा स्त्रीत्वम्. ❀
एवं कस्याप्यनाथस्याऽह्वानात् तद्विषये नास्ति, विगतो वा,
२० शोको दुःखमस्येति—
( अशोकः ). ( विशोको ) वा.
( १ ) " शुच, शोके ". धा० भ्वादिः कौ० पृ० ३९०
( २ ) " ईशुचिर्, पूतीभावे " वा. धा० दिवा० कौ० पृ० ४५५
उभयतोपि भावे घञ्. गुणः.

२५ निरु०—६३६ योसौ समृद्धिमैश्वर्यं भक्तानां ( भूति ) रीरितः ४८६
६३७ नाथत्वाचापि सर्वेषा—( मशोक ) स्तेन ईरितः ।

## (६३८) शोकनाशनः, ॥

ॐ शोकनाशनाय नमः ।

भा०—तेषां स्वसंबन्धव्यतिरेकशोकं नाशयतीति—
(शोकनाशनः). यथा ५
(१) " श्रुतं ह्येवमेव भगवद्दृशेभ्यः तरति शोकमात्मवित् इति सोहं भगवश्शोचामि तम्मा भगवान् शोकस्य पारन्तारयतु " इति. छा०उ० ७—१—३ ।
शोचन्ति हि स्वपरबन्धुभूतभगवद्दर्शनक्लेशविदः. ❋
तत्र गूढप्रभावो हि तद्वाह्यान्तरचक्षुरुन्नयनक्षमदिव्यतेजोतिशयः— १०

निर्व०—(३) " चजोः० " ७।३।५२॥ कौ०पृ० ५६०
इति कुत्वं कः. बहुव्रीहिः. एकत्र नञो नलोपः. अन्यत्र विपूर्वः समासः. ❋
परमबन्धुभूतभगवद्दर्शनक्लेशविदां तेषां शोकं स्वसंबन्धव्यतिरेकक्लेशं नाशयतीति— १५
(शोकनाशनः).
(१) " णश, अदर्शने" धा० दिवा० कौ०पृ०४५८
णो नः णिच्. वृद्धिः. ततो ल्युः. ल्युट्वा. इत्यादि. अनः णिलोपः. शोक उक्तः. ❋
तत्र गूढप्रभावो स्वयम् आर्चिः तद्बाह्याभ्यन्तरचक्षुरुन्नयनक्षमदिव्यतेजोस्यास्तीति— २०

निरु०—६३८ भक्तानां स्वेन संबन्धव्यतिरेकस्वरूपकम् ॥४८७॥
यत्तच्छोकं नाशयति (शोकनाशन) ईरितः ।

श्लो०॥ ६८ ॥ ( ६३९ ) अर्चिष्मान्, ( ६४० ) अर्चितः,

ॐ अर्चिष्मते नमः । ॐ अर्चिताय नमः ।

५ भा०—( अर्चिष्मान् ). ❀
सर्वमेतत् संभावयन् उदाहरति—
( अर्चितः ).
अर्चा अर्चावतारः सास्य सञ्जातेति—

निर्व०—( अर्चिष्मान् ).
१० ( १ ) " अर्च, पूजायाम् " धा० भ्वादिः कौ० पृ० ३९०
( २ ) "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः " उणा० पा० २
कौ० पृ० ६२४
इति इसिः. ततो मतुप्.
( ३ ) " तसौ मत्वर्थे " १ । ४ । १९ ॥ कौ० पृ० ३२५
१५ इति भत्वात् पदान्तस्य सोरुत्वन्न.
( ४ ) " आदेशप्रत्यययोः " ८ । ३ । ५९ ॥ कौ० पृ० ३४
इति षत्वम्. अत्वन्तदीर्घः. नुमित्यादिः. ❀
अथ सर्वमेतत् संभाव्यत इत्युदाह्रियते. अर्चा, परत्ववदविभक्तः, सु-
रनराद्यवतारवत् अकाचित्कोऽकादाचित्कश्च, सदा सर्वेषु क्षेत्रायतनेषु
२० गृहेषु च प्रत्यक्षसिद्धोर्चावतारः सा अस्य सञ्जातेति—
( अर्चितः ).
( १ ) " अर्च, पूजायाम् " धा० भ्वादिः कौ० पृ० ३९०
( २ ) " गुरोश्च हलः " ३ । ३ । १०३ ॥ कौ० पृ० ६६०

निरु०—६३९ भक्ताभ्यन्तरबाहीकचक्षुरुन्नयनक्षमम् ॥ ४८८ ॥
२५ दिव्यं तेजः सदा यस्य ( सोर्चिष्मानि ) ति कथ्यते ।
६४० अर्चा ह्यर्चावतारोस्य क्षेत्रायतनसद्मसु ॥४८९॥
सञ्जाते ( त्यर्चितः ) प्रोक्तः सनाणां वाञ्छितप्रदः ।

( ६४१ ) कुम्भो ,

ॐ कुम्भाय नमः ।

भा०— सह्यवतारो न परत्ववद्विप्रकृष्टः ; सुरनराद्यवतारवत् क्वचित् कदाचिद्वा ; सदा सर्वेषु क्षेत्रायतनेषु गृहेषु च प्रत्यक्षत्वात्. अस्य च तत्त्वगुह्यं भगवच्छास्त्रे बोधायन- वैष्णवस्मृतिपुराणादिषु निषेव्यम्. वैष्णवधर्मेषु, ५
( ३ ) " सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः " वि०ध० १०३–१९ ।
( ४ ) " तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् । विशत्यपा- १० स्तदोषस्तु तामेव ब्रह्मरूपिणीम् " इत्यादि. वि०ध०१०३–२८।
तत्र तैः परिचितसजातीयसौन्दर्यादिना काम्यत इति– ( कुम्भः ).

निर्व०— इति स्त्रियामकारप्रत्ययः. अतः टाबादि. ततः.
( ३ ) " तदस्य सञ्जातं तारकादिभ्य इतच् " ५।२।३६ ॥ १५ कौ०पृ० ३१८
इति इतच्. तद्धितः. भत्वम्.
( ४ ) " यस्य० " इत्यालोपः. ❀ ६।४।१४८॥कौ०पृ०५६
तत्र तैः परिचितसजातीयसौन्दर्यादिमत्तया काम्यत इति वा कौ उक्तक्षेत्रायतनादिलक्षणायां भूमौ ध्यानाराधनादि- २० गोचरतया वा ; कौ जन्ममरणादिमात्रेण स्वल्पसवन्धवत्यां सीम्नि तदीययमभटादिभयापहमहाप्रभावत्वेन वा भाति दीव्यत इति वा–
( कुम्भः ). पूर्वत्र ,

निरु०—६४१काम्यते यस्सजातीयैः गुणैः(कुम्भः)प्रकीर्तितः४९०२५
भातीति कुम्भो नित्यं हि पडर्णो भयनाशकः ।

नां०–( १ ) " कमेः कुम् च " उणा० पा० ४ कौ० पृ०
भप्रत्ययः, कुमादेशश्च.
कौ भूमौ, उक्तक्षेत्रायतनादिलक्षणायां ध्यानाराधनादीनां सीम्नि
५ जन्ममरणमात्रेण वा स्वल्पसंबन्धवत्यां यमभटादिभयापहमहाप्रभाव
त्वेन भातीति वा–
( कुम्भः ).
पृषोदरादित्वात् साधुत्वम्. श्रीपोष्करभागे,
( २ ) " आभासयति भूभाग परितस्तद्वदेव हि । स्वक्षेत्रः "
१० इत्यादि. ❀

निर्व०–( १ ) " कमु, कान्तौ " धा० भ्वादिः कौ० पृ० ३९९
भ इत्यनुवृत्तौ,
( २ ) " कमेः कुम् च " उणा० पा० ४ कौ० पृ०
इति भः; धातोः कुमादेशश्च. यद्वा;
१५ ( ३ ) " दृदविभ्यां भः " उणा० पा० ३ कौ० पृ० ६३१
बाहुलकादन्यतोपि भवति पृषोदरादिलक्षणः कमेरत उः.
( ४ ) " नेड्० " इति नेट्. ७ । २ । ८ ॥ कौ० पृ० ५८१
बाहुलकान्न गुणः. अनुस्वारपरसवर्णौ. अपरत्र.
( ५ ) " भा, दीप्तौ " धा० अदा० कौ० पृ० ४४३
२० ( ६ ) " अन्येष्वपि० " इति डः. टिलोपः. ३ । २ । १०१ ॥ कौ० पृ० ५८५
( ७ ) " कै, शब्दे " आत्वम्. बाहुलकात्, धा० भ्वादिः कौ० पृ० ४२४
( ८ ) " कुर्भश्च " उणा० पा० १ कौ० पृ० ६१०
२५ इति चकाराद्वा कुः.
( ९ ) " आतो लोपः " ६ । ४ । ६४ ॥ कौ० पृ० ४२३
इत्युक्तमेव. पृषोदरादित्वाद्वर्णागमन मः इत्यादि. ❀

( ६४२ ) विशुद्धात्मा ;

ॐ विशुद्धात्मने नमः ।

भा०— ( ३ ) " यस्माद्देवालयोद्देशात् सुध्मातजलजस्य च ।
भवेच्छब्दानुवेधश्च तावत्क्षेत्रं तदुच्यते " ५
इत्यादौ सीमावधिविकल्पाश्च दर्शिताः.
( ४ )" ऐहिकामुष्मिकी यत्र सिद्धिर्भवति देहिनाम् । अणिमाद्यष्टकोपेता स्वशक्त्या स्वात्मना तु वै ॥ अध्वावनिषु सर्वासु
नित्यं कुर्वंति सन्निधिम् । मुक्तये सर्वभूतानां विशेषेण तु वै भुवि"
तत्र क्षेत्रेषु १०
( ५ ) " त्राहीत्युक्त्वा जगन्नाथं क्षिप्रं ब्रह्मबालपूर्वकैः । ज्ञात्वा विमुक्तदेहं तु सह पुर्यष्टकेन तु ॥ महता तूर्यघोषेण कृत्वा रथवरे तु वै । जित्वान्तकभटान् रौद्रान् बलात् क्षेत्रेशकिंकराः ॥ आनीय क्षेत्रनाथस्य अग्रतः ख्यापयन्ति च । देव क्षेत्रे त्वदीयेऽस्य विमुक्तं पाञ्चभौतिकम् ॥ १५
शरीरमद्यानाथस्य कुरु शश्वद्यथोचितम् । क्षेत्रनाथस्तु तद्वाक्यं समाकर्ण्य गणेरितम् ॥ करुणानुगतेनैव तन्निरीक्ष्य तु चक्षुषा".
इत्यादिना न्यस्तदेहानां शुद्धितारतम्येन भगवता स्वयम्,
किंकरादिद्वारा वा , शोधितानां सद्यो वा , पुण्यजन्मादिक्रमेण वा , भगवत्प्राप्तिः प्रपञ्चिता. ❀ २०
एवमशेषाश्रितेषु निरवशेषितसर्वस्वत्वात्— ( विशुद्धात्मा ). ❀

निर्व०— एवमशेषाश्रितेषु निरवशेषितसर्वस्वतया विशुद्धश्चासौ आत्मा चेति वा , विशुद्धः आत्मा अस्य इति वा—
( विशुद्धात्मा ).

निरु०— ६४२ सर्वाश्रितेष्वशेषेण सर्वस्वत्यागतस्सदा ॥४११॥ २५
( विशुद्धात्मा )—

(६४३) विशोधनः ।

ॐ विशोधनाय नमः ।

भा०—तत्र क्षेत्रेषु न्यस्तदेहान् स्वप्राप्त्यर्हान् विशोधयतीति—
५ (विशोधनः). ❀
अथ क्षेत्रविशेषेषु पूर्वोक्तव्यूहविभवानां स्थितिविशेषः.
(१) "जनार्दनाख्यया देवस्त्वनिरुद्धो जगत्प्रभुः । भूभागे वासुभा-
ण्डाख्ये नित्यसन्निहितस्थितः" इति.

निर्व०—आत्मा हि अततेर्मनिण्युक्तः.
१० (१) "शुध, शौचे" धा०दिवा०को०पृ०४५७
विपूर्वः क्तः. अगुणः. अनिट्.
(२) "झषः०" ८ । २ । ४० ॥को०पृ०३८५
इति धत्वम्. जश्त्वम्. पूर्वस्य तत्पुरुषः बहुव्रीहिर्वा.
दीर्घः, ततो नान्तदीर्घः. "इत्यादि. ❀
१५ अथ क्षेत्रेषु न्यस्तदेहान् स्वप्राप्त्यर्हान् विशोधयतीति—
(विशोधनः).
(१) शुध, शौचे" धा०दिवा०को०पृ०४५७
विपूर्वः. णिच्. गुणः. ततो ल्युः. ल्युड्वा इत्यादि. अनः णिलोपः. ❀
अथ क्षेत्रविशेषेषु पूर्वोक्तव्यूहविभवानाम् स्थितिविशेषः प्रदर्श्यते.
२० तत्र च आर्षनिर्वचनात् वासुभाण्डाख्ये भूभागे अनिरुद्धो जनार्दना-
ख्यो वसन् नित्यसन्निहिततया निरुद्धः प्रतिरुद्धो नेति—

निरु०—६४३ च पूर्वोक्तविभवः स्यात् (विशोधनः)।

## ( ६४४ ) अनिरुद्धो, ( ६४५ ) ऽप्रतिरथः,

ॐ अनिरुद्धाय नमः । ॐ अप्रतिरथाय नमः ।

भा०–( अनिरुद्धः ). ❀ ५
स एव जनार्दनाख्यत्वादनिष्टजनार्दने अप्रतिपक्षत्वात्–
( अप्रतिरथः ). ❀
आत्मप्रद्योतनात्–

निर्व०–( अनिरुद्धः ).
( १ ) " रुधिरावरणे " धा०रुधा०कौ०पृ०४७० १०
निपूर्वः क्तः. अनिट्. धत्वजश्त्वे. नञो नलोपः. ❀
स एव जनार्दनाख्यतया अनिष्टजनार्दने नास्ति प्रतिरथः
प्रतीपरथः प्रतिपक्षोऽस्येति–
( अप्रतिरथः ).
( १ ) " रमु, क्रीडायाम् " धा०भ्वादिः कौ०पृ०४२० १५
(२) "हनिकुषिनीरमिकाशिभ्यःस्थन्" उणा०पा०२कौ०पृ०४१८
इति स्थन्. अनिट्.
( ३ ) " अनुदात्तोपदेश० " ६ । ४ । ३७ ॥कौ०पृ०४३५
इत्यादिना झलि क्वित्यनुनासिकलोपः. प्रतीत्यव्ययपूर्वो बहुव्रीहिः.
ततो नञ्पूर्वः. पुनरपि बहुव्रीहिः. नलोपः. २०
पुरुषोत्तमः प्रद्युम्नशब्दाभिलप्यः. आर्षनिर्वचनात्. प्रकृष्टं द्युम्नमात्म-
प्रद्योतलक्षणम् ऐश्वर्यमस्य इति–

निरु०–६४४ वासुत्राण्डाख्यभूभागे नित्यसन्निहितस्थितः॥४९२॥
( अनिरुद्ध ) इति ख्यातो वस्वर्णो मनुरुत्तमः ।
६४५ प्रतिपक्षस्य राहित्यात् चह्यानिष्टजनार्दनः ॥ ४९३ ॥ २५
विख्यातो ( ह्यप्रतिरथः ) नवार्णः शत्रुनाशकः ।

## (६४६) प्रद्युम्नो, (६४७) ऽमितविक्रमः, ॥

ॐ प्रद्युम्नाय नमः । ॐ अमितविक्रमाय नमः ।

५ भा०—(प्रद्युम्नः).
(१) "प्रद्योतयिता" इति मौलाः. पाञ्चरात्रे मूल०सं० ।
प्रद्युम्नः—पुरुषोत्तमः,
(२) "अधिष्ठाय स्थितस्साक्षात् भक्तानां सुगतिप्रदः" ❀
त्रैलोक्येप्यपर्यवसितविक्रमत्वात् त्रिविक्रमः—
१० (अमितविक्रमः).

निर्व०—(प्रद्युम्नः).
(१) "म्ना, अभ्यासे" धा०भ्वादिः कौ०पृ०४२५
(२) "घञर्थे कः" ३।३।५८॥ कौ०पृ०६५३
इति कर्मणि कः, आल्लोपः.निरूचे हि दिवेर्डिवौ दिवृशब्दः.
१५ ततस्तसम्यारसामासिके लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात्
(३) "दिव उत्" ६।१।१३१॥ कौ०पृ०६१
इति उत्.
(४) "अलोन्त्यस्य" १।१।५२॥ कौ०पृ० ७
इत्यन्तादेशः. यण् यः. ततः प्रपूर्वो बहुव्रीहिः. ❀
२० यामुनतीर्थमाश्रित्य स्थितः त्रिविक्रमशब्दवाच्यः. अमितः
त्रैलोक्येपि अपर्यवमितविक्रमः पादविक्षेपोस्येति—
(अमितविक्रमः).
विपूर्वात् क्रमेः भावे घञ्.

निरु०—६४६ आत्मप्रद्योतनत्वाच (प्रद्युम्न) इति कथ्यते।४९४।
२५ अधिष्ठाय स्थितस्साक्षात् भक्तानां सुगतिप्रदः ।
६४७ लोकत्रयेप्यपर्यान्तविक्रमो (अमितविक्रमः) ॥ ४९५ ॥

श्लो० ॥ ६९ ॥ (६४८) कालनेमिनिहा ,

ॐ कालनेमिनिघ्ने नमः ।

भा०— (१) " यामुनं जलमाश्रित्य देवदेवस्त्रिविक्रमः । स्थितः कमलसम्भूतनृणां च सुगतिप्रदः " ❀ ५
एतेषु क्षेत्रेषु स्थित्वा कलिकल्मषापहः—
( कालनेमिनिहा ).
( २ ) " अविद्याख्या च या नेमिः कालचक्रस्य दुर्धरा । सा मयीयं समाश्रित्य विग्रहं विधुनोति च॥ ध्यायेत्तत्प्सरघ्नं च देवम्" इति हि कालनेमिघ्नध्यानम्. ❀ १०

निर्व०— (१) " नोदात्तोपदेशस्य० "७।३।३४॥कौ०पृ०५४१ इत्यादिना नोपधावृद्धिरित्युक्तम्. माङः कः. अनिट्.
( २ ) " चलिस्यतिमा० " ७। ४। ४० ॥ कौ० पृ० ५९४ इति इत्वम्. अगुणः. नञो नलोपः. ततो बहुव्रीहिः. ❀
एतेषु क्षेत्रेषु स्थित्वा कालनेमिनामकदैत्यघ्नध्यानविधिना १५
कालस्य कालचक्रस्य नेमिं तत्तुल्यामविद्यां कलिकल्मषं निहन्ति अपहन्तीति—
( कालनेमिनिहा ).
हन्तेर्नपूर्वात् क्विप्. अन्यत् प्रागेवोक्तम्.
छन्दस्त्वानाकलने , २०
( १ ) " णमु, प्रह्वत्वे शब्दे " णो नः. धा०भ्वादिः कौ०पृ०४३०
( २ ) " क्याच्छन्दसि " इत्यनुवृत्तौ, ३।२।१७०॥कौ०पृ०६०६

निरु०—६४८ कालचक्रस्य या नेमिरविद्याख्या च दुर्धरा ।
तां नाशयति यश्चासौ ( कालनेमिनिहा ) स्मृतः ॥ ४९६ ॥
नवाक्षरो मनुरयमविद्यामूलमोचकः । २५

( ६४१ ) शौरिः,

ॐ शौरये नमः।

भा०—( १ ) " उत्पलावर्तके देवो शौरिसञ्ज्ञोऽच्युतः स्थितः" इति-
५ ( शौरिः ).

निर्व०— ( ३ ) " आदृगमहनजनःकिकिनौ लिट् च " ३।२।१७१॥
कौ०पृ० ६०६

इति सूत्रात् किकिनौ लिट् च इति वर्तमाने,

( ४ ) " भाषायां धाञ्कृसृगमिजनिनमिभ्यः " ३।२।१७१॥कौ०
१० पृ०६०६

इति किकिनौ तौ च लिड्वत् स्वरे भेदः.

छन्दसि इति च निवृत्तम्. भाषाग्रहणात्. ततो द्वित्वम्.

अभ्याससंज्ञायाम्,

( ५ ) " हलादिः शेषः " लिण्णिमित्ता—७।४।६०॥कौ०पृ०३६१
१५ देशादित्वाभावात् एत्वाभ्यासलोपौ. अथवा,

( ६ ) " णीञ्, प्रापणे " नः धा० भ्वादिः कौ०पृ०४२२

( ७ ) " नियो मिः " उणा०पा०४ कौ०पृ०६३४

अनिट्. गुणः. उक्तं चैतत् प्रागेव

( ८ ) " रुल, शब्दसंख्यानयोः " धा० भ्वादिः कौ०पृ०४०२
२० ( ९ ) " हलश्च " ३ । ३ । १२१ ॥ कौ०पृ०६६२

इति करणाधिकरणयोः यथायथ घञ् वृद्धिः. हलन्त
दीर्घः. "इत्यादि ❀

उत्पलावर्तकवासी देवः शौरिशब्दाभिधेयः शूरस्य वसु-
देवस्य अपत्यमिति—
२५ ( शौरिः ).

निरु०—६४१. शौरिनाम्ना स्थित (शौरिः) उत्पलावर्तके शुभे॥४१७॥

( ६५० ) शूरः,

ॐ शूराय नमः ।

भा०— शूरस्य वसुदेवस्य अपत्यम् इति. ❋

( १ ) " धराधरे चित्रकूटे रक्षःक्षयकरो महान् । संस्थितश्च ५
परो रामः पद्मपत्रायतेक्षणः " इति— ( शूरः ). रामः

( २ ) " शु , गतौ " धा० सौत्रः कौ०पृ०

( ३ ) " शुसिचिमिनां दीर्घश्च " इति रक्प्रत्ययः. ❋उणा०पा०२
कौ० पृ० ६२०

स एव विशेष्यते— १०

निर्व०—(१) " शूर, वीर , विक्रान्तौ " धा०चुरा०कौ०पृ०४९०
चुरादौ कथादिः. अदन्तः. णिच्. अतो लोपः. ततः पचाद्यच्.
णिलोपः. यद्वा शुरसौत्रो गतिकर्मा. रक्प्रकरणे ,

( २ ) " शुसिचिमिनां दीर्घश्च " इति रक्. धातोः- उणा०पा०२
कौ० पृ० ६२० १५

दीर्घश्च. अनिट्. अगुणः. ततश्शूरशब्दात् अत इञोपवादे

( ३ ) " ऋष्यन्धक० " इत्यणि प्राप्ते, तत्प्रति- ४ । १ । ११४ ॥
कौ० पृ० २१३

प्रसवो बाह्वादेराकृतिगणत्वात् इञ्. वृद्धिः. भत्वम्.

( ४ ) " यस्य० " ६ । ४ । १४८ ॥ कौ० पृ० ५६ २०

इति लोपः. एतच्च प्रागेव प्रापश्चि. ❋

चित्रकूटधराधरस्थो रामः रक्षःक्षयकरशब्दव्यपदेश्यतया
शूरो वीर इति— ( शूरः ).

प्राग्वदेव धातुः. प्रत्ययोन्यच्च. अपत्यप्रत्ययो नेति तु विशेषः. ❋

स एव विशेष्यते शूरजनानां वीरजनानां सुग्रीवमारुति- २५
प्रभृतीनामीश्वरः नियन्ता इति—

निरु०— ६५० सर्वरक्षःक्षयकरः ( शूर ) इत्यभिधीयते ।

( ६५१ ) शूरजनेश्वरः, । ( ६५२ ) त्रिलोकात्मा,

ॐ शूरजनेश्वराय नमः । ॐ त्रिलोकात्मने नमः ।

५ भा०—( शूरजनेश्वरः ).
( १ ) " मगधामण्डले विप्र महाबोधधराश्रितः । संस्थितो लोकनाथात्मा देवदेवो जनार्दनः " इति—
( त्रिलोकात्मा ).
भक्तानुग्रहाय त्रीन् लोकान् सातत्येन गच्छतीति—
१० ( २ ) " अत, सातत्यगमने " धा० भ्वादिः कौ० पृ० ३८३
( ३ ) " सातिभ्याम्मनिन्मनिणौ " उणा० पा० ४ कौ० पृ० ६३१
इति मनिन्प्रत्ययः. ❀

निर्व०—( शूरजनेश्वरः ).
ईशेर्वरचि नेटिति इडभावे च ईश्वरशब्दः. जनेः पचाद्यचि जनशब्दः,
१५ शूरयतेरचि शु इति सौत्राद्वा रकि दीर्घे च शूरशब्दश्च. सम्यग्व्युत्पादित. सांहितो गुणः. ❀
मगधामण्डले महाबोधधराश्रितो देवः आर्षनिर्वचनाद् त्रिलोकनाथात्मपदशक्त्या त्रित्वयुक्तानां त्रयाणां लोकानाम् आत्मा सातत्येन गन्ता इति—
२० ( त्रिलोकात्मा ).
( १ )" अत, सातत्यगमने " धा० भ्वादिः कौ० पृ० ३८३
(२)"सातिभ्यां०' इति मनिन्. वृद्धिः. उणा० पा० ४ कौ० पृ० ६३१
( ३ ) " नेड्० " इति नेट्. इत्युक्तमेव. ७ । २ । ८ ॥ कौ० पृ० ५८१
( ४ ) " लोकृ, दर्शने " धा० भ्वादिः कौ० पृ० ३८७

२५ निरु०—६५१ पराक्रमजने शश्वत् स्मृत ( शूरजनेश्वरः ) ।४९८।
६५२ यस्सातत्येन लोकांस्त्रीन् भक्तानुग्रहकाम्यया ।
गच्छतीति ( त्रिलोकात्मा ) वस्वर्णो भूतिदायकः ॥ ४९९ ॥

( ६५३ ) त्रिलोकेशः,

ॐ त्रिलोकेशाय नमः ।

भा०-(१) "शुभमासाद्य मूभागं प्राग्ज्योतिषपुरे तथा । देव विश्वे-श्वराख्यं तु स्थितमेत्य स्वगोचरात् " इति- ५
( त्रिलोकेशः ).
( १ ) " केशवः क्लेशहा लोके द्वैरूप्येण क्षितौ स्थितः । मथुराख्ये महाक्षेत्रे वाराणस्यामपि द्विज " इति-

निर्वं०-( ५ ) " हलश्च " ३।३।१२१ ॥ कौ०पृ०६६३
इत्यधिकरणे घञ्. तरन्त्यस्मिन्नित्यर्थे त्रिशब्दः. भावप्रधानश्चायं निर्देशः. १०
( ६ ) " द्व्येकयोर्द्विवचनैकवचने " १।४।२२॥कौ०पृ०३०
इत्यत्र द्व्येकयोरिति यथाद्वित्वैकत्वपरः. अन्यथा हि द्व्येकेष्विति स्यात् ततः शाकपार्थिवादीनां सिद्धये
( ७ ) " उत्तरपदस्योपसंख्यानम् " २।३।६९ ॥ कौ०पृ०१२३
इति तस्याकृतिगणत्वात् समासः, अतो नाय द्विगुः. येन १५
( ८ ) " द्विगोः " ४ । १ । २१ ॥ कौ०पृ० ९४
इति ङीप् प्रसज्येत दीर्घः. ततो नान्तर्दीर्घः. इत्यादि. ❀
प्राक्ज्योतिषपुरस्थो देवः आर्षोक्त्या विश्वेश्वरपदा-भिधेयतया त्रिलोकानामीशः इति-
( त्रिलोकेशः ). २०
ईशेः इगुपधात् कः. त्रिलोकशब्दादनुपदमेव हि न्यरूपि-पाताम्. गुणः. ❀

निरु०-६५३ त्रिलोकानामीशतया ( त्रिलोकेशः ) प्रकीर्तितः ।

( ६५४ ) केशवः,

ॐ केशवाय नमः ।

भा०—( केशवः ).

५ ( २ ) " क इति ब्रह्मणो नाम ईशोहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान् " हरि० २७९—४७ ।
इति निरुक्तिः. ❀

निर्व०—मथुरावाराणसीक्षेत्रद्वयनिकायः क्लेशापहो देवः केशवशब्दोदाहृतः आर्षनिर्वचनात्. कः ब्रह्मा च ईशः रुद्रश्च केशौ द्वन्दः ताव-
१० ङ्गभूतावस्य स्त इति वा यतस्तौ अस्मात् संभविष्यतः ततः केशौ वसतोस्मिन्निति वा. वक्ष्यते च निर्वचनान्तरम् तदनुरोधात्. केशिनमवति हिनस्ति इति वा—

( केशवः ).

( १ ) " कै, शब्दे " धा० भ्वादिः कौ०पृ० ४२४
१५ आत्वम्. अनिमित्तम्.

( २ ) " अन्येष्वपि० " ३। २। १०१ ॥ कौ०पृ०५८५
इति डः. टिलोपः. गुणः. ततोस्यापि केशरूपत्वात्

( ३ ) " आश्चर्ये चिकीर्षवे "
इत्यादावतिप्रसङ्गवारणार्थेन,

२० ( ४ ) " इन्मेजन्तः " १।१।३९॥ कौ०पृ० ८७
इत्यौपदेशिकप्रतिपत्त्यर्थेनान्तग्रहणेन

( ५ ) " यावत्पुरानिपातयोर्लट् गुवश्च महाव्याहृतेः " ३।३।४॥ कौ० पृ० ५४६
इत्यत्र निपातमहाव्याहृत्योरन्यतरग्रहणेन वा ज्ञापनात् लक्षणप्रति-
२५ पदोक्तपरिभाषायाः अनित्यतया तदुप—

निरु०—६५४ब्रह्मेशयोः स्वाङ्गजत्वात् (केशवः) परिकीर्तितः।५००।

## (६५५) केशिहा,

ॐ केशिघ्ने नमः ।

भा०—(१) " केशवं केशिहन्तारम्"
इतिवत् स्वयमेव निर्वचनान्तरमाह—( केशिहा ). इति. ❀ ५

निर्व०—जीवनेन तन्त्रावृत्त्या दिवा वा द्वन्द्वैकवद्भावमाश्रित्य,
(६) " केशाद्वोन्यतरस्याम्" ५।२।१०९ ॥ कौ०पृ० ३२८
इति मत्वर्थीयो वः. अपरत्र,
(७) " वस, निवासे" धा० भ्वादिः कौ० पृ० ४३२
(८) " अन्येष्वपि०" ३।२।१०१ ॥ कौ०पृ० ५८५ १०
इत्यपिशब्दात्. सर्वोपाधिव्यभिचारार्थादधिकरणे डः.
टिलोपः. अन्यत्र.
(९) " अव, रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्य-
र्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु"इति पा-
ठादवतिरिह धा०भ्वादिः कौ०पृ० ४०६ १५
हिंसाकर्मा, ततः पचाद्यच्.
(१०) " क्लिशू, विबाधने" धा० क्र्यादिः कौ०पृ ५७८
(११) " क्लिशेरन् ललोपश्च" उणा०पा० ५ कौ०पृ०६४४
इत्यन्. ललोपश्च. गुणः. ततः केशशब्दात् मत्वर्थीयोत
इनिः. भत्वम्. २०
(१२) " यस्य०" इति लोपः. ६।४।१४८॥ कौ०पृ०५६
नलोपः. ततः पृषोदरादिलक्षणः. इतो लोपः. ❀
उक्तं निर्वचनान्तरं वक्ष्यत इति तदुच्यते केशिनं के नरवन्तं तुर-
गदानवं हन्तीति—( केशिहा ).

निरु०—६५५ असुरं केशिनामानं हतवान् ( केशिहा ) स्मृतः । २१

( ६५६ ) हरिः, ॥

ॐ हरये नमः ।

भा०–(१) " गिरौ गोवर्धनाख्ये तु देवः सर्वेश्वरो हरिः । संस्थितः
५ पूजितः स्थाने " इति–
( हरिः ).
( २ ) " इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णश्च मे हरिः श्रेष्ठः
तस्माद्धरिरिति स्मृतः" इति. ❀ भा०शा० ३४३–३९ ।
( १ ) " कामदेवस्तु भगवान् सर्वेषां सर्वकामदः । शंकरालयमा-
१० साद्य संस्थितोप्सरसार्चितः" इति–

निर्व०—हनः क्विप् "३१६"इत्यादि. केशी व्याख्यातः. नलोपः. हृन्नन्तदीर्घः.
"३१८"इत्यादि. उक्तव्याख्याविकल्पत्वात् नाम्नोरपुनरुक्तिः. ❀
गोवर्धनगिरिस्थो देवो हरिशब्दव्यपदेश्यः.आर्षनिर्वचनेन क्रतौ इडोपहूतं
भागं हरतीति वा. वर्णतो हरिः हरितवर्ण इति वा–
१५ ( हरिः ).
( १ ) " हृञ्, हरणे " धा० १वादिः कौ०पृ० ४२२
(२)"सर्वधातुभ्य इन्" इति वर्तमाने, उणा०पा०४कौ०पृ०६३७
( ३ ) " हृपिपिरुहिवृतिविदिछिदिकीर्तिभ्यश्च " उणा० पा० ४
कौ०पृ० ६३७
२० इति इन्. प्रकृते,
( ४ ) " अच इः" उणा० पा० ४ कौ० पृ० ६३८
इत्यस्यापवादः. स्वरे विशेषः. गुणः. रपरः. ❀

निरु०–६५६ भक्तानां दुःखहरणाद्वर्णश्रेष्ठ्या(द्धरिः)स्मृतः॥५०१॥

श्लो० ॥ ७० ॥ ( ६५७ ) कामदेवः, ( ६५८ ) कामपालः,

ॐ कामदेवाय नमः । ॐ कामपालाय नमः ।

भा०–( कामदेवः ).　　५
( २ ) " दीव्यतिर्दानकर्मा " ❀
स एव दत्तानुपालनात्–(कामपालः ). ❀

निर्व०–शंकरालयस्थो देवः आर्षवचनात् सर्वकामप्रदतया काम-
देवशब्दवाच्यः. कामानां काम्यमानानाम् अर्थानाम् ईशः स्वा-
मी, तथाच दातेति वा, आहत्य देवो दातेति वा–( कामदेवः). १०
पूर्वत्र,
( १ ) " दिवु, क्रीडादौ " धा० दिवा० कौ०पृ० ४५२
अन्यत्र दानकर्मा. इहायम्, उभयत्र पचाद्यच् तत्र पठ्यते ह्यय-
म्, इगुपधलक्षणः कप्रत्ययो माभूदिति गुणः.
( २ ) "कमु, कान्तौ" धा० भ्वादिः कौ० पृ० ३९९　　१५
( ३ ) " अकर्तरि च कारके०" ३।३।१९॥ कौ०पृ० ६४७
इति कर्मणि च घञ्. उपधावृद्धिः. नच,
( ४ ) " नोदात्तोपदेशस्य०" इति निषेधः. ७।३।३४ ॥ कौ०
पृ० ५४१
( ५ ) "अनाचमिकमिवमीनामिति वक्तव्यम्" ❀ ७।३।३४॥ २०
कौ०पृ० ५४१
स एव दत्तं कामं पालयति रक्षतीति–( कामपालः ).
( १ ) " पाल, रक्षणे " धा०चुरा०कौ०पृ० ४८३
चुरादिः. णिच्. ततः पचाद्यच्. णिलोपः. कामः कर्मणि यञि
ण्युत्सादितः. ❀　　२५

निरु०–६५७ सर्वेषां कामदत्वाच्च ( कामदेव ) इतीरितः ।
६५८ दत्त्वा तु पालनकरः ( कामपालः ) प्रकीर्तितः ॥ ५०२ ॥

## (६५९) कामी, (६६०) कान्तः,

### ॐ कामिने नमः। ॐ कान्ताय नमः।

९ भा०—प्रदेयातिशयात्—(कामी). ❋
स एव स्वयमेव कमनीयः—
(कान्तः).
अतो ह्यप्सरसार्चितः.
एवमुत्तरत्रापि संज्ञासामर्थ्यादिना तत्तत्क्षेत्रसंबन्ध ऊहनीयः ❋

१० निर्व०—स च कामाः प्रदेयार्थाः अतिशयिताः अस्य सन्तीति—
(कामी).
काम उक्तः. ततोतिशायने मत्वर्थीय इनिः.
(१) "यस्य०" ६।४।१४८ ॥ कौ०पृ० ५६
इति लोपः. इन्नन्तदीर्घ "इत्यादि. ❋
१५ तत एव वचनात् स एव अप्सरोर्चिततया कान्तः कमनीयो भवतीति—
(कान्तः).
(१) "कमु, कान्तौ" धा०स्वा०कौ० पृ० ३९९
कान्तिरिच्छा वर्तमान इत्यनुवृत्तौ,
(२) "मतिबुद्धिपूजार्थेभ्यश्च" ३।२। १८८॥ कौ०पृ० ५९७
२० इति मतेः पृथक् बुद्धिग्रहणात् मतिरिहेच्छा इति तदर्थाद्वर्तमाने क्तः
उदित्वात् निष्ठायां नेट्.
(३) "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५॥कौ०पृ०५१५
इति झलादौ क्ङिति दीर्घः. अनुस्वारपरसवर्णौ.

निरु०—६५९ प्रदेयातिशयात् (कामी)—
२५ ६६० (कान्तः) स्यात् कमनीयकः।

## (६६१) कृतागमः, । (६६२) अनिर्देश्यवपुः,

ॐ कृतागमाय नमः । ॐ अनिर्देश्यवपुषे नमः ।

भा०— अथ शक्तीशावतारः. ५
(१) " नानामन्त्रमयीं दिव्यां व्यञ्जयत्यमलात्मनाम् " इति–
(कृतागमः). ❋
तत्तद्युगगुणानुग्राहकरूपवैचित्र्यात्–
(अनिर्देश्यवपुः).

नि०—एवमुत्तरत्रापि यथायथं संज्ञासामर्थ्यादिना तत्तत् १०
क्षेत्रसंबन्ध ऊह्यः. ❋
अथ शक्तीशावतारः स च आर्षवचनादमलात्मनां नाना-
मन्त्रमयविद्याव्यञ्जयितृतया कृतः आगमः शास्त्रमनेनेति–
(कृतागमः).
(१) " गम्लृ, गतौ " धा०भ्वादिः कौ०पृ० ४३० १५
आङ्पूर्वः.
(२) " अकर्तरि च कारके० " ३।३।१९॥ कौ०पृ०६४७
इत्यनुवृत्तौ,
(३) " ग्रहवृदृनिश्चिगमश्च " ३।३।५८॥ कौ० पृ० ६५३
इत्यप्. घञोपवादः. अत्र अयं कृञः क्तः. अगुणः २०
अनिट्. दीर्घः. ❋
तत एव वचनात् तत्तद्युगगुणानुग्राहकरूपवैचित्र्यात्
अनिर्देश्यम् इदम् ईदृशमिति निर्देष्टुम् अशक्यं वपुः
शरीरमस्येति–
(अनिर्देश्यवपुः). २५

निरु०—६६१मन्त्रविद्याव्यञ्जकत्वात्(कृतागम)इतीरितः॥५०३॥
६६२ युगानुसारिरूपत्वात् (अनिर्देश्यवपुः) स्मृतः ।

( ६६३ ) विष्णुर्,

ॐ विष्णवे नमः ।

भा०— ( १ ) " युगानुसारकान्तिश्च " इति. ❋

५ एवं व्याप्तिनियमनादिशक्तिद्वारा विश्वव्याप्तेः—

( विष्णुः ).

( १ ) " सर्वशक्त्यात्मने " इति तन्मन्त्रवर्ण.

आदित्यपुराणे ,

( २ ) " यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः । तस्मात् स

१० प्रोच्यते विष्णुर्विशेर्धातोः प्रवेशनात् " आ० पु० ।

निर्व०— (१) " डुवप् , बीजसन्ताने " धा० भ्वादिः कौ०पृ०४३२

उक्तिप्रकरणे ,

( २ ) " अर्तिपृवपियजितनिधनितपिभ्यो नित् " उणा०पा०२

कौ० पृ० ६२४

१५ इत्युक्तिः. नित्- नित्त्वादाद्युदात्तः.

( ३ ) " दिश , अतिसर्जने " धा० तुदा०कौ०पृ०४६४

निर्पूर्वः .

( ४ ) " ऋहलोर्ण्यत् " ३ । १ । १२४ ॥ कौ०पृ० ५६२

इति ण्यत्. कृत्यश्चायं कर्मणि

२०(५)"शकि लिङ् च"इति चाच्छक्यार्थे-३।३।१७२॥कौ०पृ०५५२

इत्युदेरिराम. गुणः. नञो नलोपः. ❋

मन्त्रवर्णादिना व्याप्तिनियमनविक्रमणाद्द्वारा सर्वं

वेवेष्टि व्याप्नोतीति—

( विष्णुः ).

२५ ( १ ) " विष्लृ , व्याप्तौ " धा० जुहो० कौ०पृ० ४५१

निरु०—६६३स्वशक्त्या जगतो व्याप्तेर्वा विक्रमणात् स्मृतः॥५०॥

( विष्णुः ) स्मृतो विशेषेण—

(६६४) वीरो,

ॐ वीराय नमः ।

भा०— उद्योगे,
(३)"विष्णुर्विक्रमणाद्देवः" इति, वा. ❀ भा०उ०६९—१३ । ५
(१) "आज्ञाप्रतीक्षकेणैव गदाचक्रद्वयेन तु । प्रेरितेन हिन-
स्त्याशु साधुसन्तापकारिणः" इति—
(वीरः). ❀
नास्य देशकालवस्तुतोऽवधयस्सन्तीति—

निर्व०-(२)"स्थोणुः"इति अनुवृत्तौ,उणा०पा०३कौ०पृ०६२६ १०
(३) "विषेः किच्च" उणा० पा०३ कौ०पृ० ६२६
इति णुः, कित्, अगुणः, अनिट्, विशेः अस्य तु निष्पत्तिः- पू-
र्वमेव प्रपञ्चिता. ❀
स्वाज्ञाप्रतीक्षकेण चक्रगदादिना साधुसन्तापकारिणः
अजति क्षिपति हिनस्तीति— १५
(वीरः).
(१) "अज, गतिक्षेपणयोः" धा० भ्वादिः कौ०पृ०३९१
(२) "स्फायितञ्चि०" उणा० पा०२ कौ०पृ०६१९
इत्यादिना द्वात्रिंशतो धातुभ्यो रग्विधायकेन
प्रागुक्तसूत्रेण रक्. २०
(३) "अजेर्व्यघञपोः" २।४।५६ ॥ कौ० पृ० ३९१
इति वीभावः, अगुणः, अनिट्. ❀
मन्त्रवर्णादिना सदा सर्वत्र सर्वथा च प्रवृत्तस्वभाव-
तया नास्त्यन्तो देशकालवस्त्ववधिः अस्येति—

निरु०— ६६४ (वीरः) स्यात्साधुदुःसहः । २५

(६६५) ऽनन्तो, (६६६) धनञ्जयः, ॥

ॐ अनन्ताय नमः। ॐ धनञ्जयाय नमः।

५ भा०—(अनन्तः).
(१) "अनन्तमूर्तये" इति तन्मन्त्रवर्णात्.
(२) "नास्त्यन्तो विस्तरस्य मे" गी० १०—१९।
(३) "अथैतस्यैवान्तो नास्ति यद्ब्रह्म" य०७ का०३—४।
(४) "सत्यं ज्ञानमनन्तं ब्रह्म" इति च. तै०उ०आ०१।
१० सदा सर्वत्र सर्वथा च प्रवृत्तस्वभाव इत्यर्थः. नच वस्तुपरिच्छेदाभावो वस्त्वभेदः, देशकालयोरतथात्वप्रसङ्गात्. ❀
न चैतदिष्टमानन्त्यं गुणविभूतिभ्यामप्युपपाद्यते—
(धनञ्जयः).

निर्व०—(अनन्तः).
१५ (१) "अम, गत्यादिषु" धा० भ्वादिः कौ०पृ० ४०१
(२) "हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्" इति तन्. उणा० पा० ३ कौ० पृ०६२८
(३) "तितुत्र०" इति नेट्. ७।२।९॥ कौ०पृ०६०८
अनुस्वारपरसवर्णौ. नञो नलोपः नुट्. ❀
२० अथ गुणविभूतिभ्यामप्यानन्त्यम् उपपाद्यते स्वस्य श्रेप्सोपार्जनलोभगूहिनोपजीवनादियोग्यत्वातिरेकेण
धनं हेमरत्नादिकं द्रव्य जयति अधः करोतीति—(धनञ्जयः).

निरु०— ६६५ देशतः कालतो वापि गुणतो वस्तुतोपि वा॥५०५॥
अवधिर्यस्य नास्तीति सो (ऽनन्तः) समुदाहृतः।
२५ ६६६ श्रेप्सोपार्जनलोभादियोग्यत्वाधिक्यतस्ततः॥ ५०६॥
मणिमौक्तिकरत्नानि हेमरूप्यादिक धनम्।
योधः करोति मनत (धनञ्जय) इतीरितः॥ ५०७॥

भा०—प्रेप्सोपार्जनलोभगूहनोपजीवनादियोग्यत्वाधिक्येन हेमरत्नादिकं धनमधः करोतीति-
(१) " संज्ञायां भृतृवृजिधारिसहितपिदमः " ३ । २ । ४६ ॥
कौ०पृ० ५७८　　५
इति खच्.
इह हि बृहत्सु ब्रह्मशब्दं प्रयुञ्जते तत्र तत्र तत्तत्कर्मज्ञानाभ्यामशेषभोगमोक्षभोक्तृत्वबृहत्त्वात् जीवात्मापि ब्रह्मोच्यते.
(२) " तज्ज्ञानं ब्रह्मसंज्ञितम् "
(३) " निर्दोषं हि समं ब्रह्म " इत्यादिषु. गी० ५-१९ ।　१०
तद्भोगमव्यक्तञ्च अनन्तभोगोपकरणपरिणामात्,
(४) " मम योनिर्महद् ब्रह्म" इत्यादिषु. गी० १४-३ ।
ताभ्यां स्थितिभोगादिसर्वावस्थाहेतुत्वेन हितः—

---

निर्व०—(१) " जि, जये " धा० भ्वादिः कौ०पृ० ४०५
(२) " संज्ञायां भृतृवृजिधारिसहितपिदमः" ३।२।४६ ॥ १५
कौ०पृ० ५७८
इति खच्. गुणायादेशौ.
(३) " धन, धान्ये " पचाद्यच्. धा० जुहो०कौ०पृ०४५२
(४) अरुर्द्विषदजन्तस्य मुम् " ६।३।६७॥ कौ०पृ० ५७५
इति खिदन्ते उत्तरपदे पूर्वस्याजन्तस्य मुम्. मित्त्वादन्त्यादचः परः. २०
अनुस्वारः. पाक्षिकः परसवर्णः. ❀
इह हि बृहत्सु प्रधानपुरुषेश्वरादिषु ब्रह्मशब्दः. श्रुत्यादिषु प्रयुज्यते.
बृहत्त्वं च. तेषां तत्र तत्र यथायथम् उपपादयिष्यते. क्वचित् बृंहणत्वं च तत्र ब्रह्मण्याम्.
संप्रदानाभ्यां तत्तत्कर्मज्ञानतोशेषभोगमोक्ष-

श्लो० ॥ ७१ ॥ ( ६६७ ) ब्रह्मण्यो,

ॐ ब्रह्मण्याय नमः ।

भा०—( ब्रह्मण्यः ).

५ निर्व०—भोक्तृत्वेन बृहते पुरुषाय अनन्तभोगोपकरणपरिणामाद् बृहते ततो भोग्याय प्रधानाय च स्थितिभोगादिसर्वावस्थाहेतुत्वेन हित इति—( ब्रह्मण्यः ).

( १ ) " बृह-बृहि, बृद्धौ " धा० भ्वादिः कौ०पृ० ४११ ओष्ठ्यादी इमौ दन्त्योष्ठ्यादी अपि. यतो ववयोरभेदः.

१० तत इदितः शुद्धात्-ण्यन्ताद्वा. मनिन्प्रकरणे.

( २ ) " बृंहेर्नोच " उणा० पा० ४ कौ०पृ० ६३९ इति मनिन्. नस्य अकारश्च. अतो नानुस्वारः. अस्तु वा स.— अथापि तस्यैवाकारः. न इत्यनेन तत्स्थानिकाऽनुस्वारो लक्ष्यते इति व्याख्यास्यते. अत्र ह्रीदितो नुमि

१५ ( ३ ) " इकृश्तिपौ०" इति इकि. इदित्वात् नलोपाभावे-३।२। १०८॥कौ०पृ०६६१

( ४ ) " नश्च०" इत्यनुस्वारे च ८।३।२४॥कौ०पृ०२० बृहिः ण्यन्तस्यापीदम् तन्त्रेण ग्रहणम्. तत्रेकि णिलोपो नलोपा प्राप्तिश्चेति विशेषः. तत्फलं चानुपदमेव प्रव्यञ्जयिष्यते अतो यथा-

२० यथ तत्र तत्र निष्पत्तिर्द्रष्टव्या. प्रकृते तु शुद्धादयं विधिः यण् ऋतो रः.

( ५ ) "नेट्०" इति नेट्. ❋ ७।२।८॥कौ०पृ०५८१

निरु०—६६७ जीवात्मा प्रकृतिश्चापि ब्रह्मेति व्यपदिश्यते । ताभ्यां यः स्थितिभोगादिस्सर्वावस्थासु कारणम् ॥५०८॥

२५ ( ब्रह्मण्यः ) स च विज्ञेयस्समार्गो भोगदायकः ।

( ६६८ ) ब्रह्मकृद्ब्रह्मा,

ॐ ब्रह्मकृद्ब्रह्मणे नमः ।

भा०—तत्कार्यं महदहंकारादिप्रभृति च ब्रह्म, अस्तोकविस्तरत्वात्.
( १ ) " तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" मु०उ० १—१। ५
इत्यादौ. ❀
तस्य कर्ता ब्रह्मा यस्य सर्वथा नियाम्यः, सः—
( ब्रह्मकृद्ब्रह्मा ).

निर्व०—ततो ब्रह्मशब्दात् चतुर्थ्यन्तात्
( १ ) " तस्मै हितम् " ५। १ ।५ ॥ कौ०पृ०२९१ १०
(२)"शरीरावयवाद्यत्" इति. वर्तमाने, ५।१।६॥कौ०पृ०२९१
(३)"खलयवमापतिलवृषब्रह्मणश्च"इति,५।१।७॥कौ०पृ०२९२
हितार्थे यत्. तद्धितः भत्वम्.
(४)"नस्तद्धिते"इति टिलोपे प्राप्ते,६।४।१४४॥कौ०पृ०१३३
( ५ ) " ये चाभावकर्मणोः " ६ ।४।१६८॥कौ०पृ०२११ १५
इति यादौ अनः प्रकृतिभावः. णत्वम्. ❀
तथा- अस्तोकविस्तरत्वात् बृहत् तत्कार्यं महदहंकारादिकमपि;
ब्रह्म तत्करोतीति ब्रह्मकृत्, चतुर्मुखः. तस्य सर्वथा नियाम्यस्य
ब्रह्मा अर्थतो नियामक इति—
( ब्रह्मकृद्ब्रह्मा ). २०
एकन्नाम. व्याख्यातो हि ब्रह्मशब्दः आविष्टलिङ्गत्वाच.
चतुर्मुखवाची पुमानिति विशेषः.कृञः क्विपि तुक्.अगुणः.इत्यादि.
ब्रह्मशब्दः उक्तः. एवमुत्तरत्राप्यवधेयम्. विशेषश्चेदुच्यते.

निरु०—६६८ महदादितमःकार्यं ब्रह्मेति ह्यभिधीयते ॥ ५०९ ॥
तस्य कर्ता स्वयं ब्रह्मा नियाम्यो यस्य सर्वदा । २५
स तु स्यात् ( ब्रह्मकृद्ब्रह्मा ) नवार्णस्सर्वशक्तिदः ॥ ५१० ॥

(६६९) ,

ॐ ब्रह्मणे नमः ।

ना०— एवं व्यक्ताव्यक्तसमष्टिव्यष्टिपुरुषान् बृंहयति निरतिशयकल्याणगुणगणैः स्वरूपगुणविभवैः स्वयं च बृंहतीति अनापेक्षिकं वेदान्तवेद्यं परं ब्रह्म— (ब्रह्म). ❀

(१) " बृंहेर्नोच " इति मनिन्प्रत्ययः. उणा० पा०४को०पृ०६३९ नलोपश्च.

(२) "बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिकीर्त्यते " इति. ❀ सर्वस्यास्य निमित्तं तप उपलक्षितो धर्मोपि (ब्रह्म).

(१) " तपो ब्रह्म " इति श्रुतेः. तै०ब्रा०२—१ ।

निर्व०— नान्तदीर्घः. "इत्यादि. ❀ वेदान्तवेद्यं परन्तत्त्वमेवम् व्यक्ताव्यक्तसमष्टिव्यष्टिरूपम् विश्वमनपेक्षिकं बृंहयति वर्धयति स्वयं च तथा निरतिशयकल्याणैः स्वरूपगुणविभवैः बृंहति वर्धते इति च— (ब्रह्म)..

(१) " बृंहे०" इति मनिन् इत्यादि. उणा०पा०४को०पृ०६३९ तत्र हि बृंहिः शुद्धो ण्यन्तश्च. तन्त्रेण गृह्यत इत्युक्तम्. अत्र चार्षनिर्वचनात् उभयतोपि निष्पत्तिः. णिच्पक्षे मनिनि तल्लोपो विशेषः. आविष्टलिङ्गत्वाच्चास्य शब्दस्य परब्रह्मवाचिनः क्लीबत्वम्.

निरु०— ६६९ व्यक्ताव्यक्तसमष्ट्यादिपुरुषांश्चैव नित्यशः ।
गुणैश्च कल्याणतमैर्ब्रह्म बृंहयतीति च ॥ ५११ ॥
रूपैः स्वरूपेण गुणैर्विभवैश्च स्वयं मुहुः ।
ब्रह्मेति स तु वा (ब्रह्म) षडर्णस्त्वन्तनिग्रहः ॥ ५१२ ॥

( ६७० ) ब्रह्मविवर्धनः, । ( ६७१ ) ब्रह्मवित्,

ॐ ब्रह्मविवर्धनाय नमः । ॐ ब्रह्मविदे नमः ।

भा०— तं विवर्धयतीति- ५
( ब्रह्मविवर्धनः ). ❋
तत्प्रतिपादको वेदोपि ब्रह्म,
( १ ) " ब्रह्माध्येष्यमाणः " इत्यादेः.
( २ ) " अनन्ता वै वेदाः " ❋ काठकम् १ ।
तानप्यवधिना वेत्तीति- १०
( ब्रह्मवित् ).

निर्व०— तथा श्रौत्या च प्रसिद्ध्या ब्रह्म तपः तदुपलक्षितं च सर्वस्यास्य निमित्तं धर्मं विवर्धयति विशेषेण वर्धयतीति-
( ब्रह्मविवर्धनः ).
( १ ) " वर्ध, छेदनपूरणयोः " धा० चुरा०कौ०पृ०४८३ १५
( २ ) " वृधु, वृद्धौ " वा. धा० भ्वादिः कौ०पृ०४१२
विपूर्वः आद्यः. चुरादिः. ततो भ्वादिः. पूर्वं स्वार्थे णिच्.
ततो हेतुमति णिच्. पूर्वविप्रतिषेधात्
अपवादत्वाद्वा. वृद्धिं बाधित्वा णिलोपः. विनैव वा ण्यन्ताण्णिचं पूरयतीत्यर्थलाभः. अपरत्र केवलादेव स णिच्. २०
गुणादि. उभयतोपि ततो ल्युः. ल्युड्वा. बाहुलकादि"३"दि.
अनः णिलोपः. ❋
ब्रह्म, वचनात् तत्प्रतिपादकम् अनन्तशाखमपि वेदं
वेत्ति अवधिना जानातीति- २५
( ब्रह्मवित् ).

निरु०—६७० तपोविवर्धनान्नित्यं स्मृतो ( ब्रह्मविवर्धनः ) ।
६७१ यो वेदानन्ततो वेत्ति स ( ब्रह्मविद् ) उदीरितः ॥५१३॥

( ६७२ ) ब्राह्मणो ,

ॐ ब्राह्मणाय नमः ।

भा०— ( १ ) " अनादिनिधनं ब्रह्म न देवा नर्षयो विदुः । एकस्त-
५ द्वेद भगवान् धाता नारायणः स्वयम् " ❀भा० मो०३८०—११।
वेदव्यवस्थापनार्थं स्वयमत्रिगोत्रादौ दत्तात्रेयादि-
रूपेण ब्राह्मणो भवतीति—
( ब्राह्मणः ).
( १ ) " ब्रह्म नयत्यणति "
१० इति वा नैरुक्ताः. ❀

निर्व०— ( १ ) " विद , ज्ञाने " धा० अदा० कौ० पृ० ४४३
क्विप्. अगुणः. पाक्षिकमवसानचर्त्वम्. ❀
वेदव्यवस्थापनाय स्वयम् अत्रिगोत्रादौ दत्तात्रेयादि-
रूपेण विप्रतया ब्राह्मणो भवतीति वा. निरुक्तानुसारात्
१५ ब्रह्म वेदं स्वयं तादृशः सन्नयति प्रापयति तद्गणानि
शब्दापयते वा उभयथापि व्यवस्थापयतीति वा—
( ब्राह्मणः ).
ब्रह्मन्शब्दात् ,
( १ ) " तस्यापत्यम् " ४ । १ । ९२ ॥ कौ० पृ० २०७
२० ( २ ) " तदधीते तद्वेद " ४ । २ । ५९ ॥ कौ० पृ० २३९
इति वोक्तेषु अर्थेष्वण्. आदिवृद्धिः. अन्निति प्रकृतिभावात्.
( ३ ) " नस्तद्धिते " इति न टिलोपः.६।४।१४४॥कौ०पृ०१३३
( ४ ) " ब्राह्मोऽजातौ " ६ । ४ । १७१ ॥ कौ०पृ० २१९

निरु०— ६७२ दत्तात्रेयादिरूपेण ह्युदीर्णो ( ब्राह्मणः ) स्मृतः ।
२५ पठनाद्राथ वेदस्य ॥ ५१४ ॥

( ६७३ ) त्रह्मी ,

ॐ त्रह्मिणे नमः ।

भा०— सर्वमेतत्प्रमाणप्रमेयरूपं त्रह्म स्वमिति—
( त्रह्मी ). ५

निर्व०— इत्यत्र अजातौ इति पर्युदासान्नायं तस्य विषयः तत्र ब्राह्म इति योगविभागात् जातावनपत्येणि टिलोपेपि तस्येष्टसिद्ध्यर्थतया, नाध्येतृवेदितृप्रत्ययान्तस्तस्य विषयः. णत्वम्. उत्तरत्र प्रथमकल्पे कर्मणश्शेषत्वविवक्षायां नियो नत्वे
( ५ ) " अन्येष्वपि० " ३ । २ । १०१ ॥ कौ०पृ० ५८५ १०
इति डः. टिलोपः ततः प्रज्ञाद्यण्, स्वार्थिकः. आदिवृद्धिः.
( ६ ) " यस्य० " इति लोपः. ६ । ४ । १४८ ॥ कौ०पृ०५६
( ७ ) " पूर्वपदात्० " ८ । ४ । ३ ॥ कौ०पृ० १६७
इति णत्वम्. अनुकल्पे अणतिश्शब्दकर्मा. ततः प्राग्वत्कर्मणश्शेषत्वविवक्षया पचाद्यच्. १५
(८) " शकन्ध्वादिषु टेः पररूपं वक्तव्यम् " ६।१।९३॥ कौ०पृ०४९
इति तस्य आकृतिगणत्वात्. पररूपम्. ततः प्रज्ञाद्यण्.
आदिवृद्धिः.
( ९ ) " यस्य० " ६ । ४ । १४८ ॥ कौ०पृ० ५६
इति लोपः. णत्वे तु न प्रयतितव्यम्. ❀ २०
वचनात् त्रह्म सर्वमेतत् प्रमाणप्रमेयरूपवस्त्वस्यास्तीति—
( त्रह्मी ).

निरु०— ६७३ मानमेयस्वरूपत्वात् स्वयं ( त्रह्मी ) ति शब्द्यते ।

(६७४) ब्रह्मज्ञो, (६७५) ब्राह्मणप्रियः, ॥

---

ॐ ब्रह्मज्ञाय नमः। ॐ ब्राह्मणप्रियाय नमः।

---

७ भा०—(१) " सर्वब्रह्ममयो हरिः " इति. ❋
वेदानर्थपर्यन्तं साक्षात्करोतीति—
(ब्रह्मज्ञः).
(१) " वेदविदेव चाहम् " इति. ❋ गी०१५—१५।
तदधिकारिणो ब्राह्मणाः प्रिया अस्येति—
१० (ब्राह्मणप्रियः). यथा,

---

निर्व०— ब्रह्मणो मत्वर्थीयो व्रीह्यादिलक्षण इनिः.
(१) " नस्तद्धिते " ६।४।१४४॥ कौ०पृ०१३३
इति टिलोपः, इन्नन्तदीर्घ "इत्यादि. ❋
ब्रह्म वेदं जानाति अर्थपर्यन्तं साक्षात्करोतीति—
१५ (ब्रह्मज्ञः).
(१) " ज्ञा, अवबोधने " धा०क्र्यादिः कौ०पृ० ४७७
(२) " आतोनुपसर्गे० " ३।२।३॥ कौ०पृ० ५७०
इति कः. आल्लोपः. उक्तव्याख्यानेन ब्रह्मविद्ब्रह्मज्ञयोरपुनरुक्तिः. ❋
तथा वचनशतैः ब्राह्मणाः प्रियाः अस्येति—
२० (ब्राह्मणप्रियः).
(१) " प्रीञ्, तर्पणे कान्तौ च " धा०क्र्यादिः कौ०पृ०४७४
कान्तिः. कामना.

---

निरु०—६७४यो वेदानर्थतो वेत्ति सोपि (ब्रह्मज्ञ) विश्रुतः ॥५१५॥
६७५ वेदाधिकारिणो विप्राः प्रिया यस्येति वै सदा।
२५ (ब्राह्मणप्रिय) इत्युक्तो नवार्णो धर्मदो मनुः ॥ ५१६ ॥

भा०–(१) " घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथार्हम् " "१२३॥इत्यादि.

(२) " ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते । श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः " इति. गी०१२–२०। ५

(३) " यद्ब्राह्मणस्य मुखतः "

(४) " विप्रप्रसादादसुराञ्जयामि " वि०५०५२-२३ ।

(५) " किं पुनर्ब्राह्मणाः पुण्याः " "१२४॥इत्यादि. गी० ९–३३।

एवं बहुमुखमानन्त्यमुक्तम्, यथा,

(६) " महतो महीयान् " तै०उ० १ । १०

(७) " परात्परं यन्महतो महान्तम् " तै०उ०१-५ ।

(८) " महान्तं विभुमात्मानम् " कठ०उ०२-४ ।

(९) " महतः परमो महान् "

"१२५॥इत्यादि. ❀

---

निर्व०–(२) " इगुपधज्ञाप्रीकिरः कः " ३।१।१३५॥कौ०पृ० १५ ५६७ इति कः. अगुणः. संयोगपूर्वत्वात् एकाच्त्वाच्च. ध्यङ्गविकलतया,

(३) " एरनेकाचः०" इति यणोऽप्राप्तौ, ६।४।८२॥कौ०पृ०४५

(४) " अचि श्नुधातुभ्रुवां य्वोरियङुवङौ " इति एरियङ्. ६।४।७७॥कौ०पृ० ४५ २०

(५) " ङिच्च " इति अन्तादेशः. ब्राह्मणो १।१।५३॥कौ०पृ०७ व्याख्यातः. इत्थम् बहुमुखमानन्त्यमुक्तम्. ❀

श्लो० ॥ ७२ ॥ ( ६७६ ) महाक्रमो,

ॐ महाक्रमाय नमः ।

भा०— अथैवमुत्सुकीकृतेषु वात्सल्यतोप्यानन्त्यं परमतुङ्गमात्मानं
५ परमनिम्नभवपातालाज्जीवानारोहयतो महत्यारोहणसोपानपर्वानुपू-
र्व्यस्येति—
( महाक्रमः ).
यथा जननी, स्तनन्धयमादौ स्तन्यन्धापयति, अथ दुग्धम्, अथा-
हारम्; अथ भोगान् गमयति;—एवमयं सुकृतिनम् अद्वेष्यास्ति-
१० क्याऽभिमुख्यानुवर्तनज्ञानभक्तिविस्रम्भक्रमेणैव प्रापयति. अभ्यु-
त्थानार्थं छन्दानुवर्तनार्थं च; अन्यथा,

निर्व०— अथैवमुत्सुकीकृतेषु वात्सल्यतोऽप्यानन्त्यं प्रस्तोष्यते.
सर्वोत्तुङ्गस्वात्मनि परमनिम्नभवपातालस्थजीवात्मसमारोपणेन म-
हानभ्यधिकः क्रमः जननीकर्तृकस्तनन्धयकर्मकस्तन्यदुग्धाहार-
१५ भोगगमनिकाक्रम इव, स्वकर्तृकसुकृतिकर्मकाऽद्वेष्यास्तिक्याऽभि-
मुख्याऽनुवर्तनज्ञानभक्तिविस्रम्भप्रापणिकयाऽरोहणसोपानपर्वानुपूर्व्य-
स्येति—
( महाक्रमः ).
( १ ) " क्रमु, पादविक्षेपे " धा० भ्वादिः कौ० पृ० ४०१
२० भावे घञ्.
( २ ) " नोदात्तोपदेशस्य० " ७ । ३ । ३४ ॥ कौ० पृ० ५४१
इत्यादिना नोपधावृद्धिरित्युक्तम्.

निरु०— ६७६ परमोन्नतिमात्मानं सनिम्नाद् भवपातकाद् ।
जीवान् समारोहयतो ज्ञानभक्त्यादिरूपिणी ॥ ५१७ ॥
२५ पर्वानुपूर्वी यस्यास्ति ( महाक्रम ) इतीरितः ।

## (६७७) महाकर्मा,

ॐ महाकर्मणे नमः ।

भा०—(१) " बन्धायैव भवत्येषा अविद्या ह्यक्रमोज्झिता "
अतः खल्वाहुः ५
(२) " जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीण-
पापानां कृष्णे भक्तिः प्रजायते " इति वि०ध० ।
(३) " बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते " गी०७—१९।
(४) " अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय " गी०८—८।
"इत्यादि. ❋ १०
कृमिकीटादिभावे दुर्जरपरोच्छिष्टसिक्थद्रप्समात्रं जन्तुं
स्वमहाविभवानुभवाभियुक्तं करोतीत्यतिविस्मयनीयं
महदस्य कर्मेति—
(महाकर्मा). ❋

निर्व०—(३)"मह,पूजायाम्"वर्तमाने,धा०भ्वादिः कौ०पृ०४११ १५
(४) " वर्तमाने पृषत्० " उणा० पा०२ कौ० पृ० ६२२
इत्यादिनात्यन्तो निपातः. शतृवत्कार्यभाक्च.
इत्यप्युक्तमेव. आत्वम्. दीर्घः. ❋
कृमिकीटादिभावे दुर्जरपरोच्छिष्टसिक्थद्रप्समात्रस्य
जन्तोः स्वमहाविभवानुभवाभियुक्तीकरणेन महदपि २०
विस्मयनीयं कर्मास्येति—
(महाकर्मा). कृत्नः

निरु०-६७७अत्यन्तहीनान् जन्तूंश्च योग्यान् स्वानुभवस्य चा५१८।
करोति महदाश्चर्यं कर्म यस्यास्ति सर्वदा ।
(महाकर्मा) स विज्ञेयो ह्यार्णां मनुरुत्तमः ॥ ५१९ ॥ २५

( ६७८ ) महातेजा,

ॐ महातेजसे नमः ।

भा०—एवं तामसानामप्यनाद्यविद्यातमस्तस्करतेजस्त्वात्—
५ ( महातेजाः ). ❀
कथमयमतिमहान् क्षोदीयसां नेदीयान् विषयान्तरवत् तत्कर-
णान्यनुप्रविश्य तत्रान्तःकरणानुप्रवेशात्—

निर्व०—( १ ) " सर्वधातुभ्यः० " उणा०पा०४कौ०
पृ० ६३९
१० इति मनिन्. गुणो रपरः. अनिट्. निरुक्ते हि महच्छब्दः.एवम्
उत्तरत्राप्यवधातव्यम्. नान्तदीर्घः. "इत्यादि. ❀
एवम् महत्तामसानां अप्यनाद्यविद्यातमस्तस्करं तेजोस्येति—
( महातेजाः ).
( १ ) " तिज,निशाने " धा०चुरा०कौ०पृ०४८३
१५ इति क्षमायां हि
( २ ) " गुप्तिज्किद्भ्यस्सन् " ३।१।५॥कौ०पृ०४२८
इति सन्. अतो नेह ततः
( ३ ) " सर्वधातुभ्यः० " उणा०पा०४कौ०पृ०६४०
इति असुन्. गुणः. बहुव्रीहिः. असन्तदीर्घः. "इत्यादि. ❀
२० अथ महान् क्षोदीयसामपि नेदीयांश्चासौ उरगः उरो वक्षः
तदुपलक्षितं च हृदयं तेन तत्करणान्यनुप्रविशन् तद्द्वारा
तान् गच्छंश्चेति—

निरु०—६७८अनाद्यविद्यास्यतमोहारि तेजो महद्यतः ।
( महातेजा ) ह्यतः ख्यातस्तेजोदो वसुवर्णकः ॥ ५२० ॥

(६७९) महोरगः, ।

ॐ महोरगाय नमः ।

भा०— (महोरगः).

उरः प्रदर्शितं हृदयमुरः यद्द्वारा तान् गच्छतीति— ५

(१) " उरसो लोपश्च " इति डप्रत्ययः. ३।२।४८॥कौ०पृ०५७८

(२) " यो न वित्तैर्न वित्तवैः न वासोभिर्न भूषणैः । तोष्यते हृदयेनैव करतमीशन्न पूजयेत् " इति. ❀ वि०ध०९०—६९।

महत्सर्वसुकरमाराधनमस्येति—

निर्व०— (महोरगः). १०

(१) " गम्लृ, गतौ " धा० भ्वादिः कौ०पृ० ४३०

(२) " गमेर्डः " उणा० पा०२ कौ०पृ० ६२२

इति वर्तमाने,

(३) " उरसो लोपश्च " ३।२।४८॥ कौ० पृ० ५७८

इति व्युत्पादयिष्यमाणस्य उरसो लोपश्च. १५

(४) " अलोन्त्यस्य " १।१।५२॥ कौ० पृ० ७

इति परिभाषया तदन्त्यस्य सस्य लोपः. ततष्टिलोपः.

(५) " ऋ, गतौ " असुन्प्रकरणे, धा०जुहो०कौ०पृ०४५२

(६) " श्रयतेस्स्वाङ्गे शिरः किच्च" उणा०पा०४कौ०पृ०६४१

इत्यतः किच्चेत्यनुवृत्तौ, २०

(७) " अर्तेरुच " उणा० पा०४ कौ० पृ० ६४१

इति असुन्. कित्. धातोरुदादेशश्च. रपरत्वम्. कित्त्वा-द्गुणः. अलोन्त्यलोपेन सलोप उक्तः. पूर्वोत्तरयो-स्सांहितः. आद्गुणः. ❀

निरु०— ६७९ (महोरग) इति ख्यातश्चित्तद्वारा प्रवेशनात् । २१

( ६८० ) महाक्रतुर् , ( ६८१ ) महायज्वा ,

ॐ महाक्रतवे नमः । ॐ महायज्वने नमः ।

५ भा०— ( महाक्रतुः ).
समर्पणसंस्कारस्वादुकृतेः आगमशास्त्रकारित-
सर्वव्यापारैराराध्यत्वात्. यथा ,
( १ ) " यत्करोषि० " इत्यादि. ❋ गी०९–२७ ।
स्वयाजिनामन्ययाजिभ्योप्यत्युत्कर्षात्—
१० ( महायज्वा ).
( १ ) " सुयजोर्ङ्वनिप् " यथा ,३।२।१०३ ॥ कौ०पृ०५९७
( २ ) " तेषामेकान्तिनश्श्रेष्ठास्ते चैवानन्यदेवताः " इति. ❋

निर्व०— अथ महान् सर्वसुकरः क्रतुः समर्पणसंस्कार-
स्वादूकृतः रागशास्त्रकारितो यज्ञः , तदुपलक्षितं चा-
१५ राधनम् अस्येति—
( महाक्रतुः ). करोतेः ,
( १ ) " कृञः कतुः " उणा०१।० १ कौ०पृ०६१४
इति कतुः. अगुणः. यण्. क्रतो रः. ❋
वचनात् महान्तोन्ययाजिभ्य उत्कृष्टाः यज्वानः स्वयाजिनोस्येति-
२० ( महायज्वा ).
( १ ) " यज . देवपूजादौ " धा० भ्वादिः कौ०पृ० ४३२
( २ ) " सुयजोर्ङ्वनिप् " ३ । २ । १०३ ॥ कौ०पृ०५९७
इति भूते ङ्वनिप्. अनिट्. ततः समासो नान्तदीर्घः. इत्यादि. ❋

निरु०—६८०सर्वैश्च सुकरा पूजा यस्य स्यात्स (महाक्रतुः)॥५२१॥
२५ ६८१ देवतान्तरयाजिभ्यः स्वयाज्युत्कृष्टकारकः ।
( महायज्वा ) समृद्धिः सत्कर्मफलदो मनुः ॥ ५२२ ॥

## (६८२) महायज्ञो,

ॐ महायज्ञाय नमः ।

भा०— अभिगमनभोगमधुपर्कादिसाष्टाङ्गयागोप्यन्येभ्यस्तथेति—
(महायज्ञः). यथा, ५
(१) " सर्वेषां किल धर्माणामुत्तमो वैष्णवो विधिः "
(२) " रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत् "
(३) "याः क्रियास्संप्रयुक्तास्स्युरेकान्तगतबुद्धिभिः । तास्सर्वाः
शिरसा देवः प्रतिगृह्णाति वै स्वयम् " इति.
(४). " अहो ह्येकान्तिनस्सर्वान् प्रीणाति भगवान् हरिः । १०
विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् " पा०सा० ।
इति .
(५) ' न तत्र पशुघातोऽभूत् " भा०शा०३३७—९ ।
(६) " आरण्यकपदोद्गीता भागास्तत्रानुवर्णिताः " इत्यादि. ❀
भा०शा०३३७—१० । १५

निर्व०—तथा वचनैर्महान् अन्ययज्ञेभ्योपि अत्युत्कृष्टो
यज्ञोभिगमनभोगमधुपर्कादिसाष्टाङ्गयागोस्येति—
(महायज्ञः).
धातुः प्राग्वत्. ततो भावे,
(१) " अकर्तरि च कारके०" ३।३।१९ ॥ कौ०पृ०६४७ २०
इति अनुवृत्तौ,
(२)"यजयाचयतविच्छप्रच्छरक्षोनङ्" ३।४।१९॥कौ०पृ०६५८
इति नङ्. श्चुत्वम् नस्य ञः. ❀

निरु०—६८२अन्येभ्यो देवयागेभ्यः स्वयागोत्कृष्टकारकः ।
(महायज्ञः) समाख्यातो ह्यष्टार्णो हरियागदः ॥ ५२३ ॥ २५

( ६८३ ) महाहविः, ॥

ॐ महाहविषे नमः ।

भा०— अहिंस्रसात्त्विकौपनिषदानि हवींष्यस्येति—
५ ( महाहविः ). यथा ,
( १ ) " ब्रह्मार्पणं ब्रह्महविः " "इत्यादि. गी०४—२५ ।
( २ ) " ज्ञानयज्ञेन " गी०९—१५ ।
( ३ ) " योहमस्मि स सन्यजे यस्यास्मि नतमन्तरेमि" ३अ०७—४७।
( ४ ) " इदमहम्मामममृतयोनौ सूर्ये ज्योतिषि जुहोमि" २ तै०२५।
१० ( ५ ) " अहमेवाहम्माञ्जुहोमि " २ तै० ४१ ।
इति प्रत्यगात्महविष्टवाद्वा.
अथोपरिचरः पदनैकान्ती ,
( ६ ) " आत्मा राज्यं धनञ्चैव कलत्रं वाहनानि च । एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा " इति अयं च. भा०शा० ३३६—२१ ।
१५ ( ७ ) " श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः " गी०४—३ ।
इति च एवं मनःशरीरयोः व्यापारसमाराध्यत्वम्. ❀
अथ वाचः—

निर्व०—स च महान्ति अहिंस्रसात्त्विकौपनिषदानि हवींषि अस्येति वा, श्रुत्यादिना द्रव्ययज्ञात् ज्ञानयज्ञस्य श्रेयस्त्वाद्वा.
२० हविः प्रत्यगात्मरूपं हविरस्येति वा—
( महाहविः ).
( १ ) " हु , दानादानयोः " धा० जुहो०की०पृ०४४९
( २ ) " अर्तिशुचिहुसृपिछादिछर्दिभ्य इसिः " उणा० पा०२र्ती० पृ० ६२४
२५ इति इसिः. गुणः. अव् "इत्यादि. ❀

निरु०— ६८३ आत्मरूपं हविर्यस्य स ( महाहवि ) रुच्यते ।

श्लो० ॥ ७३ ॥ ( ६८४ ) स्तव्यः,

ॐ स्तव्याय नमः ।

भा०— ( स्तव्यः ) .
स्तवमर्हतीति, यत्, अनध्यारोप्यमहामङ्गलनित्यनिरवधिकनिर- ५
वद्यगुणो नाम सहस्रव्यपदेश्यः. पतिरेव स्तुतिमर्हति, इति न तु
विपरीतगुणो देवतान्तरादिः. बार्हस्पत्यस्मृतौ,
( १ ) " आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा
चेद्विश्वकर्तारं को न मुच्येत बन्धनात्" बा०स्मृ० ।
( २ ) " इतीदं कीर्तनीयस्य " "इत्यादि. ❀ भा० १०
आ० १४९–१२१ ।

निर्व०— इत्थ मनःशरीरयोर्व्यापारेण समाराध्यत्वमुक्तम्.
अथ वाचः. तेन तदुच्यते. नामसहस्रव्यपदेश्यतया-
नध्यारोप्य महामङ्गलनित्यनिरवधिनिरवद्यगुणकतया च
स्तवं स्तुतिमर्हतीति–( स्तव्यः ). १५
( १ ) " ष्टुञ्, स्तुतौ " धा०अदा०कौ०पृ०४४०
षस्तः. अन्यच्च प्राग्वत्.
( २ ) " ऋदोरप् " ३।३।५७॥कौ०पृ०६५२
इति अप्. गुणावादेशौ. ततः स्तवशब्दात्,
( ३ ) " तदर्हति " इत्यर्थे, ५।१।६३॥कौ०पृ०३०१ २०
( ४ )" दण्डादिभ्यो यः " ५।१।६६॥कौ०पृ०३०१
इति तस्य आकृतिगणत्वात् यः. तद्धितः.
( ५ ) " छन्दसि च " ५।१।६७॥कौ०पृ०६९४

निरु०—६८४ चेतःशरीरयोर्जन्तोर्व्यापाराराध्यता हरेः॥७.२४॥
उक्ता नारायणस्याथ वागाराध्यत्वमुच्यते । २५
स्मृतः स्तुत्यर्हणात् ( स्तव्यः ) षडर्णो बन्धमोचकः ॥ ५२५ ॥

( ६८५ ) स्तवप्रियः,

ॐ स्तवप्रियाय नमः ।

भा०— यथाकथञ्चित्, यया कयाचिद्भाषया, येन केनापि, तेज-
५ स्करः तिरस्कारी वा, गुणसंकीर्तनाभिमानेन क्रियमाणस्तवः
स्वविषयः प्रियतमोऽस्येति—
( स्तवप्रियः ).
अकण्टकमेतत् घण्टाकर्णादिवृत्ते. ❀
स्वस्तोत्रमपि प्रसन्नेनानेन करणभूतेन निष्पाद्यत इति—

१० निर्व०— इति वा, प्रातिपदिकमात्रप्रकृतिकः. अस्त्येव ह्यस्य छन्दो-
भावः. यतोयं पञ्चमो वेदः. भत्वम्.
( ६ ) " यस्य० " इति लोपः. ६ । ४ । १४८ ॥ कौ० पृ० ५६
स्वविषयो येन केनापि पुरुषेण यया कयाचन भाषया
यथाकथंचित् तेजस्करः तिरस्कारी वा गुणसंकीर्तनाभि-
१५ मानेन क्रियमाणः स्तवः स्तुतिः प्रियोस्येति—
( स्तवप्रियः ).
( १ ) " प्रीञ्, तर्पणे कान्तौ च " धा० क्र्यादिः कौ० पृ० ४७४
( २ ) " इगुपधज्ञाप्रीकिरः कः " ३ । १ । १३५॥ कौ० पृ० ५६७
इति कः. अगुणः. इयङ् "इत्यादि. स्तव उक्तः. ❀
२० स्वस्तोत्रस्यापि ध्रुवस्तवादो प्रसन्नेनानेन करणभूतेन
निष्पाद्यतया स्तूयतेनेनायमिति—

निरु०—६८५ यया कयाचिद्भारत्या येन केनापि जन्तुना ।
यथाकथंचित् कथितो यस्य प्रियतमस्तवः ॥ ५२६ ॥
( स्तवप्रियः ) स कथितो यस्वर्णः प्रीतिवर्धकः ।

( ६८६ ) स्तोत्रम् , ( ६८७ ) स्तुतः ,

ॐ स्तोत्राय नमः । ॐ स्तुताय नमः ।

भा०—( स्तोत्रम् ). ५
( १ ) " दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे"
इति ष्ट्रन्. इदन्तु ध्रुवस्तवे द्रष्टव्यम्. ॐ ३।२।१८२॥कौ०पृ०६०८
सहस्रफणत्रयीमयादिभिस्सूरिभिरनन्तैः ब्रह्मादिभिरस्म-
दादिभिश्चाविशेषेणानवधौ काले तत्तदभिलपितसिद्धये स्तुत इति—
( स्तुतः ). यथा , १०
( १ ) " अशेषदेवेशनरेश्वरेश्वरैस्सदा स्तुतं यच्चरितं महा-
द्भुतम् " इति.

निर्व०—( स्तोत्रम् ).
( १ ) " ष्टुञ्, स्तुतौ " धा० अदा०कौ०पृ०४४०
षत्तः. तोष्टुः. ष्ट्रन्करणे , १५
( २ ) " दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे "
३ । २ । १८२ ॥ कौ०पृ०६०८
इति ष्ट्रन्.
( ३ ) " षः प्रत्ययस्य " १।३।६॥ कौ०पृ०९३
इति षः. इत्. तोष्टुः. अनिट्. गुणः. आविष्टलिङ्गोयम् इत्यादि. २०
सहस्रफणत्रयीमयादिभिस्सूरिभिरनन्तैर्ब्रह्मादिभिरस्म—
दादिभिश्च अविशेषेण अनवधौ काले तत्तदभिलपित-
सिद्धये स्तूयते स्तपम् इति—( स्तुतः ).
धातुः प्राग्वत्. अन्यच्च कर्मणि क्तः. अगुणः. अनिट्. ॐ

निरु०-६८६ स्वेनैव निष्पादितया स्वस्तुतः(स्तोत्र)मुच्यते॥५२७॥२५
६८७ शेषशेषाशनाद्यैर्यः सूरिभिश्चास्मदादिभिः ।
स्तुतत्वादविशेषेण ( स्तुत ) इत्यभिधीयते ॥ ५२८ ॥

( ६८८ ) स्तोता, ( ६८९ ) रणप्रियः, ।

ॐ स्तोत्रे नमः । ॐ रणप्रियाय नमः ।

५ भा०—(२)" धाता पुरस्ताद्यमुदाजहार- शक्रः प्रविद्वान् प्रदिशश्चतस्रः " इति. पु० सू० १७।
अस्मदादिसर्वस्तुतत्वं प्रदिशश्चतस्र इति. ❋
स्वस्तोतारं स्तोतुं शीलमस्येति—
( स्तोता ).
१० ( १ ) " यं स्तुवन् स्तव्यतामेति वन्दमानश्च वन्द्यताम् " वि० ध०७५—५५।
इति. एतत् कैलासयात्रायाम् ❋
श्रीमद्रामायणमहाभारतप्रभृत्यभिष्टुताभीष्टदिव्यचेष्टितः—
( रणप्रियः ).
१५ सुहृत्प्रीणनरणादिचेष्टितो हि सः, यथा,

निर्व०— कैलासयात्रादौ स्वस्तोतारं स्वयमेव तच्छीलः स्तौतीति—
( स्तोता ).
प्राग्वदेव धातुः.
( १ ) " तृन् " ३।२।१३५॥कौ०पृ०६०१
२० इति ताच्छीलिकस्तृन्. गुणः. अनङ्. "इत्यादि. ❋
श्रीमद्रामायणमहाभारतप्रभृत्यभिष्टुतदिव्यचेष्टिततया
प्रियः अभीष्टः रणः सुहृत्प्रीणनसमरचेष्टास्येति—
( रणप्रियः ). प्रीणातेः,
( १ ) " इगुपध०" ३।१।१३५॥कौ०पृ०५६७

२५ निरु०— ६८८ स्वस्तोतारं परं स्तोतुं शीलं यस्यास्ति सर्वदा ।
( स्तोता ) स स्यात् पञ्चवर्णः सर्वस्तुत्यत्वदो मनुः ॥ ५२१ ॥
६८९ सुप्रियं युद्धकर्म यस्यास्ति स ( रणप्रियः ) ।

(६९०) पूर्णः,

ॐ पूर्णाय नमः ।

भा०—(१)" ततस्सकामं सुग्रीवमङ्गदं च महाबलम् । चकार राघवः प्रीतो हत्वा रावणमाहवे " ❀ रा०यु० ११९—३१। ५
बहुव्ययाऽयाससत्कारविरहेपि स्तोत्रादिमात्रसाध्योयम्;
कुतः यतः—
(पूर्णः).
स्वत एवाऽवाप्तसमस्तकामः.

निर्व०— इत्यादिना क्तप्रत्यये अगुणे इयङि च प्रियशब्द- १०
इत्यन्यधाम. रणतिश्शब्दकर्मा. पचाद्यच्. अकर्तरि तु,
(२) " वशिरण्योरुपसंख्यानम् " ३।३।५८॥कौ०पृ०६५३
इति औपसंख्यानिकः. तत्र हि,
(३) "भावे" "अकर्तरि च कारके० " ३।३।१९॥कौ०पृ०६४७
इति वर्तते. १५
(४) " ग्रहवृदृनिश्चिगमश्च " ३।३।५८॥कौ०पृ०६५३
इति सूत्रस्थं हि तद्वार्तिकम्. बहुव्रीहौ प्रियस्य विशेषणत्वेन
(५) " सप्तमी विशेषणे बहुव्रीहौ " २।२।३५॥कौ०पृ०१७३
इति नित्यं पूर्वनिपाते प्राप्ते,
(६)"वाप्रियस्य" इति विभाषा हि,२।२।३५॥कौ०पृ०१७३ २०
भवति. सः अतोत्र परप्रयोगः. ❀
बहुव्ययाऽयासविरहेपि स्तोत्रादिमात्रसाध्यो ह्ययम्.
कुतः यतः पूर्णः स्वत एवावाप्तसमस्तकामो भवतीति—
(पूर्णः).

निरु०—६९०अवाप्तसर्वकामत्वं यस्यासौ (पूर्णः) उच्यते॥५३०॥ २५

निर्व०— (१) "पूरी, आप्यायने" धा०चुरा०कौ०पृ०४८६
ईदित्. अकर्मकात् कर्तरि क्तः.
(२) "श्वीदितो निष्ठायाम्" इति ईण्निषेधः. ७।२।१४॥
५ कौ०पृ०५८९
(३) "रदाभ्याम्०" ८।४।४२॥ कौ०पृ० ५८६
इत्यादिना निष्ठातो नः.
(४) "रषाभ्याम्०" इति णत्वम्. ८।४।१॥कौ०पृ०३९
, नचेदं पृधातो रूपम्. तत्र हि निष्ठायाम् अगुणे,
१० (५) "श्युकः०" इति इडभावे ७।२।११॥कौ०पृ०४२५
(६) "उदोष्ठचपूर्वस्य" ७।१।१०२॥कौ०पृ०४४९
इति उत्त्वे रपरत्वे च,
(७) "रदाभ्याम्०" ८।२।४२॥कौ०पृ०५८६
इति नत्वम् प्राप्तम्.
१५ (८) "नध्याख्यापृमूर्छिमदाम्" ८।२।८७॥कौ०पृ०७११
इति प्रतिषिध्यते. येन तत एव
(९) "हलि च" ८।२।७७॥कौ०पृ०६३
इति दीर्घे णत्वे च उक्तरूपं स्यात्. नाप्ययम्,
(१०) "वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" ७।२।२७॥
२० कौ०पृ०५९४
इति पाक्षिको निपातः. ते हि णिचि निष्ठान्ता निपात्यन्ते.
अथवायमस्तु कथंचिण्णिचि निष्ठायां निष्ठा अयन्निपातः.
तत्रेडभावो निपात्यः. ण्यन्तः ईदित् नेति तथा णिलोपोपि.
(११) "निष्ठायां सेटि" इति सेड्ग्रहणसामर्थ्यात् ६।४।५२॥
२५ कौ०पृ०५९२
(१२) "णेरनिटि" इति णिलोपस्याप्रवृत्तेः. अन्यत् समम्. ॐ
६।४।५१॥कौ०पृ०३९९

( ६९१ ) पूरयिता, ( ६९२ ) पुण्यः,

ॐ पूरयित्रे नमः। ॐ पुण्याय नमः।

भा०— किन्तर्हि पूरणीयवत् स्तोत्रादिकमपेक्षेत, तन्मनोरथ- ५
पूरणशीलत्वात् तदाह—
( पूरयिता ). ❋
पातकिनोपि स्वस्तुत्यर्हयन् पुनातीति—
( पुण्यः ).
( १ ) " पूञो यण्णुद्रस्वश्च " ❋ उणा०पा० ५ १०
कौ०पृ० ६४३

निर्व०— अथापि पूरणीयवत् तदनुजिघृक्षया तत्कृतं
स्तोत्रादिकम् अपेक्ष्य तन्मनोरथं तच्छीलः पूरयतीति—
( पूरयिता ).
धातुः प्राग्वत्. णिच्. ततस्तृन्. इट्. १५
( १ ) " अनिटि " इति प्रतिषेधात् ६।४।५१॥कौ०पृ० ३९९
न णिलोपः. गुणः. अय्. अनङ् "इत्यादि. ❋
पातकिनोऽपि स्वस्तुत्यर्हयन् पुनातीति वा, तेषामपि पावनत्वस्तु-
त्यर्हीकरणेन पुणति शुभकर्मा भवतीति वा, तानपि पावयन् पुण्य-
यति पुण्यान् स्वस्तुत्यर्हतया शुभकर्मणः करोतीति वा— २०
( पुण्यः ). पूर्वत्र,
( १ ) " पूञ्, पवने " धा० क्र्यादिः कौ०पृ० ४७५
( २ ) " पूञो यण्णुट्रस्वश्च " उणा०पा० ५ कौ०पृ० ६४३

निरु०—६९१ सदा पूरयितुं शीलं यस्य स्तोतृमनोरथान् ।
स स्यात् ( पूरयिता ) — २५
६९२ ( पुण्यः ) योऽसौ पातकिपावनः ॥ ५३१ ॥

( ६९३ ) पुण्यकीर्तिर्,

ॐ पुण्यकीर्तये नमः ।

भा०—संकीर्तनमपि तथेति—

५ ( पुण्यकीर्तिः ).

( १ ) " नामसंकीर्तनं भक्त्या विलायनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः "

निर्व०—इति यत्. तस्य णुट् धातोः ह्रस्वश्च. ह्रस्वविधानसामर्थ्यात् न गुणः. णुटः प्रत्ययादित्यमाश्रित्य वलादि-

१० लक्षण इट् प्राप्तः.

( ३ ) " नेड्वशि० " इति प्रतिषिध्यते. अपरत्र ७ । २ । ८ ॥ कौ०पृ०५८१

( ४ ) " पुण, कर्मणि शुभे " धा०तुदा०कौ०पृ०४६६

( ५ ) " अघ्न्यादयश्च " उणा०पा०४ कौ०पृ०६३७

१५ इति तस्याकृतिगणत्वात् यक्. अगुणः.अन्यत्रोक्तविधया निष्पन्नात् पुण्यशब्दात्,

(६) " तत्करोति० " इति णिच्. चुरा०गणसूत्रम्. कौ०पृ०४९०

( ७ ) " णाविष्ठवत् " ६।४।१५५॥ कौ०पृ०३१०

इति टिलोपः. ततः पचाद्यच्. णिलोपः. ❀

२० तथा पुण्या पुनाना शुभा तादृशं कुर्वाणा वा कीर्तिः संकीर्तनमस्येति— ( पुण्यकीर्तिः ).

(१) " कृत, संशब्दने " चुरादिः णिच्. धा०चुरा०कौ०पृ०४८२

( २ ) " उपधायाश्च " ७।१।१०१॥ कौ०पृ०४८२

इति इत्त्वम्. रपरत्वम्.

२५ ( ३ ) " उपधायां च " इति दीर्घः. तत इन् प्रकरणे ८।२।७८॥ कौ०पृ०३८३

निरु०—६९३ पुण्यः श्लोकोऽस्ति यस्येति (पुण्यकीर्तिः) स तु स्मृतः ।

(६९४) अनामयः, ॥

ॐ अनामयाय नमः ।

भा०—(२) " अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान्
विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव " वि०पु०८—९१ । ५
(३) " कलौ संकीर्त्य केशवम् " इति. वि०पु०६—२—१७।
अत एव हि तत्परसूकादीनां पङ्क्तिपावनत्वश्रुतिः. ❋
एवं स्वसंस्पर्शदिव्यौषधेन—
(अनामयः).
संसारमहाव्याधिविरोधी भवो हि व्याधिः भगव— १०
दनुभवशक्तिप्रतिबन्धकत्वात्.
(१) " व्याधिभिः परिपूर्णोस्मि "
इति तज्ज्ञवचनात्. ❋

निर्व०—(४)"हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च"उणा०पा०४
कौ०पृ०६३७ १५
इति इन्. णिलोपः. रुत्वम्. अन्यथा चापि व्युत्पादितम्
प्रागेव. पुण्यशब्दो ह्यधस्तादुक्तः. ततः,
स्त्रियामतष्टाबादि.
(५) " स्त्रियाः पुंवत्०" ६।३।३४ ॥ कौ०पृ०१६०
इत्यादिना पूर्वपदस्य पुंवद्भावः. ❋ २०
एवम् स्वसंस्पर्शदिव्यौषधेन आमयस्य भगवदनुभव—
शक्तिप्रतिबन्धकतया महाव्याधिरूपस्य भवस्य विरोधीति—
(अनामयः).
(१) " मीञ्, हिंसायाम् " धा० क्र्यादिः कौ०पृ०४७४
आङ्पूर्वः. पचाद्यच्. २५

निरु०—६९४संसाराख्यमहाव्याधेः विरोधित्वाद्(अनामयः)॥५३२।

श्लो० ॥ ७४ ॥ ( ६९५ ) मनोजवस्,

ॐ मनोजवाय नमः ।

भा०— उक्तेषु शीघ्रकारित्वात्— ( मनोजवः ). जगौ हि,
५ ( १ ) " क्षिप्रं भवति धर्मात्मा " इति. गी० ९—३१ ।
( २ ) " सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु । विष्णोरा-
लयविन्यासप्रारम्भादेव नश्यति " इति च. ❀ वि०ध०८३—२० ।
आत्मवत् स्मरणकीर्तनादिमात्रेण सर्वपावनानां गङ्गापुष्करादि-
तीर्थानां हेतुत्वात्—

१० निर्व०—( २ ) " मीनातिमिनोतिदीङां ल्यपि च " ६।१।५० ॥
कौ०पृ०४५४
इति चादशित्यङ्गनिमित्ते प्राप्तमात्वम्.
( ३ ) " निमिमीलियां खलचोरात्वम् नेति वाच्यम् "
इति प्रतिषिध्यते. गुणः आय्. तस्य विरोधार्थे.नञ्तत्पुरुषः.
१५ नञो नलोपः. नुट्. ❀
उक्तेष्वर्थेषु क्षिप्रकारितया मनसोऽन्तःकरणस्येव जवो वेगोस्येति—
( मनोजवः ). जुस्सौत्रो गतिकर्मा वेगकर्मा च. ततो भावे,
( १ ) " ऋदोरप् " इत्यप्. गुणः. अव्. ३।३।५७॥कौ०पृ०६५२
( २ ) " मन, ज्ञाने " धा० दिवा० कौ०पृ०४५६
२० ( ३ ) " सर्वधातुभ्योऽसुन् " उणा० पा० ४ कौ०पृ०६४०
इति असुन्. रुत्वयत्वापवादोत्वगुणाः. ❀
आत्मवत् स्मरणकीर्तनादिमात्रेण सर्वपावनानि तीर्थानि गङ्गाद्यृषि-
जुष्टाम्भांसि करोतीति हेतुत्वात् सृजतीति वा, तीर्थानि श्रुतिस्मृ-
त्यादीनि शास्त्राणि करोति सत्समयप्रवर्तकानि प्रवर्तयतीति वा, अ-
२५ गाधदुष्प्रवेशसिन्धोरिवात्मनः सर्वेषां सुसुखप्रवेशायानेकावतारकर-
णात्, तीर्थानि स्वावताररूपाण्यवतारसोपानानि करोति विदधातीति—

निरु०—६९५ भक्तानां सम्पदः शीघ्रं करोतीति ( मनोजवः ) ।

(६९६) तीर्थकरो,

ॐ तीर्थकराय नमः ।

भा०—( तीर्थकरः ).
श्रुतिस्मृत्यादिसत्समयप्रवर्तनाद्वा, यथा, ५
(१)" योगो ज्ञानं तथा सांख्यम् " भा०आनु०१५०—१४१।
"१३३॥इत्यादि. अगाधदुष्प्रवेशसिन्धोरिवात्मनः । प्रवेशावतार-
सोपानकरणाद्वा. ❋

निर्व०—( तीर्थकरः ).
तीर्थशब्दो ह्यनेकार्थः. कोशसिद्धः. करोतेः, १०
( १ ) " कृञो हेतुताच्छील्यानुलोम्येषु " इति हेतौ टः. गुणः
रपरः. ३।२।२०॥ कौ० पृ० ५७४
( २ ) " तॄ, प्लवनतरणयोः" धा०भ्वादिः कौ० पृ० ४२७
( ३ ) " पातॄतुदिवचिरिचिसिचिभ्यस्थक् " उणा०पा०२
कौ०पृ० ६१९ १५
इति थक्. अगुणः.
( ४ ) " श्युकः० " इति नेट्. ७।२।११॥ कौ०पृ०४२५
( ५ ) " ऋत इद्धातोः " ७।१।१००॥ कौ० पृ०४२७
इति इत्त्वम्. रपरत्वम्.
( ६ ) " हलि च " इति दीर्घः. ८।२।७७॥कौ०पृ०६३ २०
( ७ ) " अचो रहाभ्यां द्वे " ८।४।४६॥कौ०पृ०१०
इति थस्य द्वित्वम्.
( ८ ) " झरो झरि सवर्णे " ८।४।६५॥ कौ० पृ० ११
इति पाक्षिकः प्रथमथलोपः तदभावे,

निरु०—६९६ गङ्गादितीर्थहेतुत्वात् श्रुतिस्मृत्योः प्रवर्त्तनात् २५
॥५३३॥ आत्मप्रवेशसोपानं कृत्वा ( तीर्थकरः ) स्मृतः ।

( ६९७ ) वसुरेता ,

ॐ वसुरेतसे नमः ।

भा०— तत्र कृष्णावतारः, दिव्यज्योतिरुपादानहेतुत्वाद्–
५ ( वसुरेताः ).
वस्विति हि ज्योतिःपर्यायः.
(१) "उज्जहारात्मनः केशौ सितकृष्णौ महामुने" वि०पु०५–१–६०।
इति.
( २ ) " मम ते केशसंज्ञिताः " भा०शा० ३४२–४८ ।
१० इति केशशब्दश्च, व्याख्यातः. ❋

निर्व०—(१) "खरि च" इति पूर्वस्य ८।४।५५॥कौ०पृ०२०
थस्य चर्त्वम् तः, एवं तत्र तत्र द्वित्वलोपादिकं यथाशास्त्रमूह्यम्. ❋
तत्र कृष्णावतारः प्रस्तोष्यते. दिव्यज्योतिरुपादानदेहतया
वसुः रश्मिः स चात्र ज्योतिः तद्रूपं रेतो वीर्यम् स्वोपादान-
१५ द्रव्यमस्येति–
( वसुरेताः ).
नानार्थो हि वसुशब्दः
( १ ) " रीङ् , श्रवणे " असुन्प्रकरणे, धा०दिवा०कौ०पृ०४५४
( २ ) " स्रुरीभ्यां तुट् च " इति , उणा०पा०४कौ०पृ०६४१
२० असुन्. तुट् च. टित्वादाद्यवयवः. अनिट्. गुणः.
( ३ ) " वस , निवासे " धा० भ्वादिः कौ०पृ०४३२
( ४ ) " शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च " उणा०
पा०१ कौ०पृ०६०९
इति उः. समासोऽसन्तदीर्घः "इत्यादि. ❋

२५ निरु०—६९७ वसुशब्दो ज्योतिरर्थः रेतस्तत्करणं मतम् ॥५३४॥
दिव्यज्योतिःकारणत्वाद् ( वसुरेताः ) प्रकीर्तितः ।

| (६९८) वसुप्रदः, | (६९९) वसुप्रदो, |
|---|---|
| ॐ वसुप्रदाय नमः । | ॐ वसुप्रदाय नमः । |

भा०—परमनिधिमात्मानं देवकीवसुदेवाभ्यां पुत्रत्वेन प्रददातीति— ५
( वसुप्रदः ). ❀
ताभ्याम् जगत्पितुः स्वस्य पितृत्वरूपं महत्तेजः प्रददातीति पुनश्च—
( वसुप्रदः ).
वसुदेवापत्यत्वाच्च—

निर्व०— तथा वसु धनम् परमो निधिः तादृशम् आत्मानं देव- १०
कीवसुदेवाभ्यां संप्रदानाभ्यां पुत्रत्वेन प्रददातीति—
( वसुप्रदः ).
नानार्थो वसुशब्द इत्युक्तम्.
( १ ) " डुदाञ्, दाने " प्रपूर्वः. धा० जुहो० कौ०पृ० ४५१
( २ ) "प्रे दाज्ञः" इति कः.आल्लोपः.३।२।६।।कौ०पृ०५७२ १५
निरूचे हि वसुशब्दः. एवमुत्तरत्रापि ध्येयम्. ❀
तथा वसुं रश्मिं ततश्च जगत्पितुः स्वस्य पितृत्वरूपं महत्तेजः
ताभ्यामेव संप्रदानाभ्याम् प्रददातीति पुनरपि द्वितीयः—
( वसुप्रदः ).
निरूचाते हि वसुप्रदशब्दो. ❀ २०
तथा सः वसुदेवस्य वसुभिः दीव्यतः आनकदुन्दुभेः अपत्यमिति—

निरु०—६९८ देवकीवसुदेवाभ्यामात्मरूपं महद्धनम् ॥ ५३५ ॥
पुत्रत्वेन प्रकर्षेण ददातीति ( वसुप्रदः ) ।
६९९ देवकीवसुदेवाभ्यां स्वपितृत्वं महद्वसु ॥ ५३६ ॥
तेजो यः प्रददातीति ( वसुप्रद ) इतीरितः । २५

{ ३३४ / ७१४ } (७००) वासुदेवो,

ॐ वासुदेवाय नमः ।

भा०—( वासुदेवः ). ❋

५ इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः
श्रीरङ्गराजदिव्याज्ञालब्ध श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे

भगवद्गुणदर्पणे

सप्तमशतकं समाप्तम् ।

१० निर्व०—( वासुदेवः ).

(१) "दिवु, क्रीडादौ०" धा०दिवा०कौ०पृ०४५२ कापवादः. पचादिगणे पाठात् अच्. गुणः. तृतीयासमासः. ततः (२) "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४॥ कौ०पृ०२११ इति अत इञोपवादः. अपत्ये अण्. आदिवृद्धिः.

१५ (३) "यस्य०" इति लोपः. ❋ ६।४।१४८॥कौ०पृ०५६

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते

श्रीपराशरभट्टाचार्यभाषित-
श्रीमद्विष्णुसहस्रनामभाष्यानुगे भगवन्नामसहस्रनिर्वचने

२० सप्तमशतकं संपूर्णम् ।

निरु०—७००वसुदेवापत्यतश्च ( वासुदेवः ) प्रकीर्तितः ॥५३७॥

# अथ अष्टमशतकप्रारम्भः।

( ७०१ ) वसुः, ( ७०२ ) वसुमनाः,

ॐ वसवे नमः । ॐ वसुमनसे नमः । ५

भा०—एतदवतारागमं क्षीरार्णवनिकेतनत्वमाह—
( वसुः ).
तत्र वसतीति यथा
(१)"स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः"भा०स०४७—२६।
( २ ) " एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्य- १०
ङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् " हरि० ११३—६२ ।
इत्यादि. ❀
तत्र लक्ष्मीजन्मभूमौ वसतोपि वसौ वसुदेवे मनोस्येति—
( वसुमनाः ).
( १ ) " देवदत्तो दत्तः सत्यभामा भामेतिवत् वसुः - वसुदेवः " १५
इति महाभाष्यविदः. ❀

निर्व०—तथैतदवतारागमरूपं क्षीरार्णवनिकेतनत्वमुच्यते
वचनात् क्षीरोदे वसतीति— ( वसुः ).
उक्तो ह्ययं शब्दः. ❀
तत्र लक्ष्मीजन्मभूमौ वसतोपि वसौ नामैकदेशेन निर्देशः, . २०
वसुदेवे मनोस्येति—
( वसुमनाः ).
मनेरसुनि मनश्शब्द उक्तः. समासः. असन्तदीर्घः इत्यादि. ❀

निरु०—७०१ वसतीति ( वसु ) र्लोकहितेच्छुः क्षीरसागरे ।
७०२ जन्मभूम्यर्णवे लक्ष्म्या वसतो यस्य वै मनः ॥ ५३८ ॥ २५
अस्तीति वसुदेवे हि स स्याद् ( वसुमनाः ) परम्।

(७०३) हविः, ॥

ॐ हविषे नमः।

भा०—देवकीवसुदेवसमीपवासरुचिरपि अपिदप्रेमाकुलाभ्यां
५ ताभ्यां कंसात् गुप्तये नन्दयशोदाभ्यामादीयतेति—
(हविः). ❀
जायमान एव असुरकृतापदपनोदनः सतां गतिः—

निर्व०—देवकीवसुदेवसमीपवासरुचिरप्ययम् कंसात् गुप्त-
ये नन्दयशोदाभ्यां कर्तृभ्याम् अपदप्रेमाकुलाभ्यां
१० ताभ्याम् अपादानाभ्यां हूयते- आदीयत इति—
(हविः).
(१) " हु, दानादानयोः " धा० जुहो० कौ०पृ०४४९
(२) " आदाने च "
(३) " प्रीणनेपि " इहादानकर्मायम्.
१५ (४) " अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः " उणा०पा०२कौ०
पृ०६२४
इति इसिः. गुणावादेशौ. आविष्टलिङ्गोपमित्याँ[1४२]"दि. नाम्नो-
स्संहितायाम्,
(५) " भोभगोअघोअपूर्वस्य योशि " ८।३।१७॥ कौ०पृ०२७
२० इति रोर्यः. तस्य,
(६) " हलि सर्वेषाम् " ८।३।२२॥कौ०पृ०२८
इति लोपः. ❀
जायमान एव असुरापदपनोदनतया सतां गतिः प्राप्य इति—

निरु०—७०३ नन्दगोपयशोदाभ्यां कंसोपद्रवशान्तये ॥ ५३९ ॥
२५ आदीयते स्वीक्रियते स (हविः) परिकीर्तितः।

श्लो० ॥ ७५ ॥ ( ७०४ ) सद्गतिः, ( ७०५ ) सत्कृतिः,

ॐ सद्गतये नमः । ॐ सत्कृतये नमः ।

भा०—( सद्गतिः ). यथा, ५
( १ ) " सन्तसन्तोपमधिकं प्रशम चण्डमारुतः"वि०पु०५-३-४।
इति. ❀
सत्यः सकलसंसारनिगलच्छेदिन्यः दधिनवनीतचोरणोलूखलबन्ध-
रिङ्खणरासक्रीडादिका मुग्धकृतयोऽस्येति—
( सत्कृतिः ). यथा, १०
( १ ) " जन्म कर्म च मे दिव्यम्" [१४३] इत्यादि. ❀ गी० १०-३९॥

निर्व०—( सद्गतिः ).
गमेः कर्मणि क्तिनि गतिशब्द उक्तः. अस्तेश्शतरि सत्शब्दश्च.
एवमेवायमुत्तरत्रापि. विशेषस्तूच्यते, जश्त्वम्. आविष्ट-
लिङ्गोयम् [१४४] इत्यादि. ❀ १५
तथा सत्यः सकलसंसारनिगलच्छेदनेन शोभनाः कृतयः दधिहैय-
ङ्गवीनचोरणोलूखलबन्धनरिङ्खणरासक्रीडनादिकाः
मुग्धचेष्टाः अस्येति—
( सत्कृतिः ).
करोतेः क्तिन् क्यप्, इत्यनुवृत्तौ, २०
( १ ) " कृञः श च" ३।३।१००॥ कौ०पृ०६५९

निरु०—७०४ उत्पन्न एव कंसादिकृतबाधापनोदनात् ॥ ५४० ॥
सता प्राप्यतया चैव ( सद्गतिः ) समुदाहृतः ।
७०५ रासक्रीडादिकृतयः सत्यो यस्य च ( सत्कृतिः ) ॥ ५४१ ॥

## (७०६) सत्ता, (७०७) सद्भूतिः,

ॐ सत्तायै नमः। ॐ सद्भूतये नमः।

५ भा०—सत्तापि सतां स्वयमेवेति—
(सत्ता).
न हि तद्व्यतिरेकेण किंचित् स्यात्.
(१) "न तदस्ति विना यत् स्यात् मया" इति. ※ गी०४-९।
सतां पुत्रो मित्रं बन्धुः दूतः सारथिः अन्यच्च तद्भवन्—
१० (सद्भूतिः).

निर्व०—इति शः. चात् क्तिन्. योगविभागात् क्यप् च स्त्रियाम् भवति. इह तु क्तिन्. अगुणः. अनिट्. अस्तेश्शतरि सच्छब्दात् उगित्त्वात् स्त्रियाम्,
(२) "उगितश्च" इति ङीप् ४।१।६॥ कौ० पृ०८९
१५ स्त्रियाः पुंवदित्यादिना समासे पूर्वपदस्य पुंवद्भावः. ※
सतां सत्तापि स्वयमेवेति—
(सत्ता). सच्छब्दात्,
(१) "तस्य भावस्त्वतलौ" ५।१।११९॥कौ०पृ०३०९
इति भावे तल् तलन्तम् स्त्रियाम्. अतः टाबादि. सांहिते जश्त्व-
२० चर्त्वे. आविष्टलिङ्गोयम्. ※
सतां भूतिः पुत्रमित्रबन्धुदूतसारथ्यादिबहूभवनेन विभूतिरिति—
(सद्भूतिः).

निरु०—७०६ स्वयमेव सतां सत्ता यस्मात् (सत्ते) ति कीर्त्यते।
२५७०७ सतां पुत्रकलत्रादिभूत्या (सद्भूति) रुच्यते॥५४२॥

(७०८) सत्परायणः, ।

ॐ सत्परायणाय नमः ।

भा०—(१) " कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
कृष्णः परायणं तेषाम्" इति. ❀ भा०द्रो०१७३—२४ । ५
(सत्परायणम्). आह च.
(१) " मामेवैष्यसि " इति. गी०१८—६५ ।
पुल्लिङ्गत्वे सन्तोस्य परायणमिति—(सत्परायणः). यथा,
(२) " मम प्राणा हि पाण्डवाः " इति. भा०उ०९०—३३ ।
(३) "पाण्डवानां भवान्नाथो भवन्तं च श्रिता वयम्" भा० १०
स० २१—१० ।
(४) " ज्ञानी त्वात्मैव मे मतम् " इति. ❀ गी०७—१८ ।

निर्व०—भुवः क्विन्. अगुणः.
(१) " तितुत्र० " इति नेट्. ७।२।९॥ कौ०पृ०६०८
(२) " श्र्युकः०" इति वा. ❀ ७।२।११॥ कौ०पृ०६०८ १५
सतां परं च तत् अयनं स्थानं चेति— (परायणम्) इति वा,
सन्तः स्वप्राणभूततया च स्वात्मतया च परायणमस्येति वा—
(सत्परायणम्) (सत्परायणो) वा,
उजयथापि पाठः. एतेः अयतेर्वा. अधिकरणे ल्युट्" इत्यादि.
पृधातोरचि पर उक्तः. सांहितो दीर्घः. संज्ञायाम् णत्वम्. २०
इदं चोक्तं प्रागेव तत्पुरुषे आविष्टलिङ्गत्वात् क्लीवता.
बहुव्रीहौ तु विशेष्यनिघ्नत्वात् पुंस्त्वम्. ❀

निरु०—७०८ सतां परं स्यादयनं सन्तो यस्योत्तमायनम् ।
स (सत्परायणं) स्यात्तो यद्वा स्यात् (सत्परायणः) ॥५४३॥

( ७०१ ) शूरसेनो,

ॐ शूरसेनाय नमः ।

भा०—यादवपाण्डवादयो भूभारावतरणसहायाः अस्येति—
५ ( शूरसेनः ). ॐ

निर्व०— असहायशूरत्वेपि भूभारावतरणे शूराः विक्रान्ताः
सेनाः तदनुग्रहात् सहायकपरिवारसहिताः
यादवपाण्डवादिपृतना अस्येति—
( शूरसेनः ).
१० ( १ )" षिञ्, बन्धने " धा० स्वादिः कौ०पृ०४६१
षस्सः. नप्रकरणे.
(२) "कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्"उणा०पा०३कौ०पृ०६२५
इति नः.
( ३ ) "नेड्०" अनिट्. गुणः. ७।२।८॥कौ०पृ०५८१
१५ ततस्त्रियामतष्टावादि. शुरसौत्रो गत्यर्थः. ततो रक्प्रकरणे,
( ४ ) " शुसिचिमीनां दीर्घश्च " उणा० पा०२कौ०पृ०६२०
इति रक्. दीर्घश्च. अनिट्. अगुणः. शूरयतेर्वा पचाद्यच्.
णेर्लोपः. तत उभयतष्टावादि. समासे पूर्वपदस्य पुंव-
द्भावः.
२० ( ५) " गोस्त्रियोः० " १।२।४८॥ कौ०पृ०१२९
इति उपसर्जनह्रस्वः. ॐ
यादववंशोद्धरणेन यदूनां तदपत्यलक्षणया यादवानाम्
श्रेष्ठः प्रशस्यतम इति—

निरु०—७०१भूभारहरणार्थाय यादवाः पाण्डवाश्च ये ।
२५ शूरास्सहाया यस्येति ( शूरसेनः ) स कथ्यते॥५४४॥

(ā„ā„§ā„Ķ) ā¤Ŋā¤ĶāĨā¤ķāĨā¤°āĨ‡ā¤·āĨā¤ ā¤ƒ, (ā„ā„§ā„§) ā¤ļā¤ĻāĨā¤Ļā¤ŋā¤ĩā¤ūā¤ļā¤ƒ,

ā¤ā¤ Ā ā¤Ŋā¤ĶāĨā¤ķāĨā¤°āĨ‡ā¤·āĨā¤ ā¤ūā¤Ŋ ā¤Ļā¤Ūā¤ƒ āĨĪ ā¤ā¤ Ā ā¤ļā¤ĻāĨā¤Ļā¤ŋā¤ĩā¤ūā¤ļā¤ūā¤Ŋ ā¤Ļā¤Ūā¤ƒ āĨĪ

ā¤ā¤ūā„Ķâ€“ (ā„§) " ā¤…ā¤Ŋā¤‚ ā¤ļ ā¤•ā¤ĨāĨā¤Ŋā¤Īāā¤ū ā¤Ŧā¤ū ā¤°ā¤ūā¤ĢāĨ‹ā¤ƒ ā¤ŠāĨā¤°ā¤ūā¤Ģā¤ūā¤°āĨā¤Ĩā¤ĩā¤ŋā¤ķā¤ūā¤°ā¤ĶāĨˆā¤ƒ āĨĪ ā¤—āĨ‹- ā„Ŧ
ā¤Šā¤ūā¤ēāĨ‹ ā¤Ŋā¤ūā¤Ķā¤ĩā¤‚ ā¤ĩā¤‚ā¤ķā¤‚ ā¤Ūā¤—āĨā¤Ļā¤Ūā¤āĨā¤ŊāĨā¤ĶāĨā¤§ā¤°ā¤ŋā¤·āĨā¤Ŋā¤Īā¤ŋ" ā¤‡ā¤Īā¤ŋ. ā¤ĩā¤ŋā„Ķā¤ŠāĨā„Ķ āĨĪ
(ā¤Ŋā¤ĶāĨā¤ķāĨā¤°āĨ‡ā¤·āĨā¤ ā¤ƒ). âŧ
ā¤Ūā¤ĻāĨā¤·āĨā¤Ŋā¤§ā¤°āĨā¤Ūā¤ķāĨ€ā¤ēā¤ĪāĨā¤ĩāĨ‡ā¤Šā¤ŋ ā¤ļā¤Īā¤ūā¤‚ ā¤ļā¤Ļā¤•ā¤ūā¤ĶāĨ€ā¤Ļā¤ū ā¤ĩā¤ŋā¤ķāĨā¤°ā¤ūā¤ĻāĨā¤Īā¤ŋā¤āĨ‚ā¤Ūā¤ŋā¤ƒâ€“
(ā¤ļā¤ĻāĨā¤Ļā¤ŋā¤ĩā¤ūā¤ļā¤ƒ). ā¤Ŋā¤Ĩā¤ū,
(ā„§) " ā¤ļā¤Ļā¤ĻāĨā¤Ķā¤Ļā¤ūā¤ĶāĨā¤ŊāĨˆā¤°āĨā¤ŪāĨā¤Ļā¤ŋā¤Ļā¤ŋā¤ā¤ŋā¤ƒ ā¤ļā¤ŋā¤ĶāĨā¤§ā¤ŊāĨ‹ā¤—āĨˆā¤°ā¤•ā¤ēāĨā¤Ūā¤·āĨˆā¤ƒ āĨĪ ā¤ļā¤‚ā¤šā¤ŋā¤ĻāĨā¤ĪāĨā¤Ŋā¤Ūā¤ūā¤Ļā¤‚ ā„§ā„Ķ
ā¤Īā¤ĪāĨā¤°ā¤ļāĨā¤ĨāĨˆā¤°āĨā¤Ļā¤ūā¤ļā¤ūā¤—āĨā¤°ā¤ĻāĨā¤Ŋā¤ļāĨā¤Īā¤ēāĨ‹ā¤šā¤ĻāĨˆā¤ƒ" ā¤‡ā¤Īā¤ŋ. âŧ ā¤ĩā¤ŋā„Ķā¤Ŧâ€“ā„Ūā„Ŧā„Ļ āĨĪ

ā¤Ļā¤ŋā¤°āĨā¤ĩā¤ŋā„Ķâ€“(ā¤Ŋā¤ĶāĨā¤ķāĨā¤°āĨ‡ā¤·āĨā¤ ā¤ƒ).
ā¤ŠāĨā¤°ā¤ķā¤ļāĨā¤Ŋā¤ķā¤ŽāĨā¤Ķā¤ūā¤ĪāĨ ā¤Ļā¤ŋā¤·āĨā¤Šā¤ūā¤Ķā¤ŋā¤Īā¤ūā¤ĪāĨ ā¤†ā¤Īā¤ŋā¤ķā¤ūā¤Ŋā¤Ļā¤ŋā¤•āĨ‡ ā¤‡ā¤·āĨā¤ ā¤Ļā¤ŋ
ā¤ķāĨā¤°ā¤ūā¤ĶāĨ‡ā¤ķāĨ‡ ā¤ŠāĨā¤°ā¤•āĨƒā¤Īā¤ŋā¤ā¤ūā¤ĩāĨ‡ ā¤—āĨā¤ĢāĨ‡ ā¤š ā¤ķāĨā¤°āĨ‡ā¤·āĨā¤ ā¤ķā¤ŽāĨā¤Ķ ā¤‰ā¤•āĨā¤Īā¤ƒ.
(ā„§) " ā¤Ŋā¤ĪāĨ€, ā¤ŠāĨā¤°ā¤Ŋā¤ĪāĨā¤ĻāĨ‡ " ā¤§ā¤ūā„Ķā¤āĨā¤ĩā¤ūā¤Ķā¤ŋā¤ƒ ā¤•āĨŒā„Ķ ā¤ŠāĨƒā„Ķ ā„Đā„Ūā„Đ ā„§ā„Ŧ
(ā„Ļ) " ā¤…ā¤Ģā¤ķāĨā¤š " ā¤‡ā¤Īā¤ŋ ā¤šā¤•ā¤ūā¤°ā¤ūā¤ĪāĨ ā¤‰ā¤Ģā¤ūā„Ķā¤Šā¤ūā„Ķā„§ā¤•āĨŒā„Ķā¤ŠāĨƒā„Ķā„Ží„Ķā„Ŋ
ā¤Žā¤ūā¤đāĨā¤ēā¤•ā¤ūā¤ĶāĨā¤Ŋā¤ūā¤ĻāĨā¤Ŋā¤ĪāĨ‹ā¤ŠāĨā¤ŊāĨā¤ƒ. ā¤ŠāĨƒā¤·āĨ‹ā¤Ķā¤°ā¤ūā¤Ķā¤ŋā¤ĪāĨā¤ĩā¤ūā¤ĪāĨ ā¤Īā¤ļāĨā¤Ŋ ā¤Ķā¤ƒ. âŧ
ā¤Ūā¤ĻāĨā¤·āĨā¤Ŋā¤§ā¤°āĨā¤Ūā¤ķāĨ€ā¤ēā¤ĪāĨā¤ĩāĨ‡ā¤Šā¤ŋ ā¤ļā¤Īā¤ūā¤‚ ā¤ļā¤Ļā¤•ā¤ūā¤ĶāĨ€ā¤Ļā¤ūā¤‚ ā¤Ļā¤ŋā¤ĩā¤ūā¤ļā¤ƒ ā¤šā¤ŋā¤ĪāĨā¤Īā¤ĩāĨƒā¤ĪāĨā¤ĪāĨ‡ā¤ƒ
ā¤†ā¤ĩā¤ūā¤ļā¤āĨ‚ā¤Ūā¤ŋā¤°ā¤ŋā¤Īā¤ŋâ€“
(ā¤ļā¤ĻāĨā¤Ļā¤ŋā¤ĩā¤ūā¤ļā¤ƒ). ā„Ļā„Ķ
(ā„§) " ā¤ĩā¤ļ, ā¤Ļā¤ŋā¤ĩā¤ūā¤ļāĨ‡ " ā¤Ļā¤ŋā¤ŠāĨ‚ā¤°āĨā¤ĩā¤ƒ. ā¤§ā¤ūā„Ķā¤āĨā¤ĩā¤ūā¤Ķā¤ŋā¤ƒ ā¤•āĨŒā„Ķā¤ŠāĨƒā„Ķā„Šā„Đā„Ļ
(ā„Ļ) "ā¤đā¤ēā¤ķāĨā¤š" ā¤‡ā¤Īā¤ŋ ā¤…ā¤§ā¤ŋā¤•ā¤°ā¤ĢāĨ‡ ā¤ĩā¤āĨ. ā„Đ|ā„Đ|ā„§ā„Ļā„§||ā¤•āĨŒā„Ķā¤ŠāĨƒā„Ķā„Žā„Žā„Đ
ā¤ĩāĨƒā¤ĶāĨā¤§ā¤ŋā¤ƒ. ā¤ļā¤ĩā¤ķā¤ŽāĨā¤Ķ ā¤‰ā¤•āĨā¤Īā¤ƒ.

ā¤Ļā¤ŋā¤°āĨā„Ķâ€“ā„ā„§ā„Ķ ā¤Ūā¤—āĨā¤Ļā¤‚ ā¤ĪāĨ ā¤Ŋā¤ūā¤Ķā¤ĩā¤‚ ā¤ĩā¤‚ā¤ķā¤ŪāĨā¤ĶāĨā¤§ā¤°ā¤ŋā¤·āĨā¤Ŋā¤Īā¤ŋ ā¤Ŋā¤ķāĨā¤š ā¤ļā¤ƒ āĨĪ
(ā¤Ŋā¤ĶāĨā¤ķāĨā¤°āĨ‡ā¤·āĨā¤ ) ā¤‡ā¤Īā¤ŋ ā¤–āĨā¤Ŋā¤ūā¤ĪāĨ‹ ā¤ĩā¤°ā¤ĩā¤°āĨā¤ĢāĨ‹ ā¤ĩā¤‚ā¤ķā¤ĩā¤°āĨā¤§ā¤Ļā¤ƒ āĨĨ ā„Ŧā„Šā„Ŧ āĨĨ ā„Ļā„Ŧ
ā„ā„§ā„§ ā¤ļā¤Ļā¤•ā¤ūā¤Ķā¤ŋā¤Ļā¤ŋā¤ĩā¤ūā¤ļāĨ‹ ā¤đā¤ŋ ā¤Ūā¤ĻāĨā¤·āĨā¤Ŋā¤ĪāĨā¤ĩāĨ‡ā¤Šā¤ŋ ā¤Ŋā¤ƒ ā¤ļā¤Ķā¤ū āĨĪ
(ā¤ļā¤ĻāĨā¤Ļā¤ŋā¤ĩā¤ūā¤ļā¤ƒ) ā¤ļ ā¤ĩā¤ŋā¤œāĨā¤žāĨ‡ā¤ŊāĨ‹ ā¤đāĨā¤Ŋā¤·ā¤ūā¤°āĨā¤Ģā¤ƒ ā¤–āĨā¤Ŋā¤ūā¤Īā¤Ķā¤ūā¤Ŋā¤•ā¤ƒ āĨĨ ā„Ŧā„Šā„Ž āĨĨ

(७१२) सुयामुनः, ॥

ॐ सुयामुनाय नमः ।

भा०—शोभनं पावनं मनोहरं यमुनासंबन्धिजलक्रीडापुष्पा-
५ पचयरासक्रीडादि यस्येति—
(सुयामुनः). ❋
कृष्णत्वे निह्नुतपरभावत्वात्.
(१) "वसन्ति त्वयि भूतानि भूतावासस्ततो हरे" इति—

निर्व०—(३) "यरोनुनासिके०" ८।४।४५॥ कौ०पृ०११
१० इति पाक्षिकोनुनासिकः. ❋
सुशोभनं मनोहरं पावनं यामुनम् यमुनासंबन्धिजल-
केलिपुष्पापचयरासक्रीडादिकम् अस्येति—
(सुयामुनः).
(१) "यम, उपरमे" धा०भ्वादिः कौ०पृ०४३०
१५ उनन्प्रकरणे,
(२) "अजियमिशीङ्भ्यश्च" उणा०पा०३ कौ०पृ०६२०
इति उनन्. स्त्रियामतष्टाबादि. ततः,
(३) "तस्येदम्" ४।३।१२०॥ कौ०पृ०२७१
इति अण्. आदिवृद्धिः.
२० (४) "यस्य०" इति ६।४।१४८॥ कौ०पृ०५६
आलोपः सुपूर्वो बहुव्रीहिः. ❋
वचनात् कृष्णत्वे निह्नुतपरभावोयम्. भूतानामावासः स्थानमिति—

निरु०—७१२ गोपीभिर्यमुनायां तु शोभनं पावनं महत् ।
जलक्रीडादि यस्येति (सुयामुन) इतीरितः ॥ ५४७ ॥

श्लो० ॥७६॥(७१३) भूतावासो, {३३४ / ७००} (७१४) वासुदेवः,

ॐ भूतावासाय नमः। ॐ वासुदेवाय नमः।

भा०— ( भूतावासः. ) ❀ ५
वसुदेवापत्यत्वे द्विषट्काध्यात्मं नियच्छतीति—
( वासुदेवः ). अत एव हि च
( १ ) " जा'ग्र्यव्यूहवासुदेवो माथुरायाद्भुतमायाय "
इति मथुरावतारेण विशेष्यते. ❀
एवं सर्वप्राणालम्भनम्— १०

निर्व०— ( भूतावासः ). वसतिः आङ्पूर्वः.
(१)"हलश्च " इति अधिकरणे घञ्. ३।३।१२१॥कौ०पृ०६६३
वृद्धिः. भवतेः कर्तरि क्तः.
( २ ) " श्युकः० " ७।२।११ ॥ कौ०पृ०४२५
इति नेट्. दीर्घस्सांहितः. ❀ १५
वसुदेवापत्यत्व एव द्विषट्काध्यात्मविषयतयायम्
वासुश्चासौ देवश्चेति—
( वासुदेवः ).
प्रागेव द्विषट्काध्यात्मविषयप्रकरणे व्यस्तारि चानयो-
रर्थः दीव्यतेरचि वसेर्ण्यन्तात् उप्रत्यये तत एव तु शुद्धात् २०
उणि च यथायथम् प्रस्फुटम् परिनिष्पत्तिश्च. ❀
एवम् सर्वेषाम् आत्मनाम् असूनां प्राणानाम् निलयः
आलम्भनमिति—

निरु०—७१३ यस्मिन् वसन्ति भूतानि ( भूतावासः ) स कथ्यते ।
७१४ वसुदेवापत्यतया द्वादशाध्यात्ममञ्जसा ॥ ५४८ ॥ २५
नियच्छति सदा यस्तु ( वासुदेवः ) स ईरितः ।

१ अग्रव्यूहः ।

(७१५) सर्वासुनिलयो,

ॐ सर्वासुनिलयाय नमः ।

भा०—( सर्वासुनिलयः ). यथा,
५ (१) "विना कृष्णेन गोव्रजाः"
(२) "असूर्यमिव सूर्येण निवातमिव वायुना। कृष्णेन समुपेतेन जहृषे भारतं पुरम्" भा०स०३३—१५।
"इत्यादि. ❀
तेषामेव सर्वकर्मकरत्वेपि—

१० निर्व०—( सर्वासुनिलयः ).
(१) "लीङ्, श्लेषणे" धा० दिवा०कौ०पृ०४५४
(२)"ली, श्लेषणे" वा दिवादिः. क्र्यादिश्च. निपूर्वः. धा०क्र्यादिः कौ० पृ० ४७६
(३) "एरच्" ३ । ३ । ५६ ॥ कौ०पृ०६५३
१५ इत्यधिकरणे अच् गुणायादेशौ.
(४) "विभाषा लीयतेः" इति.६।१।५१ ॥ कौ०पृ०४५४
यका निर्देशात्. उभयोरप्यात्वमासौ
(५) "निमिमीलियां खल्चोरात्वन्नेति वक्तव्यम्" ६।१।५१॥ कौ० पृ० ४५४
२० इति तत्प्रतिषेधः.
(६) "अस, भुवि" धा० अदा० कौ० पृ० ४४४
(७) "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इति. उ० पा०१ कौ० पृ० ६०९
उः. सर्वं उक्तः. दीर्घः. ❀
२५ तेन एवं सर्वकर्मकरत्वेपि न तेषां किंचित् कृतम् मयेत्यवितृततया वा, स्वभक्तविपयान्यकर्तृकापराधान् सोढुं वा अलः पर्याप्तो नेति—

निरु०—७१५(सर्वासुनिलय)स्तु स्यात् सर्वप्राणावलम्बनम् ॥५४१॥

१ द्रवीकरणे इति पाठः ग्रन्थान्तरे ।

(७१६) ऽनलः, ।

ॐ अनलाय नमः ।

भा०—(अनलः).
न किंचित् कृतमेषां मयेत्यवितृप्तः. ५
(१) "ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति" इति. ❋ भा० उ०२८—२२ ।
स्वभक्तविषयापराधं सोढुमनलमिति वा. यथाह,
(१) "द्वौ तु मे वधकालेऽस्मिन् न क्षन्तव्यौ कथञ्चन । यज्ञविघ्नकरं हन्या पाण्डवानां च दुर्हृदम्" इति. ❋ १०
गोवर्धनोद्धरणपारिजातापहरणबालदोष्पण्डखण्डनादौ
देवानां दर्पमात्रं हृतवान् इति—

निर्व०—(अनलः).
(१) "अलु, भूषणपर्याप्तिवारणेषु" धा०भ्वादिः कौ०पृ०४०४
पचाद्यच्, मान्तस्य ह्रस्य स्वरादिपाठादव्ययत्वम्. १५
यद्वा मान्तादेवालमोऽव्ययात् पर्याप्तिवचनात्
मत्वर्थीयोऽर्शआद्यच्.
(२) "अव्ययानां भमात्रे टिलोपः" ६।४।१४४॥ कौ०पृ०१३३
इति टेर्लोपः. नञ्समासः नञो नलोपः. नुट्. ❋
गोवर्धनोद्धरणपारिजाताहरणबालदोर्दण्डपण्ड- २०
खण्डनादौ देवानाम् दर्पं गर्वं हन्ति स्मेति—

निरु०—७१६सर्वं कृत्वापि गोपाना नच किंचिन्मया कृतम् ।
इत्येवमवितृप्तो यो (ह्यनलः) परिकीर्तितः ॥ ५५० ॥
स्वभक्तान्यैः कृतं मन्तुं नालं सोढुं स वा (ऽनलः) ।

( ७१७ ) दर्पहा, ( ७१८ ) दर्पदो,

ॐ दर्पघ्ने नमः । ॐ दर्पदाय नमः ।

५ भा०—( दर्पहा ). ❋
शत्रुशमनदुर्जयद्वारवतीकरणशङ्खपद्मनिधिसुरतरुसुधर्माहरणादिना नि-
र्भरीकृतेभ्यो यादवेभ्यो मधुपानादिदर्पं दत्तवान् इति—
( दर्पदः ). ❋
अथापि स्वयम्—

१० निर्व०— ( दर्पहा ).
हनः क्विप्. अयं सार्वकालिको वा. अन्यथा चापि प्रागुक्तः.
( १ ) "दृप, हर्षमोहनयोः" धा० दिवा० कौ०पृ०४५८
भावे घञ्. गुणो रपरः. हन्नन्तदीर्घ "इत्यादि. ❋
शत्रुशमनदुर्जयद्वारवतीकरणशङ्खपद्मनिधिसुरतरुसुधर्माहरणादिना नि-
१५ र्भरीकृतेभ्यो यादवेभ्यो दर्पम् मधुपानमदम् ददातीति—
( दर्पदः ). ददातेः,
( १. ) "आतोनुपसर्गे०" इति कः. ३।२।३॥ कौ०पृ०५७०
आलोपः. दर्प उक्तः. ❋
अथापि स्वयं दृप्तः पारमेष्ठ्यतेजसा गर्वितः स नेति अदृप्त इति वा—

२० निरु०—७१७ गोवर्धनस्योद्धरणे पारिजातपरिग्रहे ॥ ५५१ ॥
बालदोर्दण्डषण्डानां खण्डनादौ तदा तदा ।
देवानां वै दर्पमात्रं हृतवान्यः स ( दर्पहा ) ॥ ५५२ ॥
७१८ मथुरायां यादवेभ्यो मधुपानादिना ततः ।
दर्पं च दत्तवान् योऽसौ ( दर्पदः ) परिकीर्तितः ॥ ५५३ ॥

(७१९) ऽद्दप्तो, (७२०) दुर्धरो,

ॐ अद्दप्ताय नमः। ॐ दुर्धराय नमः।

भा०—(अद्दप्तः). ५
सभापर्वणि,
(१) "एवंविधानि कर्माणि कृत्वा गरुडवाहनः। न विस्मयमुपा-
गच्छन् पारमेष्ठ्येन तेजसा" इति. भा०स०५१—२९।
यशोदानन्दलालने—(दप्तः) वा, ❋
बाललीलादिप्रसङ्गेषु मत्तमातङ्गवत् ताभ्यां— १०
(दुर्धरः).
दुर्वारचञ्चलचेष्टितः इति यथा साह.
(१) "यदि शक्नोषि गच्छ त्वमतिचञ्चलचेष्टित" इति. ❋
वि०पु०५-६-१५।
दुरात्मनां वा (दुर्धरः). यथा, १५

निर्व०—(अद्दप्तः).
नन्दयशोदालालनगर्वित इति वा, यथाक्रममदप्तो दप्तो वा
(१) "दृप, हर्षमोहनयोः" क्तः. धा०दिवा०कौ०पृ०४५८
अनिट्. अगुणः. पूर्वत्र नञ्समासे नञो नलोपो विशेषः. नाम्नोः
संहिते पूर्वरूपं च. उत्तरत्र तु न ते इति विवेकः. ❋ २०
बाललीलादिषु दुर्वारातिचञ्चलचेष्टिततया मत्तमातङ्गवत्ताभ्याम्
नन्दयशोदाभ्यां धर्तुमशक्य इति—
(दुर्धरः).
(१) "धृञ्, धारणे" दुरुपसर्गः. धा०भ्वादिः कौ०पृ०४२३

निरु०—७१९ अथाप्यगर्वितो योसा (अद्दप्तः) स उदाहृतः। २५
७२० बाललीलाप्रसङ्गेषु यशोदानन्दलालनात् ॥ ५५४ ॥
दप्तो मत्तो भवेत्ताभ्यां दुर्ग्रहो (दुर्धरो) मतः।

( ७२१ ) ऽथाऽपराजितः, ॥

ॐ अपराजिताय नमः ।

भा०—( १ ) " इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः । पटे-
५ नाग्निं प्रज्वलितं यथा बालो यथाबलाः " इति भा०उ०१२९-१६।
( २ ) " दुर्ग्रहः पाणिना वायुर्दुस्पर्शः पाणिना शशी । दुर्धरा
पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात् " इति. भा०उ०१२९-४०।
"इत्यादि. ❋
अथ भारतसंग्रामे, निष्परिग्रहा अपि तत्परिग्रहात् पञ्चापि पाण्डवाः,
१० शतेनापि बहूपकरणरूढमूलैर्वा धार्तराष्ट्रैर्न पराजिता इति—
( अपराजितः ).

निर्व०—( १ ) " ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् " ३।३।१२६॥
कौ०पृ०६६४ इति कृच्छ्रार्थे दुसि उपपदे खल्. गुणो रपरः. दुस-
रसोरुत्वम्. द्वित्वादिकम् यथाशास्त्रमूह्यम्. ❋
१५ अथ शब्दोनन्तरार्थः. वक्ष्यमाणनारायणपरिग्रहकर्तृकजयद्ध्रौव्यद्यो-
तनात्. मङ्गलार्थो वा. भारतसंग्रामे निष्परिग्रहाणामपि पञ्चानाम्
पाण्डवानां तदेकपरिग्रहात् बहूपकरणरूढमूलैः शतेनापि धार्तराष्ट्रैः
अपराजिततया न सन्ति पराजिताः स्वगृह्याः अस्येति वा, उक्तरीत्या
अपराजिताः स्वगृह्याः पञ्च पाण्डवाः ते अस्य सन्तीति वा—
२० ( अपराजितः ).

निरु०—७२१ दुर्योधनादिभिर्नित्यं रूढमूलैः पराजयः ॥ ५५५ ॥
न यस्य कुत्रचिद्वापि सो ( ऽपराजित ) ईरितः ।

भा०—यथा आरण्यके कर्णाय इन्द्रः.

(१) " एकं हनिष्यसि रिपुं गर्जन्तं तं महामृधे । न तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ यमाहुर्वेदविदुषः वाराहमजितं हरिम् । नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते " भा० आर० ५ ३०९–२८ ।

जयद्रथाय रुद्रः.

(२) " अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि । ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् ॥ यमाहुरमितं देवं शङ्खचक्रगदाधरम् । प्रधानस्योत्तविदुषां तेन कृष्णेन रक्ष्यते " भा० आर० १० २६०–७५ ।

(३) " यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् । ध्रुव एव जयस्तस्य न तस्यास्ति पराजयः" भा०उ० ५२–१२ ।

भीष्मद्रोणादयश्च.

(४) " शक्तोहं धनुषैकेन निहन्तुं सर्वपाण्डवान् । यद्येषान्नो १५ भवेद्गोप्ता विष्णुः कारणपूरुषः" भा० ।

(५) "ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः। श्रीर्ध्रुवा चापि दक्षेषु ध्रुवो नारायणे जयः " भा० ।

(६) " अजयः शाश्वतो ध्रुवः " रा० यु० ११४–१५ ।

(७) " अजितः खड्गधृक्" रा० यु० १२०–१४ । २०

(८) " यतः कृष्णस्ततो जयः " भा० उ० ६–७९ ।

(९) " यत्र योगीश्वरः कृष्णः" "इत्यादि. गी० १८–७८ ।

आयुर्वेदे चरके औषधपेषणमन्त्रे,

(१०) " यथाहं नाभिजानामि वासुदेवे पराजयम् । मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ॥ एतेन सत्यवाक्येन सिध्यतामगदो ह्ययम् " आयुर्वेद । २५

## श्लो० ॥ ७७ ॥ (७२२) विश्वमूर्तिर्,

ॐ विश्वमूर्तये नमः ।

भा०—वैतरणे च विषहरणमन्त्रं वदन्

५ (१) "रत्नाकर इवाक्षोभ्यो हिमवानिव चाचलः । जातवेदा इवाधृष्यो नारायण इवाजयः" इति. ❀ वैतरणे ।

कथं दुर्बलान् बलवन्तो न जयन्ति, सर्वस्य तच्छरीरत्वात् न हि स्वशरीरम् स्वानिष्टे चेष्टते. इदमभिप्रेत्याह—

(विश्वमूर्तिः). यथा,

१० (१) "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इति. गी० १०—२०।

निर्व०—(१) "जि, जये" धा० भ्वादिः कौ० पृ० ४०५ परापूर्वः. कर्मणि क्तः. अनिट्. अगुणः. पूर्वत्र नञ्पूर्वो बहुव्रीहिः. अपरत्र तत्पूर्वः. तत्पुरुषः. उभयत्रापि नञो नलोपः. तत्पुरुषे तु ततो मत्वर्थीयोऽर्श आद्यच्.

१५ (२) "यस्य०" इति लोपः ६।४।१४८ ॥ कौ०पृ० ५६

अत्र च प्रमाणसहस्रमनुसन्धेयम्. ❀

अथ दुर्बलानामपि बलवदजय्यताप्रयोजकं स्वशरीरस्य स्वानिष्टचेष्टानौचित्याभिप्रायकम् सर्वस्य च तच्छरीरत्वमभिधीयते. विश्वं कृत्स्नमपि प्रपञ्चजातम् मूर्तिश्शरीरमस्येति—

२० (विश्वमूर्तिः).

(१) "मूर्छा, मोहसमुच्छ्राययोः" भ्वा. धा० भ्वादिः कौ० पृ० ३९०

(२) "अकर्तरि च कारके०" इत्यनुवृत्तौ, ३।३।१९॥ कौ० पृ० ६४७

(३) "स्त्रियां क्तिन्" इति क्तिन्, ३।३।९४॥ कौ० पृ० ६५८

निरु०—७२२ विश्वं मूर्तिस्तनुर्यस्य (विश्वमूर्तिः) स्तु स स्मृतः ॥५५६॥

(७२३) महामूर्तिर्, (७२४) दीप्तमूर्तिर्,

ॐ महामूर्तये नमः । ॐ दीप्तमूर्तये नमः ।

भा०—विश्वाश्रयमूर्तिः— ५
(महामूर्तिः). यथा,
(१) " *इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमर्हसि* " इति. ❀ गी० ११—७ ।
यत् किंचित् केनचित् गुणेन दीप्तं तदस्य विशेषेण मूर्तिरिति—
(दीप्तमूर्तिः). यथा, १०

निर्व०—(४) " तितुत्र० " इति नेट्. ७।२।९॥ कौ०पृ०६०८
(५) " रालोपः " ६।४।२१ ॥ कौ० पृ० ५११
इति झलादौ प्रत्यये रात् छस्य लोपः.
(६) " हलि च " ८।२।७७॥ कौ०पृ० ६३
इति दीर्घः. द्वित्वादि विशेः कनि विश्व उक्तः. ❀ १५
विश्वरूपप्रदर्शने विश्वाश्रयतया महती मूर्तिरस्येति—
(महामूर्तिः).
निरूढे हि मूर्तिशब्दः. इत्थम् उत्तरत्रापि. महच्छब्दश्च प्रागेवोक्तः.
ततश्चानुवद्भावात् स्त्रियाम्.
(१) " उगितश्च " ४।१।६॥ कौ०पृ०८९ २०
इति ङीप्. पुंवद्भावः. महत आत्वादि. ❀
वचनात् दीप्तं येन केनचित् दीप्तं यत्किञ्चिन्मूर्तिः स्वतेजोंशसंभवतया विशेषेण तनुः अस्येति—(दीप्तमूर्तिः).

निरु०—७२३ विश्वैकाश्रयमूर्तित्वा (न्महामूर्ति) रिति स्मृतः ।
७२४ यत्किञ्चित्केनचिद्दीप्तं गुणेनात्र विशेषतः ॥ ५५७ ॥ २५
तत्सर्वं मूर्तिरस्येति (दीप्तमूर्ति) रसौ स्तुतः ।

( ७२५ ) अमूर्तिमान्, ।

ॐ अमूर्तिमते नमः ।

भा०—(१)"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा" गी०११-४१।
५ "इत्यादि. ❋
अमूर्तयः अव्यक्तपुरुषादयोऽप्येवमस्य स्वमिति—
( अमूर्तिमान् ). यथा,
( १ ) " भूमिरापोनलो वायुः " गी०७—४ ।
( २ ) " अपरेयमितस्त्वन्यां प्रकृतिम् " इति. गी०७—५ ।
१० ( ३ ) " यस्याव्यक्तं शरीरम् " सु०उ०७ ।
( ४ )" यस्यात्मा शरीरम् " इति च. शतपथब्राह्मणे १४—६—३०।
पूर्वोक्तमूर्तिमत्त्वोक्तिविरोधात् अमूर्तिरित्येतावता
निषेधसिद्धौ मतुब्वैयर्थ्याच्च नैष मूर्तिनिषेधः. ❋
कृष्णत्वेप्यजहद्वासुदेवादिचतुर्मूर्तित्वात्—

१५ निर्व०—( १ )" दीपी, दीप्तौ " ईदित् कः.धा०दिवा०कौ०पृ०४५५
( २ ) " श्वीदितो निष्ठायाम् " ७ । २ । १४॥कौ०पृ०५८१
इति नेट्. अन्यत् शाब्दवत्. ❋
नास्ति मूर्तिः एषां ये च अमूर्तयोऽव्यक्तपुरुषादयः
ते च शरीरभूताः अस्य सन्तीति—
२० ( अमूर्तिमान् ).
बहुव्रीहौ नञो नलोपः. ततो मूर्तिशब्दात्,
(१)" तदस्य० " इति मतुप्. उपधादीर्घः.५।२।३६॥कौ०पृ०३१८
नुमादि. स्यादेव हि मूर्तिनिषेधे प्रागुक्तमूर्तिमत्त्वविरो—
धो मतुपो वैयर्थ्यञ्च. अतः उक्त एवार्थः. ❋

२५ निरु०—७२५, अमूर्तिशब्देनोच्यन्ते ह्यव्यक्तपुरुषादयः ॥ ५५८॥
त एव यस्य स्वमिति स स्मृतः स्या ( दमूर्तिमान् ) ।

( ७२६ ) अनेकमूर्तिर् , ( ७२७ ) अव्यक्तः,

ॐ अनेकमूर्तये नमः । ॐ अव्यक्ताय नमः ।

भा०–(१) " षोडश स्त्रीसहस्राणि शतमेकं ततोऽधिकम् । तावन्ति ५
चक्रे रूपाणि भगवान् देवकीसुतः" इति च.वि०पु०५-३२-१८।
असाधारणनेकमूर्तित्वात्–
( अनेकमूर्तिः ). ❀
इदं मनुष्यत्वेन गूहत इति–
( अव्यक्तः ). यथा , १०
( १ ) " नाहं प्रकाशस्सर्वस्य " गी० ७–२५ ।
( २ ) " नाहं वेदैर्न तपसा " इत्यादि ❀ गी० ११–५३

निर्व० – कृष्णत्वेप्यजहद्वासुदेवादिचतुर्मूर्तितया शताधिकषोडश-
सहस्रदिव्यमहिषीभोगानुगुणासाधारणतावन्मूर्ति-
तया चानेकाः मूर्तयोऽस्येति– १५
( अनेकमूर्तिः ). इणः,
(१) " इण्भीका०" इत्यादिना कनि गुणे चैक-उणा० पा० ३
कौ०पृ०६२७
शब्द उक्तः. नञो नलोपः, नुट्, ततः, दावादि, पुंवद्भावः. ❀
उक्तस्य चास्य मनुष्यत्वेनोपगूहनात् व्यक्तो नैवम् सर्वस्येति– २०
( अव्यक्तः ).
(१) " अञ्जू,व्यक्तिम्रक्षणादिषु " विपूर्वः.धा०रुधा०कौ०पृ०४७२

निरु०–७२६ षोडश स्त्रीसहस्राणि शतमेकं ततोधिकम्॥५५९॥
( अनेकमूर्ति ) रित्युक्तः तत्सङ्ख्यदेहधारणात् ।
७२७ मनुष्यत्वेन सर्वत्र परभावाप्रकाशनात् ॥ ५६० ॥ २५
बुधे ( रव्यक्त ) इति च कथितस्तत्त्वधारणैः ।

## ( ७२८ ) शतमूर्तिश् , ( ७२९ ) शताननः , ॥

### ॐ शतमूर्तये नमः । ॐ शताननाय नमः ।

५ भा०— अथ दिदृक्षवे अर्जुनाय व्यक्तवैश्वरूप्यः—
( शतमूर्तिः ).
(१)" पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः "इति. ❀ गी० ११-५।
( शताननः ).
तत्रैव च अर्जुनः
१० ( १ ) " अनेकवक्त्रनयनम् " इति. ❀ गी० ११—१० ।

निर्व०— ( २ ) "अजिवृरीभ्यः क्तः " इति क्तः. उणा० पा० ३ कौ० पृ० ६२९
( ३ ) " तितुत्र० " इति नेट्. ७ । २ । ९ ॥ कौ० पृ० ६०८
( ४ ) " अनिदिताम् " इति नलोपः. ६।४।२४ ॥ कौ० पृ० ७६
१५ ( ५ ) " चोः कुः " ८ । २ । ३० ॥ कौ० पृ० ६८
चर्त्वम् निरुक्ते ह्ययम्. अन्यथापि प्रागेव. वेर्यण्
समासे नञो नलोपः. ❀
अथ दिदृक्षवेऽर्जुनाय व्यक्तवैश्वरूपतया शतम् अस्य
उपलक्षणतया अनन्ताः मूर्तयोस्येति—
२० ( शतमूर्तिः ).
शतशब्द उक्तः. अन्यच्च तत्र तत्र च. ❀
अनेकवक्त्रतया शतम् पूर्ववत् अनेकानि आननानि मुखानि अस्येति—
( शताननः ).

निरु०—७२८ अर्जुनाय व्यक्ततया विश्वरूपप्रदर्शनात् ॥ ५६१ ॥
२५ ( शतमूर्ति ) रिति ख्यातः शतशोथ सहस्रशः ।
७२९ अनेकाननसंपत्त्या ( शतानन ) इतीरितः ॥ ५६२ ॥

श्लो० ॥ ७८ ॥ (७३०) एको,

ॐ एकाय नमः ।

भा०—उक्ते महिम्नि सजातीयसंख्येयासंभवात् अद्वैतं गच्छतीति-(एकः). ५

(१) "इण्, गतौ" इत्यस्मात् धा० अदा० कौ०पृ०४४१

(२) "इण्भीका०" इत्यादिना कन्प्रत्ययः. उणा० पा० ३ कौ० पृ० ६२७

एकोपाधिगतितान् हि सञ्चक्षते. यथा द्वौ ब्राह्मणौ त्रयः क्षत्रियाः इति.

निर्व०—अनिः प्राणनकर्मा, शुद्धः. आङ्पूर्वः. पूर्वमुपसर्गेण युज्यते १० ततः साधनेन. दीर्घः सांहितः. ततः,

(१) "करणाधिकरणयोश्च" इति, ३।३।११७॥कौ०पृ०६६२ करणे ल्युट्. यद्वा, अयम्,

(२) "हेतुमति च" इति णिजन्तः. अना-३।१।२६॥कौ०पृ०४९२ ङ्पूर्वोपि. तत्पूर्वत्वे परिनिष्ठिते दीर्घोधिकः. पूर्वं साधनेनापि हि १५ युज्यते दर्शनभेदात्. अतः इति वृद्धिः. ततः

(३) "बहुलमन्यत्रापि" इति कर्मणि युच्. उणा०पा० २ कौ० पृ० ६२२

नन्द्यादिल्युः. ल्युड्वा. बाहुलकात्. सर्वत्र योरनः. णिचि तल्लोपश्च. रातशब्द उक्तः. दीर्घः. ❋ २०

उक्ते महिम्नि अतुल्यकक्ष्यतया सजातीयसंख्येयान्तराभावात् अद्वैतम् एति गच्छतीति-(एकः).

(१) "इण्गतौ" धा० अदा० कौ० पृ० ४४१

(२)"इण्,भीकापाशल्यतिमर्चिभ्यः कन्" उणा०पा०३कौ०पृ०६२७ इति कन् बाहुलकान्न क इत्. गुणः. अनिट्. ❋ २५

निरु०—७३० द्वितीयस्यसजातीयराहित्या (ऐक) उच्यते ।

## ( ७३१ ) नैकः, ( ७३२ ) सः,

ॐ नैकाय नमः। ॐ साय नमः।

भा०—नहि भगवतः कश्चित् केनचिदुपाधिना तुल्यकक्ष्यः; यथा—
१ ( १ ) " एक इद्राजा जगतो बभूव " ४ का० १—३२
( २ ) " न तस्य प्रतिमास्ति " इति च. ❋
अत इदमैक्यं न सर्वनिह्नवनिवर्तसंकरणपरिणामादिनिमित्तम् किन्तु विभूतितया विजातीयेन सर्वेण द्वितीयवानेव इति—
( नैकः ). यथा,
१० ( ३ ) " नान्तोस्ति मम दिव्यानां विभूतीनां परंतप " इति. ❋ गी० ११—३९"।
एष्वाकुमारम् अखिलप्रसिद्धया स्वविषयं ज्ञानं स्यतीति—
( सः ). स्यतेः,
( १ ) " शामिमुपिस्यति० "
१५ इत्यादिना डः. यथा. ❋

निर्व०—उक्तव्याख्यानेन चास्यैक्यस्य असर्वनिह्नवपरतया विभूतितया विजातीयेन सर्वेण द्वितीयेन संहृतत्वात् एकोनेति—
( नैकः ). अनेको वा,
एकः उक्तः. नशब्दोयम्. नञो नलोपाभावो वा. इति प्रागेवावादि.
२० वृद्धिः. अनुकल्पे नञो नलोपः. नुट् च वृद्धिः. ❋
इत्थं सिद्धान्तिते विशिष्टाद्वैते विभूतिभूतेष्वेषु आकुमारमखिलप्रसिद्धया स्वविषयं ज्ञानं स्यति अन्तयति निश्चयीकरोतीति—( सः ).

निरु०—७३१ (नैकः) स्वव्यापारतया विभूतीनामितीरितः॥५६३॥
७३२ सर्वेषु कृष्णरूपेषु आकुमारप्रसिद्धितः।
२५ ज्ञानं हि यस्य विषयं स्यत्यसौ ( स ) इतीरितः ॥ ५६४ ॥

(७३३) वः,

ॐ वाय नमः।

भा०—प्रसिद्धिसर्ववासित्वात्—(वः).

वसतेः डः. ५

(१) "वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थस्ततो मुने" इति. ❀

मलीमसेषु वसन्नपि कनतीति—

निर्व०—(१) "षो, अन्तकर्मणि" परस्मै आत्वम्. धा० दिवा० कौ० पृ० ४५४ १०

(२) "शमिमुषिस्यति०" इत्यादिना डः.

(३) "अन्येष्वपि०" इति वा. टिलोपः. ❀ ३।२।१०१॥ कौ० पृ० ५८५

निरुक्तात् सर्वावासस्त्वयम् यथाप्रसिद्धिसर्वत्र वसतीति—(वः).

(१) "वस, निवासे" धा० भ्वादिः कौ०पृ० ४३२ १५

(२)"अन्येष्वपि०" इति डः. पूर्ववत् ३।२।१०१॥कौ०पृ०५८५

अन्यच्च. नाम्नोः संहितायाम्,

(३) "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" ७।१। ३९॥ कौ०पृ० ७०३

इति सोर्लुक् छन्दस्यः. अस्त्येव हि छन्दोभावः. यतोयम् पञ्चमो २० वेद इत्युक्तम्. यद्वा सश्चासौ वश्च इति. (सवः).

इत्येकनाम, अस्ति ह्येवमन्यत्रापि. यथा त्रिककुब्धामेत्यादि. अत्र चोक्त एवार्थः. समानाधिकरणसमासः. अस्मिंश्च पक्षे लुको नच्छान्दसत्वकल्पनक्लेशः इति विशेषः. ❀

एवम् मलीमसेष्वेपु वसन्नपि कनति दीप्यत इति— २५

निरु०—७३३ यथा प्रसिद्धिवासित्वाद् तत्रापि वसतेश्च सः। भूतावासतया (वः) स्यात्—

( ७३४ ) कः, ( ७३५ ) किम्,

ॐ काय नमः । ॐ किमे नमः ।

भा०—( कः ).
५ कनेतेर्डः. ❀
तत्तत् सर्वेप्सितबुभुत्सूनां निरुपाधिकप्रष्टव्यत्वात्—
( किम् ).
( १ ) " प्रच्छ,ज्ञीप्सायाम्" इत्यस्मात् धा०तुदा०कौ०पृ०४६१
( २ ) " प्रच्छिछदंसि०" इत्यादिना
१० इम्प्रत्ययः. कादेशश्च.
( ३ ) " सोन्वेष्टव्यः स विजिज्ञासितव्यः " इति. ❀ छा० उ०८—७—१ ।

निर्व०—( कः ).
( १ ) " कनी, दीप्तिकान्तिगतिषु " धा०भ्वादिः कौ०पृ०४०१
१५ प्राग्वदेव डः. टिलोपश्च. ❀
सर्वेप्सितार्थसाधकबुभुत्सूनाम् निरुपाधिकप्रष्टव्यत्वात्—
( किम् ).
( १ ) " प्रच्छ, ज्ञीप्सायाम् " धा०तुदा०कौ०पृ०४६१
( २ ) " प्रच्छिदंसि०" इत्यादिना इम्.
२० धातोः कादेशश्च यद्वा,
( ३ ) " कै, शब्दे" आत्वम्. धा०भ्वादिः कौ०पृ०४२४
( ४ ) " कायतेर्डिमिः" इति डिमिः. उणा०पा०४कौ०पृ०६११
टिलोप (नकः) तु

❀ सर्वेषु कृष्णरूपेषु आकुमारानि ( कः ) ॥५६५॥
❀ यस्य विषयं स्यत्यसौ ( प्रष्टव्यः ( किं ) इति स्मृतः ।

(७३६) यत्,

ॐ यते नमः ।

भा०— तेषां रक्षायै यतते इति—
(यत्).
(१) " यती, प्रयत्ने " क्विप्, यथा, धा०भ्वादिः कौ०पृ० ३८३
(२) " कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् " इति.

निर्व०—(५) " किमः कः " इति कादेशः, ७।२।१०३॥ कौ०पृ० ६१ लिङ्गविशेषानादरेण १०
(६) " सर्वादीनि सर्वनामानि " इति. १।१।२७ ॥ कौ०पृ० ३४ महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात्, संज्ञोपसर्जनीभूताः न सर्वादयः इति इह संज्ञात्वादसर्वनामत्वेन संज्ञाकार्यान्तर्गणकार्ययोरप्रसक्तेः, अतो न स्मायादिकम्, नाप्ययम् कादेशस्य चान्तर्गणकार्यत्वात्. एतच्च १५
(७) " त्यदादीनामः " इति. ७।२।१०२ ॥ कौ० पृ० ४४ अतस्त्यदादीनामित्यनुवर्त्य विभक्तिविपरिणामेन त्यदादेः किम इति किमो विशेषणादनुवृत्तिसामर्थ्यात् द्विपर्यन्तानियमत्यागाच्चेति स्पष्टमाकरे. अतो नेह लिङ्गत्रयेपि विशेषः. ओङि जश्शसोश्च क्लीबे तु विशेषः. एवमुत्तरत्राप्युभयत्र यथा— २०
यथम् ज्ञेयम्. ❊
तेषां रक्षायै यतते प्रयत्नं करोतीति वा यजति तद्रिरक्षिषया स्वात्मानं संगमयतीति वा—
(यत्). पूर्वत्र,

निरु०—७३६ रक्षायै प्रच्छकानां स यतते(यद्)इति स्मृतः५६६॥ २५

(७३७) तत्,

ॐ तते नमः ।

भा०—(३)" अहं स्मरामि मद्भक्तं नयामि परमां गतिम् " व०च०२।
५ इति च. ❋
तेषां स्वज्ञानभक्तिं तनोतीति—
( तत् ).
( १ ) " गमादीनाम् " इति क्विप्. ६।४।४०॥कौ०पृ०५८२
नकारलोपः, तुगागमश्च. अतो हि

१० निर्व०—(१)" यती, प्रयत्ने " ईदित्. धा०भ्वादिः कौ०पृ०३८३
ततः क्विप्. तस्य लोपः, जश्त्वचर्त्वे. अपरत्र,
(२)" यज, देवपूजासंगतिकरणदानेषु " धा०भ्वादिः कौ०पृ०४३१
इह चायम् संगतिकरणकर्मा.
(३)"शृदृभसो दिः " इति वर्तमाने, उणा०पा० १कौ०पृ०६१६
१५ ( ४ ) " त्यजितनियजिभ्यो डित् " उणा०पा० १कौ०पृ०६१६
इत्यदिः डित्. ततः टिलोपः. वा चर्त्वम्. प्रथमकल्पे तान्तो हि
यत्, पुंलिङ्गः. न तत्र सर्वनामत्वप्रसक्तिः. सर्वादिगणे दान्तस्यैव
पाठात्. अनुकल्पे तु यदः दान्तस्य अनादृत्यैव लिङ्गविशेषम्.
उक्तन्यायान्न संज्ञा कार्यान्तर्गणकार्यम्.
२० ( ५ ) " त्यदादीनामः " ७।२।१०२॥कौ०पृ०४४
इत्यत्वं च. शेषम् प्राग्वत्. ❋
तेषां स्वज्ञानभक्तिम् तनोतीति—
( तत् ).

निरु०—७३७ स्वज्ञानभक्तिं भक्तानां तनोतीति ( तद् ) उच्यते।

( ७३८ ) पदमनुत्तमम्, ।

ॐ पदायानुत्तमाय नमः ।

भा०—(२)" तत् सवितुर्वरेणियम् " २ तै०३०२७।
(३)"ओम् तत् सत् इति निर्देशः" "इत्यादि. ❀ गी०१७-२३। ५
तेषां परमप्राप्यत्वात्—
( पदमनुत्तमम् ).
पद्यते प्राप्यते इति पदम्. ❀

निर्व०— ( १ ) " तनु, विस्तारे " धा० तना० कौ०पृ०४७२
( २ ) " क्विप् च " इति क्विप्, ३।२।७६॥कौ०पृ०५८१ १०
( ३ ) " गमः क्वौ " इत्यत्र, ६।४।४०॥कौ०पृ०५८२
( ४ ) " गमादीनाम् " इति ६।४।४०॥कौ०पृ०५८२
वक्तव्य क्विपि अनुनासिकलोपः. ततः,
( ५ ) " ह्रस्वस्य० " इति तुक्, ६।१।७१॥कौ०पृ०५५९
जश्त्वचर्त्वे. अथवा, १५
( ६ ) " त्यजितनि० " इत्यादिना उणा०पा०१कौ०पृ०६१६
प्रागुदाहृतसूत्रेण अदिः डित्, टिलोपः. वा चर्त्वम्.
अत्रापि प्रथमे कल्पे तान्तः तत्शब्दः. तत्र च न संज्ञाप्रसक्तिः.
अनुकल्पे दान्तस्य तु तदः न संज्ञाकार्यम्. नाप्यन्तर्गणकार्यम्,
उक्तन्यायात्. अन्यत् प्राग्वत्. सांहितं चर्त्वम्. ❀ २०
तेषां सर्वोत्कृष्टतया नास्त्युत्तममस्मादिति अनुत्तमम्.
परम् तादृशम् पद्यते गम्यत इति पदम् प्राप्यं चेति—
( पदमनुत्तमम् ). एकनाम.

निरु०— ७३८ परमं यत्प्रपन्नाना प्राप्यं ( पदमनुत्तमम् ) ॥ ५६७॥

(७३९) लोकबन्धुर्,

ॐ लोकबन्धवे नमः ।

भा०— एवंमविशेषेणाशेषानुग्रहे अवर्जनीयं बान्धवं निबन्धनमाह-
५ (लोकबन्धुः).
लोकानां स्वजनः
(१) "बन्ध, बन्धने" धा०क्र्यादिः कौ०पृ०४७७
(२) "शॄस्वृस्निहि०" उणा० पा०१ कौ०पृ० ६०९
इत्यादिना उप्रत्ययः. यथा,
१० (३)"माता पिता भ्राता निवासश्शरणं सुहृत् गतिर्नारायणः"सु०उ०६।
(४) "पितामहस्य जगतः" "इत्यादि. ❀ गी० ९-१७।

निर्व०— (१) "पद, गतौ" धा० दिवा०कौ०पृ०४५५
(२)"खनो घ च" इति चकारात्, ३।३।१२५॥कौ०पृ०६६४
घित्करणाद्वा. प्रकृत्यन्तरादपि घः. इति कर्मणि घः. उ-
१५ त्कृष्टवाचिन उदः आतिशायनिकः तमप्. चर्त्वम्. समासे
नञो नलोपः. अनिट्. आविष्टलिङ्गोयम् "इत्यादि. ❀
अथैवमविशेषेणाशेषानुग्रहे अवर्जनीयम् बान्धवं नि-
बन्धनमभिधीयते. लोकानामशेषाणाम् बन्धुः स्वजन इति-
(लोकबन्धुः).
२० (१) "बन्ध, बन्धने" क्र्यादिः धा०क्र्यादिः कौ०पृ०४७७
(२)" नश्च "इत्यनुस्वारः. परसवर्णः. ८।३।२४॥कौ०पृ०२०
(३) "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" उणा०
पा०१कौ०पृ०६०९
इति उः.

निरु०—७३९ लोकानां स्वजनत्वाद्धि (लोकबन्धु) रिति स्मृतः ।

(७४०) लोकनाथो, (७४१) माधवो,

ॐ लोकनाथाय नमः । ॐ माधवाय नमः ।

भा०— तन्मूलमसाधारणं स्वाभाविकं च संबन्धमाह— ५
(लोकनाथः). इति स्वामी. ❀
बान्धवविशेषमाह मातापितृत्वम् श्रिया सहास्य सूचयति—
(माधवः).
मधुकुलोद्भवत्वाद्वा— (माधवः).
(१)"मौनाद्ध्यानाच्च योगाच्च विद्धि भारतमाधवम्"भा०उ०७१-४।१०
इति वा. ❀

निर्व०— (४) "लोकृ, दर्शने" धा०भ्वादिः कौ०पृ०३८७
(५)"हलश्च"इत्यधिकरणे घञ्. ❀ ३।३।१२१॥कौ०पृ०६६३
तन्मूलभूतोसाधारणस्वाभाविकश्च संबन्ध उच्यते
लोकानां नाथः स्वामीति— १५
(लोकनाथः).
(१)"नाथृ नाधृ,याच्ञोपतापैश्वर्याशीष्षु"धा०भ्वादिः कौ०पृ०३८२
ऐश्वर्यकर्मैहायम्. पचाद्यच्. लोक उक्तः. ❀
श्रिया सहास्य मातापितृत्वलक्षणबान्धवविशेषसूचनयायम्, मा-
याः लक्ष्म्याः धवः पतिरिति वा, मधुनामकयादवकुलोद्भवतया, २०
मधोरपत्यमिति वा, निरुक्तानुरोधात् मौनध्यानयोगवत्तया वा—
(माधवः). पूर्वत्र,

निरु०—७४० लोकबन्धुत्वमूलाद्धि लोकस्वामित्वमित्यतः॥५६८॥
स्वाभाविकाच्च संबन्धात् (लोकनाथ) इतीरितः।
७४१ लोकनाथत्वसंबन्धः श्रीमतश्चेति (माधवः) ५६९॥ २५
मधोर्वंशोद्भवत्वाच्च (माधवः) परिकीर्तितः।

(७४२) भक्तवत्सलः, ॥

ॐ भक्तवत्सलाय नमः।

भा०—उक्तस्वाम्यबान्धवोत्सुकेषु भक्तेषु विशेषं भासते—
५ (भक्तवत्सलः).
तद्धासंभ्रमविस्मृतान्यकामः. ❀

निर्वं०(१)-"भ्रूञ्,कम्पने"धा०स्वादिः-क्र्यादिः कौ०पृ०४६२-४७६
पचाद्यच्. गुणः. अव्.
(२) "मन, ज्ञाने" धा०दिवा०कौ०पृ०४५६
१० (३) "अन्येष्वपि०"इति डः. ३।२।१०१॥कौ०पृ०५८५
टिलोपः. ततस्त्रियाम्. अतष्टाबादि. अपरत्र,
(४) "मन, ज्ञाने" उत्प्रकरणे, धा०दिवा०कौ०पृ०४५६
(५) "फलिपाटिनमिमनिजनांगुक्पटिनाकिधताश्च" उणा०
पा०१कौ०पृ०६१०
१५ इति डः. नस्य धश्च. ततो मधुशब्दात्
(६) "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४॥कौ०पृ०२१२
इति अण्. अपत्यः. ओर्गुणः. अव्.
(७) "तद्धितेषु०" इति आदिवृद्धिः, ७।२।११७॥कौ०पृ०२०४
उत्तरत्र पृषोदरादि. ❀
२० उक्तस्वाम्यबान्धवोत्सुकेषु भक्तेषु विशेषो भाप्यते भक्तेषु
तद्धासंभ्रमविस्मृतान्यकामनया वत्सल इति—
(भक्तवत्सलः).
(१) "वद, व्यक्तायां वाचि" धा०भ्वादिः कौ०पृ०४३४
(२) "वृतृवदिहनिकमिकषिभ्यस्सः" इति सः. उणा०पा०३
२५ कौ०पृ०६२७
(३) "तितुत्र०"इति नेट्. चर्त्वम्. ततः ७।२।९॥कौ०पृ०६०८
(४) "वत्सांसाभ्यां कामबले" ५।२।९८॥ कौ०पृ०३२७

निरु०-७४२विशेषं यस्य भक्तेषु यो मो स्यात्(भक्तवत्सलः)॥५७०॥

श्लो० ॥ ७९ ॥ ( ७४३ ) सुवर्णवर्णो,

ॐ सुवर्णवर्णाय नमः ।

भा०— उक्तगुणवत् कनकनिकषनिर्दोषोज्ज्वलदिव्यवर्णः—
( सुवर्णवर्णः ). यथा, ५
( १ )" यदा पश्यः पश्यते रुक्मवर्णम् " मु०३०३—३।
( २ ) " रुक्माभं स्वमधीगम्यम् " मनु० १२—१२१।
( ३ ) " आदित्यवर्णम् " पु०सू०२०।
( ४ ) " हिरण्मयः पुरुषः सर्व एव सुवर्णः " छा०उ०१-६-६।
"इत्यादि. वर्णाधिष्ठानं च. ❋ १०

निर्व०— इति कामवति मत्वर्थीयो लच्.
( ५ ) " भज, सेवायाम् " धा०भ्वादिः कौ०पृ०४३१
( ६ ) " गत्यर्थ०" इत्यादिना कर्तरि क्तः. अनिट्. ३।४।७२॥
कौ०पृ०५९६
(७)" चोः कुः "इति कुत्वम्.गः.नस्य ८।२।३०॥कौ०पृ०६८ १५
(८)" खरि च " इति चर्त्वम्. कः. ❋ ८।४।५५॥कौ०पृ०२०
उक्तगुणवत् कनकनिकषनिर्दोषाज्ज्वलदिव्यवर्णतया
सुवर्णस्य हिरण्यस्येव वर्णो रूपगुणोऽस्येति—
( सुवर्णवर्णः ).
( १ ) " वृञ्, वरणे " नप्रकरणे, धा०स्वादिः कौ०पृ०४६२ २०
(२) "कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् "उणा०पा० ३कौ०पृ०६२५
इति नः. नित्. गुणः. रपरः.
(३)"नेट्०"इति नेट्. णत्वम्.पुनश्च वर्ण-७।२।८॥कौ०पृ०५८१
शब्दः प्राग्वत् सुपूर्वो बहुव्रीहिः. ❋

निरु०— ७४३ गुणवत्स्वर्णनिकषनिर्दोषोज्ज्वलवर्णतः । २५
( सुवर्णवर्ण ) इत्युक्तः नवार्णो भक्तिकामदः ॥ ५७१ ॥

( ७४४ ) हेमाङ्गो , ( ७४५ ) वराङ्गश्,

ॐ हेमाङ्गाय नमः । ॐ वराङ्गाय नमः ।

५ भा॰— नित्यं दिव्यं सत्त्वमयमङ्गमस्येति—
( हेमाङ्गः ).
( १ ) " हिरणमयः पुरुषो दृश्यते " इति. ❋ छा॰उ॰ १–६–६ ।
तदेतदौपनिषदं देवक्या ध्रियमाणमतिनिह्नुतदिव्य-
चिह्नमाविष्कृतम् इति—
१० ( वराङ्गः ). यथा,

निर्व॰— हेम , हाटकम्. तदुपलक्ष्यं च दिव्यसत्त्वमयम्
नित्यमङ्गं वर्णाधिष्ठानरूपम् अस्येति—
( हेमाङ्गः ).
अङ्गिर्गतिकर्मा. इदित्वान्नुम्. अनुस्वारपरसवर्णौ. पचाद्यच्.
१५ ( १ ) " हि , गतौ वृद्धौ च " धा॰ स्वादिः कौ॰पृ॰ ४६२
( २ ) " सर्वधातुभ्यो मनिन् " उणा॰पा॰ ४ कौ॰पृ॰ ६३९
इति मनिन्. गुणः. अनिट्. नलोपः. सच
(३) " नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति " ८।२।२॥ कौ॰पृ॰ ९२
इति नियमात् नात्रासिद्धः. बहुव्रीहिः. दीर्घः. ❋
२० तथा वरम् देवक्या ध्रियमाणम् अङ्गम् औपनिषदम्
अनिह्नुतदिव्यचिह्नमाविष्कृतम् रूपमस्येति—
( वराङ्गः ).

निरु॰—७४४ वर्णाश्रयं तु यस्याङ्गं दिव्यसत्त्वमयं यतः ।
अतो ( हेमाङ्ग ) इत्युक्तः समार्णो हेमवर्णदः ॥ ५७२ ॥
२५ ७४५ देवकीगर्भेऽपि गुप्तदिव्यलाञ्छनमङ्कलम् ।
आविष्कृतं स्वतो येन ( वराङ्ग ) स तु कथ्यते ॥ ५७३ ॥

( ७४६ ) चन्दनाङ्गदी , ।

ॐ चन्दनाङ्गदिने नमः ।

भा०—(१)' फुल्लेन्दीवरपत्राभं चतुर्बाहुं निरीक्ष्य तम् । श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः " इति. ❀ वि०पु०५—३—८। ५
चन्दनानि आह्लादनानि अनन्याभरणमप्यङ्गं स्वसंवलिततया उन्मील्य ददतीति वा—
केयूरोपलक्षणेन वा दिव्यभूषणान्यङ्गदादीनि भूयिष्ठान्यस्येति—( चन्दनाङ्गदी ). भूमनि इनिप्रत्ययः. ❀

निर्व०— अङ्गेरङ्गशब्द उक्तः. १०
( १ ) " वृञ् , वरणे " भावे , धा० स्वादिः कौ०पृ०४६२
( २ ) " अकर्तरि च कारके० " इति अनुवृत्तौ , ३ । ३ । १९ ॥ कौ० पृ० ६४७
( ३ ) " ग्रहवृदृनिश्चिगमश्च " इति.३।३।५८॥कौ०पृ०६५२
कर्मण्यप्. गुणो रपरः दीर्घः. साधितः. ❀ १५
तथा चन्दनानि आह्लादनानि च तानि अङ्गदादीनि अङ्गम् अनन्याभरणम् अवयवम् स्वसंवलिततया उन्मील्य ददानानीति वा. तद्विशेषवाचिनोऽस्योपलक्षणतया तदुपलक्ष्याणि वा नित्यदिव्यसत्त्वमयानि भूषणानि चेति चन्दनाङ्गदादीनि. तानि भूयिष्ठान्यस्य सन्तीति—( चन्दनाङ्गदी ). २०
( १ ) " डुदाञ् , दाने " धा० जुहो० कौ० पृ० ४५१
(२)" आतोनुपसर्गे० " इति कः. आल्लोपः.३।२।३॥कौ०पृ०५७०
उक्तो ह्यङ्गशब्दः.

निरु०—७४६ भूषणान्यङ्गदादीनि सदाह्लादकराणि च ।
सन्ति यस्य च नित्यन्तु स स्मृत ( श्चन्दनाङ्गदी ॥ ५७४ ॥ २५

( ७४७ ) वीरहा , ( ७४८ ) विषमः,

ॐ वीरघ्ने नमः । ॐ विषमाय नमः ।

५ भा०— अतिमुग्धस्तनन्धयोपि पूतनाशकटार्जुनादीन् सूरादीन् वञ्चकान् समूलघात जघानेति—
( वीरहा ). ❋
एवमृजुकुटिलाशयेषु क्षेमंकरभयंकरविषमवृत्तत्वात्—
( विषमः ). ❋

१० निर्व०—( ३ ) " वदि, आह्लादने " इदित्वात् नुमि"१४६"त्वो"दि. धा० भ्वादिः कौ० पृ० ३८७
करणे ल्युट्. यद्वा णिजन्तात् ल्युः. ल्युट् युज्वा. बाहुलकाव सर्वत्र यो. अनः. णिचि तल्लोपश्च दीर्घः. ततः.
( ४ ) " न कर्मधारयान्मत्वर्थीयः " इति.
१९ न्यायस्यानित्यतया भूमनि मत्वर्थीयोत इनिः.
( ५ ) " यस्य० " ६ । ४ । १४८ ॥ कौ०पृ०५६
इति लोपः. इन्नन्तदीर्घः. "इत्यादि. ❋
अतिमुग्धस्तनन्धयोपि वीरान् वञ्चकान् पूतनाशकटार्जुनादीन् सुरादीन् समूलघातं हन्तीति—
२० ( वीरहा ).
हनः क्विप्. अन्यत्तु प्रागेव. प्रपञ्चितम्. अजेः रकि वीभावे चानित्यं गुणे , वीरयतेर्वा पचाद्यचि णिलोपे च वीरशब्दः प्रागेव हि निरुक्ते. हन्नन्तदीर्घः. "इत्यादि. ❋
एवम् ऋजुकुटिलाशयेषु क्षेमंकरभयंकरवृत्ततया विषमः समो नेति—
२५ ( विषमः ).

निरु०— ७४७ समूलं पूतनादीन्वै यो जघान स ( वीरहा ) ।
७४८ भीतिक्षेमकरत्वाद्धि कुटिलाकुटिलात्मसु ॥ ५,७५ ॥
( विषमः ) स तु विख्यातः—

(७४९) शून्यो,

ॐ शून्याय नमः।

भा०— मनुष्यत्वेपि अशेषदोषैर्विवर्जितः—
(शून्यः). ५
(१) "शुन. गतौ" ण्यत्. ❋ धा० तुदा०कौ०पृ०४६६

निर्व०—(१) "षम ष्टम,अवैकल्ये" धा०भ्वादिः कौ०पृ०४१८
विपूर्वः षस्सः. पचाद्यच्.
(२) "आदेशप्रत्यययोः" इति षत्वस्य ८।३।५९॥ कौ०पृ०३४
(३) "सात्पदाद्योः" इति प्रतिषेधे प्राप्ते, ८।३।१११॥ १०
कौ०पृ०३५८
(४) "सुविनिर्दुर्भ्यस्सुपिसूतिसमाः" इति.८।३।८८॥कौ०पृ०४४५
समेशब्दे सस्य षत्वम्. ❋
मानुष्यकेप्यखिलकल्याणगुणाभिवृद्धोयम् अशेषैर्दोषैः
शून्यो विवर्जित इति— १५
(शून्यः).
(१) "शुन,गतौ" तुदादिः. धा०तुदा०कौ०पृ०४६६
(२) "ऋहलोर्ण्यत्" ३।१।१२४॥ कौ०पृ०५६२
इति हलन्तात् ण्यत्.
(३) "कृत्यल्युटः" इति. ३।३।११३॥ कौ०पृ०६६३ २०
बाहुलकात् क्वचित् तत्सन्नियोगे प्रथमम्
(४) "अन्येषामपि०" इति. ६।३।१३७॥ कौ०पृ०१६५
दीर्घः. ततो न लघूपधगुणः. अथवा संज्ञापूर्वको विधिरनित्यः. यद्वा
(५) "टुओश्वि, गतिवृद्ध्योः" धा०भ्वादिः कौ०पृ०४३४
ट्वित् ओदित्च. कर्मणि क्तः २

निरु०—७४९ (शून्यः) स्यात् दोषवर्जितः।

(७५०) घृताशीर्,

ॐ घृताशिषे नमः ।

भा०—(१) " घृ, सेचने " धा० भ्वादिः कौ० पृ० ४२६
१ घृतं सेचनं स्वगुणैः जगदाप्यायनम् तत्र वा
गोपगृहगव्ये वा आशास्तिरस्येति—
(घृताशीः). ❋

निर्व०—(६) " ओदितश्च " इति निष्ठानत्वम्. ८।२।४५॥ कौ० पृ० ५८७
१० (७) " नेड्वशि० " इति नेट्. ७।२।८॥ कौ० पृ० ५८१
(८) " वचिस्वपियजादीनां किति " इति ६।१।१५॥ कौ० पृ० ४३२
यजादित्वात् किति संप्रसारणम्. वस्य उः.
(९) " संप्रसारणाच्च " इति पूर्वरूपम् ६।१।१०८॥ कौ० पृ० ६०
(१०) " हलः " इति संप्रसारणान्तस्य ६।४।२॥ कौ० पृ० ४७६
१५ अस्य दीर्घः. कित्त्वाद्गुणः. ततः शूनशब्दात्,
(११.) " प्रातिपदिकात् धात्वर्थे बहुलमिष्ठवच्च " चुरादौ गणसूत्रम् । कौ० पृ० ४९०
इति णिच्. इष्ठवद्भावात् टिलोपः. ततः,
(१२) " अचो यत् " इति. ३।१।९७॥ कौ० पृ० ५५७
२० अजन्तात्यत्. णिलोपः. सन्निपातपरिभाषा हि न नित्या.
(१३) " कष्टाय क्रमणे " इत्यादि निर्देशात् ३।१।१४॥ कौ० पृ० ५१६
(१४) " कृन्मेजन्तः " इति. १।१।३९॥ कौ० पृ० ८७
अन्तग्रहणाद्वा. ❋
घृते स्वगुणैर्जगदाप्यायने गोपगृहगव्यसर्पिषि वा
२५ आशीः इच्छास्येति—
(घृताशीः).

निरु०—७५० गोपानां सद्मगव्ये वा जगदाप्यायनेन वा ॥५७६॥
घृते त्वाशा हि यस्यास्ति (घृताशीः) परिकीर्तितः ।

( ७५१ ) अचलः,

ॐ अचलाय नमः ।

भा०— दुर्योधनादिभिः दुरात्मभिरभेद्यः—
( अचलः ). ❋ ५
प्रणतपाण्डवादेः प्रयोजनाय सत्यसमयादेश्चलतीति—

निर्व०— ( १ ) " आङः शासु, इच्छायाम् " क्विप्. धा०अदा०
कौ०पृ०४३८
( २ ) " आशासः क्वावुपधाया इत्वम् वाच्यम् " ६।४।३४॥
कौ०पृ०४४८ १०
इति उपधाया आत इत्वम्.
( ३ ) " गृ - घृ, सेचने " धा०भ्वादिः कौ०पृ०४२६.
( ४ ) " घृ, क्षरणदीप्त्योर्वा" धा०जुहो० कौ०पृ०४५२
यथासंख्यं नपुंसके भावे क्तः.
( ५ ) " अञ्जिघृसिभ्यः क्तः" उणा०पा०३ कौ०पृ०६२९ १५
इति क्तः. शासेस्सस्य रुत्वम्.
( ६ ) " र्वोरुपधाया दीर्घ इकः " इति. ८।२।७६॥ कौ०पृ०८०
उपधादीर्घः. आवसानिको विसर्ग "इत्यादि. अन्यत्र तु
( ७ ) " शासिवसिघसीनां च " ८।३।६०॥ कौ०पृ० ४३२
इति षत्वं बोध्यम्. ❋ २०
दुरात्मभिर्दुर्योधनादिभिरभेद्यतया चलः चञ्चलो नेति—
( अचलः ).
( १ ) " चल, कम्पने " धा०भ्वादिः कौ० पृ०४१६
पचाद्यच्. समासे नञो नलोपः. ❋
अवधीर्य चात्मनाशुधरस्पर्शसमयम् भीष्माभिक्रमणे समुद्धृतचक्रतया २५
प्रणतपाण्डवादेः प्रयोजनाय सत्यसमयादेश्चलतीति—

निरु०—७५१ दुर्योधनाद्यभेद्यत्वात् (अचलः) परिकीर्तितः ॥५७७

## ( ७५२ ) चलः,॥ श्लो०॥ ८० ॥ ( ७५३ ) अमानी,

ॐ चलाय नमः । ॐ अमानिने नमः ।

---

५ भा०—( चलः ).
सत्यवधीरितानायुधस्पर्शसमयः समुद्धृतचक्रो भीष्म-
माचक्राम. यथा,
( १ ) " तमात्तचक्रं प्रणदन्तमुच्चैः क्रुद्धं महेन्द्रावरजं समीक्ष्य ।
सर्वाणि भूतानि भृशं विनेदुः क्षयं कुरूणामिति चिन्तयित्वा ॥
१० स वासुदेवः प्रगृहीतचक्रः संवर्त्तयिष्यन्निव जीवलोकम् ।
अभ्युत्पतन् लोकगुरुर्बभासे भूतानि धक्ष्यन्निव धूमकेतुः ॥ "
इत्यादि. ❋ भा०भी०५९—९४ ।
भक्तेषु अनहंयुः —
( अमानी ).
१५ अतो हि दूत्यादावनपत्रपिष्णुरधिचकार. ❋

---

निर्व०—( चलः ).
धातुः प्राग्वत्. प्रत्ययश्च. ❋
दूत्याधिकारादौ अनपत्रपिष्णुत्वप्रयोजिकया भक्तेष्वनहं-
युतया मानः चित्तसमुन्नतिः अस्यास्तीति मानी सः
२० अस्य नास्तीति—
( अमानी ).
( १ ) " मान, पूजायाम् " धा०चुरा०कौ०पृ०४८८
भावे घञ्. ततः,

---

निरु०—७५२मत्याद्यः पाण्डवार्थे हि चलतीति( चलः ) स्मृतः ।
१ ७५३( अमानी ) योऽनहंकारी भक्तेष्वेव स ईरितः ॥ ५७८ ॥

( ७५४ ) मानदो, ( ७५५ ) मान्यो,

ॐ मानदाय नमः । ॐ मान्याय नमः ।

भा०—अर्जुनोग्रसेनयुधिष्ठिरादिभ्यः रथित्वाधिराज्यबहुमानं दत्तवान्— ५
( मानदः ). ❀
तदीयत्वेन सम्मन्तव्यः —
( मान्यः ).
तथा ह्ययमात्मानं बह्वामंस्त. १०
( १ ) " न सारथेस्सात्त्वतकौरवाणां क्रुद्धस्य मुच्येत रणेऽद्य कश्चित्" इति. ❀

निर्व०—( २ ) " मत्वर्थीयोत इनिः "
( ३ ) " यस्य० " इति लोपः. ६।४।१४८॥कौ०पृ०५६
नञो नस्य लोपः. इन्नन्तदीर्घः. इत्यादि. ❀ १५
तथा मानमर्जुनादिभ्यो महारथिकत्वाधिराज्यबहुमानम् ददातीति—
( मानदः ).ददातेः,
( १ ) " आतोनुपसर्गे० " इति कः. ३।२।३॥कौ०पृ०५७०
आल्लोपः. मानः उक्तः. ❀ २०
तद्तुल्यसारथ्यादिना स्वबहुमाननात् मान्यः
तदीयत्वेन सम्मन्तव्य इति—
( मान्यः ).
( १ ) " मान, पूजायाम् " धा०चुरा०कौ०पृ०४८८
(२)" ऋहलोर्ण्यत् " इति ण्यत्.३।१।१२४॥कौ०पृ०५६२ २५
क एवं कर्मकरस्तत्रोच्यते. ❀

निरु०—७५४स ( मानदो ) ऽर्जुनादिभ्यो मान राज्यं च दत्तवान् ।
७५५( मान्य ) स्तदीयत्वे स्यात् सम्मन्तव्यस्तदैव मः ॥५७९ ॥

## (७५६) लोकस्वामी, (७५७) त्रिलोकधृत्, ।

## ॐ लोकस्वामिने नमः । ॐ त्रिलोकधृते नमः ।

५ भा०— क एवं कर्मकरः—
(लोकस्वामी). ❀
एवमतितुङ्गः कथं नीचैर्भवति यतः—
(त्रिलोकधृत्).
अशेषाणामपि धारणपोषणयोर्भारकत्वादिति. यथा,
१० (१) "विष्टभ्याहमिदं कृत्स्नम्" "इत्यादि. ❀

निर्व०— लोकानामशेषाणाम् स्वशेषाणाम् भुवनानाम् स्वामी निरुपाधिकश्शेषीति—
(लोकस्वामी).
स्वरतेर्ड स्वशब्दो हि न्युत्पाद्यते. ततो मत्वर्थे
१५ (१) "स्वामिन्नैश्वर्ये" इति. ५ । २ । १२६ ॥कौ०पृ०३३२
ऐश्वर्ये आमिनच् प्रत्ययान्तो यन्निपात्यते.
(२) "यस्य०" इति लोपः. ६ । ४ । १४८ ॥ कौ०पृ०५५६
इन्नन्तदीर्घः, इत्यादि.
(३) "लोक, दर्शने" धा० भ्वादिः कौ०पृ० ३८७
२० (४)"हलश्च"इति अधिकरणे घञ्. ❀ ३।३।१२१॥कौ०पृ०६६३
कुतश्चात्युच्चैरयमतिनीचैर्भवति. यतोशेषधारणपोषणभारकत्वात् त्रीन् लोकान् धरतीति—
(त्रिलोकधृत्).

निरु०— ७५६ लोकभर्तृतया चैव (लोकस्वामी) ति शब्द्यते ।
२५ ७५७ लोकत्रयस्य धरणात् स (त्रिलोकधृग्) ईरितः ॥५८०॥

( ७५८ ) सुमेधा ,

ॐ सुमेधसे नमः ।

भा०— आराधकसुसाधुबुद्धिः—
( सुमेधाः ). ५
(१)" नित्यमसिच् प्रजामेधयोः" ५।४।१२२॥कौ०पृ०१६८
इति समासान्तो सिच्. ❀

निर्व०—(१)"धृञ्,धारणे" क्विपि तुक्.धा०भ्वादिः कौ०पृ०४२३
अगुणः. लोक उक्तः. तस्तेर्ड्डिः. डिलोपः.
(२)"नेट्०"इति नेट्. षष्ठीसमासोयम्.७२।८॥कौ०पृ०५८१ १०
तत्फलं च प्रागेव उक्तम्. त्रिलोकधृक् इति पाठे, त्रिलोकान् धृष्णोतीति विग्रहः.
( ३ ) " ञिधृषा , प्रागल्भ्ये " धा० स्वादिः कौ०पृ०४६३
स्वादिः. धारकपोषकतारकोयम्. लक्षणया वा तदर्थलाभः. क्विप्. षस्य जश्त्वेन डः. तस्य , १५
( ४ ) " ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च "३।२।५९॥
कौ०पृ० ६७
इत्यत्र दधृगिति निपातनेन धृषेः क्विनो विधानात्.
( ५ ) " क्विन्प्रत्ययस्य कुः " ८।२ । ६२॥ कौ०पृ०६८
इत्यत्र बहुव्रीह्याश्रयणात् २०
अन्यत्रापीति अत्र क्विप्यपि
कुत्वम् , गः. ततो वा चर्त्वम् , कः, प्रागपि इदमवादिष्म.
शेषम्. प्राग्वत्. ❀
आराधकेषु सुसाधुबुद्धितया सुशोभना मेधा धारणावती धीरस्येति—
( सुमेधाः ). २५

निरु०— ७५८ बुद्धिस्सुशोभना यस्य ( सुमेधाः ) परिकीर्तितः।

( ७५९ ) मेधजो,

ॐ मेधजाय नमः ।

भा०—अतो मेधे देवकिपुत्रीयव्रतरूपे यज्ञे जात इति—
५ ( मेधजः ). स हि तामाह .
( १ ) " स्तुतोहं यत्त्वया पूर्वं पुत्रार्थिन्या तदद्य ते । सफलं देवि सञ्जातं जातोहं यत्तवोदरात् " वि०पु०५—३—१४ ।
( २ ) " सम्यगाराधितेनोक्तं यत्प्रसन्नेन ते शुभे । तत्कृतं सकलं देवि " इति. ❀ वि०धं०३३—३१ ।

१० निर्व०—(१)"मिद-मेद, मेधाहिंसनयोः" धा०भ्वादिः कौ०पृ०४२१ इमौ दान्तौ मतभेदेन थान्तौ धान्तौ च; तत्रेहानुकल्पे द्वितीयाव
( २ ) " षिद्भिदादिभ्योऽङ् " इति. ३।३।१०४ ॥ कौ०पृ०६६० भिदादित्वात् स्त्रियामङ्.
( ३ ) " गुरोश्च हलः " इति. ३ । ३ । १०३ ॥ कौ० पृ०६६०
१५ अकारप्रत्ययो वा. अतष्टाबादि. प्रथमद्वितीयकल्पयोस्त्वस्माव पृषोदरादित्वेन वर्णविकारः. दधयोर्थः. अन्यत् प्राग्वत. सुपूर्वो बहुव्रीहिः.
( ४ ) " नञ् दुस्सुभ्यः " इति. अनुवृत्तो ५।४।१२१ ॥ कौ० पृ० १६८
२० (५)" नित्यमसिच् प्रजामेधयोः " इति. ५।४।१२२॥कौ०पृ०१६८. असिच् समासान्तः
( ६ ) " यस्य० " इति लोपः. असन्नदीर्घः. "ईत्यादि. ❀ ६।४।१४८॥कौ०पृ० ५६
अतो मेधे देवकीपुत्रीयव्रतरूपे यज्ञे जायत इति—
२५ ( मेधजः ).

निरु०—७५९ देवकीकृतपुत्रीयव्रतयज्ञे च यस्य वै ॥ ५८१ । जनिस्तु ( मेधजः ) सस्यात्सनार्णः पुत्रदायकः ।

( ७६० ) धन्यः,

ॐ धन्याय नमः ।

भा०— तज्जन्मधनलाभात्—
( धन्यः ).　　　　　　５
( १ )" धनगणं लब्धा " इति यत्.४।४।८४॥कौ०पृ०२८८
( २ ) " जातोहं यत्तवोदरात् " वि० पु० ५—१३— २४ ।
(३)"अहं वो बान्धवो जातः"इति. ❀ वि०पु०५—१३—११।

निर्व०— ( १ ) " जनी, प्रादुर्भावे" धा० दिवा०कौ०पृ०४५४
( २ ) " सप्तम्यां जनेर्डः " ३ । २ । ९७ ॥ कौ०पृ०५८५ १०
इति डः , टिलोपः.
( ३)" मिद-मेद, मेधाहिंसनयोः " धा० भ्वादिः कौ०पृ०४२१
मतभेदेन धान्तौ उभावप्यत्र हिंसनकर्माणौ.
( ४ ) " हलश्च " इति. ३ । ३ । १२१ कौ०पृ०६६३
अधिकरणे घञ्. आद्यस्य तु लघूपधगुणो विशेषः.　　　　१५
अन्यत्तु प्रागेव प्रव्यक्तम्. ❀
तज्जन्मधनलाभात् धन्यः—
( १ ) " धनं लब्धा " इति.
( धन्यः ).
( २ ) " धन, धान्ये " पचाद्यच्. धा० जुहो०कौ०पृ०४५२ २०
अन्यत्तु प्रागेवोक्त ततो,
( ३ ) " धनगणं लब्धा " इति. ४ । ४ । ८४॥कौ०पृ०२८८
यत्तद्धितः. लब्धेति तृन्नन्तम्.
( ४ ) " यस्य० " इति लोपः. ❀ ६।४।१४८॥ कौ०पृ०५६

निरु०—७६०(धन्य)स्तु देवकीजन्मधनलाभादिति स्मृतः॥५८२॥२५

( ७६१ ) सत्यमेधा,

---

ॐ सत्यमेधसे नमः ।

---

भा०— बल्लववसुदेवादिसाजात्याभिमानिनी मेधा सत्यास्य न नट-
५ नमात्रम् इति—
( सत्यमेधाः ).
स हि बल्लवानाह—
( १ ) " यदि वोस्ति मयि प्रीतिः श्लाघ्योहं भवतां यदि । तदात्म-
बुद्धिसदृशी बुद्धिर्वः क्रियतां मयि " इति. ❀ वि०पु०५—१३—१।
१० ( १ )" नाहं देवो न गन्धर्वो न यक्षो न च दानवः । अहं वो बान्ध-
वो जातः न वश्चिन्त्यमतोन्यथा " वि० पु० ५—१३—११ ।
"इत्यादि.
( २ ) " तदेतदखिलं गोष्ठं त्रातव्यमधुना मया । इममद्रिमहं धैर्या-
दुत्पाट्याशु शिलाघनम्॥धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवापरम् "
१५ इति. ❀ वि०पु० ५—११—१३ ।

---

निर्व०— तथा सत्या नटनमात्रत्वभावादवितथा मेधा बल्लववसु-
देवादि साजात्याभिमानिनी बुद्धिः अस्येति—
( सत्यमेधाः ).
साधितः खलु मेधतेः मेधाशब्दः. अस्तेश्शतरि सच्छब्दात्,
२० ( १ ) " तत्र साधुः " इति यति सत्यशब्दश्च. ४।४।९८॥कौ०
पृ० २८९
अतः स्त्रियाम्, अतष्टाबादि. बहुव्रीहिः. पूर्वं पुवत्.

---

निरु०— ७६१ बल्लवीवसुदेवादिसाजात्यस्याभिमानिनी ।
मेधा यस्यास्ति सत्या सः ( सत्यमेधाः ) प्रकीर्तितः ॥ ५८३ ॥

(७६२) धराधरः, ॥ श्लो० ॥ ८१ ॥ (७६३) तेजोवृषो,

ॐ धराधराय नमः । ॐ तेजोवृषाय नमः ।

भा०— गोवर्धनं धरमादधात्— ५
( धराधरः ). ❀
एवं सुहृत्पालनलक्षणं तेजो वर्षतीति—
( तेजोवृषः ).

निर्व०— अत्र चानादत्येव.
( २ ) " नञ् दुस्सुभ्यः " इति अनुवृत्तिम्, ५।४।१२१॥कौ० १०
पृ० १६८
प्रागुक्तसूत्रेणासिच्, समासान्तः छन्दस्यः, उक्तो हि छन्दोभावः.
असन्तर्दीर्घः "ईत्यादि. ❀
शातमन्यववर्षविघटनेन गोधनस्य परित्राणाय पृथुच्छत्रमिव
धरं गोवर्धनगिरिमाधरति धैर्यात् संबिभर्तीति— १५
( धराधरः ).
(१)" धृञ्, धारणे " आङ्पूर्वः, धा० भ्वादिः कौ० पृ० ४२३
पचाद्यच्, गुणः रपरः. पुनरप्ययमेव धातुः प्रत्यय—
श्चान्यच. दीर्घः नाम्नोः संहितायां सोरुत्वे यत्वे च,
(२)" हलि सर्वेषाम्" इति यलोपः. ❀ ८।३।२२॥कौ०पृ०२८ २०
एवं तेजः सुहृत्पालनलक्षणमोजो वर्षतीति—
( तेजोवृषः ). एकन्नाम.
(१) " वृषु, सेचने " इगुपधलक्षणः कः. धा० भ्वादिः कौ०पृ०४१०
अगुणः.
( २ ) " तिज, निशाने " धा०चुरा०कौ०पृ०४८३ २५

निरु०—७६२ धरं गोवर्धनं शीघ्रं धृतवान् स ( धराधरः ) ।
७६३ तेजोभिवर्षति यतः सुहृत्पालनलक्षणम् ॥ ५८४ ॥
( तेजोवृषः ) समाख्यातो वस्वर्णां मित्रवृद्धिदः ।

( ७६४ ) द्युतिधरः, ( ७६५ ) सर्वशस्त्रभृतां वरः,।

ॐ द्युतिधराय नमः। ॐ सर्वशस्त्रभृतां वराय नमः।

५ भा०—तेन तारुण्येपि इन्द्राभिभावुकामतिमानुषीं द्युतिं धृतवान्–
(द्युतिधरः). ❀
नरकजरासन्धादिसमरेषु–
( सर्वशस्त्रभृतां वरः ). यथा,
( १ ) " मनुष्यधर्मलीलस्य लीला सा जगतः पतेः। अस्त्राण्यनेक-
१० रूपाणि यदरातिषु मुञ्चति " इति. ❀

निर्व०–( ३ ) " सर्व धातुभ्यः० " इति.उणा०पा०४कौ०पृ०६४०
असुन्. गुणः. रुत्वोत्त्वगुणाः. ❀
एतेन द्युतिं तारुण्येपि इन्द्राभिभावुकामतिमानुषीं दीप्तिं धरतीति–.
( द्युतिधरः ).
१५ धृञो धर उक्तः.
( १ ) " द्युत, दीप्तौ " इन्प्रकरणे, धा० भ्वादिः कौ० पृ० ४११
( २ ) " इगुपधात् कित् " इति, उणा० पा० ४ कौ० पृ०६३७
इन्. अनिट्. अगुणः. ❀
नरकजरासन्धादिसमरेषु क्षिप्रमनेकास्त्रमोचनात् सर्वशस्त्रभृतां सर्वा-
२० स्त्रिणाम् वरः श्रेष्ठ इति–
( सर्वशस्त्रभृतां वरः ).

निरु०– ७६४ अमानुषीं यो धृतवान् द्युतिमिन्द्राभिभावुकाम्॥५८५॥
स्यातस्स हि ( द्युति धरः ) वस्वर्णः कान्तिदो मनुः।
७६५ जरासन्धादिसमरे श्रेष्ठश्शस्त्रभृतां च यः॥ ५८६॥
२५ स स्यातस्सर्वलोकेषु ( सर्वशस्त्रभृतां वरः )।

( ७६६ ) प्रग्रहो ,

ॐ प्रग्रहाय नमः ।

ना०— अर्जुनः सारथिनानेन रश्मिभिरिव प्रगृह्यत इति—
( प्रग्रहः ). ❀ १

निर्व०— ( १ ) " वृञ् , वरणे " धा०स्वादिः कौ० पृ० ४६२
(२) "ग्रहवृदृनिश्चिगमश्च " इति अप् ३।३।५८॥कौ०पृ०६५३
गुणः. रपरः. धृञः क्विपि तुक्. अगुणः.
( ३ ) " शसु , हिंसायाम् " धा० भ्वादिः कौ० पृ०४११
( ४ ) " ष्ट्रन् " इति वर्तमाने , ३।२।१८१॥कौ०पृ०६०८ १०
( ५ ) " दाम्नीशसुयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे "
इति करणे ष्ट्रन्. ३ । २ । १८२ ॥ कौ० पृ० ६०८
(६) "षः प्रत्ययस्य" इति ष इत्. तोष्टुः.१।३।६॥कौ०पृ०९३
(७)"तितुत्र०" इति नेट्. सर्व उक्तः. ७।२।९॥कौ०पृ०६०८
ततस्समुदायात् आम्. अनुस्वारपाक्षिकपरसवर्णौ. ❀ १५
अर्जुनः रश्मिभिरिव प्रगृह्यते प्रकर्षेण गृह्यते सारथिनानेनेति—
( प्रग्रहः ).
( १ ) " ग्रह, उपादाने " धा० क्र्यादिः कौ० पृ० ४७८
प्रपूर्वः.
( २ ) " अकर्तरि च कारके० " ३।३।१९॥कौ०पृ०६४७ २०
इत्यनुवृत्तौ.
( ३ ) " ग्रहवृदृनिश्चिगमश्च " ३ । ३ । ५८॥कौ०पृ०६५३
इति करणार्थे अप्. प्रपूर्वो बहुव्रीहिः. ❀

निरु०—७६६ पार्थस्सारथिनानेन रश्मिभिर्यः प्रगृह्यते ॥९८७॥
स ( प्रग्रहः ) समाख्यातः सप्तवर्ण उदाहृतः । २५

## ( ७६७ ) निग्रहो , ( ७६८ ) व्यग्रो,

ॐ निग्रहाय नमः । ॐ व्यग्राय नमः ।

५ भा०—अर्जुनपौरुषनिरपेक्षेण सारथ्यवैचित्र्येण निगृह्यन्ते शत्रव इति-
( निग्रहः ). ❀
अर्जुनवैरिनिग्रहे युद्धकर्मासहमानः—
( व्यग्रः ).
( १ ) " अग , कुटिलायां गतौ " धा० भ्वादिः कौ० पृ० ४१५
१० ( २ ) " ऋज्रेन्द्राग्र० " इत्यादिना. उणा० पा० २ कौ० पृ० ६२०.
रन्प्रत्ययो निपातितः. यथा भीष्माभिक्रमणे ,
( ३ ) "ये यान्ति यान्त्येव निशि प्रवीर येऽवस्थिताः सत्वरं तेऽपि यान्तु । भीष्मं रथात् पश्यत पात्यमानं द्रोणं च सङ्ख्ये सगणं मयाद्य" इत्येवमुक्त्वा , भा० भी० ५९–८६ ।
१५ (४) " रथादवप्लुत्य विसृज्य वाहान् " इत्यादि. ❀ भा० भी० ५९–९० ।

निर्व०—अर्जुनपौरुषनिरपेक्षेण सारथ्यवैचित्र्येण निगृह्यन्ते शत्रव इति-
( निग्रहः ).
पूर्ववद्धातुप्रत्ययौ निपूर्वो बहुव्रीहिः. ❀
२० अर्जुनवैरिनिग्रहे अर्जुनयुद्धकर्मासहमानः तत्र— .
( व्यग्रः ).
भीष्माभिक्रमणे रथादवप्लुत्य वाहान् विसृज्य चक्रपाणिर्भीष्म-
मभिदुद्रुवे.

निरु०— ७६७ येन सारथ्यवैचित्र्यान्निगृह्यन्तेऽत्र शत्रवः ॥ ५८८ ॥
२१ स ( निग्रहः ) समाख्यातस्त्रयर्णश्शत्रुनाशकः ।
७६८ युद्धकर्मासहिष्णुत्वात् पार्थविद्विड्विनिग्रहे ॥ ५८९ ॥
योऽसौ ( व्यग्रः ) समाख्यातः पडर्णो वैरिनाशकः ।

(७६९) नैकशृङ्गो,

ॐ नैकशृङ्गाय नमः।

भा०—बुद्धियोगसारथ्यनामायुधग्रहणव्याजः प्राप्तकाले तद्ग्रहण-
मिति बहुवैरिबाधकमस्येति— ५
(नैकशृङ्गः).
(१) "शॄ, हिंसायाम्" धा०क्र्यादिः कौ०पृ०४७६
(२) "शृणातेर्ह्रस्वश्च" उणा०पा०१ कौ० पृ० ६१६
इति गन्प्रत्ययः, किन्नुडगामश्च. ❀

निर्व०—(१) "अक-अग, कुटिलायां गतौ" द्वितीयोत्र,धा०भ्वादिः १०
कौ० पृ० ४१५
(२) "ऋज्रेन्द्राग्र०" इत्यादिना रन्नन्तो निपा—उणा० पा०२
कौ०पृ०६२०
त्यते, यदि तु केवलगतेः केवलगतिकर्मणः इदितोपि
अत्र ग्रहणम्; तदा इदित्त्वान्नुमो नलोपोपि निपात्यः. नेङ्.विपू— १५
र्वः समासः. ❀
बुद्धियोगः सारथ्यम् अनायुधग्रहणव्याजं प्राप्तकाले
तद्ग्रहणं चेति बहूनि शृङ्गाणि वैरिबाधकान्यस्येति—(नैकशृङ्गः).
(१) "शॄ, हिंसायाम्" धा०क्र्यादिः कौ०पृ०४७६
(२) "गन्", उणा०पा०१कौ०पृ०६१६ २०
(३) "किन्नुट् च" इति वर्तमाने, उणा०पा०१कौ०पृ०६१६
(४) "शृणातेर्ह्रस्वश्च" उणा०पा०१कौ०पृ०६१६
इति गन् कित्, तस्य नुट्. धातोर्ह्रस्वश्च. विधानात्; बाहुलकात्
किदित्यनुवर्तनाद्वा, गोनेत्. अन्यथा गित्त्वेनेह
तत्कार्यासिद्धौ अनुवर्त्य कित्त्वन्न विधीयेत इति. २५

निरु०—७६९यस्य स्या (नैकशृङ्गः) सः बहुशो वैरिबाध-
कम्।। ५९० ।।

( ७७० ) गदाग्रजः, ॥

ॐ गदाग्रजाय नमः ।

भा०— गदनाम्नोऽग्रजः—
५ ( गदाग्रजः ). ❀
विभवेपि तन्मूलव्यूहं प्रत्यभिज्ञापयति—

निर्व०-- ( ५ ) " नेट्० " इति नेट् अनुस्वारपरसवर्णौ. ७।२।८। कौ०पृ०५८१
इणः कनि एक उक्तः. नशब्दोयम्. नलोपाभावः.
१० वृद्धिः. ततः बहुव्रीहिः. ❀
वसुदेवपत्न्यारसुनामायाः तनूजस्य गदनाम्नो-
ऽवरजस्याग्रे जायत इति—
( गदाग्रजः ).
( १ ) " जनी, प्रादुर्भावे " धा० दिवा० कौ०पृ०४५४
१५ ( २ ) " अन्येष्वपि० " इति डः टिलोपः. ततः, ३ । २ । १०१॥ कौ०पृ०५८५
(३) "अक-अग, कुटिलायां गतौ" यद्वा, धा०भ्वादिः कौ०पृ०४१५
( ४ ) "अगि, गतौ" उभयमपि, धा०भ्वादिः कौ०पृ०३८८
तत्र रक् न्तो निपात्यते. नलोपश्च. तत्र ह्युक्तरीत्योभयो-
२० रपि निपातनम्.
( ५ ) " गद, व्यक्तायां वाचि " धा०भ्वादिः कौ०पृ०३८६
पचाद्यच्. सवर्णदीर्घः तत्पुरुषः. ❀
अथ विभवेपि तन्मूलभूतो व्यूहः प्रत्यभिज्ञाप्यते यदुकुलेपि
बलभद्रवासुदेवप्रद्युम्नानिरुद्धाख्याश्चतस्रो मूर्तयो अस्येति—

२५ निरु०--७७० गदनाम्नो ह्यग्रजत्वात् ( गदाग्रज ) इतीरितः ।

श्लो० ॥ ८२ ॥ ( ७७१ ) चतुर्मूर्तिश्,

ॐ चतुर्मूर्तये नमः ।

भा०— ( चतुर्मूर्तिः ).
बलभद्रवासुदेवप्रद्युम्नानिरुद्धाभिधाश्चतस्रो मूर्तयो 5
यदुकुलेऽप्यस्येति— ❀
व्यूहमूलेन निरुपाधिकपररूपेण देवक्यामवततारेति—

निर्व०— ( चतुर्मूर्तिः ).
(१) " मूर्छा , मोहसमुच्छ्राययोः " धा०भ्वादिः कौ० पृ० ३९.
आत् इत्.
( २ ) " भावे " ३ । ३ । १८ ॥ कौ० पृ० ६४७ 10
(३) "अकर्तरि च कारके० " इत्यनुवृत्तौ, ३।३।१९॥ कौ० पृ० ६४७
( ४ ) "स्त्रियां क्तिन् " इति क्तिन्. ३।३।९४॥ कौ० पृ० ६५८
( ५ ) " तितुत्र० " इति नेट् ७ । २ । ९ ॥ कौ० पृ० ६०८
( ६ ) " राल्लोपः " इति झलादौ ६ । ४ । २१ ॥ कौ० पृ० ५११ 15
प्रत्यये रात् छस्य लोपः.
( ७ ) "हलि च " इति दीर्घः. व्रित्वादि. ८।२।७७॥ कौ० पृ० ३३
( ८ ) " चते-चदे , याचने च " धा०भ्वादिः कौ० पृ० ४३१
चादी एदितौ. तत आद्यात् ,
( ९ ) " चतेरुरन् " इति उरन्. उणा०१।०५ कौ० पृ० ६४४ 20
( १० ) " त्रिचतुरो स्त्रियां तिसृ चतसृ " ७।२।९९॥ कौ० पृ० ५२
इति स्त्रियां चतुरश्चतस्रादेशः. यथाशास्त्रं पुंवत्त्व
पुंवद्भावः. ततो बहुव्रीहिः. ❀

निरु०—७७१ बलभद्रो वासुदेवः प्रद्युम्नानिरुद्धकः ॥०,९१॥
चतस्रो मूर्तयो यस्य स ( चतुर्मूर्तिः ) ...

( ७७२ ) चतुर्बाहुश्, ( ७७३ )चतुर्व्यूहश्,

ॐ चतुर्बाहवे नमः । ॐ चतुर्व्यूहाय नमः ।

५ भा०— ( चतुर्बाहुः ). सा श्लेनमाह.
( १ ) " उपसंहर सर्वात्मन् रूपमेतच्चतुर्भुजम् । जानातु मावतारन्ते कंसोयं दितिजन्मजः" इति. ❀ वि०पु० ५-३-१३ ।
अत्रापि तथैव समस्तव्यस्तषाड्गुण्यव्यवस्थत्वात्—
( चतुर्व्यूहः ). ❀

१० निर्व०— विभवेपि व्यूहमूलं परत्वमपि प्रख्याप्यते निरुपाधिकपर-रूपेण देवक्यामवततारेति—
( चतुर्बाहुः ).
( १ ) " बाधृ, विलोडने " धा०भ्वादिः कौ०पृ०३८२
( २ ) " कुर्भश्च" इति प्रकरणे, उणा०पा०१ कौ०पृ०६१०
१५ ( ३ ) " अर्जिदृशिकम्यमिपंसिबाधामृजिवशितुग्धुक्दीर्घहकाराश्च "
इति कुः. धस्य हश्च. उक्तो हि. उणा०पा०१ कौ०पृ०६१०
चतुश्शब्दः. एवमुत्तरत्रापि. एतादृशप्रदेशा अप्यूह्याः. ❀
अत्रापि तथैव समस्तव्यस्तषाड्गुण्यव्यवस्थतया चत्वारो व्यूहाः अस्येति—
२० ( चतुर्व्यूहः ).
( १ ) " ऊह, वितर्के" धा०भ्वादिः कौ०पृ०४०७
विपूर्वः. भावे घञ्. यण्. चतुश्शब्दो व्युत्पादितः.
ततो बहुव्रीहिः. ❀

निरु०— ७७२ व्यूहमूलपरावस्थानिरुपाधिकरूपतः ॥५९२॥
२५ चत्वारो बाहवो यस्य स ( चतुर्बाहु ) रुच्यते ।
७७३ समस्तव्यस्तषाड्गुण्यव्यूहावस्थाचतुष्टयः ॥ ५९३ ॥
( चतुर्व्यूह ) इति स्यातश्चतुर्वर्गप्रदो मनुः ।

(७७४) चतुर्गतिः, । {७७५ / १३९} चतुरात्मा,

ॐ चतुर्बाहवे नमः । ॐ चतुरात्मने नमः ।

भा०—उपासकाभियोगतारतम्यकृतक्रमाच्चतस्रः प्राप्तयोस्मिन् इति— ५
(चतुर्गतिः).
तेनैवाधिकारितारतम्येन प्रादुष्कृतस्थूलसूक्ष्मजाग्रदादिचातुरात्म्यस्फुटीकरणात्, चत्वारः आत्मानो अस्येति—
(चतुरात्मा). ❋ १०

निवे०—उपासकाभियोगतारतम्यकृतक्रमाच्चतस्रो गतयः प्राप्तयोस्मिन् इति—
(चतुर्गतिः).
गमेः क्तिन्यनिटि अनुनासिकलोपे च गतिशब्द उक्तः. प्रागुक्तयुक्त्या चतुरश्चतस्रभावः. ❋ १५
अधिकारितारतम्येन प्रादुष्कृतस्थूलसूक्ष्मजाग्रदाद्यवस्थाचातुरात्म्यस्फुटीकरणात्, चत्वारः आत्मानोऽस्येति—
(चतुरात्मा).
अततेर्मनिण्यात्मशब्द उक्तः. नान्तदीर्घः. "ईत्यादि. ❋
एवम् षोडशात्मकचतुर्व्यूहाधिकृतजगद्व्यापारशास्त्रप्रदानादिस्थूलसूक्ष्मप्रयोजनपुञ्जाभिव्यञ्जनात्, चत्वारः २०
उक्तचतुर्व्यूहप्रभवाः भावाः भवनाः प्रयोजनाभिव्यञ्जनानि अस्येति—

❋ निरु०-७७४ चतस्रः प्राप्तयो यस्मिन् भक्तानां स (चतुर्गतिः)॥५९४॥
७७५ स्थूलसूक्ष्मे जाग्रदादौ चातुरात्म्यप्रकाशनात् । २५
(चतुरात्मा) ॥ विज्ञेयः चस्वर्णो मनुरुत्तमः ॥ ५९५ ॥

( ७७६ ) चतुर्भावश् , ( ७७७ ) चतुर्वेदवित् ,

ॐ चतुर्भावाय नमः । ॐ चतुर्वेदविदे नमः ।

५ भा०— एवं षोडशात्मनि चतुर्व्यूहे अधिकृतजगद्व्यापारशाब्दनादि-
स्थूलसूक्ष्मव्यूहप्रयोजनपुञ्जव्यञ्जनात्—
( चतुर्भावः ).
भावो भावना अभिव्यञ्जनम्. ❀
व्यूहविभवयोर्विभावितमिदं महावैभवम् महाविभूतिमहार्णवलवमात्रम्
१० परापरविभवकोविदानां चतुर्वेदविदां प्रतिभातीति—
( चतुर्वेदवित् ). ❀

निर्व०— ( चतुर्भावः ).
( १ ) " भू, सत्तायाम् " धा० भ्वादिः कौ०पृ०३६८
हेतुमति णिच्. वृद्धिः. आप् ततः भावे,
१५ (२)" एरच् " इति अच् णिलोपः. ❀ ३।३।५६।।कौ०पृ०६५१
व्यूहविभवयोर्विभावितस्य महतो वैभवस्य महाविभूति-
महार्णवलवमात्रत्वेन तज्ज्ञैः अस्य यदुकुलोद्भवस्य
तदंशांशत्वेन ज्ञायमानतया , चतुर्वेदैः चतुरो वेदान् ,
अधीयानैः जानानैर्वा. उभयथापि चातुर्वैद्यविद्भिः
२० विद्यते तादृशपरविभूतिकणिकामात्रकतया ज्ञायत इति—
( चतुर्वेदवित् ).

निरु०— ७७६ शाब्दनादिपुञ्जाभिव्यञ्जनात् स्थूलसूक्ष्मयोः ।
( चतुर्भावः ) समाख्यातः मुन्यर्णश्च गतिप्रदः ॥ ५९६ ॥
७७७ परावरविभागानां कोविदास्त्वयमेव ये ।
२५ ( चतुर्वेदविद् ) इत्युक्तः नवार्णो निगमप्रदः ॥ ५९७ ॥

(७७८) एकपात्, ॥

ॐ एकपदे नमः ।

भा०— ( एकपात् ). अतो हि त एवमाहुः.
(१)"अंशावतारो ब्रह्मर्षे योयं यदुकुलोद्भवः" वि०पु०५–१–२। ५
( २ ) " अंशांशेनावतीर्योर्व्याम् " वि० पु०५–१–३ ।
( ३ ) " विष्णोर्भावममीमांस्यम् " रा०यु०७९–१२२ ।
( ४ ) " साक्षाद्विष्णोश्चतुर्भागः " इति. ❀रा०बा० १८–१३ ।

निर्व०–(१)"विद, ज्ञाने"बाहुलकात्,धा०अदा०कौ०पृ०४४३
कर्मणि क्विप्. अगुणः. वा चर्त्वम्. पुनरप्ययमेव धातुः. १०
( २)"हलश्च " इति करणे घञ्. ३।३।१२१॥कौ०पृ०६६३
गुणः चतुश्शब्द उक्तः. पूर्वत्र बहुव्रीहिः. उत्तरत्र ,
(३)"तद्धितार्थोत्तरपदसमाहारे च " २।१।५१॥कौ०पृ०१४२
इति तद्धितार्थोयम् द्विगुः. अत्र च
( ४ ) " तदधीते तद्वेद "इति ४। २ । ५९ ॥ कौ०पृ०२३६ १५
अध्येतृवेदितृप्रत्ययस्य ,
( ५ )"द्विगोर्लुक्०" इति लुक्. ❀४।१।८८॥कौ०पृ०२०५
किं केवलमेवं ज्ञायते न यतस्तथायम् व्यपदिश्यते च तदुच्यते ते-
षामेवम् व्यपदेश्यतया चायम् एकःपात् चतुष्पाद् विभूतिलक्षणे
एतद्विभूतिलक्षणः तुर्यांशोस्येति–( एकपात् ). २०
(१)"पद , गतौ " दिवादिः. ततः , धा०दिवा०कौ०पृ० ४५५
(२)"पदरुजविशस्पृशो घञ्"इति घञ्.३।३।१६॥कौ०पृ०६४६
कर्तरि भवति. वृद्धिः. इणः कनि एक उक्तः. ततो बहुव्रीहिः. तत्र
( ३ ) "पादस्य०" इति अनुवृत्तौ ५।४।१३८॥कौ०पृ०१७०
( ४ ) " संख्यासुपूर्वस्य " इति ५।४।१४०॥ कौ०पृ०१७० २५
ईह संख्यापूर्वस्य पादस्यान्तलोपः. स्थानिद्वारेति समा-
सान्तः. वा चर्त्वम्. नाम्नोस्संहितं जश्त्वम्.

निरु०–७७८ एकांशेनावतीर्णत्वात् (एकपात्) इति कथ्यते ।

श्लो० ॥ ८३ ॥ ( ७७९ ) समावर्तो,

ॐ समावर्ताय नमः ।

भा०—एतादृशं सदा सर्वत्र सर्वदा समन्ताद्व्यूहवैभवावर्तनमस्येति-
५ ( समावर्तः ). ❀
कृपालुतया एष जगत्संवलितोभिकारः स्वतस्तु तदसम्मतमानाः-

निर्व०— अथ वेदमेकन्नाम. तथा चायमर्थः.
चतुर्वेदविदाम् चतुर्विधाः वेदाश्च चतुर्वेदाः तान् विदन्ति
जानन्तीति चतुर्वेदविदः, परावरविभवकोविदाः. तेषाम्
१० अयमेकपात् तथात्वेन व्यपदेश्यत इति—
( चतुर्वेदविदेकपात् ).
चेत्तेः इह कर्तरि क्विप्. चतुर्वेदशब्दश्च शाकपार्थिवादित्वात् समासः.
अतः संख्यापूर्वोऽपि नायम् द्विगुः.
( ५ ) " द्विगोः " इति न ङीप्. अन्यत्सर्वं प्राग्वत्. ❀ ४।१।
१५ २१ ॥ कौ० पृ० ९४
इत्थम् सदा सर्वत्र सर्वदा समन्तात् आवर्तः वैयूह-
वैभवावर्तनमस्येति—
( समावर्तः ).
( १ ) " वृतु, वर्तने " धा० भ्वादिः कौ०पृ० ४१२
२० आङ्पूर्वः. णिच्. गुणः.
(२)"एरच्" इति भावे अच् णिलोपः. ३।३।५६॥कौ०पृ०६५२
संपूर्वो बहुव्रीहिः. ❀

निरु०—७७९ एतादृशं हि सर्वत्र सर्वदा सर्वथापि च ॥५९८॥
व्यूहस्य विभवस्यापि यस्यास्त्यावर्तनं त्विति ।
२५ ( समावर्तः ) समाख्यातः वस्वर्णो जन्मनाशकः ॥ ५९९ ॥

(७८०) निवृत्तात्मा, (७८१) दुर्जयो,

---

ॐ निवृत्तात्मने नमः । ॐ दुर्जयाय नमः ।

---

भा०—( निवृत्तात्मा ). यथा, ५
(१) " अवाक्यनादरः " इति. ❀ छा०३०३–१४ ।
सुरनरादिशक्त्या अशक्यो वशीकर्तुम्,
(१) " यन्न दर्शितवानेषः कस्तदन्वेष्टुमर्हति " इति–
( दुर्जयः ). ❀
अथ सर्वस्य पादमूलमतिक्रम्य न गत्यन्तरम् इति– १०

---

निर्व०—कृपालुतानिबन्धनो ह्येष जगत्संवलितोधिकारः इवतस्त्व-
वाप्तसमस्तकामतया निवृत्तः-तदसंवलितः-आत्मा मनोऽस्येति–
( निवृत्तात्मा ). आत्मा ह्युक्तः.
(१) " वृतु, वर्तने " निपूर्वः. क्तः. धा०भ्वादिः कौ०पृ०४१२
उदित्त्वात् निष्ठायां नेट्. अगुणः दीर्घः. ततो १५
नान्तदीर्घः. "इत्यादि. ❀
सुरनरादिशक्त्या दुश्शकवशीकरणतया, जेतुमशक्य इति–
( दुर्जयः ).
(१) " जि, जये " दुष्पूर्वः. धा०भ्वादिः कौ०पृ०४०५
(२) " ईषद्दुस्सुषु०" ३।३।१२६॥ कौ०पृ०६६४ २०
इत्यादिनोक्तसूत्रेण खल् दुस् अत्र कृच्छ्रार्थः. एवमुत्तरत्रापि.
गुणः. अम्. दुसः सोरुत्वम्. ❀

---

निरु०—७८० ( निवृत्तात्मा ) मनो यस्य सदा जगदमिश्रितम् ।
७८१ शक्त्या देवमनुष्याद्यैर्वशीकर्तुं न शक्यते ॥ ६०० ॥
अन्वेष्टुं वापि यः सत्स्यात् ( दुर्जयः ) समवर्णकः । २५

## (७८२) दुरतिक्रमः, । (७८३) दुर्लभो,

## ॐ दुरतिक्रमाय नमः । ॐ दुर्लभाय नमः ।

५ भा०—(दुरतिक्रमः). श्रूयते हि. ❋
(१) " यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति " इति.
(२) " वासुदेवमनाराध्य को मोक्षं समवाप्नुयात् "
(३) " नहि विष्णुकृते काचिद्गतिरन्या विधीयते । इत्येवं सततं
१० वेदाः गायन्ते नात्र संशयः " इति. ❋ लैङ्गपु०२४—१४३।
(१) " तस्याप्यन्यमनस्कस्य सुलभो न जनार्दनः " वि०ध०७३-६।
(२) " अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृणाम् " इति.भा० उ०७८—२१।
(दुर्लभः). ❋

१५ निर्व०—सर्वेषामपि स्वपादमूलमतिक्रम्य गत्यन्तरविरहात् तैः अतिक्रमितुमशक्य इति—
(दुरतिक्रमः).
(१) " क्रमु, पादविक्षेपे " धा०भ्वादिः कौ०पृ०४०१
अतिपूर्वः. दुरयुपपदे पूर्ववत्. खल्. सोरुत्वम्. एवमुत्तरत्रा-
२० प्युभयत्र. ❋
तथान्यमनस्कैः अजितेन्द्रियैः लब्धुं प्राप्तुमशक्य इति—
(दुर्लभः).
(१) " डुलभष्, प्राप्तौ " धा०भ्वादिः कौ०पृ०४२९
दुसि पूर्ववत्. खल्. अन्यचेत्युच्यते. ❋

२५ निरु०—७८२अतिक्रम्य स्वपन्मूलं सर्वेषां प्रापकान्तरम् ॥ ६०१॥
नास्तीति सर्वपापघ्नः स स्मृतो (दुरतिक्रमः)।
७८३अजितेन्द्रियदुष्प्रापो (दुर्लभः) स च कथ्यते ॥६०२॥

(७८४) दुर्गमो,

ॐ दुर्गमाय नमः।

भा०— नेत्रदुर्बलानामिव मध्याह्नभास्करः अप्रधृष्यतेजाः, दण्डापूपिकया— ५
(दुर्गमः). ❀

निर्व०— (२) "इदितो नुम्" ७।१।५८ ॥ कौ०पृ०३८२
(३) "लभेश्च" इति अशब्विदो रचि७।१।६४॥कौ०पृ०४९४
नुमः ईषल्लभो लाभः. इत्याद्यर्थम्.
(४)"उपसर्गात् खल्घञोः"इति खल्.७।१।६७॥कौ०पृ०६६४१०
घञोपसर्गादेव लभेर्नुमि सर्वत्र समुपालम्भादिवत्
प्रकृतेपि तथात्वान्नुम् स्यादिति शङ्क्यम्.
(५)"न सुदुर्भ्याम् केवलाभ्याम्"इति७।१।६८॥कौ०पृ०६६४
उपसर्गान्तररहिताभ्याम् सुदुर्भ्याम् लभेः नुमः प्रतिषे-
धात् न चैवम् अतिसुलभम् अतिदुर्लभम् सुसुलभम् १५
सुदुर्लभमित्यत्रापि. नुमः प्रसङ्गः. उपसर्गान्तरसाहित्येन
कैवल्याभावात् प्रतिषेधाप्रवृत्तेरिति वाच्यम्. तत्र स्वत्योः
(६) "सुः पूजायाम्" १।४।९४ ॥ कौ० पृ० १११
(७) "अतिरतिक्रमणे च" इति, १।४।९५॥कौ०पृ०१११
कर्मप्रवचनीयत्वेन कैवल्यानपायादित्यलम्. ❀ २०
नेत्रदुर्बलानाम् मध्याह्नभास्करवत् अप्रधृष्यतेजस्क-
तया प्राप्तिरेव दूरे कुतः तत्तेजः प्रधर्षणसंभावना इति
दण्डापूपिकान्यायात्, गन्तुमर्थतः प्रधर्षयितुमशक्य इति—
(दुर्गमः).

निरु०—७८४ नेत्रदुर्बलवृत्तीनां मध्याह्नद्युमणेर्यथा। २५
प्राप्तिर्दुष्करतेजस्त्वात् (दुर्गमः) परिकीर्तितः ॥ ६०३ ॥

(७८५) दुर्गो, (७८६) दुरावासो,

ॐ दुर्गाय नमः । ॐ दुरावासाय नमः ।

५ भा०— अविद्याद्यावरणैर्दुष्प्रवेशश्च—
(दुर्गः).
(१) "सुदुरोरधिकरणे" इति डः. ※ ३।२।४८॥को०पृ०५७८
एवं च दूरे दुष्करः तत्पदावासः इति—
(दुरावासः). ※

१० निर्व०—(१)"गम्लृ,गतौ"खल् रुत्वं च. ※ धा० भ्वादिः को०पृ०४३०
अविद्याद्यावरणैर्दुष्प्रवेशतया च दुःखेन गच्छन्ति अत्रेति—
(दुर्गः).
धातुः प्राग्वत्. गमः इति वर्तमाने,
(१) "सुदुरोरधिकरणे" इति, ३।२। ४८ ॥को०पृ०५७८
१५ अधिकरणे डः. टिलोपः. दुर् अत्र दुःखार्थः. ※
एवं च दुर्धरस्य दुष्करस्य वा तत्पदावासस्य सुदूरतया
आवासयितुं निवासीकर्तुमशक्य इति वा दुर् आवासः, संवासो-
स्मिन्निति वा दुर्धरश्चासौ आवासः वासस्थानं चेति वा—
(दुरावासः).
२० (१) "वस, निवासे" धा० भ्वादिः को० पृ०४३२
आङ्पूर्वः. आद्ये,
(२) "हलश्च" इत्यधिकरणे घञ्. वृद्धिः. ततः,३।३।१२१॥
को० पृ० ६६३
(३) "तत्करोति०" इति णिच्. अतो लोपः. ततो-चुरादिगणसूत्रम्
२५ को०पृ० ४९०
दुसि खल् णिलोपः. सोरुत्वं. मध्ये पक्षे वसेर्भावे घञ्.

निरु०— ७८५ दुष्प्रवेशतया (दुर्गः) पापिभिस्तु कदाचन।
७८६ दुष्करावासभूमित्वाद् (दुरावास) इतीरितः ॥ ६०४ ॥

( ७८७ ) दुरारिहा , ॥

ॐ दुरारिघ्ने नमः ।

भा०— इदं दौर्लभ्यम् अप्रपित्सुपापविषये प्रयच्छन् बुद्धाव-
तारं नियच्छति— ५
( दुरारिहा ).
दुर्मार्गगामिनो दुरारिणः तान् त्रयीमार्गत्याजनादिभि-
स्तैस्तैरुपायैर्हतवान् इति.
यथा वैष्णवे ,
( १ ) " मायामोहेन ते दैत्याः प्रकारैर्बहुभिस्तदा । व्युत्थापिता १०
यथा नैषां त्रयीं कश्चिदरोचयत् । हताश्च ते सुरा देवैस्सन्मार्गपरि-
पन्थिनः " इति. ❀ वि० पु० ३—१८— ३४ ।

निर्व०— विशेषः. वृद्धिः. प्राग्वत् बहुव्रीहिः. अन्त्ये अधिकरण
एव पञ्जित्यादि णिजभावः. कर्मधारयोपीति विशेषः. ❀
अथेदं दौर्लभ्यमप्रपित्सुपापजनविषये प्रयच्छन् १५
बुद्धावतारो निदर्श्यते. दुराः दुर्गन्तारश्च ते अरयो रिपव-
श्चेति वा दुररणं दुर्गमनम् शीलमेषामिति दुरारिणः
शत्रव इति वा. दुरारयः दुरारिणो वा तान् नमवचना-
त्रयीमार्गत्याजनादिभिस्तैस्तैरुपायैर्हिनस्ति स्मेति—
( दुरारिहा ). २०
हनः क्विप्. सार्वकालिकः अन्यदप्यत्र वक्तव्यम् प्रागे-
वोक्तम्. पूर्वत्र ,
( १ ) " ऋ , गतिप्रापणयोः " धा० भ्वादिः कौ० पृ० ४२५

निरु०—७८७ दुरारिणस्तु दुर्मार्गगामिनस्तान्निहन्ति यः ।
त्रयीमार्गत्याजनाद्यैस्स स्यान्नित्यं ( दुरारिहा ) ॥ ६०५ ॥ २५

भा०—कथंताननुप्रविष्टः—

---

निर्व०—( २ ) " ऋ-सृ, गतौ " वा धा०जुहो०कौ०पृ०४५२
( ३ )"अच इः." इति इः गुणो रपरः. उणा०५।०४कौ०पृ०६३८
५ पुनरपीमावेव धातू आवृत्तौ दुर्पूर्वौ दुष्पूर्वौ वा ततः ,
( ४ ) " अन्येष्वपि० " इति डः अङ्गकार्यम्. ३।२।१०१॥
कौ० पृ० ५८५
टिलोपः. दुर् अयम् दुसस्तु सोरुत्वम् विशेषः. तत
उपसृष्टे सांहितो दीर्घः. अपरत्र ऋधातोः ,
१० ( ५ ) " सुप्यजातौ णिनिस्ताच्छील्ये "३।२।७८॥कौ०पृ०५८२
इति दुरि दुसि वोपसर्गे सुप्युपपदे णिनिः.
( ६ ) " अचः " इति वृद्धिः. रपरत्वम् रुत्वम् ७।२।११५॥
कौ० पृ० ४२
प्राग्वत्. यद्यपि वृत्तिकारेण अनुपसर्गे सुपि णिनिः इत्यभिमत्य,
१५ (७) " उत्प्रतिभ्यां आङि सर्तेरुपसंख्यानम् " काशिका ३।२।७८॥
कौ०पृ० ५८२
उक्तम् प्रथमपक्षोपि तदनुकूलः तथापि तद्वा—
ष्यविरोधात् उपेक्ष्यमिति तद्विदः. प्रसिद्धो हि उपसर्गयोगेपि णिनिः.
( ८ ) " उपजीविनः अनुयायिनः "'इत्यादि.
२० अनुकल्पेन लोपः
ह्रस्वान्तदीर्घः "इत्यादि. ❀
कथं ताननुप्रविष्टः तत्रोच्यते. असुरविप्रलम्भनमाया—
मोहनविग्रहतया शुभमङ्गमस्येति—

श्लो० ॥ ८४ ॥ (७८८) शुभाङ्गो, (७८९) लोकसारङ्गः,

ॐ शुभाङ्गाय नमः । ॐ लोकसारङ्गाय नमः ।

भा०— (शुभाङ्गः).
अयं परमप्रत्ययित इति असुरविप्रलम्भकमायामो-
हनविग्रहः. ❀
कीदृक् विप्रलम्भः—
(लोकसारङ्गः).
लोके यत् सारं न्यायादनपेतं भोगमोक्षवर्त्म, १०
(१) " तद्गच्छति "

निर्व०— (शुभाङ्गः).
निरुचे ह्यङ्गेर्गतिकर्मणोऽव्यङ्गशब्दः, शुभेश्च शोभार्थादिगुप-
धलक्षणे के शुभशब्दश्च. दीर्घः. ❀
कीदृग्विप्रलम्भः तत्रोच्यते. लोकसारम्, लोके सारं न्यायादनपे- १५
ततया सारभूतम् , भोगमोक्षवर्त्म गच्छति गत्यर्थतयास्य नार्थ-
त्वात् तान् प्रति तदुपदेशाज्जानाति चेति—
(लोकसारङ्गः).
(१) " गम्लृ , गतौ " खच्प्रकरणे , धा०भ्वादिः कौ०पृ०४३०
(२) " गमश्च " इति सत्यपि , ३।२।४७ ॥ कौ०पृ०५७८ २०
(३) "संज्ञायाम्०" इति, अनुवृत्त्या ३।२।४६॥कौ०पृ०५७८

निरु०—७८८ मायामोहनवेषेण विप्रलभ्यासुरानपि ।
अनुप्रविष्टस्तान्योसौ (शुभाङ्ग) इति कथ्यते ॥ ६०६ ॥
७८९ न्यायानपेतं यत्सारं भोगनिर्वाणवर्त्म च ।
लोके तद्गच्छति सदा (लोकसारङ्ग) ईरितः ॥ ६०७ ॥ २५

( ७९० ) सुतन्तुम् ,

ॐ सुतन्तवे नमः ।

भा०—(२) " गमेस्सुप्युपसंख्यानम् " ३।२।३८॥ कौ०पृ०५७७
५ (३) " खच वा डिद्वक्तव्यः " इति स खल्वाह ३।२।३८॥ कौ०पृ०५७७
(४) " कुरुध्वं मम वाक्यानि यदि मुक्तिमभीप्सथ " वि०पु० ३—१८-५
" इत्यादि. ❀
शोभनो न प्रतिलङ्घ्यस्तद्ग्रहणवागुरातन्तुः कृत्रिमशान्ति-
भावनादिरूपोऽस्येति—
१० ( सुतन्तुः ). ❀

निर्व०— संज्ञार्थे खजनुशासने खचस्तस्याडिद्वद्भावात् ,
( ४ ) " गमेः सुपि वाच्यः " ३।२।३८॥ कौ०पृ०५७७
( ५ ) " खच वा डिद्वक्तव्यः " ३।२।३८ ॥ कौ०पृ०५७७
इति समुदायस्य संज्ञात्वेन अंशस्यातथाभावात्
१५ असंज्ञायामौपसंख्यानिकः. खच् वा डिच्च. डित्वाट्टिलोपः.
( ६ ) " सृ, गतौ " धा० भ्वादिः कौ० पृ० ४२५
" सृ स्थिरे " इति स्थिरे कर्तरि घञ्. ३।३। १७॥ कौ०पृ०६४७
वृद्धिः. रपरत्वम्.
( ७) " अरुर्द्विषदजन्तस्य मुम् " इति. ६ ।३।६७॥ कौ०पृ०५७५
२० (८) " खित्यनव्ययस्य " अजन्तस्य मुम् ६ ।३।६६॥ कौ०पृ० ५७५
( ९ ) " मिदचोऽन्त्यात्परः " १ । १ । ४७ ॥ कौ० पृ० ७
अनुस्वारादि. लोकेः वज्ञि लोक उक्तः. ❀
तथा , अलङ्घ्यतया सुशोभनः तन्तुः— कृत्रिमशान्तिभाव-
नादिरूपः , तद्ग्रहणवागुरागुणोऽस्य इति- -
२५ ( सुतन्तुः ).

निरु०—७९० तन्तुः कृत्रिमशान्त्यादिरूपः तद्ग्रहणाय वै ।
( सुतन्तुः ) शोभनोऽस्येति सतां शोपनार्थकः ॥ ६०८ ॥

(७९१) तन्तुवर्धनः, ।

ॐ तन्तुवर्धनाय नमः ।

भा०— एवं पापरुचिभिरंशुभिरिव संसारतन्तुं सन्तनोतीति—
(तन्तुवर्धनः). यथा, ५
(१) "तानहं द्विपतः क्रूरान् संसारेषु नराधमान्" गी० १६—१९।
"इत्यादि.
(२) "त्रयीधर्मसमुत्सर्गं मायामोहेन ते सुराः । कारिता-
स्तन्मया ह्यासन्तथान्ये तत्प्रचोदिताः ॥ तैरप्यन्ये परे तैश्च
तैरप्यन्ये परे च तैः" इति. ❀ वि०पु० ३—१८—३२। १

निर्व०—(१) "तनु, विस्तारे" धा० तना० कौ० पृ० ४७२
(२) "सितनिगमिमसिसच्यविधाञ् क्रुशिभ्यस्तुन्"
उणा० पा० १ कौ० पृ० ६१२
इति तुन्.
(३) "तितुत्र०" इति, नेट्. ७।२।९॥ कौ० पृ० ६०८ १५
अनुस्वारपरसवर्णौ. सुपूर्वो बहुव्रीहिः. ❀
एवम् अंशुभिरिव पापरुचिभिः तन्तुम् संसारतन्तुं वर्धयति
सन्तनोतीति—
(तन्तुवर्धनः).
(१) "वृधु, वृद्धौ" णिच्, गुणः. धा० भ्वादिः कौ० पृ० ४१२ २०
रपरः. ततो ल्युः "इत्यादि. अनः. णिलोपः. तन्तुरुक्तः. ❀

निरु०— ७९१ अंशुभिः पापरुचिभिस्तन्तुं संसारनामकम् ।
यस्सन्तनोतीति सदा (तन्तुवर्धन) ईरितः ॥ ६०९ ॥

## (७९२) इन्द्रकर्मा, (७९३) महाकर्मा,

ॐ इन्द्रकर्मणे नमः । ॐ महाकर्मणे नमः ।

५ भा०— (१) " तमूचुस्सकला देवाः प्रणिपातपुरस्सरम् । प्रसीद ना-
थ दैत्येभ्यस्त्राहीति शरणार्थिनः " इति.वि०पु० ३–१७–३६ ।
शरणागतेन्द्राद्यर्थे एवंविधव्यापारत्वात्–
(इन्द्रकर्मा). ❀
एवं प्रपन्नपरिपालनार्थत्वाद्दुराचारदण्डनार्थत्वाच्च.
१० खलु परमकारुणिकस्यैष विप्रलम्भसंभवः एवं न्यायवृत्तत्वात्–
(महाकर्मा). ❀

निर्व०— एवम् शरणागतेन्द्राद्यर्थे एवंविधव्यापारतया
इन्द्राय तत्प्राधान्येन तद्व्यपदेशात् तत्प्रभृतिभ्यो
देवेभ्यः कर्म एतादृशव्यापारोस्येति–
१५ (इन्द्रकर्मा). कञः,
(१) " सर्वधातुभ्यः० " इति मनिन्.उणा०पा०४ कौ०पृ०६३१
गुणो रपरः. अनिट्. इत्थम् उत्तरत्रापि. उभयत्र इन्देः,
कनि इन्द्र उक्तः. नान्तदीर्घः "इत्यादि. ❀
प्रपन्नपरिपालनावशात् दुराचारदण्डनार्थत्वाच्च. खलु
२० परमकारुणिकस्य अस्य एष विप्रलम्भसंभवः. एवम्
महत् न्याय्यं कर्म वृत्तमस्येति–
(महकर्मा).

निरु०—७९२ प्रपन्नेन्द्राद्यर्थतया दैत्यसंहाररूपकम् ।
कर्म यस्यास्ती (न्द्रकर्मा) ह्यष्टाणां मनुरुत्तमः ॥ ६१० ॥
५ ७९३ एव न्यायप्रवृत्तत्वात् (महाकर्म) ति शब्द्यते ।

( ७९४ ) कृतकर्मा, ( ७९५ ) कृतागमः, ॥

ॐ कृतकर्मणे नमः । ॐ कृतागमाय नमः ।

भा०— तद्विभलिप्सया स्वयमप्यनुष्ठिततदाचारः— ५
( कृतकर्मा ). ❀
तत्स्थेम्ने प्रणीतबुद्धार्हतादिसामयिकागमः—
( कृतागमः ). ❀
मुक्त्युपदेशनादितिकेन भवादुद्गत इव—

निर्व०— प्रागुदपादिपातां हि उभावपीमौ शब्दौ. आत्वम् दीर्घः. १०
"इत्यादि. ❀
तद्विभलिप्सया कृतम् स्वयमनुष्ठितं कर्म तदाचारोऽनेनेति—
( कृतकर्मा ). कृञः,
( १ ) " सर्वधातुभ्यः० " इति, उणा०पा०४ कौ०पृ०६३९
मनिन्. गुणः. नान्तदीर्घः "इत्यादि. ❀ १५
तत्स्थेम्ने च, कृतः प्रणीतः. आगमः बुद्धार्हतादिसामयिकशास्त्र-
मनेनेति—
( कृतागमः ).
( १ ) " गम्लृ, गतौ " आङ्पूर्वः. धा०भ्वादिः कौ०पृ०४३०
( २ ) " ग्रहवृदृनिश्चिगमश्च " इति ३।३।५८॥कौ०पृ०६५३२०
गमेः अप्. कृत उक्तः. दीर्घः. ❀
मुक्त्युपदेशनादितिकेन उद्गतः-भवः संसारोऽस्येति वा, उद्गत इव
भवादिति वा—

निरु०—७९४ स्वानुष्ठिततदाचारः ( कृतकर्म ) ति कथ्यते ॥६११॥
७९५ कृतबुद्धाद्यागमत्वात् ( कृतागम ) उदाहृतः । २५

श्लो०॥ ८५ ॥ (७९६) उद्भवम्, (७९७) सुन्दरम्,

ॐ उद्भवाय नमः। ॐ सुन्दराय नमः।

५ भा०—(उद्भवः). ❋
तद्दृष्टिमनोहरः—
(सुन्दरः). ❋
तेनासुरमनांसि सुष्ठु उनत्ति इति—

निर्व०—(उद्भवः).
१० (१) "भू, सत्तायाम्" धा०भ्वादिः कौ०पृ०३६८
(२) "ऋदोरप्" इति ऊदन्तादप्. ३।३।५७॥कौ०पृ०६५३
तत्र हि दकारो मुखसुखार्थः. ततो यन्नन्तात्परः गुणः.
अप्. पूर्वत्र उत्पूर्वो बहुव्रीहिः. अपरत्र उदः,
(३) "निरादयः कान्ताद्यर्थे पञ्चम्या" २।२।१८॥कौ०पृ०१४८
१५ इति समासः. तत्पुरुषः. ❋
तद्दृष्टिमनोहरतया च सुन्दरः रमणीय इति—
(सुन्दरः).
(१) "दॄ, विदारणे" सुपूर्वः. धा०क्र्यादिः कौ०पृ०४७६
(२) "ऋदोरप्" इति अप्. गुणः. रपरः. ३।३।५७॥कौ०पृ०६५३
२० पृषोदरादित्वात् वर्णागमेन मः नो वा. अनुस्वारपरसवर्णौ. ❋
तेन च सौन्दर्येण असुरमनांसि सुष्ठु—सुतराम् उनत्ति
क्लेदयति—आर्द्रयतीति—

निरु०— ७९६ मोक्षोपदेशनटनाद्भवादुद्भवतस्थितः ॥६१२॥
(उद्भवः) स च विज्ञेयस्समार्णः पापनाशकः।
२५ ७९७ स स्यात्सुन्दर उद्दिष्टः तेषां दृष्टिमनोहरः ॥ ६१३ ॥
विश्वातिशायिसौभाग्यशालित्वात् (सुन्दरः) स्मृतः।

(७९८) सुन्दो, (७९९) रत्ननाभः,

ॐ सुन्दाय नमः । ॐ रत्ननाभाय नमः ।

भा०—( सुन्दः ). ५
पृषोदरादिः. ❋
पाण्डित्यविडम्बनमृष्टोदरव्यक्तरम्यनाभिः—
( रत्ननाभः ).

निर्वं०—( सुन्दः ).
(१) " उन्दी, क्लेदने " धा०रुधा० कौ० पृ०४७२ १०
सुपूर्वः. पचाद्यच्. सुरुन्देर्वा. उकारलोपः. पृषोदरादिलक्षणः.
शकन्ध्वादिलक्षणम् पररूपं वा. ❋
पाण्डित्यविडम्बनमृष्टोदरव्यक्तरम्यनाभितया, रत्नम् तद्वत् रम्या नाभिरस्येति—
( रत्ननाभः ). १५
(१) " णह, बन्धने " नत्वम्. धा०दिवा०कौ०पृ०४५५
(२) " हनोर्भश्च " उणा०पा०४कौ०पृ०६३८
इति इञ्. भश्चान्तादेशः. उपधावृद्धिः.
(३) " रमु,क्रीडायाम् " धा०भ्वादिः कौ०पृ०४२०
अस्मादन्तर्भावितण्यर्थात्, २०
(४) " रमेस्त च " इति. उणा०पा०३कौ०पृ०६२५
नः. तश्चान्तादेशः. अनिट्. ततो बहुव्रीहौ,
(५) " अच्प्रत्यन्वव० " ५ । ४ । ७५ ॥ कौ०पृ०१८३
इत्यत्र अच्. इति योगविभागादच् समासान्तः.
(६) " यस्य० " इति लोपः. ❋६।४।१४८॥कौ०पृ०५६ २५

निरु०—७९८ उनत्ति सुष्ठु चेतांसि रक्षसां ( सुन्द )ईरितः॥६१४॥
७९९ स ( रत्ननाभ ) इत्युक्तः यः पाण्डित्यविडम्बनात् ।
मृष्टोदरव्यक्तरम्यनाभिस्सत्फलदो मनुः ॥ ६१५ ॥

( ८०० ) सुलोचनः, ।

ॐ सुलोचनाय नमः ।

भा०—तथा हृदयालुचोरलोचनः—
( सुलोचनः ). यथा,
( १ ) " ततो दिगम्बरो मुण्डः " वि०पु० ३—१८—२ ।
( २ ) " पुनश्च रक्ताम्बरधृक् मायामोहोऽजितेक्षणः " वि०पु० ३—१८—१६ ।
इति. ❀

१० इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः-
श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे
भगवद्गुणदर्पणे
अष्टमंशतकं समाप्तम् ।

१५ निर्व०—तथा हृदयालुचोरलोचनतया सु—शोभने लोचने अस्येति—
( सुलोचनः ).
( १ ) " लोचृ, दर्शने " धा०भ्वादिः कौ०पृ० ३८९
करणे ल्युट्, अनः. सुपूर्वो बहुव्रीहिः. ❀

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-
२० वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते
श्रीपराशरभट्टार्यभाषित-
श्रीमद्विष्णुसहस्रनामभाष्यानुगे भगवन्नामसहस्रनिर्वचने
अष्टमं शतकं समाप्तम् ।

निरु०—८००( सुलोचन ) इति प्रोक्तो दृङ्मायामोहितेक्षणः ।

# अथ नवमशतकम् ।

(८०१) अर्को,

ॐ अर्काय नमः ।

ना०— अहो महात्मा अतिधार्मिक इति तैः स्तुतः— ५
(अर्कः).
(१) "अर्क, स्तुतौ" ❀ धा० चुरा० कौ०पृ०४८२

निर्व०— स चाहो— अयम् महात्मा— अतिधार्मिक इति तैरर्च्यते ऋच्यते वा, स्तूयत इति वा, तैरर्च्यते पूज्यत इति वा— ,
(अर्कः). १०
पूर्वत्र प्रथमकल्पे,
(१) "अर्क, स्तवने" धा०चुरा०कौ०पृ०४८२
चुरादिः. णिच्. ततः.
(२) "अकर्तरि च कारके०" इति. ३।३।१९॥कौ०पृ०६४७
अनुवृत्तौ, १५
(३) "एरच्" इति, ३।३।५६॥ कौ०पृ०६५३
कर्मण्यच्. णिलोपः. अनुकल्पे,
(४) "ऋच, स्तुतौ" तुदादिः. धा०तुदा०कौ०पृ०५६५
(५) "अकर्तरि च कारके०" इति, ३।३।१९॥कौ०पृ०६४७
कर्मणि घञ्. गुणः. रपरः. २०
(६) "चजोः कुघिण्यतोः" इति ७।३।५२॥कौ०पृ०५६०
घिति चस्य कुत्वेन कः. परत्र,
(७) "अर्च, पूजायाम्" धा०भ्वादिः कौ०पृ०३९०
भ्वादिः. प्राग्वत् कर्मणि घञ्. कुत्व च. त्रित्वादि ❀

निरु०—८=१अत्यन्तधार्मिक इति स्तुतस्ते(रर्क)ईरितः॥६१६॥ २५

२ ) वाजसनिश्च,

जसनये नमः ।

नास्तिक्यवादेन ऐहिकमन्नादिकमेव संभजतीति–
सनिः ).
" वन–षण, संभक्तौ " इन्. धा० भ्वादिः कौ०पृ०४०१
" सर्वधातुभ्यः० " उणा०पा०४कौ०पृ०६३७
व्रतं हीदम्, यद् प्रातः प्रातः दध्योदनकवलान्
इति. ※
व अहिंसाविडम्बनपिच्छिका अस्य करे अस्तीति–

– तथा नास्तिक्यवादेन- वाजम्- ऐहिकमन्नम्- अस्योपलक्ष-
तद्यादिकमेव सनति- संभजतीति–
सनिः ).
वन–षण, संभक्तौ"पक्षः. णोनः.धा०भ्वादिः कौ०पृ०४०१
" सर्वधातुभ्यः०" इति इन्. उणा०पा०४कौ०पृ०६३७
"वज–व्रज, गतौ' भौवादिकः; धा० भ्वादिः कौ०पृ०३९२
"वज , मार्गसंस्कारगन्योर्वा" धा०चुरा०कौ०पृ०४८१
ः. आद्ये हेतुमति णिच्. द्वितीये तु स चुरादिलक्षणो
उपधोपधावृद्धिः. ततः,
) " एरच् " इति सोत्रे ३।३।५६।।कौ०पृ०६५३
) " अकर्तरि च कारके० " ३।३।१९।।कौ०पृ०६२७
त्ययम्. एकत्र णेर्लोपः. ( अन्यत्र वृद्धिबाध नण्यो )
विशेषः.मातृदेव साण्यन्तात्.स णिच्.विनापि तेनार्थलाभात्. ※

– ८०२ अत्रार्थेनैहिकानेव यन्मान्सदा भजन्ति हि ।
ाजसनि ) रित्युक्तः सत्वर्णोऽभयो मनुः ॥ ६३७ ॥

(८०३ शृङ्गी,

ॐ शृङ्गिणे नमः।

भा०— ( शृङ्गी ). यथा,
( १ ) " बर्हिपत्रधरः " इति. ❀ वि०पु० ३-१८-२। ५
आस्तिक्यवादिनः संविदात्मत्वप्रपञ्चमिथ्यात्वमिथ्या-
वादैर्जितवान्—

निर्व०—प्रातः प्रातः दध्योदनकवलग्रहणं हि क्षपणकव्रतम्.
तथा शृङ्गं तदुपलक्षिता तादृशी अहिंसाविडम्बनपिञ्छि—
का—करस्थास्यास्तीति— १०
( शृङ्गी ).
( १ )" शॄ, हिंसायाम् " धा० क्र्यादिः कौ० पृ० ४७६
( २ ) " गन्० " उणा० पा०१ कौ० पृ० ६१६
(३)" किन्नुट् च " इति वर्तमाने, उणा०पा०१कौ०पृ०६१६
( ४ ) " शृणातेः ह्रस्वश्च " इति. उणा०पा०१कौ०पृ०६१६ १५
गन्, कित्, तस्य नुट्. धातोः ह्रस्वश्च, विधानात्.
बाहुलकात्, किदित्यनुवर्तनाद्वा, गो नेत्. अन्यथा हि
गित्त्वेनेह तत्कार्यसिद्धौ अनुवर्त्य कित्त्वन्न विधीयेत.
( ५ ) " नेट्० " इति नेट्. गुणः. ७।२।८॥ कौ०पृ०५८१
अनुस्वारपरसवर्णौ. ततश्शृङ्गशब्दात् मत्वर्थीयोत इनिः. २०
( ६ ) " यस्य० " इति लोपः. ६।४।१४८॥ कौ०पृ०५६
इन्नन्तदीर्घः "३७६"इत्यादि. ❀
संविदात्मत्वप्रपञ्चमिथ्यादिमिथ्यात्ववादैरास्तिक्य—
वादिनो जयतीति—

निरु०-८०३ करेऽस्ति पिञ्छिका यस्य(शृङ्ग्य)हिंसाविडम्बनात्। २५
सर्वप्रपञ्चमिथ्यात्वसंविदात्मत्ववादनः ॥ ६१८ ॥

( ८०४ ) जयन्तस् , ( ८०५ ) सर्वविज्जयी , ॥

ॐ जयन्ताय नमः । ॐ सर्वविज्जयिने नमः ।

५ भा०— ( जयन्तः ).
( १ ) " जि , जये " धा० भ्वादिः कौ० पृ०४०५
( २ ) " तॄभूवहिवसिभासिसाधिगण्डिमण्डिजिनन्दिभ्यश्च " उणा० पा०३ कौ० पृ० ६३०
इति झच्प्रत्ययः. ❋
१० कथं चैतान् प्रमाणविरुद्धं प्रत्याययति—
( सर्वविज्जयी ).

निर्व०— ( जयन्तः ).
( १ ) " जि, जये " धा० भ्वादिः कौ० पृ० ४०५
( २ ) " जॄविशिभ्यां झच् " उणा०पा०३कौ० पृ० ६३०
१५ (३) " रुहिनन्दिजीविप्राणिभ्यष्षिदाशिषि " इति. उणा०पा० ३कौ० पृ० ६३०
अतो झच्. षिदिति वर्तमाने ,
(४)" तॄभूवहिवसिभासिसाधिगण्डिमण्डिजिनन्दिभ्यश्च "उणा० पा०३ कौ०पृ० ६३०
२० इति झच् . षित् ,
( ५ ) " षिद्गौरादिभ्यश्च " इति. ४।१।४१ ॥ कौ०पृ०९८ स्त्रियां ङीषर्थम्.
( ६ ) " झोन्तः " इति झो अन्तादेशः.७।१।३॥कौ०पृ० ३६८
आदेशे अकार उच्चारणार्थः. गुणः. अयू. ❋
२५ कथं चैतान् प्रमाणविरुद्ध प्रत्याययति तत्रोच्यते. यतस्सर्वज्ञानामप्येतज्जयनया अयम् , सर्वविदः सर्वान्- जेतुं शीलमस्येति—
( सर्वविज्जयी ).

निरु०— ८०४ आस्तिक्यवादिनां जेता ( जयन्त ) इति कथ्यते । ८०५ यस्य जय्याश्च सर्वेऽपि स चोक्तः ( सर्वविज्जयी ) ॥६१९ ॥

श्लो० ॥ ८६ ॥ (८०६) सुवर्णविन्दुर्,

ॐ सुवर्णविन्द्वे नमः ।

भा०— सर्वज्ञा अपि हि जय्या अस्येति— ❀
सर्वशक्तित्वात् पटुतरपदकवर्णैरास्तिकतापलापात्— ५
(सुवर्णबिन्दुः).
(१) " विदि, अपलापे " ❀ धा०भ्वादिः कौ०पृ०३८७

निर्व०— एकनाम.
(१) " जि, जये " धा० भ्वादिः कौ०पृ०४०५
(२) " आक्वेरतच्छीलतद्धर्मतत्साधुकारिषु " ३।२।१३४ ॥ १०
कौ० पृ०६ ०१
इत्यधिकारे,
(३) " भ्रजोरिनिः " इति वर्तमाने, ३।२।१५६॥कौ०पृ०६०४
(४) " जिदृक्षिविश्र्यतीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च " इति,
इनिरत्र ताच्छीलिकः.गुणः.अय्.वेत्तेः३।२।१५७॥कौ०पृ०६०४ १५
क्विपि विदुकः. अगुणः. सर्वो वन्नन्तो निपातितः. श्रुत्वम्.
दस्य जः. इन्नन्तदीर्घ "इत्यादि. ❀
तथा सुवर्णैः सुशोभनैः वर्णैः पटुतरपदकवर्णैः विन्दति
आस्तिक्यमतमपलपतीति—
(सुवर्णबिन्दुः). २०
निपुणतरा हि तत्कक्ष्या परिपाटी.
(१) " विदि, अवयवे " धा० भ्वादिः कौ०पृ०३८७
अपलापकर्मेहायम्. नुमादि.
(२) " विन्दुरिच्छुः " इति, ३।२।१६९॥ कौ०पृ०६०५

निरु०—८०६ आस्तिकत्वापलापेन पटुभिः पदकाक्षरैः । २१
(सुवर्णबिन्दुर्) गदितः नवार्णः पापनाशनः ॥६२० ॥

( ८०७ ) अक्षोभ्यम्,

ॐ अक्षोभ्याय नमः ।

भा०— गम्भीराशयत्वेनाविकार्यः—
( अक्षोभ्यः ). ❋

निर्व०— बवयोरभेदात् उभयोरपि ग्रहणात् तच्छीलादावुपत्ययान्तो
निपात इत्युक्तम्. तथापि चिन्देरुः. प्रागेव प्रपञ्चितः.
( ३ ) " वृञ्, वरणे " नप्रकरणे, धा०स्वादिः कौ०पृ०४६२
( ४ ) " कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् " इति नः उणा०
पा०३ कौ०पृ०६२५
नित् स्वरार्थम्. गुणः. रपरः.
( ५ ) " नेड्० " इति नेट्. ७।२।८॥कौ०पृ०५८१
( ६ ) " रषाभ्याम्० " इति णत्वम्. ८।४।१॥कौ०पृ०३९
सुपूर्वस्तत्पुरुषः. ❋
२ गम्भीराशयतया क्षोभ्यो विकार्यो नेति—
( अक्षोभ्यः ).
( १ ) " क्षुभ, सञ्चलने " धा० क्रयादिः कौ०पृ०४७७
( २ ) " ऋहलोर्ण्यत् " इति ३।१।१२४॥कौ०पृ०५६२
ण्यत्. अर्हशक्त्यर्थयोरयम् कृत्यः. गुणः. समासः. नञो नलोपः. ❋
० वादित्ववाग्मित्वधारीणतया सर्वेषाम्- वागीश्वराणाम्-
वाचः. वाण्याः- ईश्वरः- ब्रह्मा बहुवचनादाद्यर्थ-
लाभात् ब्रह्मादीनामपि ईश्वरः स्वामीति—

निरु०— ८०७ गम्भीराशयवत्त्वेन ह्यधिकारितया च मः ।
( अक्षोभ्य ) रसमवर्णः स्यादक्षोभ्यत्वप्रदायकः ॥ ६२१ ॥

(८०८) सर्ववागीश्वरेश्वरः, ।

ॐ सर्ववागीश्वरेश्वराय नमः ।

भा०— ( सर्ववागीश्वरेश्वरः ).
अतो वादित्ववाग्मित्वयोः पारं गतः; यथा ५
( १ ) "उत्तरोत्तरमुक्तौ च वक्ता वाचस्पतिर्यथा" रा०अ० १—१४।
इति. ❀
यत्र पापकर्माणः अपुनरुत्थानं निमज्जन्ति,
( १ ) " क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु " गी० १८—१९।
इति, यत्र च पुण्यकृतो गाहं गाहं तृप्यन्ति, सः १०

निर्व०— ( सर्ववागीश्वरेश्वरः ).
ईशेश्वरचि ईश्वर उक्तः. पुनश्च स एव आवृत्तः.
( १ ) " वच, परिभाषणे " धा०अदा०कौ०पृ०४४३
( २ ) " क्विब्वचि० " इत्यादिना क्विप्, दीर्घः. ३।२।१७८॥
कौ०पृ०६०७ १५
( ३ ) " वचिस्वपि० " इति ६।१।१५॥कौ०पृ०४३२
प्राप्तसंप्रसारणाभावश्च.
(४) " चोः कुः " इति कुत्वम्. कः. तस्य ८।२।३०॥कौ०पृ०६८
जश्त्वम् गः. सर्व उक्तः. गुणः. ❀
दैवप्रमाणविपर्ययेण पापिनाम् पातालतलान्तर्निमग्नानाम् अपुन- २०
रुत्थानन्निमज्जयितृतया; पुण्यकृताञ्च गाहं गाहं सुतृप्तानाम्
अपुनर्निमज्जनमुन्मज्जयितृतया च महांश्चासौ— ह्रदो अगाध-
जलाशय इति—

निरु०— ८०८ वादिवाग्मित्वयोः पारं यो गच्छति स विश्रुतः ।
रव्यर्णो वाक्प्रद इति ( सर्ववागीश्वरेश्वरः ) ॥ ६२२ ॥ २५

( ८०९ ) महाह्रदो, ( ८१० ) महागर्तो,

ॐ महाह्रदाय नमः । ॐ महागर्ताय नमः ।

भा०—( महाह्रदः ).
( २ ) " ह्राद, अव्यक्ते शब्दे " धा० भ्वादिः कौ० पृ० ३८३
ह्रादत इति ह्रदः. पृषोदरादिपाठात् ह्रस्वत्वम्. ❀
एवं बाह्यकुदृष्टिविनिविष्टनष्टात्मनां रौरवादिगर्ता अस्मादिति—
( महागर्तः ). यथा,
१० ( १ ) " अश्रद्दधानाः पुरुषाः धर्मस्यास्य परंतप। अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि " इति. ❀ गी० ९—३ ।

निर्व०—( महाह्रदः ).
( १ ) " ह्राद, अव्यक्ते शब्दे " धा० भ्वादिः कौ० पृ० ३८३
पचाद्यच्. पृषोदरादिलक्षणो ह्रस्वो वर्णविकारः. महतेरत्यन्तो महत्-
१५ शब्दो निरूढे. ततो महतः आत्वम्. दीर्घः. एवमुत्तरत्रापि. ❀
एवम् बाह्यकुदृष्टिविनिविष्टतया नष्टात्मनाम् महान्तः-
गर्ताः- अवटाः. तदुपलक्ष्याः रौरवादयो अस्मादिति—
( महागर्तः ).
( १ ) " गृ, निगरणे " धा० तुदा० कौ० पृ० ४६८
२० ( २ ) " हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् " उणा० पा० ३ कौ० पृ० ६२८
इति तन्. गुणः. रपरः.
(३) " तितुत्र० " इति नेट्. द्वित्वादि. ❀ ७।२।९॥ कौ० पृ० ६०८

निरु०—८०९ शास्त्यत्र पुण्यास्तृप्ति सः गाहं गाहं ( महाह्रदः )
२५ ८१० पापाक्रान्ततया नष्टमज्ञानां रौरवादयः ॥ ६२३ ॥
गर्ता यस्मात् ( महागर्तः ) स स्मृतो वसुपर्णकः ।

( ८११ ) महाभूतो, ( ८१२ ) महानिधिः, ॥

ॐ महाभूताय नमः । ॐ महानिधये नमः ।

भा०–एवं स्वशासनातिलङ्घिनामसुराणां निग्राहकत्वमुक्तम्. ५
अथ दैवीं संपदमभिजातानां स्वशास्त्रवश्यानामनुग्राहकत्वम्–
( महाभूतः ).
महान्तो महात्मानोस्य स्वभूता इति. यथा,
( १ ) " महात्मानस्तु मां पार्थ " "इत्यादि. ❀ गी०९–१३ ।
ते निधिवदतिप्रिया अस्येति– १०
( महानिधिः ). यथा,
( १ ) " ये तु धर्म्यामृतमिदम् " इत्यादि. ❀ गी०१२–२० ।

निर्व०–इत्थम् स्वशासनातिलङ्घिनाम् असुराणाम् निग्राहकत्व-
मुक्तम्. अथ दैवीं संपदमभिजातानां स्वशास्त्रवश्यानाम् अनुग्राहक-
त्वमभिधीयते–महान्तः-महात्मानः- १५
भूताः–स्वभूता अस्येति–
( महाभूतः ).
भवतेः अकर्मकात्कर्तरि क्तः.
(१) "श्र्युकः०" इति नेट्. अगुणः. ❀ ७।२।११॥कौ०पृ०४२५
तथा ते महान्तो निधयः तद्वदतिप्रिया अस्येति– २०
( महानिधिः ).
(१)"डुधाञ्, धारणपोषणयोः" निपूर्वः. धा० जुहो० कौ०पृ०४५१
( २ ) " उपसर्गे घोः किः " इति किः. आह्लोपः.❀ ३।३।९२ ॥
कौ० पृ० ६५८

निरु०–८११ निग्राहकत्वं कथितं स्वस्यैवानातिलङ्घनात् । २५
स्वाज्ञानुवर्तिनां पुंसामनुग्राहस्तथोच्यते ॥ ६२४ ॥
( महाभूतो ) महात्मानः स्वभूता यस्य चोच्यते ।
८१२ महात्मानो निधिरिव प्रिया यस्य ( महानिधिः ) ॥ ६२५ ॥

श्लो० ॥ ८७ ॥ ( ८१३ ) कुमुदः, ( ८१४ ) कुन्दरः,

ॐ कुमुदाय नमः । ॐ कुन्दराय नमः ।

५ भा०—कौ प्रकृतिमण्डल एव तैस्सह मोदत इति—
( कुमुदः ). ❀
कुं मुक्तिभुवं ददातीति वा—
कुन्दकुसुमधवलत्वाद्वा. कुन्दम् परतत्त्वज्ञानम्
पृषोदरादिः. तद्राति ददातीति—
१० ( कुन्दरः ).

निर्व०— तैस्सह कौ भूमौ तदुपलक्ष्ये प्रकृतिमण्डल एव मोदत इति—
( कुमुदः ).
( १ ) " मुद, हर्षे " धा०भ्वादिः कौ०पृ०३८२
( २ ) " कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् " ३।२।५॥
१५ कौ०पृ०५७१
इति तस्याकृतिगणत्वात् कः. इगुपधलक्षणो वा. अगुणः.
(३)" कै,शब्दे "आत्वम्.ततो बाहुलकात् धा०भ्वादिः कौ०पृ०४२४
( ४ ) " कुर्भ्रश्च " इति चकाराद्वा. उणा०पा०१कौ०पृ०६१०
अन्यतोपि कुः. आक्षेपः. ❀
२० तथा कुम्- मुक्तिभुवं- ददातीति वा, कुन्दकुसुमवल्लक्षणया
विमलमिति वा, कुन्दं परतत्त्वज्ञानम् तत्तेभ्यो राति ददा-
तीति वा, कुम् पापं दारयतीति वा—
( कुन्दरः ).

निरु०— ८१३ प्राकृते मण्डले भूमौ मोदनाच्च महात्मभिः ।
२५ मुक्तिभूमिप्रदानाद्वा ( कुमुदः ) परिकीर्तितः ॥ ६२६ ॥
८१४ अस्तेभ्यश्च सदा कुन्दसुमवद्विमलां मतिम् ।
स्वयं राति ददातीति ( कुन्दरः ) परिकीर्तितः ॥ ६२७ ॥

भा०— (१) "आतोनुपसर्गे कः" ३।२।३॥ कौ०पृ०५७०
(२) "ददामि बुद्धियोगं तम्" इति. ❋

---

निर्व०— पूर्वत्र,
(१) "रा, दाने" धा०अदा० कौ०पृ०४४३ ५
(२) "आतोनुपसर्गे०" इति कः. ३।२।३॥ कौ०पृ०५७०
आल्लोपः उपपदेपि पूर्वत्र,
(३) "डुदाञ्, दाने" धा०जुहो०कौ०पृ०४५१
प्राग्वत् कः. अन्यच्च. कुरुत्कः. पृषोदरादित्वात् वर्णागमो नः.
मो वा. अनुस्वारादि. उत्तरत्र, १०
(४) "कु, शब्दे" धा० अदा० कौ०पृ०४४०
(५)"अब्दादयश्च" इति निपातनात् दः. उणा०पा०४कौ०पृ०६३६
नुम् च. सह्याकृतिगणः. अनुस्वारपरसवर्णौ. अपरत्र,
(६) "दृ, विदारणे" धा०क्र्यादिः कौ०पृ०४७६
णिच्. वृद्धिः. रपरत्वम्. १५
(७) "पूस्सर्वयोर्दारिसहोः" इति, ३।२।४१॥ कौ०पृ०५७७
पुरि उपपदे खज्विधानेपि बाहुलकादुपपदान्तरेपि खच्.
अत एव हि,
(८) "भगे च दारेः" इति काशिका, ३।२।४१॥कौ०पृ०५७७
तदिदं बाहुलकेन लब्धमित्याहुः २०
(९) "खचि ह्रस्वः" इति खचि ६।४।९४॥ कौ०पृ०५७७
परेणाबुपधाह्रस्वः. णिलोपः. कुमिति मान्तो निपातः.
पापार्थः.चादिराकृतिगणः. निपातत्वादव्ययत्वम्.
(१०) "अनुस्वारपरसवर्णौ" ❋ ८।३।२३॥कौ०पृ०२०

( ८१५ ) कुन्दः,

ॐ कुन्दाय नमः ।

भा०— स्वयं च—

९ ( कुन्दः ).

जितपूर्वपूर्वज्ञानवैराग्यादिभूमिकेभ्यः उत्तरोत्तरां

परभक्तिपरज्ञानादिभुवं ददातीति—

अथवा, कुमिति निपातः निपातनान्मान्तत्वम् पापार्थो निपातितः

पापं दारयतीति—

१० ( कुन्दरः ).

अपि च विदारितं पापं शोधयतीति ( कुन्दः ).

( १ ) "दैप्, शोधने" धा०भ्वादिः कौ०पृ०४२४

( २ )"आतोनुपसर्गे कः" इति कः. ❀ ३।२।३॥कौ०पृ०५७०

निर्व०— स्वयं कुत्सितपूर्वपूर्वज्ञानवैराग्यादिभूमिकेभ्यः.

१५ उत्तरोत्तरां परभक्तिपरज्ञानादिभुवम् ददातीति वा, कुम्

विदारितम् पापम् दायति शोधयतीति वा—

( कुन्दः ).

पूर्वत्र ददातेः कः. आलोपः. कुरुक्तः पृषो-

दरादित्वात् वर्णागमः. अनुस्वारादि. अपरत्र,

२० ( १ ) "दैप्, शोधने" धा०भ्वादिः कौ०पृ०४२४

आत्वम् पूर्ववत् क इत्यादि कुमिति मान्तमव्ययम्,

इत्युक्तम्. अनुस्वारादि पूर्ववत्. ❀

निरु०— ८१५ कुमव्ययं पापवाचि कुन्दरस्तस्य दारणात् ।

भक्तेभ्यः परभक्त्यादिप्रदानात् ( कुन्द ) उच्यते ॥ ६२८ ॥

## (८१६) पर्जन्यः,

ॐ पर्जन्याय नमः।

भा०—अर्ज अर्दने पर्जन्य इति अन्यप्रत्ययः पर्जादेशश्च निपात्यते
स्वतत्त्वज्ञापनेन त्रितापापहः—
(पर्जन्यः). ५

निर्व०— स्वतत्त्वज्ञानिनः. तापत्रयातुरान् स्वकटाक्षवर्षैः पर्षति
सिञ्चतीति वा, तेषाम् तापत्रयम् तत्त्वज्ञानेन पर्षति हिन-
स्तीति वा, तेषाम् तत्तेनार्जयति अर्दयति वा—
(पर्जन्यः) १०
प्रथमद्वितीययोः कल्पयोः.
(१) "पृषु-वृषु-मृषु, सेचने" भ्वादिः.धा०भ्वादिः कौ०पृ०४१०
मृषु, सहने च,
इतरौ हिंसासक्लेशनयोश्चेति पठ्यते अतोयमिह सेच-
नकर्मा हिंसाकर्मा च तृतीये तु. १५
(२) " अर्ज, प्रतियत्ने " धा० चुरा०कौ०पृ०४८५
चुरादिः. अयमर्थान्तरेपि पठ्यते अतोर्दनकर्मेहायम् अतः,
(३)"चुरादेरन्यः"इति वर्तमाने पर्जन्य इति. उणा०पा०३कौ०पृ०
अन्यः पृषेष्पस्य जत्वम् निपात्यते गुणः रपरः. अर्जेस्तु
ण्यन्तस्य स एव प्रत्ययः पर्जादेशश्चापि वा निपात्यते यद्वा २०
अर्जेः पुट् सन्नियोगशिष्टः यथाशास्त्रं णिलोपः. ❋

निरु०—८१६ विदारितं पापजातं कुन्दः शोधयतीति वा।
स्वतत्त्वज्ञानदानेन नित्यं तापत्रयापहा ॥ ६२९ ॥
(पर्जन्यः) स समाख्यातः—

( ८१७ ) पावनो, ( ८१८ ) ऽनिलः, ।

ॐ पावनाय नमः । ॐ अनिलाय नमः ।

५ भा०— तथा पवत इति—
( पवनः ).
( १ ) " पवि, गत्यर्थः" ❀ धा०भ्वादिः कौ०पृ०
तदनुग्रहे प्रेरकनिरपेक्षत्वात्—
( अनिलः ).
१० ( १ ) " इल, प्रेरणे " प्रेरयतीति इलः. धा० चुरा०कौ०पृ०४८३
( २ ) " इगुपधात् कः" ३।१।१३५॥ कौ०पृ०५६७

निर्व०— तथा च पवते गच्छतीति—
( पवनः ).
( १ ) " पूङ्, पवने" धा०भ्वादिः कौ०पृ०४२७
१५ गत्यर्थ इहायम्. चलनशब्दार्थात् अकर्मकाद्युजिति
अर्थतश्चलनार्थादकर्मकाद्युच्. यद्वा ल्युः. ल्युट्.
( २ ) " बहुलमन्यत्रापि " उणा०पा०२ कौ० पृ० ६२१
इति युज्वा.सर्वत्र योरनः. गुणः. अवो दीर्घपाठे तु, अत्य—
न्तस्वार्थिकः.प्रज्ञाद्यण्.वृद्धिः. यस्येति लोपश्च. विशेषः. ❀
२० अप्रार्थितसर्वार्थप्रदातुः स्वस्य तदनुग्रहे प्रेरकनैरपेक्ष्येण
नास्ति इलः प्रेरकः अस्येति—
( अनिलः ).
( १ ) " इल, स्वप्नक्षेपणयोः" धा०तुदा० कौ०पृ०४६६
क्षेपणं हीह प्रेरणम्.

२५ निरु०—८१७ ( पवनः ) पवते हि यः ।
८१८ स्वस्य स्वस्मात् प्रेरकोन्यः प्रपन्नानुग्रहे सदा ॥ ६३० ॥
नास्तीति सो ( ऽनिलः) प्रोक्तो मुन्यर्णो मनुरुत्तमः ।

(८१९) अमृताशो,

ॐ अमृताशाय नमः।

भा०– सोस्य नास्तीति यथा,
( ३ ) " तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः " ५
इति. ❋
तान् स्वगुणामृतमाशयतीति–
( अमृताशः ). ❋
रूपमप्यमृतमस्येति–

निर्व०–(२)"इल, प्रेरणे"वा चुरादिः.धा०चुरा०कौ०पृ०४८३ १०
उभयत्रापि इगुपधलक्षणः कः. एलयतेरपि,
( ३ ) " बहुलमेतन्निदर्शनम् " चु० गणसूत्रम् कौ०पृ०४९१ ❋
इत्यस्य व्याख्याविकल्पैः
अनित्यण्यन्ताश्चुरादयः
इति स्वीकारात्, ततो बहुव्रीहिः. नञो नलोपः. नुट्. ❋ १५
तानमृतं स्वगुणामृतम् आशयति भोजयतीति–
( अमृताशः ).
( १ ) " अश, भोजने " धा० क्र्यादिः कौ०पृ०४७८
णिच्. वृद्धिः. तत आशेः पचाद्यच्. णिलोपः. ततः,
( २ ) " तनिमृङ्भ्यां किच्च " उणा०पा०३कौ०पृ०६२९ २०
इति तन् कित्. अगुणः. अनिट्. नञो नलोपः.दीर्घः सांहितः. ❋
अमृतं तद्भक्तेभ्यः, स्वदमानं वपुः रूपमस्येति–

निरु०– ८१९ यश्चाशयति भक्तान्वै स्वगुणामृतमादरात् ॥६३१॥
( अमृताशः ) स इत्युक्तः शतपीयूषदो मनुः ।

(८२०) ऽमृतवपुस्, (८२१) सर्वज्ञस्,

ॐ अमृतवपुषे नमः। ॐ सर्वज्ञाय नमः।

भा०—(अमृतवपुः). ❋
तेषां शक्याशक्यसाध्यासाध्यादिकमनुसन्धत्त इति—
(सर्वज्ञः). ❋
तेषामनेनैव मुखेन सुग्रहः नान्येन नियमन्निर्धूय येन
केनापि व्याजेन सुप्रवेशत्वात्—

१० निर्व०—(अमृतवपुः).
(१) " डुवप्, बीजसन्ताने " धा० भ्वादिः कौ० पृ०४३२
उसिप्रकरणे,
(२) " अर्तिपृवपि० " उणा०पा०२ कौ०पृ०६२४
इत्यादिना उसिः नित्. स्वरे भेदः. अमृतशब्द उक्तः.
१५ बहुव्रीहिः. ❋
तेषां शक्याशक्यसाध्यासाध्यादिकं सर्वं जानाति अनुसंधत्त इति—
(सर्वज्ञः).
(१) " ज्ञा, अवबोधने " धा०क्र्यादिः कौ०पृ०४७७
(२) " आतोनुपसर्गे० " इति कः. आल्लोपः. सर्व उक्तः. ❋
२० तेषामनेनैव मुखेन लभ्यो नान्येनेति नियमनिर्धूननेन
यत् किंचिद्व्याजमात्रसुप्रवेशतया सर्वतस्सर्वाण्यपि
मुखानि प्रवेशसाधनान्यस्येति—

निरु०—८२० वपुर्यस्यामृतमिति स चा (मृतवपुः) स्मृतः ॥६३२
८२१ शक्याशक्यादिकं सर्वं साध्यासाध्यादिकं च यः।
२५ भक्तानामनुसन्धत्ते स (सर्वज्ञ) इतीरितः ॥ ६३३ ॥

( ८२२ ) सर्वतोमुखः, ॥ श्लो० ॥८८॥ (८२३) सुलभः,

ॐ सर्वतोमुखाय नमः । ॐ सुलभाय नमः ।

भा०– ( सर्वतोमुखः ). ५
यथा,
(१)"आर्तो वा यदि वा दृप्तः परेषां शरणागतः"रा०यु०१८–२८।
"इत्यादि. ❀
ततः–
( सुलभः ). १०
अनर्घोपि मूल्याभासेन स्वीकर्तुं शक्यः यथा अङ्गरा–
गदायिनी नैकवक्रा

निर्व०– ( सर्वतोमुखः ).
( १ ) " खनु, अवदारणे " धा० भ्वादिः कौ०पृ०४२१
अजलावित्यनुवृत्तौ डित् खनेर्मुट्. चोदात्त इति अच्. १५
अत्वा डित् धातोर्मुट्. चोदात्तः. ट इत् अननुनासिकत्वा-
दुकारो नेत्. टिलोपः. उक्तो हि सर्वशब्दः. ततः,
( २ ) " आद्यादिभ्य उपसंख्यानम् "५।४।४४॥कौ०पृ०३५६
इति सार्वविभक्तिकस्तसिः. रुत्वोत्त्वे. ❀
अतस्स्वयमनर्घोपि नैकवक्रादिना रागादिमूल्या– २०
भासेन स्वाधीनीकरणात् लब्धुं शक्य इति–
( सुलभः ).
लभेस्सार्वधातुकेत्यादिना खल् नुम् प्रतिषेधश्च. प्रागेवोक्तः. ❀ ·

निरु०– ८२२ तत्तन्नियममुत्सृज्य यो ज्ञातुं शक्यते बुधैः ।
व्याजेन येन केनापि स स्मृतः ( सर्वतोमुखः ) ॥ ६३४ ॥ २५
८२३ सर्वेषां सुप्रवेशत्वात् ( सुलभः ) परिकीर्तितः ।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ ६३५ ॥

(८२४) सुव्रतः, (८२५) सिद्धः,

ॐ सुव्रताय नमः। ॐ सिद्धाय नमः।

५ भा०–(१) "वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै"
इति स्वाधीनं चकार. ❀
यथा कथंचित् प्रविष्टानां सर्वथा परिपालनदृढव्रतः–
(सुव्रतः).
यथा,
१० (१) "सकृदेव प्रपन्नाय" रा०यु०१८–३३।
"इत्यादि. ❀
स्वतत्त्वस्थितिविदाम्–
(सिद्धः).

निर्व०–यथा कथंचित् प्रविष्टानां सर्वथा परिपालनदृढव्रततया
१५ सुशोभनं व्रतमस्येति–
(सुव्रतः).
व्रतिस्तौत्रः. पचाद्यच्. यद्वा अज्विधौ भयादीनामुप–
संख्यानम् नपुंसके क्तादिनिवृत्त्यर्थमित्यच्. सुपूर्वः समासः. ❀
सदा वृत एव सर्वेशोमृत्वादिदमीयशेषत्वस्या-
२० नौपाधिकतया स्वतत्त्वस्थितिविदाम् सिद्धो न हि यत्नसाध्य इति–
(सिद्धः).

निरु०–८२४ येन केन प्रविष्टानां सर्वथा परिपालनम्।
दृढं सुष्ठु व्रतं यस्य स (सुव्रत) उदाहृतः॥ ६३६॥
सकृदेव प्रपन्नाय तवास्मीति च याचते।
२५ अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥ ६३७॥
८२५ अयत्नसाध्यः (सिद्धः) स्यात् स्वतत्त्वस्थितिवेदिनाम्।

( ८२६ ) शत्रुजिच्छत्रुतापनः, ।

ॐ शत्रुजिच्छत्रुतापनाय नमः ।

भा०— अयत्नसाध्यः न ह्यस्य गोप्तृत्वमौपाधिकम् सदा
स्वत एव सर्वगोप्तृत्वात् इति साक्षादाविर्भावाः ५
अथ व्यवहिताः. ❋
तत्र शत्रुजिद्भिः ककुत्स्थपुरुकुत्सादिभिः स्वदिव्यतेजसाप्या-
यितैरर्थपरिपन्थिनस्तापयतीति—
( शत्रुजिच्छत्रुतापनः ).
यथा वैष्णवे चतुर्थेंशे, १०
( १ ) " शतक्रतोर्वृषभरूपधारिणः ककुत्स्थोतिरोषसमन्वितो भगवतश्चराचरगुरोः अच्युतस्य तेजसाप्यायितो देवासुरसंग्रामे समस्तानेवासुरान्निजघान " वि०४—२—३१।
इति यथा च

निर्व०— ( १ ) " षिधु, संराद्धौ " धा०दिवा०कौ०पृ०४५७ १५
परस्मै०. क्तः. अनिट्. धत्वजश्त्वे. ❋
इत्थमुक्तास्साक्षादाविर्भावाः अथ व्यवहिता ह्याविर्भावाः
उच्यन्ते. तत्र स्वदिव्यतेजसाप्यायितैश्शत्रुजिद्भिः जित-
शात्रवैः ककुत्स्थपुरुकुत्सादिनृपतिभिः शत्रून् यथाक्रममसुरान्
गन्धर्वांश्च तापयतीति— २०
( शत्रुजिच्छत्रुतापनः ).

निरु०— ८२६ पुरुकुत्सककुत्स्थाद्यैश्शत्रुजिद्भिः स्वतेजसा ॥६३८॥
आप्यायितैरपि गणान्यस्तापयति नित्यशः ।
( शत्रुजिच्छत्रुतापन ) इति विद्वद्गणोदितः ॥ ६३९ ॥

भा०-(२) " पुरुकुत्सः रसातलगतश्चासौ भगवत्तेजसाप्यायितवीर्यः सकलगन्धर्वान् जघान " इति च. ❀
न्यग्रोधश्चासौ उदुम्बरश्चेति-

---

निर्व०- एकत्राम शक्रस्य वृषभरूपधारिणः ककुदधिष्ठानः ककुत्स्थो भगवत्तेजसाप्यायितो देवासुरसंग्रामे असुरान् रसातलगतः पुरुकुत्सोपीदृशो गन्धर्वांश्च जघानेति हि प्रसिद्धिः.
( १ ) " तप, सन्तापे " धा०भ्वादिः कौ०पृ०४३०
णिच्, वृद्धिः. ल्युः. ल्युडेत्यादि. अनः णिलोपः.
१० ( २ ) " शद्लृ, शातने " धा०भ्वादिः कौ०पृ०४२०
शदेरगतौ इति तः. ततश्शातेः रुशातिभ्याम् क्रुन् इति क्रुन् उणा० पा०४कौ०पृ०६३६
( ३ ) " नेड्० " इति नेट्. ७।२।८॥ कौ०पृ०५८१
णिलोपः. प्रज्ञादौ ह्रस्वपाठाद्ध्रस्वः.
१५ (४) " जि, जये " क्विपि तुक् इत्यादि. धा०भ्वादिः कौ०पृ०४०५
शत्रुजित्. श्चुत्वम् तस्य चः. ततः
( ५ ) " शश्छोऽटि " इति शस्य वा छः. ❀ ८ । ४ ।६३॥ कौ० पृ० २०
अत्युच्छ्रितसेव्यस्याप्यतिनीचानामप्यनुवर्तनसाध्यतया न्यग्भिः प्रह्वी-
२० भूतैः कृताञ्जलिभिः रुध्यते स्वप्रसादोन्मुख्येन व्यवस्थाप्यत इति वा न्यग्भ्यो रोधः उक्तं व्यवस्थापनमस्येति वा न्यग्रोधः स चासौ उद्गतं सर्वगुणैरुत्कृष्टम् अम्बरम् परमाकाशशब्दवाच्यम् परम् धाम तथा च तदुपलक्षितम् लक्ष्मीपरिजनादिकमस्येत्युदुम्बरः चेति-

## (८२७) न्यग्रोधोदुम्बरो,

ॐ न्यग्रोधोदुम्बराय नमः ।

भा०–( न्यग्रोधोदुम्बरः ). ❀
न्यग्भूतैरधःकृताञ्जलिभी रुध्यते स्वप्रसादौन्मुख्येन व्यवस्थाप्यत ५
इति–
( न्यग्रोधः ). यथा,
( १ ) " अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी " इति.

निर्व०–( न्यग्रोधोदुम्बरः ). एकन्नाम.
( १ ) " रबि-लबि- अबि, शब्दे " धा०भ्वादिः कौ०पृ०३९६ १०
इदित्वान्नुम्. अनुस्वारपरसवर्णौ, कृच्छेररो बाहुलकादन्यतोपि
भवतीति अरः उत्पूर्वो बहुव्रीहिः. पृषोदरादित्वात् वर्णव्यत्ययें-
नास्य उः. रुधिर् आवरणे पूर्वत्र अकर्तरि च कारक इति कर्म-
णि घञ्. गुणः.

निरु०–८२७ न्यग्भूतैः प्रणतैः स्वानुग्रहोन्मुख्येन रुध्यते । १५
यो व्यवस्थाप्यते नित्यं न्यग्रोधस्स उदाहृतः ॥ ६४० ॥
गुणत्रयादुद्गतं यत् परमं धाम चाम्बरम् ।
लक्ष्मीपरिजनादिश्च यस्यास्ति स उदुम्बरः ॥ ६४१ ॥
ऊर्ध्वो उदुम्बर इति श्रुतेः ।
( न्यग्रोधोदुम्बर ) इति ह्येकं नाम प्रकीर्तितम् । २०
अत्युच्छ्रितानां सेव्यो योप्यतिनीचानुवर्तनात् ॥ ६४२ ॥
( न्यग्रोधोदुम्बरः ) स स्याद्दशार्णः सर्वसिद्धिदः ।

भा०–( २ ) " कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादनात् " रा०कि०३२–१७।
इति च. ❀

५ सर्वगुणैरुद्गतमम्बरं परं धाम तदुपलक्षिता लक्ष्मीपरिजनादयोऽस्येति–
( उदुम्बरः ).
( १ ) " पृषोदरादित्वात् " वर्णव्यत्ययः.
अत्युच्छ्रितसेव्योपि अत्यन्तनीचानामपि अनुवर्तनसाध्य इत्यर्थः.
वैष्णवे,
१० ( २ ) "एवं मौनेयगन्धर्वावधूतैरुरगैरपि । अर्थितो भगवानादिपुरुषः
पुरुषोत्तमः " इत्यादौ व्यक्तमेतत् अथ प्रादुर्भावान्तरसंज्ञः
स्वाङ्गभूततत्तद्देवतामुखेन जगन्नियमनं तत्र अद्य स्थितमपि न श्वः
अनित्यमिन्द्रादित्यादिपदं येषां तेषु नियामकतया तिष्ठतीति–

---

निर्व०–( २ ) " अञ्चु, गतिपूजनयोः " धा० भ्वादिःकौ०
१९ पृ० ३९०
गतिकर्मेहायम् निपूर्वः. यण्. ऋत्विगित्यादिना सुपि क्विप्.
( ३ ) " अनिदिताम्० " इति, ६ । ४ । २४ ॥ कौ०पृ०७६
नलोपः. पदान्ते,
( ४ ) " क्विन्प्रत्ययस्य कुः " इति, ८ । २ । ६२॥कौ०पृ०६८
२० कुत्वम्. चस्य कः. तस्य
( ५ ) " झलां जशः " इति, ८ । २ ।३९ ॥ कौ०पृ०१४
जश्त्वम्. तत्पुरुषः. अपरत्राभावे घञ् "इत्यादि.
बहुव्रीहिः. ततः कर्मधारयः. सांहितो गुणः. ❀

## ( ८२८ ) ऽश्वत्थः,

ॐ अश्वत्थाय नमः ।

भा०— ( अश्वत्थः ).
पृषोदरादिः यथा वैष्णवे , ५
( ३ ) " मूर्तिं रजोमयीं ब्राह्मीमाश्रित्य सृजति प्रजाः ।
आश्रित्य पौरुषीं मूर्तिं सात्त्विकीं यस्स पालयन् ॥ काला-
ख्यां तामसीं मूर्तिमाश्रित्य ग्रसते जगत् " "इत्यादि. ❋

निर्व०— अथ प्रादुर्भावान्तरसंज्ञकस्स्वांशभूततत्तद्देवतामुखेन
जगन्नियमनमुच्यते तत्राद्यस्थितमपि यत् नास्ति श्वः तदश्वः १०
अनित्यमिन्द्रादित्यादिस्थानम् तेन च तत्स्थलक्षणतया तेषु वा
तदेषामस्तीति अश्वाः तेषु वा नियाम्येषु तिष्ठति नियामक-
तयाऽवतिष्ठत इति—
( अश्वत्थः ).
( १ ) " ष्ठा , गतिनिवृत्तौ " धा० भ्वादिः कौ०पृ०४२० १५
( २ ) " सुपि स्थः " ३ । २ । ४ ॥ कौ०पृ०५७१
इति कः. आल्लोपः. श्वसिति स्वरादिरव्ययम्. नञो नलोपः. पृषो-
दरादित्वात्तिष्ठतेस्सर्वतो वर्णविकारः. पूर्वत्र श्वसितिः प्राणनकर्मा.

निरु०—८२८ अनित्यमिन्द्रादिपदं येषां तेष्वपि नित्यशः ॥६४३॥
नियामकत्वेना ( ऽश्वत्थ ) स्तिष्ठतीति स कीर्तितः । २०
उर्ध्वमूलमवाक्शाख एषोऽश्वत्थस्सनातनः ॥ ६४४ ॥
इति श्रुतेश्च.
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ६४५ ॥

( ८२९ ) चाणूरान्ध्रनिषूदनः, ॥

ॐ चाणूरान्ध्रनिषूदनाय नमः ।

भा०—तद्विरोधिनं चाणूरनामानमसुरान्ध्रमल्लं निषूदितवान् इति—
५ ( चाणूरान्ध्रनिषूदनः ).
सुषामादित्वात् षत्वम्. ❀

निर्व०—( ३ ) " झलां जश्० " इति, ८।२।३९ ॥ कौ० पृ० १४
जश्त्वेन सस्य दः चर्त्वेन तस्य तः. वैभाषिकौ द्वित्वलोपौ. अपरत्र
अर्श आद्यच्. अव्ययसंज्ञायाम् अगौणे तदन्तविधिना
१० ( ४ ) " भमात्रे टिलोपः " ६।४।१४४ ॥ कौ० पृ० १३३
इति टिलोपः. नापि जश्त्वादि. ❀
तद्विरोधिनं चाणूरम् तत्प्रसूतत्वात् तन्नामानम्
अन्ध्रम् अन्ध्रमल्लम् निषूदयति क्षारयतीति—
( चाणूरान्ध्रनिषूदनः ).
१५ ( १ ) " षूद, क्षरणे " धा० भ्वादिः कौ० पृ० ३८३
निपूर्वः षस्य सः. णिच् नन्द्यादिल्युः. इत्यादि. अनः णिलोपः.
( २ ) " सात्० " इति निषेधे प्राप्ते ८।३।१११ ॥ कौ० पृ० ३५८
( ३ ) " सुषामादिषु च " इति, ८।३।९८ ॥ कौ० पृ० १९५
तस्याकृतिगणत्वात् उपसृष्टे षत्वम्.
२० ( ४ ) " अन्ध, दृष्ट्युपघाते " धा० चुरा० कौ० पृ० ४९१
चुरादौ कथादिः.
अनुस्वारादिणिच्. अतो लोपः. ण्यन्तात् णेर्लोपः.
( ५ ) " सर्वधातुभ्यः ष्ट्रन् " इति ष्ट्रन्. उणा० पा० ४ कौ० पृ० ६३९

निरु०—८२९ चाणूराख्यासुरं योरि मल्लं सूदितवांश्च सः ।
२५ प्रोच्यते मुनिभिर्नित्यं ( चाणूरान्ध्रनिषूदनः ) ॥ ६४६ ॥

श्लो० ॥ ८९ ॥ ( ८३० ) सहस्रार्चिः,

ॐ सहस्रार्चिषे नमः ।



भा०— पाचनशोषणप्रतापनप्रकाशनधर्माण्यध्यक्षेणोपकारीणि सहस्रमर्चींष्यनेन सूर्ये निषिक्तानीति—
( सहस्रार्चिः ).

निर्व०— ( ६ ) " षः प्रत्ययस्य " १।३।६॥कौ०पृ०९३
इति ष इत्. लोप्तुः.
( ७ ) " तितुत्र०" ७।२।९॥ कौ०पृ०६०८
इति नेट्. अगुणः. सत्त्वस्य णिचस्तद्वर्जमन्यत्. १०
( ८ ) " चण-शण-श्रण,दाने च " धा०१वादिः कौ०पृ०४१५
चात् गतौ
( ९ ) "खर्जिपिञ्जादिभ्य ऊरोऽलचौ"उणा०पा०४ कौ०पृ०६३६
इति खर्जादेः आकृतिगणत्वात् ऊरः बाहुलकात्
(१०)"अन्यतोपि०"इति वा केवलात् ३।२।४८॥कौ०पृ०५७८ १५
ण्यन्ताद्वा ऊरः आद्ये,
( ११ )" अन्येषामपि०" इति दीर्घः.प्रज्ञाद्यण् कौ०पृ०१६५
वा स्वार्थे वृध्यादि अन्यत्र वृद्धिः. णिलोपश्च तांहितो दीर्घः. ❀
आदित्यादिगततेजसाम् स्वतेजस्त्वात् सहस्रम् उपलक्षणतया पाचन-शोषणप्रतापनप्रकाशनादिधर्माणि अध्यक्षेणोपकारीणि सूर्यादिनि- २०
विष्टानि अनेकसंख्यान्यर्चींषि तेजांस्यस्येति—
( सहस्रार्चिः ).

निरु०—८३० सूर्ये सहस्रमर्चींषि शोषणादिषु हेतवः ।
अभिविष्टानि येनासौ ( सहस्रार्चि ) रिति स्मृतः ॥ ६४७ ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । २५
यदि भाःसदृशी सा स्यात् भासस्तस्य महात्मनः ॥ ६४८ ॥

( ८३१ ) सप्तजिह्वः,

ॐ सप्तजिह्वाय नमः ।

भा०—श्रीपौष्करे,

५ ( १ ) " अग्नीषोमात्मसंज्ञस्य देवस्य परमात्मनः । सूर्याचन्द्र-
मसौ विद्धि साकारौ लोचनेश्वरौ " इति.

( २ ) " यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि
यच्चाग्नौ तत्तेजो विद्धि मामकम् " इति. ❀ भ०गी० ।
तथाग्निजिह्वा देवाप्यायिका इति ग्रहणवहनाधिकाराः
१० कालीकरालीप्रभृतयः सप्त अस्येति—
( सप्तजिह्वः ).

निर्व०—( १ ) " अर्च, पूजायाम् " धा०चुरा०कौ०पृ०४८६
( २ ) " अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः " उणा०पा०२
कौ०पृ०६२४
१५ इति इसिः. सहस्रशब्दो निरूचे. दीर्घः. सोरुत्वमित्यादि. ❀
, तथा देवाप्यायिकाहुतिग्रहणवहनाधिकाराः सप्त जिह्वाः
कालीकरालीमनोजवासुलोहितासुधूम्रवर्णास्फुलिङ्गिनीविश्वरूपीलक्षणाः
यद्वा हिरण्याकनकारक्ताकृष्टासुप्रभाअतिरक्ताबहुरूपालक्षणाअग्निजि-
ह्वाः अस्येति—
२० ( सप्तजिह्वः ).

( १ ) " लिह, आस्वादने "वन्प्रकरणे, धा०अदा०कौ०पृ०४३७
( २ ) "शेवयह्वजिह्वाग्रीवाप्वामीवाः" उणा०पा०१कौ०पृ०६१८
इति वन्. लस्य जः. गुणाभावश्च निपात्यंत अनिट्. स्त्रियामतष्टा-
विति टाप्.

२५ निरु०— ८३१ यस्मात् काल्यादिजिह्वाश्च अग्नेर्भवन्ति सप्त च ।
स ( सप्तजिह्व ) आख्यातो लोकसंतारणे रतः ॥ ६८९ ॥

भा०—श्रीपौष्करे,

( १ ) " तदङ्गदेवतानां च हुतभुक् परमेश्वरः । मन्त्रपूतं यदादाय हुतमाज्यपुरःसरम् ॥ ब्रह्माण्डभुवनं सर्वं सन्तर्पयति सर्वदा " इति. ❀ इन्धनानि पाकहविस्सोमसस्थानि प्रत्येकं सप्त संख्यानि ५
इष्टापूर्तरूपाणि सप्त वानस्पत्यास्समिधोस्येति—

---

निर्व०— ( ३ ) " षण, समवाये " धा० भ्वादिः कौ०पृ०३९७
षस्सः, कनिन्प्रकरणे सस्य,

( ४ ) " सप्यशूभ्यां तुट् च " इति कनिन्. तस्य तुट् च. उणा० पा०१ कौ०पृ०६१८ १०

सति चागमे वलादित्वादिट् प्राप्तो बाहुलकान्न. ततः स्त्रियाम्

( ५ ) " ऋन्नेभ्यो ङीप् " ४ । १ । ५ ॥ कौ०पृ०५५
इति नान्तलक्षणे ङिपि प्राप्ते,

( ६ ) " ष्णान्ता षट् " १ । १ । २४ ॥ कौ०पृ०६६
इति नान्ततया षट्संज्ञायाम् १५

( ७ ) " न षट्स्वस्रादिभ्यः " ४ । १ । १० ॥ कौ०पृ०५५
इति षट्संज्ञिकत्वात् ङीपः प्रतिषेधः नलोपः, उपसर्जनह्रस्वः. ❀
तथा सप्तपाकहविर्यज्ञसोमसंस्थात्मकानि औपासन-
वैश्वदेवस्थालीपाकाष्टकामासिश्राद्धेशानबलिसर्पबल-
यस्सप्त पाकयज्ञाः. अग्निहोत्रदर्शपूर्णमासापिण्डापितृयज्ञ- २०
पशुबन्धाग्रयणचातुर्मास्यसौत्रामण्यस्सप्त हविर्यज्ञाः.
अग्निष्टोमात्यग्निष्टोमोक्थ्यषोडशवाजपेयाऽतिरात्रा-
प्तोर्यामास्सप्त सोमसंस्थाः.तत्रेत्थम् यथाक्रममौपासनाग्निहोत्रा-
ग्निष्टोमादिभेदेन प्रत्येक सप्त संख्यानि एधांसि तद् समिन्धनानि
इष्टापूर्तादिरूपकर्माणि— २५

( ८३२ ) सप्तैधाः, ( ८३३ ) सप्तवाहनः,।

ॐ सप्तैधसे नमः। ॐ सप्तवाहनाय नमः।

१ भा०— ( सप्तैधाः ).
तत्प्रकाशकगायत्र्यादिच्छन्दस्कवैदिकमन्त्राभिमानी-
नि रविरथधुर्याणि सप्तवाहनान्यस्येति—
( सप्तवाहनः ).
यथा आम्नायते,

१० निर्व०— वा तद्दीपनार्थानि अश्वत्थोदुम्बरपर्णशमीवैक-
ङ्कतारानिहतपुष्करपर्णलक्षणानि सप्त वानस्प-
त्यान्येधांसि समिधो वास्येति—
( सप्तैधाः ).
( १ ) " एध, वृद्धौ " धा०भ्वादिः कौ०पृ०३७६
१५ ( २ ) " सर्वधातुभ्यः.० " उणा०पा०४कौ०पृ०६४०
इति असुन्. सप्तशब्दस्साधितः. एवमुत्तरत्रापि.
( ३ ) " वृद्धिरेचि " इति वृद्धिः. ६।१।८८॥ कौ०पृ०१२
( ४ ) " असन्तत्वात् " दीर्घः. "ईर्त्यादि. ❀ ६।४।१४॥कौ०पृ०७८
तत्प्रकाशकगायत्र्यादिच्छन्दस्कवैदिकमन्त्राभिमानीनि सप्त वाहनानि
२० रविरथधुर्याण्यस्येति वा सप्त वायुस्कन्धान् वहति वाहयतीति वा—
( सप्तवाहनः ).
( १ ) " वह, प्रापणे " धा०भ्वादिः कौ०पृ०४३२

निरु०— ८३२वानस्पत्याश्च समिधस्सप्त सरथानि वा तथा।
इष्टापूर्तादिकर्माणि ( सप्तैधाः ) सन्ति यस्य सः ॥ ६५० ॥
२५ ८३३ यो वहत्यनिलस्कन्धान् सप्तासौ ( सप्तवाहनः )।
वाहनानि च सन्त्यस्य सप्त वा सप्तवाहनः ॥ ६५१ ॥

(८३४) अमूर्तिर्,

ॐ अमूर्तये नमः ।

भा०–(१) "सप्त प्राणाः प्रभवन्ति" "इत्यादि.तै०उ०६प्र०
१०अ० । १
(२) "गुहाशयान्निहितास्सप्त" तै०उ०६प्र०१०अ० ।
इत्युक्तम्. ❀
सप्त वायुस्कन्धान् वहति इति वा–
श्रीपौष्करे,
(१) "विश्वेशप्राणशक्तिर्वै वाय्वाख्यमधिदैवतम् । जगत्सन्धा- १०
रकं चैव नानास्कन्धात्मना तु वै । एते भगवदारामाः
तिष्ठन्त्यस्मिन् जगत्त्रये" "इत्यादि.
अथैवमधिष्ठेयेभ्यः स्वभावविप्रकर्षः
(अमूर्तिः).
स्थूलभौतिकमूर्तिव्यावृत्तः इत्यर्थः. ❀ १५
अकर्मवश्यत्वेन तन्मग्नजीवविलक्षणः–

निर्व०–पूर्वत्र केवलादेव कर्तरि ल्युः. ल्युडित्यादि करणे ल्युड्वा.
अनः. णिलोपः. अपरत्रापि करणवर्जम् उभयथापि व्युत्पा–
द्यम्. तत्र तु विग्रहे विशेषः. आद्ये बहुव्रीहिः.
अन्यत्र तत्पुरुषः. ❀ २०
एवमधिष्ठेयेभ्यस्तेभ्यः स्वभावविप्रकर्ष उच्यते स्थूलभौतिकमूर्ति-
व्यावृत्ततया नास्ति तादृशी मूर्तिरस्येति–
(अमूर्तिः).
मूर्तिशब्दो हि निरूढे. बहुव्रीहिः. नञो नलोपः. ❀

निरु०–८३४ स्थूलभौतिकमूर्तिभ्यो व्यावृत्तो (ऽमूर्ति) रुच्यते । २५

(८३५) अनघो, (८३६) ऽचिन्त्यो,

ॐ अनघाय नमः। ॐ अचिन्त्याय नमः।

५ भा०— (अनघः). ❀
मुक्तोपमयापि दुर्निरूपः—
(अचिन्त्यः). ❀

निर्व०— अकर्मवश्यत्वेन तन्मग्नजीवविलक्षणतया नास्त्यघमस्येति—
(अनघः).

१० अघशब्दश्च हन्तेर्नञ्पूर्वादन्यतोपि प्रागुक्तः.
समासः प्राग्वत्.
(१) "नञो नलोपो नुट्" इति. ❀ ६।३।७३॥ कौ०पृ०१४७
मुक्तौपम्येनापि दुर्निरूपतया चिन्तयितुमर्हश्शक्यो वा चिन्त्यः स नेति—
(अचिन्त्यः).

१५ (१) "चिति, स्मृत्याम्" धा०चुरा० कौ०पृ०४७९
चुरादिः. नुमादि णिच्. ततः अर्हशक्ययोः
(२) "अचो यत्" ३।१।९७॥ कौ०पृ०५५७
इति यत्. णिलोपः. यद्वा चिन्तेति पठितव्ये इदित्करणात्
लिङ्गादस्य णिचः पाक्षिकत्वात् तदभावे,

२० (३) "ऋहलोर्ण्यत्" ३।१।१२४॥ कौ०पृ०५६२
इति हलन्तात् ण्यत्. इदित्करणं हि चिन्त्यत इत्यादौ
(४) "अनिदिताम्०" ६।४।२४॥ कौ०पृ०७८
इति नलोपं प्रतिषेद्धुम् तच्च नित्यत्वे णिचोनुपधात्वात्
नलोपो न प्राप्नोतीति न कर्तव्यम् अतो व्यर्थम् सत् ज्ञापकं

२५ निरु०—८३५ जीवेभ्यः कर्मवश्येभ्यो व्यावृत्तश्च (ऽनघः) स्मृतः ६५२
८३६ (अचिन्त्यो) दुर्निरूपः स्यान्मुक्ताद्युपमयापि सः।

( ८३७ ) भयकृद्, ( ८३८ ) भयनाशनः, ॥

ॐ भयकृते नमः । ॐ भयनाशनाय नमः ।

भा०— स्वशासनातिवर्तिन्यतिवर्तिनि यथासंख्यं— ५
( भयकृत् ). ❋
( भयनाशनः ).

निर्व०—भवति णिजनित्य इति अनित्यत्वेन
( ५ ) " णिज्भावे "
सति उपधात्वात् नलोपप्राप्तौ तत्प्रतिषेधाय तदर्थवदिति तत्फलञ्च १०
चिन्त्यत इत्यादौ नलोपाभाव इति उक्तमेवेत्यलम्. नञो नलोपः. ❋
स्वशासनातिवर्तिनां भयं करोतीति—
( भयकृत् ).
कृञः क्विपि तुगित्यादि[॥७०९॥].
( १ ) " ञिभी, भये" धा०जुहो० कौ०पृ०४४९ १५
अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थमिति
भावे अच्. गुणः. अय्. ❋
तदनुवर्तिनां च भयं नाशयतीति—
( भयनाशनः ).

निरु०-८३७आज्ञातिलङ्घिनां पुंसां नरकादिभयंकरः॥६५३॥ २०
( भयकृत् ) स समाख्यातः सप्तार्णो भववर्धनः ।
८३८ आज्ञानुवर्तिनां स्वस्य भयं नाशयतीति यः ॥ ६५४ ॥
( भयनाशन ) इत्युक्तो नवार्णः कर्मकारकः ।
वर्णाश्रमाचारवता पुरुषेण परः पुमान् ॥ ६५५ ॥
विष्णुराराध्यते पन्था नान्यत्तत्तोषकारणम् । २५

श्लो० ॥ ९० ॥ (८३९) अणुः,

ॐ अणवे नमः ।

भा०–( १ ) " भयाभयकरः कृष्णः" इति.
५ अथाणिमाद्यधिष्ठानम्. ❀
अतिप्रकृष्टमैश्वर्यमतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात्–
( अणुः ).
( १ ) " गत्यर्थादणतेरगश्च" उणा०पा० १ कौ०पृ०६०९
इत्युप्रत्ययः तदाणिमाप्येतदणुः
१० ( २ ) " अणोरणीयान्" तै०उ०६ प्र०१०अ० ।
( ३ ) " निपुणोणीयान्" ❀

निर्व०– ( १ ) " णश,अदर्शने " धा०दिवा० कौ०पृ०४५८
अनः. णिचि वृद्धिः. ल्युरित्यादि. अनः णिलोपः. भयशब्दः प्राग्वत्.
अथाणिम्यधिष्ठानमिति प्रकृष्टमैश्वर्यं निरूप्यते. तत्रातिसूक्ष्मदहराका-
१५ शाव्यक्तजीवानुप्रवेशसमर्थतया अणोरणीयान् तत्सर्वमणति गच्छती-
ति–( अणुः ).
( १ ) " अणतिश्शब्दार्थः" धा०भ्वादिः कौ०पृ०४०१
गतिकर्मेहायम् उपकरणे
( २ ) " अणश्च" इति उः. उणा०पा०१ कौ०पृ०६०९
२० तदणिमाप्येतदणुः व्याप्त्या अतिविपुलं परमव्योमादिक-
मपि चुलकीकृत्याति–

इति विष्णुपुराणे,
निरु०– ८३९ अतिसूक्ष्महृदाकाशाव्यक्तजीवप्रवेशने ॥ ६५६ ॥
शक्तिमा ( नणु ) रित्युक्तः पूर्णः सर्वशक्तिदः ।

(८४०) बृहत्,

ॐ बृहते नमः।

भा०—विस्तीर्णाया(?)ख्यया विपुलपरमव्योमादि चुलकीकृत्य अति-
महता महिम्ना— ५
(बृहत्).
(१) "पृषत् बृहत् महत्०" उणा०पा०२ कौ०पृ०६२२
इत्यादिना बृहेरतिप्रत्ययः शतृवद्भावश्च निपात्यते. यथा,
(२) "स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्" पु०सू०१अ०।
(३) "महतो महीयान्" ते०उ०६ प्र०१० अ०। १०
(४) "वर्षीयांश्च पृथिव्या" इत्यादि. ❀
तुलानि लाघ्यति शायिना लघिम्ना सर्वत्राप्यव्याहतगत्वरः—

निर्व०— भवता महिम्ना महतो महीयान् बर्हति बृंहति वर्धत इति—
(बृहत्).
(१) "बृह-बृहि, वृद्धौ" धा०भ्वादिः कौ०पृ०४११ १५
(२) "वर्तमाने पृषत्०" उणा०पा०२ कौ०पृ०६२२
बृहन्महज्जगच्छतृवच्चेति अतिः, अगुणः, शतृवद्भावश्च.
निपात्यते बृहतेर्नलोपश्च. लिङ्गमशिष्यमित्यादि. ❀
तूलानि लाघ्यति शायिना महिम्ना सर्वत्राप्यव्याहतगत्वर-
तया कृश्यतीति वा ततः कृशः तनुर्भवतीति— २०

निरु०— ८४० विपुल परमव्योम महिम्ना चुलकीकृतम् ॥ ६५७॥
येन नाम्ना (बृहत्) स स्यात् षडर्णश्च बृहत्त्वदः।

## (८४१) कृशः, (८४२) स्थूलः,

### ॐ कृशायः नम। ॐ स्थूलाय नमः।

भा०—(कृशः).
५ (१) "कृश, तनूकरणे" धा०दिवा०कौ०पृ०४६०
इगुपधत्वात् कः. कशिमा चायं लघिमा चेति प्रकरणात्
गम्यते यथा,
(२) "अप्रेयो नियोज्यश्च यत्र कामगमो वशी" ※ भार०।
सर्वमव्यवहितमेकत्र स्थित्वा स्पष्टुम् भूमिष्ठस्य च चन्द्रम-
१० सं परिमार्ष्टुं शक्तिः प्राप्तिः तयातिप्रकृष्टया विशिष्टः—(स्थूलः).

निर्व०—(कृशः).
(१) "कृश, तनूकरणे" धा०दिवा०कौ०पृ०४६०
आद्ये इगुपधलक्षणः कः. अगुणः. द्वितीये मतिबुद्धिपूजार्थेत्यादिना
कर्तरि क्तः. ततोनुपसर्गात्,
१५ (२) "फुल्लक्षीबकृशोल्लाघाः" ८।२।५५॥ कौ०पृ०५८९
इति क्तप्रत्यये तो लोपः. तस्यासिद्धत्वात् प्रातस्येटोऽ
भावश्च निपात्यते. अगुणः. कशिमा चायं लघिमेत्यैश्व-
र्यप्रकरणात् अवसीयते—
एकत्र स्थित्वा सर्वम् अव्यवहितं स्प्रष्टुम् भूमिष्ठस्य च
२० चन्द्रमसं परिमार्ष्टुम् शक्तिः प्राप्तिः तयातिप्रकृष्ट
उत्कृष्टस्तिष्ठतीति वा तया परिबृंहितो भवतीति वा—
(स्थूलः).

निरु०— ८४१ सर्वत्राव्याहतगतिर्लघिम्ना (कृश) ईरितः॥६५८॥
८४२ स्थित्वैकत्राखिलं स्प्रष्टुं शक्तिर्या महती सदा।
१५ तया प्रकृष्टा शक्त्या विशिष्टः (स्थूल) उच्यते॥ ६५९॥

( ८४३ ) गुणभृत्,

ॐ गुणभृते नमः ।

भा०–( १ ) " खर्जपिञ्जादिभ्य ऊरोलचाविति ऊळच्" उणा॰पा०४ कौ०पृ०६३६　　५

( २ ) " ध्रुवस्समालभ्य तिष्ठति" इति. ❀

स्वसंकल्पेन सर्वं स्वगुणभूतसर्वावस्थं कुर्वन् बिभर्तीति–(गुणभृत्).

इदमस्य प्रकृष्टमीशितृत्वम्.

( १ ) " सर्वस्य वशी सर्वस्येशानः" इति. ❀

अतद्वश्यतया तत्संस्पर्शेऽपि अस्पृष्टतद्गुणः–　　१०

निर्व०– पूर्वन्न.

( १ ) " ष्ठा, गतिनिवृत्तौ " धा० भ्वादिः कौ०पृ०४२४

षस्सः, तोष्टुः.

( २ ) " खर्जपिञ्जादिभ्य ऊरोलचौ" इति पिञ्जादे–उणा०पा०४ कौ०पृ०६३६　　१५

राकृतिगणत्वात् बाहुलकात् पृषोदरादित्वाद्वा, आलोपः. बाहुलकात् कित्त्वमेव वा. यद्वा "स्थूल, परिबृंहणे" चुरादौ कथादिः. णिच्. अतो लोपः. ततोऽच् णिलोपः अगुणः. सर्वम् गुणं स्वगुणभूतम् तादृशसर्वावस्थं कुर्वन् बिभर्तीति–

( गुणभृत् ).　　२०

भृञः क्विपि तुक्. अगुणः.

(१)"संकेत-ग्राम-कुण-गुण, चामन्त्रणे" धा०चुरा०कौ०पृ०४८९

चुरादौ कथादिः. अल्लोपः. तस्य स्थानिवद्भावात्

न गुणः. ततः पचाद्यच्. णिलोपः. ❀

निरु०–८४३ संकल्पात् स्वगुणीभूतसर्वावस्थमिदं जगत् ।　　२५

कुर्वन् बिभर्ति नित्यं यो ( गुणभृत् ) स स्मृतो बुधैः ॥ ६६० ॥

(८४४) निर्गुणो, (८४५) महान्, ।

ॐ निर्गुणाय नमः । ॐ महते नमः ।

५ भा०—(निर्गुणः).
परमस्वतन्त्रः इदमस्य परमं वशित्वम्
(१) " विश्वस्य मिषतो वशी" तै०उ०६ प्र०१ अ० ।
(२) " सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः"
इति च प्राकाम्यमिच्छानभिघातभूमौ उन्मज्जति
१० निमज्जति च यथोदके. ❀
अस्य परमप्रकर्षात्—
(महान्).

निर्व०—इदमस्य प्रकृष्टं प्रभुत्वापरपर्यायमीशितृत्वम्, अतद्वश्यतया निर्गतः तत्संस्पर्शोपि अस्पृष्टः तद्गुणोस्येति—
१५ (निर्गुणः).
गुणोत्क्रान्तः. निर्पूर्वः बहुव्रीहिः. निसरतु रुत्वम्.
विशेषः परमस्वातन्त्र्यलक्षणमिदमस्य परमं वशित्वम् प्राकाम्यम्
इच्छानभिघातभूमावुन्मज्जति निमज्जति च यथोदके तेन च
परमप्रकृष्टेन महते पूज्यत इति—
२० (महान्).

निरु०—८४४ स्थितोपि नीरक्षीरवज्जगतो स्पर्शनाद्गुणैः ।
उक्तस्म (निर्गुण) इति सवर्णः पावनत्वदः ॥ ६६१ ॥
८४५. भूम्या सह महानीर स्युन्मज्जननिमज्जनात् ।
(महानि) ति च विख्यातः षड्वर्णस्तु महत्त्वदः ॥ ६६२ ॥

भा०–(१) "-महतेः पृषत् बृहत्०" उणा०पा०२कौ०पृ०६२२ इत्यादिना पूर्ववन्निपातनम्. यथा,

(२) " संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः "

(३) " यद्यदिच्छेदयं शौरिस्तत्तत् कुर्यादयत्नतः " ५

इति च्छायानुप्रवेशेन परचित्तवशीकारः अनुध्यानेन तच्चित्ताधिष्ठानं सजीवस्य उत्थितजीवस्य वा शरीरस्यानुप्रवेशनम् इष्टापूर्ताधिष्ठानम् इति चतुर्विधं यत्र कामावसायित्वमाहुः. ❋ तादृशवैश्वरूप्यप्रकर्षेण कश्चिद्भूतः न नियमितः इति–

---

निर्व०–(१) "मह, पूजायाम्" धा० भ्वादिः कौ०पृ०४११ १०

(२) " वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च " उणा०पा० २ कौ०पृ०६२२

इति अतिप्रत्ययान्तो निपातितः शतृवत् कार्यभाक् च भवति. तत उगित्त्वादुगिदचामिति नुम् मित्त्वात् अन्त्यादचः परः.

(३) " सान्तमहतस्संयोगस्य" ६ । ४ । १०॥कौ०पृ०५७ १५

इति महतो नस्योपधाया दीर्घः. संयोगान्तलोपः. तस्यासिद्धत्वात् नलोपो न. ❋

छायानुप्रवेशेन परचित्तवशीकरणम् अनुध्यानेन तच्चित्ताधिष्ठानम् सजीवस्योद्धृतजीवस्य वा शरीरस्यानुप्रवेशनम् इष्टापूर्तानुष्ठानं चेति चतुर्विधं यत्र सर्वथा स्वाच्छन्द्यावस्थानलक्षणम् यत्र कामावसायित्वमुच्यते तादृशवैश्वरूप्यप्रकर्षेण कश्चिद्भूतो नियमितो नेति– २०

( ८४६ ) अधृतः, (८४७) स्वधृतः,

ॐ अधृताय नमः । ॐ स्वधृताय नमः ।

५ भा०—( अधृतः ).
तत्प्रकर्षश्च सर्वदा स्वाच्छन्द्यम् अतो हीति ह स्माहुः
आसिद्धसमाधयो हि वैदिकपुत्राः तत्संकल्पात्
अपुनरावृत्तिपरमपदं प्रापुः. भवावर्तेन पुनराव-
र्तन्ते च चिदचित्स्वरूपविपर्याससाम-
१० र्थ्येपि असौ कस्यापि हेतोर्न विपर्यासयतीति. ❀
मन्त्रौपधितपस्समाधिसिद्धात् बद्धैश्वर्यात् भगवदैश्व-
र्यं व्यावर्तयति—
( स्वधृतः ).
एतदैश्वर्यमस्य न समाध्याद्युपाधिकम् किन्तु स्वभाव-
१५ तो धृतम् इति स्वधृतः. ❀

निर्व०—( अधृतः ).
धृञः कर्मणि क्तः. अनिट्. अगुणः. नञो नलोपः. ❀
अथ मन्त्रौपधतपस्समाधिसिद्धात् भगवदैश्वर्य-
म् व्यावर्त्यते सोपाधिकतदैश्वर्यात्कोपाधिवैधुर्यात्
२० स्वेन स्वाभाविकेनैश्वर्येण धृत इति वा उक्तहेतुना
स्वेन स्वभावेन धृतमैश्वर्यम् स्वधृतं तदस्यास्तीति वा—( स्वधृतः )
धृत उक्तः. स्वरेतेर्ड स्वशब्दश्च. अनुकल्पे स्वधृत-
शब्दात् अर्शआद्यच्. मत्वर्थीयः.
( १ ) " यस्येति च " लोपः. ❀ ६।४।१४८॥कौ०पृ०५६

२५ निरु०— ८४६ पश्चानियाम्यः केनापि ह्य ( धृत ) स्स तु कीर्तितः ।
८४७ स्वभावतो धृतैश्वर्यः ( स्वधृतः ) परिकीर्तितः ॥ ६६३ ॥

(८४८) स्वास्यः,

ॐ स्वास्याय नमः।

भा०— अथ मुक्तैश्वर्यात्—
(स्वास्यः). ५
आस्या आसनम्,
(१) "आतश्चोपसर्गे" ३। ३। १०६ ॥ कौ०पृ०६६०
इति अङ् सा शोभना अस्येति मुक्तस्य हि आविर्भूत-
स्वाभाविकैश्वर्यरूपम् आसनं दुष्टम् पूर्वमविद्यातिरोहितत्वात्
(२) "नैवं भगवतस्सदाविर्भावात्" इति. ❋ १०
अथ नित्यानामैश्वर्यात्—

निर्व०—अथ मुक्तैश्वर्यादेतस्य व्यावृत्तिः कीर्त्यते. प्रागविद्याति-
रोहितानन्तराविर्भूतस्वाभाविकैश्वर्यरूपान्मुक्तासनाद्व्यावर्तमाना
सदाविर्भावात् सुशोभना आस्या आसना स्थितिरस्येति—
(स्वास्यः). १५
(१) "आस, उपवेशने" धा० अदा० कौ०पृ०४३८
(२) "ऋहलोर्ण्यत्" ३। १। १२४ ॥ कौ०पृ०५६२
इति ण्यत्. तयोरेव कृत्येत्यादिना भावेयम् कृत्यः.
ततस्त्रियामतष्टावादि. सुपूर्वो बहुव्रीहिः. यण्. उपसर्जन-
ह्रस्वः. स्वास्थ इति पाठे आङ् पूर्वोक्तिस्तः, २०
(३) "आतश्चोपसर्गे" ३। ३। १०६ ॥ कौ०पृ०६६०
इति स्त्रियामङ्. आल्लोपः. अन्यत् प्राग्वत्. ❋

निरु०—८४८ आसनं शोभनं यस्य स (स्वास्य) इति चोच्यते।

(८४९) प्राग्वंशो,

ॐ प्राग्वंशाय नमः।

भा०—(प्राग्वंशः).

५ (१)." यत्र पूर्वे " पु०सू०१ अ०।
इति श्रुतिः. अनादिमुक्ताः प्राञ्चः तेषां वंशः समुद्भव-
भूमिः नित्यस्वरूपाविर्भावनिबन्धनभूतः
इति सर्वं हि सर्वथा तदिच्छोपाधिकमिति अविवादः. सर्वस्यास्य
संग्रहो वैष्णवे,

१० (२) " तदाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम्। निरस्तातिशयं
यस्य ततस्तोष्यामि किं त्वहम् " इति. ❋

निर्व०—अथ नित्यैश्वर्यादस्य वैलक्षण्यं लक्ष्यते सर्वस्यापि
सर्वथा तदिच्छाधीनतया प्राचां पूर्वेषाम् अनाद्यविद्या-
नित्ययुक्तानाम् सूरीणां वंशः तत्स्वरूपाविर्भाव-
१५ निबन्धनभूततया समुद्भवभूमिरिति—(प्राग्वंशः).
" ष्टन—वन, शब्दे " धा०भ्वादिः कौ०पृ०४०१
(१) " वन-षण, संभक्तौ " वनु च नोच्यते. धा० भ्वादिः कौ०
पृ०४०१
(२) " टुवमु, उद्गिरणे " वा. धा०भ्वादिः कौ०पृ०४१९
२० तत्र वनेर्वमेश्च जनिदाच्युसृवृमदिपमिनमि-
भूभ्य इत्वन् त्वन्क्नप्क्निन्शक्स्वडडटाटचः
(३) " अन्येभ्योपि दृश्यन्ते " उणा०पा० ४ कौ०पृ०६३६
उक्ताः प्रत्ययाः. प्रकृत्यन्तरेभ्योपि भवन्ति. अतो वृधातोः

निरु०—८४९ अनादिमुक्ताः प्राञ्चो ये तेषामुद्भवभूमिदः ॥६६४॥
२५ (प्राग्वंश) इति विख्यातः सतार्णां मनुरुत्तमः।
अन्वर्थतः प्रपञ्चः स वंशः प्रागेव नहि पाश्चात्य इति (प्राग्वंशः)

(८५०) वंशवर्धनः,॥

ॐ वंशवर्धनाय नमः।

भा०—अथ तद्विलक्षणस्य तत्तत्ताद्रूप्यहेतुत्वात् तत्र—
(वंशवर्धनः). ५

निर्व०—शक् अन्यतोपि हि भवति. इति शक् बाहुलकाद्दशि
ग्रहणाद्वा.
(४) "लशक्वतद्धिते" १।३।८॥को०पृ०३२
इति न शस्येत्संज्ञा नचेडागमः. तत एव,
(५) "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो १०
झलि क्ङिति" इति. ६।४।३७॥ को०पृ०४३५
(६) "अनुनासिकस्य क्विझलोः क्ङिति" इति. ६।४।१५॥
को०पृ ५१५
लोपदीर्घौ च न स्तः नश्चापदान्तस्य झलीति यथायथ
नस्य मस्य वानुस्वारः. १५
(७) "अञ्चु, गतिपूजनयोः" प्रपूर्वः. धा०भ्वादिः को०पृ०३९०
दीर्घः गत्यर्थोत्रायम्. ऋत्विगादिसूत्रेण क्विन्.
(८) "अनिदितां०" ६।४।२४॥को०पृ०७६
इति नलोपः. पदान्ते क्विन्प्रत्ययस्य कुरिति कुत्वम् कः. तस्य
जश्त्वेन गः. ❀ २०
अथ तद्विलक्षणस्य चास्य तत्ताद्रूप्यहेतुत्वमुच्यते.
तत्र वंशम् अनन्तरोक्तम् स्वसन्तानभूतम् नित्यसिद्ध-
वर्गम् वर्धयति इति—
(वंशवर्धनः).

निरु०—८५०नित्यसिद्धस्य वर्गो यो वंशः सन्तानलक्षणम्। २५
तं वर्धयति यस्मात्सो (वंशवर्धन) उच्यते ॥ ३६५ ॥

श्लो० ॥ ९१ ॥ (८५१) भारभृत्,

ॐ भारभृते नमः ।

भा०— वंशम् अनन्तरोक्तं स्वसन्तानभूतं नित्यवर्गसिद्धवर्गं
५ वर्धयतीति यथा,
(१) " प्रणतोस्म्यन्तसन्तानम् " इति. ❀
मुक्तानां च बन्धस्रंसनस्वरूपाविर्भावस्वप्रातिभारं
बिभर्तीति—
(भारभृत्). ❀
१० तत्र प्रमाणयति —

निर्व०—(१) " वृधु, वृद्धौ " णिच्. गुणः. रपरः. धा० भ्वादिः
कौ० पृ० ४१२
ततोल्युरित्यादि. अनः. णिलोपः. वंश उक्तः. ❀
मुक्तानां च भारं बन्धनस्रंसनस्वरूपाविर्भावस्व-
१५ प्रातिभारम् बिभर्ति भरति वेति—
(भारभृत्).
भृञ उभयस्मादपि क्विपि तुक्. अगुणः. पुनरपि स एव
धातुरावर्त्यः.
(१) " अकर्तरि च कारके० " ३।३।१९॥कौ०पृ०६४७
२० इति कर्मणि घञ्.वृद्धिः. रपरत्वम्. ❀
अत्र च प्रमाणसंपन्निमत्ता प्रत्याप्यते उक्तवक्ष्यमाण-
गुणकतया सर्वेष्वपि वेदादिषु शास्त्रेषु कथ्यतेस्मायम्
प्रगीत इति—

निरु०— ८५१मुक्तानां बन्धमोक्षादिभारस्य भरणाद्धि सः ।
२५ (भारभृत्) समवर्णः स्यात् कार्यनिर्वाहशक्तिदः ॥ ६६६ ॥

( ८५२ ) कथितो, ( ८५३ ) योगी,

ॐ कथिताय नमः। ॐ योगिने नमः।

भा०— ( कथितः ). ५
उक्तवक्ष्यमाणगणवत्तया सर्वशास्त्रेषु यथा.
( १ ) " वेदेषु स पुराणेषु साङ्गोपाङ्गेषु गीयसे "
( २ ) " वेदे रामायणे पुण्ये भारते भरतर्षभ । आदौ मध्ये
तथान्ते च विष्णुः सर्वत्र गीयते "
( ३ ) " वचसां वाच्यम् " १ जि०७। १०
"इत्यादि. ❀
सर्वमेतत् संभावयति इति—
( योगी ).

निर्व०— ( कथितः ).
( १ ) " कथ, वाक्यप्रबन्धे " धा०चुरा० कौ०पृ०४८८ १५
चुरादिः. अदन्तः. णिच्. अतो लोपः, तस्य स्थानिवद्भावात्,
नोपधावृद्धिः. ततः कर्मणि क्तः. इट्.
( २ ) " निष्ठायां सेटि " ६ । ४ । ५२ ॥ कौ०पृ०५९२
इति णेर्लोपः. ❀
सर्वम् इदं संभाव्यत इति प्रदर्श्यते. २०
युज्यतेनेन इति योगः अघटितार्थघटनं
महाप्रभावः सोऽतिशयितो नित्ययुक्तश्च अस्यास्ति इति—
( योगी ).

निरु०— ८५२ उक्तशास्त्रेषु ( कथितो ) यस्सर्वगुणवत्तया ।
योगी ह्यघटितार्थस्य घटनं तेन सर्वथा ॥ ६६७ ॥ २५
८५३ यस्यास्ति नित्यसंबन्धः स ( योगी ) परिकीर्तितः ।

( ८५४ ) योगीशः,

ॐ योगीशाय नमः ।

भा०–युज्यतेनेन इति योगः, अघटितार्थघटनम् महाप्रभावः
५ सोऽस्यातिशयेन नित्ययोगेन च इति. यथा,
( १ ) " पश्य मे योगमैश्वरम् " गी० ११–८ ।
( २ ) " योगेश्वरः कृष्णः " गी० १८–७८ ।
( ३ ) " योगं योगेश्वरात् कृष्णात् " गी० १८–७५ ।
( ४ ) " महायोगेश्वरो हरिः " "इत्यादि. ❋ गी० ११–९ ।
१० बद्धेष्वपि सहजसमाधिकानां सनकादियोगिनामपि धुर्यः–
( योगीशः ).

निर्व०–( १ ) " युजिर्, योगे " धा०रुधा०कौ०पृ०४७१
( २ ) " हलश्च " ३ । ३ । १२१ ॥कौ०पृ०६६३
इति करणे घञ्, गुणः.
१५ ( ३ ) " चजोः० " ७ । ३ । ५२ ॥ कौ०पृ०५६०
इति कुत्वम् गः. ततः अतिशायने नित्ययोगे च मत्वर्थी-
योऽत इनिः.
( ४ ) " यस्येति च " ६ । ४ । १४८ ॥ कौ०पृ०५६
इति लोपः. इत्यर्थः "इत्यादि. ❋
२० बद्धेष्वपि योगिनां सहजसमाधिकानां सनकादियोगिनाम्
ईशः तद्धुर्यतया स्वामी इति–
( योगीशः ).
ईशः इगुपधात् कः. योगिशब्दश्चोक्तः. नलोपः. दीर्घः. ❋

निरु०–८५४ (योगीशः) सनकादीना योगिना [१]पुर्य उच्यते॥६६८॥

१ प्रधान ।

( ८५५ ) सर्वकामदः, । ( ८५६ ) आश्रमः,

ॐ सर्वकामदाय नमः। ॐ आश्रमाय नमः।

भा०–(१) " सनन्दनादीन् अपकल्मषान् मुनींश्चकार भूयोऽति- ५
पवित्रितं पदम् " इति. ❀ वि०पु० ।
योगस्खलितेभ्योऽपि अणिमादिकामान् अन्तरायतया ददाति इति–
( सर्वकामदः ).
यथा,
(१) "प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीस्समाः"गी०६-४१।१०
॥४१॥ इत्यादि. ❀
ततः निवृत्य सुभिक्षपरविषयेषु वैष्णवगेहेषु तेषां विश्रान्तिहेतुः–
( आश्रमः ).

निर्व०–योगस्खलितेभ्योपि सर्वान् कामान् अन्तरायभूतान्
अणिमादिकामान् ददाति इति– १५
( सर्वकामदः ).
ददातेः कः. आल्लोपः. कमेः कर्मणि घञि काम उक्तः. अन्यच्च
तत्रैव स्फुटम्. सर्वशब्दश्च प्रागेवोक्तः. ❀
स हितेभ्यः कामानेव ददाति नत्वन्यान् ते च ततो निवृत्य
सुभिक्षपरविषयेषु श्रीवैष्णवगेहेषु आश्रम्यन्ते विश्रान्तिं २०
प्राप्यन्तेऽनेन इति–
( आश्रमः ).

निरु०–८५५ अणिमादीन् सर्वकामान् योगस्खलितयोगिनाम् ।
अन्तरायतया मुक्तेर्ददत्स्यात् ( सर्वकामदः ) ॥ ६६९ ॥
८५६ तेषां तु योगभ्रष्टानां हेतुर्वैष्णवसद्मसु । २५
सुभिक्षपरविषयेषु विश्रान्ते ( राश्रमः ) स्मृतः ॥ ६७० ॥

(८५७) श्रमणः,

ॐ श्रमणाय नमः ।

भा०—(१) "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" श्री०
५ गी० ६–४१ ।
इति. ❀
भोगजन्मभ्याम् अनुपक्षीणसर्वसंस्कारैः तत्र समाधिशेषोऽनायासेन श्रम्यते अभ्यस्यते इति—
(श्रमणः).

१० (१) "युवोरनाकौ" इत्यनः ७।१।१॥ कौ० पृ० २३३

निर्व०—(१) "श्रमु, तपसि खेदे च" धा० दिवा०कौ०पृ०४५९
आङ्पूर्वः. णिच् वृद्धिः. अमन्तत्वात् मित्त्वे,
(२) "मितां ह्रस्वः" ततः, ६।४।९२ ॥ कौ० पृ० ४८२
(३) "अकर्तरि च कारके०" ३।३।१९ ॥ कौ०पृ० ६४७
१५ इति अनुवृत्तौ,
(४) "एरच्" ३।३।५६॥ कौ०पृ० ६५३
इति करणे अच्. णिलोपः. ❀
भोगजन्मभ्याम् अप्यनुपक्षीणपूर्वसंस्कारैः तैः तत्र समाधिशेषोऽनायासेन श्रम्यते परिश्रम्यतेऽभ्यस्यते विषयभूतेऽस्मिन् अस्मात् अस्मै अनेन
२० इति वा, तैः तत्रसमाधिशेषेण श्रम्यतेऽभ्यस्यतेऽयम् इति वा, ते श्रम्यन्ते समाधिशेषाभ्यासं प्राप्यन्तेऽनेन इति वा, श्रमयति तत्र तारतम्याभ्यासयति इति वा—
(श्रमणः).

निरु०— ८५७ अक्षीणपूर्वसंस्कारैर्जन्मनानुभवेन च ।
२५ श्रम्यतेऽभ्यस्यतेऽनेति (श्रमणः) परिकीर्तितः ॥ ६७१ ॥

आ०-( २ ) " तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् " इति. ❀ गी० ६-४३ ।

---

निर्व०-धातुः प्राग्वत्. ततः,

( १ ) " अधिकरणापादानसंप्रदानकरणकर्मकर्तृषु " . ५

( २ ) " कृत्यल्युटो० : " ३ । ३ । ११३ ॥ कौ०पृ०६६२,

इति बाहुलकात् ल्युट्. तत्र च अधिकरणापादानसंप्रदानकर्मसु शुद्धात् करणे केवलात् ण्यन्ताच्च कर्तरि तु ण्यन्तादेव चा ऽम्. इति विवेकः. करणाधिकरणयोः,

( ३ ) " हलश्च " ३ । ३ । १२१ ॥ कौ०पृ०६६३ १०

इति घञ् प्राप्तः, करणे ण्यन्तात् एरच् तदिदं बाहुलकात् ल्युटाऽपोद्यते महान् हि तस्य प्रभावः. कर्तरि ल्युप्रभृतिश्च वा, योरणः. णिचि वृद्धौ मित्त्वे मितां ह्रस्वः.णिलोपः. णत्वम् यद्वा,

( ४ ) "ताभ्यामन्यत्रोणादयः "३ । ४ । ७५ ॥ कौ०पृ०६४५

इति अन्तरेण संप्रदानापादाने १५

( ५ ) " तुदादिभ्यो नकौ " इत्यनः शेषं प्राग्वत्, श्रपण इति पाठे तु

( ६ ) " तैस्तैः दास्यविशेषैः श्रप्यते पच्यतेनेन " इति वा,

( ७ ) " तं श्रपयति परिपकयति " इति वा यथायथमर्थः

( ८ ) " श्रै, पाके " धा०भ्वादिः कौ०पृ०४२४

( ९ ) " श्रा, पाके " धा०अदा० कौ०पृ०४४३ २०

अदादिः श्रायतेः श्रानेर्वा उभयत्रापि णिच्.

( १० ) " अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ " ७ । ३ । ३६ ॥ कौ०पृ०४८२

इति आदन्तलक्षणः पुक्.

(११)" घटादयो मितः " इति मित्त्वम् तत्र हि कौ०पृ०४१७ २५

(१२)"श्रा, पाके" इति पठ्यते. तत्र च, धा०अदा०कौ०पृ०४४३

( ८५८ ) क्षामस्,

ॐ क्षामाय नमः ।

भा०— एवं स्वयोगाभिमुख्यमात्रेण ते योगभ्रष्टा अपि दुर्गं
५ तरितु क्षमन्तेऽस्मात् इति—
( क्षामः ).
घञ्.
(१) "नहि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति" गी०६—४०
इति. ❋

१० निर्व०— ( १३ ) " लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम् " परि० ।
( १४ ) " लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम् " परि० ।
इति परिभाषाभ्याम्,
श्रायतेः श्रातेश्चोभयोरपि ग्रहणमित्युक्तम्. ह्रस्वः.
१५ ल्युडि "ल्यौ" दि. अनः. णिलोपः. णत्वम् प्राग्वत् इतरत्. ❋
इत्थं स्वयोगाभिमुख्यमात्रेण ते योगस्खलिता अपि दुर्गं तरीतुं क्षमन्तेऽस्मादिति वा ते तथा भवितुं क्षम्यन्ते शक्ताः क्रियन्तेऽनेनेति वा,
तान् क्षमयति तत्क्षमान् करोतीति वा—
( क्षामः ).
२० ( १ ) " क्षमूष्, सहने " धा० भ्वादिः को० पृ० ३९९
( २ ) " क्षमू, सहने " वा. धा० दिवा० को०पृ० ४५९
आद्यो भ्वादिः. षित्. अपरो दिवादिः. अषित् ततः आद्ये कल्पे अप्रत्ययोपि,
( ३ ) " अकर्तरि च कारके०" ३।३।१९ ॥ को०पृ०६४७
२५ इति अपादाने घञ्.

निरु०—८५८ योगाभिमुख्यमात्रेण योगभ्रष्टा अपि स्वयम् ।
यस्मात् क्षमन्ते स ( क्षामो ) भवाब्धितरणाय वै ॥ ६७२ ॥

भा०— एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा,
तमसः पारं नयति इति—

---

निर्व०— ( ४ ) " नोदात्त०" ७।३।३४॥ कौ०पृ०५४१
इत्यादिना न वृद्धिः. द्वितीये क्षमेर्णिच्. वृद्धिः. ५
( ५ ) " नोदात्त०" ७।३।३४॥ कौ०पृ०५४१
इति हि णिचि ञिति णिति कृति च प्रतिषेधः. अतो मित्त्वे
ह्रस्वः. ततः करणे,
( ६ ) " एरच् " ३।३।५६॥ कौ०पृ०६५३
इति अच्. णिलोपः. तृतीये क्षमेः पचाद्यच् ततः १०
क्षमशब्दात्,
( ७ ) " तत्करोति०" इति णिच्. ३।१।२६॥ कौ०पृ०४९२
( ८ ) " णाविष्ठवत् " वार्ति० ६।४।१५५॥ कौ०पृ०३१०
इति टिलोपः. तस्य स्थानिवत्त्वात् नोपधावृद्धिः. ततः
पुनश्च पचाद्यच् णिलोपः. ततस्सर्वत्र, १५
( ९ ) " प्रज्ञादिभ्यश्च " ५।४।३८॥ कौ०पृ०३५६
इति तस्याकृतिगणत्वात् स्वार्थे अण्. आदिवृद्धिः.
( १० ) " यस्य०" इति लोपः. द्वितीयकल्पे ६।४।१४८॥ कौ०
पृ०५६
( ११ )"वा चित्तविरागे"इत्यतः वेति६।४।९१॥कौ०पृ०४९७ २०
( १२ ) " मितां ह्रस्वः " ६।४।९२॥ कौ०पृ०४८२
इति सूत्रे अनुवर्त्य तस्य व्यवस्थितविभाषात्वाश्रयणान्न
ह्रस्व इति वा बोध्यम्. अत्र च, न तत्र प्रज्ञादित्वं कल्प्यम्
विग्रहवाक्येपि दीर्घः पाठ्य इति विशेषः. ❀
एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा मौलनि- २५
रुक्तानुरोधात् सुष्ठु पारं तमसः पारं नयति इति—

(८५९) सुपर्णः,

ॐ सुपर्णाय नमः ।

भा०—( सुपर्णः ).

५ (१) " स्वपारं भगवान्नयति "

इति मौलाः.

(२) " अनेकजन्मसंसिद्धस्ततो याति परां गतिम् " गी०६–४५

इति. ❀

तांश्च प्रबलहेतुभिः पतितान् अपि वायुनाऽनुपम-

१० गत्वरेण पतगपतिना वाहयति उत्तारयति इति—

निर्व०—( सुपर्णः ).

नयतेर्डः. टिलोपः.

(१) " पार-तीर, कर्मसमाप्तौ " धा०चुरा०कौ०पृ०४९०

चुरादिः णिच्. ततः कर्तर्यच्. णिलोपः. ततः पृषोदरादिलक्षणो

१५ दीर्घस्य ह्रस्वः. ह्रस्वस्य लोपश्च. सुपूर्वः.

(२) " सह सुपा " २ । १ । ४ ॥ कौ०पृ०१२८

इति समासः.असमानपदत्वात्

(३) " रषाभ्याम्० " ८ । ४ । १ ॥ कौ०पृ०३९

इति णत्वाप्राप्तौ,

२० (४) " पूर्वपदात्० " ८ । ४ । ३ ॥ कौ०पृ०१६७

इति णत्वम्. ❀

तांश्च प्रबलहेतुभिः पतितानपि परमार्षिशापादधश्चरं

परमभागवतं वसुम् गरुत्मता पुनरुपरिचरीकरणात् वायुना

परमगत्वरेण पतगपतिना वाहयति उत्तारयति इति—

२५ निरु०—८५९ मत्याऽन्यसमाधीन् यः समाधेः परिपाकतः ।

तमनः पारं नयति ( सुपर्णः ) स च कीर्तितः ॥ ६७३ ॥

(८६०) वायुवाहनः, ॥ श्लो० ॥९२॥ (८६१) धनुर्धरो,

ॐ वायुवाहनाय नमः। ॐ धनुर्धराय नमः।

भा०—(वायुवाहनः). ५
यथा परमर्षिशापात् अधश्वरं परमभागवतं वसुं गरुत्मता पुनरुपरि-
चरीचकार. श्रीविष्णुतत्त्वे च,
(१) "अथवा पक्षिराट् तूर्णमागत्य स्वामिनः पदम्। नेष्यति." ❋
ईदृगुपासकानां कण्टकोद्धरणाय स्वयमेव—
(धनुर्धरः). १०
(१) "एतदर्थं हि लोकेस्मिन् क्षत्रियैर्धार्यते धनुः"
(२) "धार्यते क्षत्रियैश्चापो माऽर्तशब्दो भवेदिति" ❋

निर्व०—(वायुवाहनः).
(१) "वह, प्रापणे" धा० भ्वादिः कौ०पृ० ४३२
णिच् वृद्धिः. ल्युरि "ल्यो" दि. अनः. णिलोपः. १५
(२) "वा, गतिगन्धनयोः" धा० अदा० कौ० पृ० ४४३
(३)"कृवापाजिमिस्वदिसाध्यशूभ्य०" उणा०पा०१कौ०पृ०६०९
इति उण्.
(४)"आतो युक् चिण् कृतोः" इति इह णिति कृति धातोर्युक्. ❋
७।३।३३॥ कौ०पृ०५३९ २०
ईदृगुपासकानाम् कण्टकोद्धरणाय स्वयमेव धनुः कार्मुकम् धरति इति—
(धनुर्धरः). धृञः पचाद्यचि धर उक्तः.
(१) "धन, धान्ये" उसिप्रकरणे, धा० जुहो०कौ०पृ०४५२

निरु०—८६० वायुना मत्वरेणैव कर्मणा पतितान् सतः।
गरुत्मता वाहयति यस्स स्याद् (वायुवाहनः) ॥ ६७४ ॥ २५
८६१ उपासकानां संकर्षः प्रत्यूहविनिवृत्तये।
धनुषो धारको नित्यं स्वयं स स्या (द्धनुर्धरः) ॥ ६७५ ॥

१ अनीश्वरम्।

( ८६२ ) धनुर्वेदो, ( ८६३ ) दण्डो,

ॐ धनुर्वेदाय नमः । ॐ दण्डाय नमः ।

५ भा०— अन्येपि सुरनरेन्द्रादयो धनुरादिकं तत्तच्छास्त्रप्रवर्तके-
ऽस्मिन्विन्दन्तीति—
( धनुर्वेदः ). ❋
वेदधर्मक्षेमंकरनृपतिमुखेन दण्डनीत्या दुष्टान्
दाम्यति इति—
१० ( दण्डः ).

( १ ) " अमन्ताड्डः " ❋ उणा०पा०१कौ०पृ०६१५

निर्व०— ( २ ) " अर्तिपृवपियजितनिधनितपिभ्यो नित् " उणा०
पा०२कौ०पृ०६२४
इति उसिः नित्. सोरुत्वम्. अन्यच्च वक्तव्यम् प्रागुक्तम्
१५ ( ३ ) " मा नाम आर्तशब्दोऽभूत् "
इति हि लोकेपि धानुष्कैर्धनुर्धार्यते. ❋
अन्येपि सुरनरेन्द्रादयः धनुरिदमुपलक्षणं धनुरादिकं
तत्तच्छास्त्रप्रवर्तकेऽस्मिन् विन्दन्ति लभन्ते इति—
( धनुर्वेदः ).
२० ( १ ) " विद्लृ, लाभे " धा०तुदा०कौ०पृ०४७०
(२)"हलश्च " इत्यधिकरणे घञ्. गुणः३।३।१२१॥कौ०पृ०६६३
धनुरुक्तः. रुत्वं प्राग्वत्. ❋
तथा वेदधर्मक्षेमंकरनरेन्द्रादिमुखेन दण्डनीत्या दुष्टान्
दाम्यति उपशमयतीति— ( दण्डः ).

२५ निरु०—८६२ सुरेन्द्राद्या धनुश्शास्त्रं यस्माद् विन्दन्ति स श्रुतः ।
( धनुर्वेदो ) ह्यष्टवर्णो धनुर्वेदप्रदायकः ॥ ६७६ ॥
८६३ वेदधर्मारिष्टातिनृपादिमुखतः खलान् ।
दण्डनीत्या दाम्यतीति ( दण्डः )स्याच्चतुर्वर्णकः ॥ ६७७ ॥

( ८६४ ) दमयिता, ( ८६५ ) ऽदमः, ।

ॐ दमयित्रे नमः । ॐ अदमाय नमः ।

भा०—स्वयञ्च रावणादीन् ताच्छील्येन— ५
( दमयिता ). ❀
न चास्यान्यः कश्चिदेवमिति—
( अदमः ). यथा,
( १ ) " भस्म कुर्याज्जगत्सर्वं मनसैव जनार्दनः । नतु कृत्स्नं
जगच्छक्तं किञ्चित् कर्तुं जनार्दने " इति. ❀भा०उ०६७–८। १०

निर्व०—( १ ) " दमु, उपशमे " धा०दिवा०कौ०पृ०४५९
शमेर्ण्यन्तात् भावे एरजन्तस्य इदं ग्रहणम्. उपशम इति.
( २ ) " अमन्ताड्डः " इति डः. उणा०पा०१ कौ०पृ०६१५
अम् प्रत्याहारः. बाहुलकान्न डस्येत्त्वम्.
( ३ ) " नेट्० "इति नेट्. अनुस्वारपरसवर्णौ. ❀ ७।२।८॥कौ० १५
पृ०५८१
स्वयं च रावणादीन् ताच्छील्येन दमयतीति—
( दमयिता ).
धातुः पूर्ववत्. ततो णिच्. वृद्धिः. अमन्तत्वात्
मित्त्वे " मितां ह्रस्वः. " ततः ६ । ४ । ९२॥कौ०पृ० ४८२ २०
(१)"तृन्"इति ताच्छीलिकस्तृन्. इट्. ३।२।१३५॥कौ०पृ०६०१
गुणः. अम्. अनङादि. ❀
कृत्स्नस्यापि परिपन्थिवर्गस्यास्मिन् अकिञ्चित्करतया
नास्ति दमः दमकर्मा अन्यः अन्यकर्तृकदमनं वा अस्येति—
( अदमः ). २५

निरु०—८६४ ताच्छील्याद्रावणादीनां हर्ता ( दमयिता ) स्वयम् ।
८६५ कश्चिद्दमयिता नास्ति यस्यासा ( वदमः ) स्मृतः ॥ ६७८॥

(८६६) अपराजितः,

ॐ अपराजिताय नमः ।

भा०— एवं सर्वतोमुखे प्रशासने कचित् कदाचित् कुतश्चिदप्रतिहतः—
५ (अपराजितः). यथा,
(१) "दाशार्हमपराजितम्"
(२) "यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः । हरिस्त्रैलो-
क्यनाथस्सन् किन्नु तस्य न निर्जितम्" भा०उ० ।
इति च. ❀

१० निर्व०— प्राग्वदेव धातुः. ततो भावे घञ्.
(१) "नोदात्तोपदेशस्य०" ७।३।३४॥कौ०पृ०५४१
इत्यादिना नोपधावृद्धिः. आद्ये ततः,
(२) "तत्करोति०" इति णिचि चुरा०गणसूत्रम् कौ०पृ०४९०
(३) "णाविष्ठवत्" इति टिलोपः. ६।४।१५५॥ कौ०पृ०३१०
१५ उक्तयुक्त्या न वृद्धिः. ततः पचाद्यचि णिलोपः. अनुअल्पे तु
भावे घञ् नातोभिकमिति विवेकः. नञ्पूर्वो बहुव्रीहिः.
नञो नलोपः. नाम्नोस्संहितः अकस्सवर्णे दीर्घः. ❀
एवं सर्वतोमुखे प्रशासने कचित् कदाचित् कुतश्चिदपि
पराजितः प्रतिहतो नेति—
२० (अपराजितः).
(१) "जि, जये" धा०भ्वादिः कौ०पृ०४०५
(२) "जि, अभिभवे च" धा०भ्वादिः कौ०पृ०४२६
परापूर्वः. ततः कर्मणि क्तः. अगुणः. अनिट्. नञ्समासः.
नलोपः. ❀

२५ निरु०— ८६६कचित् कदाचित् कुतश्चित् सर्वतोमुखशासने ।
यस्य प्रतिहतिर्नास्ति स वै स्या (दपराजितः) ॥ ६७९ ॥

( ८६७ ) सर्वसहो, ( ८६८ ) नियन्ता,

ॐ सर्वसहाय नमः । ॐ नियन्त्रे नमः ।

भा०—स्वशासनेन सर्वं देवतान्तरमपि मन्दाधिकारिणामाराध्यतया ५
सहते बिभर्तीति—
( सर्वसहः ). ❀
तत्र तत्तद्रुचीन् प्ररोचयन् नियच्छतीति—
( नियन्ता ).

निर्व०—स्वशासनेन सर्वं विश्वमपि देवतान्तरम् सहते मन्दाधिका- १०
रिणामाराध्यतया बिभर्तीति—
( सर्वसहः ).
( १ )" षह, मर्षणे " धा०भ्वादिः कौ०पृ०४११
षस्सः, अच्, सर्व उक्तः, नच
( २ ) " पूःसर्वयोर्दारिसहोः" इति, ३।२।४१॥कौ०पृ०५७७ १५
खच्. कर्मणश्शेषत्वेन विवक्षणात् क्षेमंकरा इतिवत्.
असंज्ञात्वाद्वा. तत्र हि सहिग्रहणम् असंज्ञार्थम् नच,
(३)" संज्ञायां भृतृवृजिधारिसहितपिदमः"३।२।४६॥कौ०पृ०५७८
इति शत्रुंसहादिवत् खच् तत्र विख्यातग्रहणात् प्रकृते च
गुणकृतत्वात् ततो न मुमित्यलम्. प्रकृतमनुसरामः. २०
छन्दोभावात् छन्दसि वर्णाधिक्यमदोषः. तद्भावश्च दर्शितः. ❀
तत्र तत्तद्रुचीन् प्ररोचयन् नियच्छतीति—
( नियन्ता ).

निरु०—८६७ मन्दाधिकारिणां सर्वमाराध्यत्वेन दैवतम् ।
बिभर्ति सहते यस्तु स ( सर्वसह ) ईरितः ॥ ६८० ॥ २५
८६८ दैवतेषु च सर्वेषु तत्तदिच्छां प्ररोचयन् ।
मन्दाधिकारिणो योऽसौ ( नियन्ता ) स्यान्नियच्छति ॥ ६८१ ॥

( ८६९ ) नियमो, ( ८७० ) यमः, ॥

ॐ नियमाय नमः । ॐ यमाय नमः ।

५ भा०—( १ ) " यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति "
इति. ❀ गी०७—२१ ।
तत्फलं च जात्यायुर्भोगादिकं नियम्यतेऽस्मिन्निति—
( नियमः ).
( १ ) " यमस्समुपनिविषु च " ३ । ३ । ६३ ॥ कौ०पृ०६५४
१० इत्यप्. यथा,
( २ ) " लभते च ततः कामान् मयैव विहितान् हि तान् "
इति. ❀ गी०७—२२ ।
तत्तत्फलनियामकान् यमादीनपि यच्छतीति—
( यमः ). यथा,

१५ निर्व०—( १ ) " यम, उपरमे " धा० भ्वादिः कौ०पृ०४३०
निपूर्वः. तृच्. अनिट्. अनुस्वारादि. ततोऽनङादि. ❀
तत्फलं च जात्यायुर्भोगादिकं नियम्यते निमित्तभूते
ऽस्मिन्निति—
( नियमः ).
२० प्राग्वद्धातुः. उपसृष्टः
(१)" अकर्तरि च कारके०"इत्यनुवृत्तौ ३।३।१९॥कौ०पृ०६४७
( २ ) " यमस्समुपनिविषु च " इति अधिकरणे अप्. ❀
३ । ३ । ६३ ॥ कौ०पृ०६५४
तत्तत्फलनियामकान् यमादीनप्यधिष्ठातृतया यच्छतीति—
२५ ( यमः ).

निरु०—८६९ भोगादिकं नियम्यास्मिन् लम्भयन् (नियमः) स्मृतः ।
८७० यमादीन् यच्छति ( यम ) स्तत्तत्फलनियामकान् ॥ ६८२॥

श्लो० ॥ ९३ ॥ ( ८७१ ) सत्त्ववान्,

ॐ सत्त्ववते नमः ।

भा०-(१)"प्रभवति संयमने ममापि विष्णुः"वि०पु०३-७-१३।
इति एवं रजस्तमसोर्नियमनम् अथ सत्त्वस्य. ❀ ५
परमप्रकाशलाघवसुखसंपदा मोक्षमूलं सत्त्व
साक्षादधिष्ठयमस्येति-
( सत्त्ववान् ). यथा,
( १ ) " महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" श्वे०उ० ३-१२।
इति द्रुहिणादिमुखे हि रजस्तमसी श्रीमति वाराहे देवः १०
( २ ) " सत्त्वेन मुच्यते जन्तुस्सत्त्व नारायणात्मकम् । रजसा
सत्त्वयुक्तेन भवेच्छ्रीमान् यशोऽधिकः " व०पु० ।
( ३ ) " तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते । यद्रजस्तमसोऽ
पेतं सोऽहं नास्त्यत्र संशयः " व०पु० ।
इति. ❀ १५

निर्व०- प्राग्वदेव धातुः. पचाद्यच् एवं रजस्तमसोर्नियमन-
मुक्तम्. अथ सत्त्वस्यापि तदुच्यते. ❀
परमप्रकाशलाघवसुखसंपदा मोक्षमूलं द्रुहिणादिमुखेन
रजस्तमोऽधिष्ठानात् साक्षादधिष्ठेयम् सत्त्वम्
अस्यास्तीति- २०
( सत्त्ववान् ). अस्तेः शतरि श्नसोरल्लोपः हि सच्छब्दः. ततः
( १ ) " तस्य भावस्त्वतलौ " इति भावे त्वः ५ । १ । ११९॥
कौ०पृ०३०९
जश्त्वचर्त्वे. ततः
( २ ) " तदस्य० " इति मतुप्. ५।२।९४॥कौ०पृ०३२५ २५

निरु०-८७१ प्रकाशलाघवसुखसंपदा मोक्षसाधनम् ।
सत्त्वं साक्षादधिष्ठेय यस्यासौ ( सत्त्ववान् ) श्रुतः ॥ ६८३ ॥

( ८७२ ) सात्त्विकः, ( ८७३ ) सत्यः,

ॐ सात्त्विकाय नमः । ॐ सत्याय नमः ।

५ भा०—धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन च सत्त्वमर्हतीति—
( सात्त्विकः ).
( १ ) " तदर्हति " इति. ठक्. ❀ ५ । १।६३॥कौ०पृ०३०१
सात्त्विकशास्त्रप्रतिपाद्यतया यथार्थवैभवः. ( सत्यः ).
( १ ) " सत्ये प्रतिष्ठितः कृष्णस्सत्यमस्मिन् प्रतिष्ठितम् । सत्तासत्ते
१० च गोविन्दस्तस्मात्सत्यस्सतां मतः " भा०उ०६९—१२—१३ ।
इति वा—( सत्यः ).

निर्व०—( ३ ) " मादुपधायाश्च मतोर्वोऽयवादिभ्यः "
८ । २ । ९ ॥ कौ०पृ०३२५
इति मतोर्मस्य वः. अत्यन्तदीर्घः. ततो नुमि स्त्री दि. ❀
१५ धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन च सत्त्वमर्हतीति—
( सात्त्विकः ). सत्त्वशब्दः साधितः. ततः
(१) " तदर्हति " इति, ठगादिद्वादशक-५।१।६३॥कौ०पृ०२०१
· विधानात् इह ठञधिकारमध्यस्थठक्.
( २ ) " ठस्येकः " इति इकादेशः. आदेशेऽकार उच्चारणार्थः.
२० ७ । ३ । ५० ॥ कौ०पृ०२२१
( ३ ) " किति च " इत्यादिवृद्धिः. ७।२।११८ ॥कौ०पृ०२०४
( ४ ) " यस्य० " इति लोपः. ❀६ । ४ । १४८ ॥ कौ०पृ०५६
सात्त्विकशास्त्रप्रतिपाद्यतया सत्यो यथार्थवैभव इति वा,
, वचनात् स्वस्य सत्ये तस्य च स्वस्मिन् प्रतिष्ठितनया
२५ सत्यत्वेन सतां मतत्वाद्वा— ( सत्यः ).

निरु०—८७२ विज्ञानैश्वर्यवैराग्यधर्मरूपफलं स्वयम् ।
नियम्यार्हति सत्त्वं यः ( सात्त्विकः ) परिकीर्तितः ॥ ६८४ ॥
८७३ यथार्थवैभवः ( सत्यः ) सर्वशास्त्रेषु विश्रुतः ।

( ८७४ ) सत्यधर्मपरायणः, । ( ८७५ ) अभिप्रायः,

ॐ सत्यधर्मपरायणाय नमः । ॐ अभिप्रायाय नमः ।

ना०—निरुपाधिस्सात्त्विकचोदनाधिकारिफलक उत्तमधर्मोस्य परायणं परमप्रीणनम् इति— ५
( सत्यधर्मपरायणः ). ❋
सत्यधर्मनिष्ठेन निरुपाधिकोद्देश्यतया अभिप्रेतः इति—
( अभिप्रायः ). ❋ १०

निर्व०—उक्तो ह्यस्तेः शतरि सच्छब्दः. ततः
( १ ) " तत्र साधुः " इति यत्. ❋ ४।४।९८॥कौ० पृ०२८९
तथा सत्यः-निरुपाधिकः. सात्त्विकचोदनाधिकारिफलको
धर्मः परायणं परमयनं परमप्रीणनमस्येति—
( सत्यधर्मपरायणः ). १५
एतेः अयतेर्वा ल्युटि अयनशब्दः पृधातोः क्वोरपि
परशब्दश्च प्रागुक्तः. दीर्घः. णत्वम् धरतेर्मनि धर्म उक्तः.
अस्तेश्शत्रन्तात् यति च सत्यशब्दस्समर्थितः. ❋
सत्यधर्मनिष्ठेन स्वच्छेन सत्यो निरुपाधिकोद्देश्यतया अभिप्रेयते २०
अभिसन्धीयते इति—
( अभिप्रायः ).

निरु०—८७४ उपाधिकहितस्सर्वमुख्यो धर्मः परायणम् ॥ ६८५ ॥
परमप्रीणनं यस्य ( सत्यधर्मपरायणः ) ।
८७५ स्वच्छेन धर्मनिष्ठेन सत्येन च विशेषतः ॥ ६८६ ॥
निरुपाधिकोद्देश्यत्वादभितः प्रेयते च यः । २५
( अभिप्रायः ) स विज्ञेयो वस्वर्णा मनुरुत्तमः ॥ ६८७ ॥

१ प्रेयते ।

( ८७६ ) प्रियार्हो,

ॐ प्रियार्हाय नमः ।

भा०—एवमैदमर्थ्यज्ञानिनं प्रियमेवार्हति इति—
५ ( प्रियार्हः ).
एकभक्तिषु हि भगवतः स्वत एव श्रावण्यम् आर्तार्थार्थिजिज्ञासुषु औदार्यबलात्करणेन
( १ ) " तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते " गी० ७–१७ ।
( २ ) " उदारास्सर्व एवैते " इति. ❀ गी० ७–१८ ।

१० निर्व०–( १ ) " इण्, गतौ " धा०अदा०कौ०पृ०४४१.
अभि प्रइत्युपसर्गसमुदायपूर्वः. ततः,
( २ ) " अकर्तरि च कारके० " ३।३।१९॥ कौ०पृ०६४७
इति कर्मणि घञ्, तदनुवृत्तौ,
( ३ ) "एरच् "इति वा तत्राच्. आद्ये ३।३।५६॥कौ०पृ०६५३
१५ ( ४ ) " अचः " ७ । २ । ११५ ॥ कौ०पृ०४२
इति वृद्धिः. आय् अन्यत्र गुणः. अय् इति भेदः. उभयत्रापि सांहितो दीर्घः. ❀
एवं प्रियमैदमर्थ्यज्ञानिनम् एकभक्तिमेवार्हतीति—
( प्रियार्हः ).
२० ( १ ) " अर्ह, पूजायाम् " धा० भ्वादिः कौ०पृ० ४११
( २ ) " अर्हः " ३ । २ । १२ ॥ कौ०पृ०५७२
इति कर्मण्यणोऽपवादोऽच् स्त्रियां विशेषः.
( ३ ) " प्रीञ्, तर्पणे कान्तौ च " धा०क्र्यादिः कौ०पृ०४७४
( ४ ) " इगुपधज्ञाप्रीकिरः कः "३। १ । १३५ ॥कौ०पृ०५६७
२५ इति कः. अगुणः. संयोगपूर्वत्वात् एकाच्त्वाच.

निरु०–८७६ ऐदमर्थ्यज्ञानिनं यः ( प्रियार्हः ) प्रियमर्हति ।

( ८७७ ) ऽर्हः, ( ८७८ ) प्रियकृत्,

ॐ अर्हाय नमः । ॐ प्रियकृते नमः ।

भा०— अनन्यस्पृहाणां तेषामप्ययमेव योग्य इति— ५
( अर्हः ).
(१)" आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम्"गी० ७—१८।
इति. ❀
अन्यपरानपि भजतः तच्छन्दानुवर्तनेन प्रियान् करोति इति—
( प्रियकृत् ). १०
( २ ) " निराशीः कर्मसंयुक्तान् सात्त्वतांश्चाप्यकल्पयन् " इति. ❀

निर्व०-(५)"एरनेकाचः०"इति यणोऽप्राप्तौ,६।४।८२॥कौ०पृ०४५
( ६ ) "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ "६।४।७७॥कौ०पृ०४५
इत्येरियङ्. दीर्घः. एकभक्तिषु हि भगवतः स्वत एव प्रवणता
आर्तार्थार्थिजिज्ञासुषु तु औदार्यबलात्कारात्. ❀ १५
अनन्यस्पृहाणां तेषामप्ययमेवार्हति प्राप्तुं योग्यो भवतीति-
( अर्हः ).
धातुः प्राग्वत्. पचाद्यच्. ❀
अन्यपरानपि भजतः प्रियान् छन्दानुवर्तनेन प्रीतिवि—
षयान् करोतीति— २०
( प्रियकृत् ).
कृञः क्विपि तुक्. अगुणः. प्रिय उक्तः. ❀

निरु०—८७७अनन्येच्छावतां पुंसां योग्यस्सो(ऽर्ह)इति स्मृतः।६८८॥
८७८ भजतोप्यन्यभक्तान् यः स्वप्रियान् कुरुते सदा ।
छन्दानुवर्तनेनेति ( प्रियकृत् ) सच कथ्यते ॥ ६८९ ॥ २५

( ८७९ ) प्रीतिवर्धनः,॥ श्लो०॥९४॥ (८८०)विहायसगतिः,

ॐ प्रीतिवर्धनाय नमः । ॐ विहायसगतये नमः ।

५ भा०— अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयति इति—
( प्रीतिवर्धनः ).
(१) " जगतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तम्" इति. ❀
गी०१०–१ ।
तथा निरूढभक्तिपरकोटिभिः विहायसं पदमेव गम्यतेऽस्मात् इति—
१० ( विहायसगतिः ). स खल्वाह.

निर्व०— अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयतीति—
( प्रीतिवर्धनः ).
वृधेर्ण्यन्ताद् ल्युवादौ वर्धन उक्तः. यद्वा,
( १ ) " वर्ध, छेदनपूरणयोः " धा०चुरा० कौ०पृ०४८३
१५ चुरादिः. पूरणकर्मा चायम्. णिच्. अन्यथाप्युक्तम्
ततो ल्युप्रभृतिः. अनः. णिलोपः.
( २ ) " प्रीञ्, तर्पणे कान्तौ च" धा०क्र्यादिः कौ०पृ०४७४
भावे स्त्रियां क्तिन्. अनिट्. अगुणः. ❀
अथ निरूढभक्तिकोटिभिः विहायसं परमव्योम गम्यते
२० प्राप्यतेऽस्मादिति—
( विहायसगतिः ).
अर्थकथनमात्रमिदम्. षष्ठीसमासोयम्. गमेः—

निरु०—८७९ गुणाविष्करणान्नित्यमुत्तरोत्तरतोऽधिकम् ।
यस्तु प्रीतिं वर्धयति ( प्रीतिवर्धन ) ईरितः ॥ ६९० ॥
२५ ८८० निरूढभक्तियुक्तैर्हि नित्यं यस्मात्तु गम्यते ।
विहायसं परं व्योम ( विहायसगति ) स्तु सः ॥ ६९१ ॥

१ परमं व्योम ।

गा०–(१) भुक्त्वा च भोगान् विपुलान् त्वमन्ते मत्प्रसादतः।
ममानुस्मरणं प्राप्य मम लोके निवत्स्यसि " ग०गी०।
इति सूत्रं च
(२) " तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्त- ५
च्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया " इति. ❀
शा० ४–२–१६।

---

निर्व०–(१) " अकर्तरि च कारके०" इत्यनुवृत्तौ ३।३।१९॥
कौ०पृ०६४७
(२)"स्त्रियां क्तिन्" इति अपादाने क्तिन्. अनिट्. ३।३।९४॥ १०
कौ०पृ०६५८
(३) " अनुदात्तोपदेश०" ६।४।३७॥ कौ०पृ०४३५
इत्यादिना अनुनासिकलोपः.
(४) " ओहाक्, त्यागे" धा०जुहो० कौ०पृ०४५०
(५) " ओहाङ्, गतौ " वा. धा०जुहो०कौ०पृ०४५० १५
विपूर्वः. असुन्प्रकरणे,
(६) " वसेर्णित्" उणा०पा०४ कौ०पृ०६४१
इत्यतो णिदित्यनुवृत्तौ
(७) " वहिहाधाञ्भ्यश्छन्दसि" उणा०पा०४ कौ०पृ०६४१
इत्यसुन् णित्. उक्तो हि छन्दोभावः. केचित्त्विदमन्यथा २०
व्याचख्युः
(८) " पचिवचिभ्यां सुट् च " उणा०पा०४ कौ०पृ०६४१
इत्यतस्सुडित्यनुवृत्त्या पुनरसुडिति उदाजह्रुश्च. वक्षाः
हासाः धासाः इति. तत्तु बाहुलकेनापि सुसमाधम्
स्तोमवाहाः विहायाः विश्वधायाः इत्यादिदर्शनादुचितोक्ते- २५
व वस्तुतः स्थितिः णित्त्वात्.
(९) " आतो युक्०" ७।३।३३॥ कौ०पृ०५३९
इति णिति कृति युक्. बाहुलकादकारः. पृषोदरादित्वाद्वा.

( ८८१ ) ज्योतिः,

ॐ ज्योतिषे नमः ।

भा०— तदारोहणनिश्रेण्याः अर्चिरादिगतेः प्रथमं पदमर्चिराह—
५ ( ज्योतिः ).

निर्व०— अथवा द्युधातोः
( १० ) " अत्यविचमितमिनमिरभिलभिनभितपिपतिपनि-
पणिमहिभ्योऽसच्" इत्यसच्. उणा०पा०३ कौ०पृ०६३०
( ११ ) " वहियुभ्यां णित् " उणा०पा०३ कौ०पृ०६३०
१० इत्यसचो णित्त्वं च बाहुलकात् अन्यतोपीत्यसच् णित्
( १२ ) " हि, गतौ वृद्धौ च " धा०स्वादिः कौ०पृ०४६२
इत्यतो वा द्युधातोर्वा विपूर्वाद् युक् हिनोतेस्तु
तादृशात्तुद्व्यायादेशावित्यलम्. ❀
अथ तदारोहणनिश्रेणिकाऽर्चिरादिगतिः प्रतिपाद्यते उपासनप्रसङ्गेन
१५ भगवता उपासकानामतिवाहे गन्तॄणां गमयितृत्वलक्षणेऽतिवहने
नियुक्ततया हि आतिवाहिकाः अर्चिरादयो देवताविशेषाः
वहेरतिपूर्वाद्भावे घञन्तात्
( १ ) " तत्र नियुक्तः " ४ । ४ । ६९ ॥ कौ०पृ०२८६
इति ठक्. सर्वमिदं ब्रह्ममीमांसायां स्पष्टम् तत्क्रमगमनिका च तत्रैव
२० स्फुटतरं द्रष्टव्या तद्द्वारा च तन्नियोजकस्य भगवतोऽत्राभिधानम्
तत्र प्रथमं पदमर्चिरुच्यते द्योत्यतेऽयमस्मादिति—
( ज्योतिः ).

निरु०—८८१ स्वप्रतिः साधनत्वाद्यः स्वयं नित्यं विशेषतः ।
अर्चिरादिगते ( ज्योतिः ) प्रथमं पर्व कथ्यते ॥ ६९२ ॥

## ( ८८२ ) सुरुचिर्,

ॐ सुरुचये नमः ।

भा०—च्योत्यतेऽस्मादिति च्युतेरिसन् जादेशश्च यथा,
( १ ) " तेर्चिषमभिसंभवन्ति " छा०५–१०–१ । ५
इति उपासनप्रसन्नेन भगवता उपासकातिवहने नियु-
क्तत्वेनातिवाहिका ह्यर्चिरादयः .
( २ ) " अर्चिरादिना तत्प्रथितेः " शा०४–३–१ ।
( ३ ) " आतिवाहिकास्तल्लिङ्गात् " शा०४–३–४ ।
इत्यादौ चिन्तिताः. ❀ १०
सूर्योदयाद्रोचत इति रुचिरहः साऽस्य शोभनेति–
( सुरुचिः ).
(१)" इगुपधात् कित्" इति इन् कित्. उणा०पा०४कौ०पृ०६३७
( २ ) " अर्चिषोऽहः " इति. ❀ छा०५–१०–१ ।

निर्व०—च्युतेर्दीतिकर्मणो बाहुलकात्, १५
( २ ) " ताभ्यामन्यत्रोणादयः " ३।४।७५ ॥ कौ०पृ०६४५
इति बाधित्वा अपादान इह इसनि आदेर्जकारे गुणे च
ज्योतिरूपे करणे वायं ध्युत्याद्यः हत्वम् अवसाने तु
विसर्गः. आविष्टलिङ्गोयमि"त्या"दि. ❀
अथाहः सुशोभना रुचिः सूर्योदयाद्रोचमानमहरस्येति– २०
( सुरुचिः ).
( १ ) " रुच, दीप्तौ " इन्प्रकरणे, धा०भ्वादिः कौ०पृ०४११
( २ ) " इगुपधात् कित् " उणा०पा०४कौ०पृ०६३७

निरु०–८८२ अहः शुभं यस्य स वै ( सुरुचिः ) परिकीर्तितः ।

(८८३) हुतभुग्विभुः।

ॐ हुतभुग्विभवे नमः।

भा०— अमृतपरिणामं हुतं भुञ्जानः सोमः यस्मिन्
५ शुक्लपक्षद्वारा विभुः पूर्णो भवति सः—
(हुतभुग्विभुः).
(१) "अह्न आपूर्यमाणः पक्षः" इति. ❋छा०५–१०–१।

निर्व०—इति कर्तरि इन् कित्. ततो न गुणः. सुपूर्वो बहुव्रीहिः.
नाम्नोः सांहितो विसर्जनीयस्य सः. ❋
१० अथापूर्यमाणपक्षः प्रकरणात् हुतभुक् अमृत-
परिणामं हुतं भुञ्जानस्सोमः विभुः व्यापी शुक्लप-
क्षद्वारा पूर्णोऽस्मिन्निति—
(हुतभुग्विभुः).
एकनाम. भवतेर्विपूर्वाड्डौ. विभुरुक्तः. अन्यच्च
१५ प्रागेव प्रव्यक्तम्.
(१) "भुज, पालनाभ्यवहारयोः" धा० रुधा० कौ०पृ०४७१
इहाभ्यवहारक्रियेयम् क्विप्. अगुणः. कुत्वम् गः. वा चर्त्वम्.
(२) "हु, दानादानयोः" धा० जुहो०कौ०पृ०४४९
कर्मणि क्तः. अगुणः. बहुव्रीहिः. आवसानिकस्य चर्त्वम्.
२० सांहितिकं जश्त्वम्. ❋
अथ षडुदङ्मासाः उत्थानकालतया स्तूयते शस्यते
उदगयनद्वारा प्रशस्यत इति—

निरु०—८८३ सुधापरीणामहुतं भुञ्जानश्चन्द्रमास्तथा ॥ ६९३ ॥
विभुः पूर्णो भवत्यस्मिन् स वै स्याद् (हुतभुग्विभुः)।

( ८८४ ) रविर्, ( ८८५ ) विरोचनः,

ॐ रवये नमः । ॐ विरोचनाय नमः ।

भा०—उत्थानकालतया उदगयनद्वारा रूयते प्रशस्यत इति— ५
( रविः ).
( १ ) " आपूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासान् " छा०५—१०—१ ।
इति. ❀
द्वाभ्यामयनगतिभ्यां संवत्सरः रथेनादित्यं विरोचयतीति— १०
( विरोचनः ).
( १ ) " मासेभ्यः संवत्सरम् " छा०५—१०—२ ।
( २ ) " संवत्सरोऽसावादित्यः " तै०६ न्यासविद्या. ❀

निर्व०—( रविः ). १५
( १ ) " रु, शब्दे " धा०अदा०कौ०पृ०४३९
( २ ) " अच इः " उणा०पा०४कौ०पृ०६३८
इति कर्मणि इः, गुणः, अव्, ❀
अथ संवत्सरः द्वाभ्यामयनगतिभ्यां संवत्सरो रथेन
आदित्यं विरोचयति विद्योतयतीति— २०
( विरोचनः ).
( १ ) " रुच, दीप्तौ " विपूर्वः, धा०भ्वादिः कौ०पृ०४११
णिच्, गुणः, ल्युटि र्युवादि, अनः, णिलोपः, ❀

निरु०—८८४ यश्चोत्तरायणद्वारा रूयतेऽत्र प्रकाश्यते ॥ ६२४ ॥
स वै ( रविः ) समाख्यातः प्राशस्त्यफलदो मनुः । २५
८८५ अयनद्वयगत्यार्कं यो विरोचयति स्वयम् ॥ ६२५॥
( विरोचन ) इति ख्यातः प्रकाशफलदो मनुः ।

## ( ८८६ ) सूर्यः,

### ॐ सूर्याय नमः ।

भा०—वायुस्सदा सरत्यस्मादिति—

५ ( सूर्यः ).

( १ ) " राजसूयसूर्य० " ३ । १ । ११४ ॥ कौ० पृ०५६१

इत्यादिना निपातितः. बहुलवचनादस्येति कृतः भावमर्थं

व्यभिचरन्ति इति कृत्प्रत्ययानां सर्वत्रेष्टार्थत्वं द्रष्टव्यम्.

( २ ) " स वायुलोकम् " कौषी० १—३ ।

१० इति. ❀

---

निर्व०—अथ वायुः सदा वायुस्सरति पवतेस्मादिति एवं सुवति प्रेरयति वा—

( सूर्यः ). आद्ये,

( १ ) " सृ, गतौ " अन्यत्र. धा०भ्वादिः कौ०पृ०४२५

१५ ( २ ) " षू, प्रेरणे " तुदादिः. धा०तुदा०कौ०पृ०४६८

परस्मै०. उभयत्रापि. क्यप् प्रकरणे,

( ३ ) " राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः "

३ । १ । ११४ ॥ कौ०पृ०५६१

इति क्यबन्तो निपातः. तत्र

२० ( ४ ) " तयोरेव० " ३ । ४ । ७० ॥ कौ०पृ०५५५

इति प्रकृत्य सर्तेरुत्पद्यते क्यप् कृत उत्वम्. सुवतेस्तु

कर्तरि क्यप्. तस्य रुट् च निपात्यते. यद्वा प्रत्यय-

मुत्वं रुटं वा निपात्य

( ५ ) " कृत्यल्युटः० " ३ । ३ । ११३ ॥ कौ०पृ०६६२

२५ इति बाहुलकात् कृत्यस्यास्य उभयत्रोक्तार्थकत्वोपपत्तिः.

पूर्वत्र स्वरत्वम्.

---

निरु०—८८६वायुस्सरति यस्माद्धि तस्मात् (सूर्यः)पञ्चाक्षरः॥६९६॥

{८८७ / ९६९} सविता,

ॐ सवित्रे नमः ।

भा०— सूर्यद्वारा वृष्टिसस्यादिकं सूते इति—
(सविता).
(१) "संवत्सरादादित्यम्" छा०५—१०—२।
(२) "वायुमब्दादविशेषविशेषाभ्याम्" इति, शा०४-३-२।
न्याय्यं व्यवधानम्. ❋
रविरश्मिसंक्रान्त्यादिमुखेन चन्द्रविद्युद्वरुणान् लोचयतीति—

निर्वं०—(६) "हलि च" ८।२।७७॥ कौ०पृ०६३ १०
इति दीर्घः. उभयत्रापि अगुणः. प्रतिषेधात् यथा-
यथं प्रवृत्तेः. ❋
अथादित्यः सूर्यद्वारा सस्यादिकं सूते प्रसूते
इति—
(सविता). १५
(१) "षूङ्, प्राणिगर्भविमोचने" धा०अदा०कौ०पृ०४३८
आदादिकः तृच्.
(२) "स्वरतिसूतिसूयतिधूञूदितो वा" ७।२।४४॥ कौ०पृ०३८५
इति पाक्षिक इट्. गुणः. अव्. अनङादि. ❋
अथ चन्द्रमाः अमानवापरनामाविद्युद्वरुणश्च रविणा २०
सूर्येण तदुपलक्ष्य तद्रश्मिसंक्रान्त्यादिमुखेन चन्द्र-
विद्युद्वरुणान् लोचयति दर्शयतीति—

निरु०—८८७ वृष्टिसस्यादिकं सूते (सविते) ति रवेर्मुखात् ।

(८८८)रविलोचनः,॥श्लो०॥९५॥(८८९)अनन्तहुतभुग्भोक्ता,

ॐ रविलोचनाय नमः । ॐ अनन्तहुतभुग्भोक्त्रे नमः ।

५ भा०—( रविलोचनः ).
( १ ) "आदित्याचन्द्रमसं चन्द्रमसो विद्युतम्" छा०५—१०—२।
( ३ ) "स वरुणलोकम्" इति. ❋ कौपी० १—३ ।
समतन्तुषु हुतं भुङ्क्ते इति इन्द्रो हुतभुक् प्रजाः भुनक्ति
पालयतीति प्रजापतिः भोक्ता तौ महान्तावस्येति—
१० ( अनन्तहुतभुग्भोक्ता ).
( १ ) "स इन्द्रलोकं स प्रजापतिलोकम्" ❋ कौपी०१—३।

निर्व०—( रविलोचनः ).
( १ ) "लोचृ, दर्शने" धा०भ्वादिः कौ०पृ०३८९
णिच्. ल्युरिति दि. अनः. णिलोपः. रौतेरिप्रत्यये रविरुक्तः. ❋
१५ अथेन्द्रः प्रजापतिश्च. अनन्तौ अनवधिकमाहात्म्यतया
महान्तौ हुतभुग्भोक्तारौ प्रकरणात् समतन्तुषु हुतं
भुङ्क्ते इति हुतभुक् इन्द्रः सच भुनक्ति प्रजाः पालयतीति
भोक्ता प्रजापतिः सच इति द्वन्द्वः तावस्येति—
( अनन्तहुतभुग्भोक्ता ). एकं नाम.
२० ( १ ) "भुज, पालनाभ्यवहारयोः" धा०रुधा०कौ०पृ०४७१
पालनकर्मेहायम्. तृच्. गुणः. अनिट्. कुत्वं गः.
तस्य चर्त्वम् कः.

निरु०—८८८सूर्यस्य रश्मिसवन्धाद् विद्युद्वरुणचन्द्रकान् ॥ ६९७॥
निरन्तर लोचयति ( रविलोचन ) ईरितः ।
२५ ८८९ मरुत्वान् हुतभुग्भोक्ता भुनक्तीति प्रजा विधिः ॥ ६९८ ॥
सो ( ऽनन्तहुतभुग्भोक्ता ) महान्तौ यस्य तो सदा ।

१ रविरानन्दः ।

निर्व०— पुनश्चायं धातुरावर्त्यः अभ्यवहरणक्रियश्चेहायम्.
क्विप्. अगुणः. कुत्वम् गः. वा चर्त्वम् संहितायाम्
( २ ) " झलां जशः " ८।२।३९॥ कौ०पृ०१४
इति जश्त्वम्. जुहोतेः के हुत उक्तः. अनिट्. ५
( ३ ) " अम, गत्यादिषु " ततः धा०भ्वादिः कौ०पृ०४०१
( ४ ) " हसिमृग्रिण्वामिदमि०" उणा०पा०३ कौ०पृ०६२८
इत्यादिना तन्.
( ५ ) " तितुत्र०" इति इट्. ७।२।९॥ कौ०पृ०६०८
प्रतिषेधे अनुस्वारादौ च अन्तशब्दोऽप्यवादि. नञ्पूर्वो बहुव्रीहिः १०
नलोपः. नुट्. ततो बहुव्रीहिद्वन्द्वगर्भः पुनर्बहुव्रीहिः अत्र,
( ६ ) " नञ्सुतश्च " ५।४।१५३॥ कौ०पृ०१६१
इति न कप्. यतस्समासान्तो विधिरनित्यः तद्बीजं च
( ७ ) " प्रतेरंश्वादयस्तत्पुरुषे " ६।२।१९३॥ कौ०पृ०७७१
इत्यन्तोदात्तार्थोऽश्वादिषु राजन्शब्दपाठः. १५
(८) " द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ " ६।२।१९७॥कौ०पृ७७१
इति मूर्ध्नोऽकृतसमासान्तस्य निर्दिष्टस्य पाक्षिकत-
त्स्वरविधानं च इत्यादि. तत्र हि पूर्वत्र नित्यत्वे,
( ९ ) " राजाहस्सखिभ्यष्टच् " ५।४।९१॥ कौ०पृ०१५२
इति राजन्शब्दात् टचि, २०
( १० ) " चितः " ६।१।१६३॥कौ०पृ०७३३
इत्येव स स्वरस्सिद्धः. ततः तदभावेपि स्वरार्थं तद्ग्रहणमिति
वक्तव्यम्. तया च तस्यानित्यत्वमिति उत्तरत्रापि.
( ११ )" द्वित्रिभ्यां षमूर्ध्नः " ५।४।११५॥ कौ०पृ० १६६

{८९० / ४६१} सुखदो,

ॐ सुखदाय नमः ।

भा० – अमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य स्वामि-
५ सुखं ददातीति–
( सुखदः ).
( १ ) " तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति " छा० ५–१०–३।
इति. ❀

निर्व०–इति समासान्तमकृत्त्वैव तस्य तत्स्वरविधानात् तस्या-
१० प्यनित्यत्वमिति ज्ञापकं चेदं सामान्यापेक्षम् अत उक्ता यु-
क्तिमती वाचो युक्तिः अनङ्गादि, अनन्तो हुतभुक्भोक्तेति
व्यस्तपाठे तु हुतभुक्भोक्ता इति कर्मधारयः सविशेषणमेकं
नाम तत्र न क्विपः प्रसक्तिरि"त्या"दि. अन्यत् प्राग्वत्. संहिता-
कार्यम्. पूर्व एव तु, मुख्यः पाठः. ❀
१५ एवं द्वादशापि तन्नियोज्याः, आतिवाहिका उक्ताः.
एनानमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य
अमीषां सुखं स्वप्राप्तिसुखं ददातीति–
( सुखदः ). ददातेः,
(१) " आतोनुपसर्गे० " इति कः. आल्लोपः ३।२।३।कौ०पृ०५७०
२० ( २ ) " खनु, अवदारणे " सुपूर्वः धा०भ्वादिः कौ०पृ०४२१
(३)"अन्येष्व०"इति डः टिलोपः. ❀ ३।२।१०१॥कौ०पृ०५८५

निरु०–८९० अमानवकरस्पर्शाद्भवमुत्सार्य सत्वरम् ॥ ६९१॥
स्वप्राप्तिलक्षणसुखं ददाति ( सुखद ) श्च सः ।

( ८९१ ) नैकदो,

ॐ नैकदाय नमः ।

भा०—एकं ददातीति एकदाः तद्विरुद्धा नैकदाः असंख्येयमालाञ्जन-
वासःप्रभृतिब्रह्मालंकारदायिन्यो मुक्ताभ्युत्थानविदो ५
दिव्याप्सरसोऽस्येति—
( नैकदः ).
( १ ) " तं पञ्च शतान्यप्सरस उपधावन्ति शतं मालाहस्ताश्शत-
मञ्जनहस्ताः " इत्यादि. कौ० १—४ ।
कौषीतकिनस्समामनन्ति. १०
( २ ) "तं ब्रह्मालंकारेणालंकुर्वन्ति" इत्यादि. च ❀ कौ० १—४।

निर्व०—तथा तेषां नैकान्यनेकानि मालाञ्जनवासःप्रभृतीनि
ब्रह्मालंकरणानि ददातीति नैकदाः वासोलंकरणहस्ताः
तथा नैका बह्व्यो जायन्ते प्रादुर्भवन्तीति नैकजाः वा
मुक्ताभ्युत्थानकोविदाः पञ्चशतसंख्याकाः दिव्याप्सरसः १५
ताः अस्य सन्ति इति—
( नैकदः ).
*नैकजो वा—एकत्र प्रागवद्दातेः कः. आलोपः. अन्यत्र,*
( १ ) " जनी, प्रादुर्भावे " धा०दिवा०कौ०पृ०४५४
( २ ) " अन्येष्वपि० " ३ । २ । १०१ ॥ कौ०पृ०५८५ २०
इति डः. टिलोपः. इणः कनि एक उक्तः. नञो नशब्दस्य वा
समासः. नञो नलोपाभावोपि. इति चोपपादितम्. वृद्धिः.

निरु०—८९१ ब्रह्मालंकारदायिन्यो मुक्तेभ्यश्च परे पदे ॥ ७०० ॥
दिव्याश्चाप्सरसो यस्य ( नैकद ) स्स च कथ्यते ।

{८९०, ४६१} सुखदो,

ॐ सुखदाय नमः।

भा० – अमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य स्वाप्ति-
५ सुखं ददातीति–
(सुखदः).
(१) "तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" छा०५–१०–२।
इति. ❋

निर्व०–इति समासान्तमकृत्वैव तस्य तत्स्वरविधानात् तस्या-
१० प्यनित्यत्वमिति ज्ञापकं चेदं सामान्यापेक्षम् अत उक्ता यु-
क्तिमती वाचो युक्तिः अनङ्गादि, अनन्तो हुतभुग्भोक्तेति
व्यस्तपाठे तु हुतभुग्भोक्ता इति कर्मधारयः सविशेषणमेकं
नाम तत्र न क्विपः प्रसक्तिरि"त्या"दि. अन्यत् प्राग्वत्. संहिता-
कार्यम्. पूर्व एव तु, मुख्यः पाठः. ❋
१५ एवं द्वादशापि तन्नियोज्याः, आतिवाहिका उक्ताः.
एनानमानवमुखेन स्पृष्ट्वा सवासनं संसारमुत्सार्य
अमीषां सुखं स्वप्राप्तिसुखं ददातीति–
(सुखदः). ददातेः,
(१) "आतोनुपसर्ग०" इति कः. आल्लोपः ३।२।३।कौ०पृ०५७०
२० (२) "खनु, अवदारणे" सुपूर्वः धा०भ्वादिः कौ०पृ०४२१
(३)"अन्येष्व०"इति डः टिलोपः. ❋ ३।२।१०१॥कौ०पृ०५८५

निरु०–८९० अमानवकरस्पर्शाद्भवमुत्सार्य सत्वरम् ॥ ६९९॥
स्वप्राप्तिलक्षणसुखं ददाति (सुखद) श्च सः।

## ( ८९१ ) नैकदो,

ॐ नैकदाय नमः ।

भा०—एकं ददातीति एकदाः तद्विरुद्धा नैकदाः असंख्येयमालाञ्जन-
वासःप्रभृतिब्रह्मालंकारदायिन्यो मुक्ताभ्युत्थानविदो ५
दिव्याप्सरसोऽस्येति—
( नैकदः ).
( १ ) " तं पञ्च शतान्यप्सरस उपधावन्ति शतं मालाहस्ताश्शत-
मञ्जनहस्ताः " इत्यादि. कौ० १—४ ।
कौषीतकिनस्समामनन्ति. १०
( २ ) "तं ब्रह्मालंकारेणालंकुर्वन्ति" इत्यादि. च ❀ कौ० १—४।

निर्व०—तथा तेषां नैकान्यनेकानि मालाञ्जनवासःप्रभृतीनि
ब्रह्मालंकरणानि ददातीति नैकदाः वासोलंकरणहस्ताः
तथा नैका बह्वयो जायन्ते प्रादुर्भवन्तीति नैकजाः वा
मुक्ताभ्युत्थानकोविदाः पञ्चशतसंख्याकाः दिव्याप्सरसः १५
ताः अस्य सन्ति इति—
( नैकदः ).
नैकजो वा—एकत्र प्राग्वद्दातेः कः. आल्लोपः. अन्यत्र,
( १ ) " जनी, प्रादुर्भावे " धा० दिवा० कौ० पृ० ४५४
( २ ) " अन्येष्वपि० " ३ । २ । १०१ ॥ कौ० पृ० ५८५ २०
इति डः. टिलोपः. इणः कनि एक उक्तः. नञो नशब्दस्य वा
समासः. नञो नलोपाभावोपि. इति चोपपादितम्. वृद्धिः.

निरु०—८९१ ब्रह्मालंकारदायिन्यो मुक्तेभ्यश्च परे पदे ॥ ७०० ॥
दिव्याश्चाप्सरसो यस्य ( नैकद ) स्स च कथ्यते ।

(८९२) ऽग्रजः, ।

ॐ अग्रजाय नमः ।

भा०—एवं प्राप्तवतां मुक्तानामग्रे सह सर्वैश्वर्यश्रिया
५ यथापर्यङ्कविद्यं परमभोग्या जायत इति—
(अग्रजः).
(१) "स आगच्छत्यमितौजसं पर्यङ्कम्" इतिप्रभृति, कौ० १—५।
(२) "उपश्रीरुपबृंहणं तस्मिन् ब्रह्मास्ते तमित्थंवित्पादेनै-
वाग्र आरोहति तं ब्रह्माह कोसीति" कौ० १—५।
१० इतिप्रभृति च.
(३) "सा या ब्रह्मणि चितिर्या व्यष्टिः तां चितं जयति तां
व्यष्टिं व्यश्नुते" इति. इत्येवमन्ता हि पर्यङ्कविद्या. ❋ कौ० १—६।

निर्व०—अनुकल्पेतटाबादौ स्त्रियाः पुंवच्च. ततः स्त्रियामतष्टाप्
दीर्घ इत्यादि. ततो नैकदाशब्दान्नैकजाशब्दाच्च
१५ मत्वर्थीयोऽर्श आद्यच्.
(३) "यस्य०" इत्यालोपः. ❋ ६।४।१४८॥कौ०पृ०५६
एवं प्राप्तानां मुक्तानामग्रे सह सर्वैश्वर्यश्रिया यथा-
पर्यङ्कविद्यं परमभोग्यो जायते प्रादुर्भवति
इति—
२० (अग्रजः).
(१) "जनी, प्रादुर्भावे" धा०दिवा०कौ०पृ०४५४
(२) "सप्तम्यां जनेर्डः" ३।२।९७॥ कौ०पृ०५८५
इति डः. टिलोपः. अङ्गेर्गत्यर्थात्

निरु०—८९२ स्वस्याग्रे प्राप्तमुक्तानां सर्वैश्वर्यश्रिया सह-॥ ७०१ ॥
२५ यथापर्यङ्कविद्यं च करुणाविष्टचेतसा ।
तद्भोग्यो जायते यश्च सो (ऽग्रजः) परिकीर्तितः ॥ ७०२ ॥

१ सर्वैश्वर्या ।

{८९३/४३७} अनिर्विण्णः,

ॐ अनिर्विण्णाय नमः।

भा०—एवमाश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं
प्रापय्य च तमशोच्यं पश्यन्— ५
(अनिर्विण्णः).
(१) "कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह" रा०सुं०८५।
इतिवत्. ※

निर्व०—(३) "ऋज्रेन्द्राग्र०" उणा०पा०२कौ०पृ०६२०
इत्यादिना रकि इदित्त्वान्नुमो निपातनाल्लोपे १०
(४) "नेड्०" ७।२।८॥ कौ० पृ० ५८१
इतीट्प्रतिषेधे च अग्रशब्द उक्तः. ※
एवमाश्रितं महता प्रणिधानेन संसारगर्तादुत्तार्य आत्मानं
प्रापय्य च तमशोच्यं पश्यन् कृतकृत्यतया निर्विण्णो
निर्वेदवान्नेति— १५
(अनिर्विण्णः).
(१) "विद, सत्तायाम्" दिवादिः. धा०दिवा०कौ०पृ०४५६
(२) "विद, विचारणे" वा.धा०रुधा०कौ०पृ०४७१
रुधादिः. निर्पूर्वः. निसस्तु सोरुत्वम्. ततः कर्तरि क्तः.
अनिट्. अगुणः. २०
(३) "रदाभ्यां निष्ठातः०" ८।२।४२॥ कौ०पृ०५८६
इत्यादिना निष्ठातस्य नः. पूर्वस्य च दस्य नः.

निरु०—८९३ महता प्रणिधानेन ह्युत्तार्य भवगर्ततः।
प्रापय्य च तमात्मानं कृतकृत्यश्च विज्वरः॥ ७०३॥
पश्यन्नशोच्यमेनं यो (ह्यनिर्विण्णः) स ईरितः। २५

## (८९४) सदामर्षी,

ॐ सदामर्षिणे नमः ।

भा०—ततः प्रभृति सर्वकालं तेन कृतप्रतिकृतं मर्षितुं
५ निर्वोढुं शीलमस्येति—
( सदामर्षी ).
( १ ) " सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता "
"३०७"इत्यादि. ❋. तै०१—२ ।
( २ ) " अनुत्तमेपूत्तमेषु लोकेषु " छा० १—२ ।

१० निर्व०— ( ४ ) " कृत्यचः " ८।४।२९ ॥कौ०पृ०५५६
इत्यचः परत्वाभावात् णत्वाभावो,
( ५ ) " निर्विण्णस्योपसंख्यानम् "८।४।२९॥कौ०पृ०५५६
इति परस्य णत्वम् पूर्वस्य ष्टुत्वेन णः. नञ्समासः.
नलोपः. ❋
१५ ततःप्रभृति सर्वदा सर्वकालं मर्षितुं सोढुं तेन सह
कृतप्रतिकृतं निर्वोढुं शीलमस्य इति—
( सदामर्षी ).
( १ ) " मृष, तितिक्षायाम् " धा०दिवा०कौ०पृ०४५५
अर्थादत्र निर्वहणक्रियोऽयम्.
२० ( २ ) " सुप्यजातौ० " ३।२।७८ ॥ कौ०पृ०५८२
इत्यादिना ताच्छील्ये णिनिः. गुणो रपरः. तदन्तपाठे तु
ताच्छील्यवर्जमुक्त एवार्थः. कापवादः. कर्तरि पचाद्यच्.
अन्यत्र शाश्वत्. निष्पादितात् सर्वशब्दात्,

निरु०—८९४ सर्वकालं तत्प्रभृति कृतप्रतिकृतं च सः ॥ ७०४ ॥
२० मर्षितुं शीलमस्येति ( सदामर्षी ) ति कीर्तितः ।

( ८९५ ) लोकाधिष्ठानम्,

ॐ लोकाधिष्ठानाय नमः।

भा०— इति श्रुतानां मुक्तभोग्यानां नित्याश्रयः—
( लोकाधिष्ठानम् ). ❀ ५
तत्र च—

निर्व०—( ३ ) " सर्वैकान्य० " ५।३।१५॥ कौ०पृ० ३३६
इत्यादिना दाप्रत्यये,
( ४ ) " सर्वस्य सः० " ५।३।६॥कौ०पृ० ३३४
इति सादेशे च सदाशब्द उक्तः, इन्नन्तदीर्घादि. ❀ १०
मुक्तभोग्यानामत्युत्तमानां श्रुतानाम् लोकानाम् अधि-
ष्ठानं नित्याश्रयः इति—
( लोकाधिष्ठानम् ).
( १ ) " ष्ठा, गतिनिवृत्तौ " धा०भ्वादिः कौ०पृ०४७४
अधिपूर्वः. परस्तः. तोष्टुः. अधिरणे ल्युट्. अनः दीर्घः. १५
( २ ) " आदेशप्रत्यययोः " इत्यस्य-८।३।५९॥कौ०पृ०३४
( ३ ) "सात्०" इति निषेधे प्राप्ते ८।३।१११॥कौ०पृ० ३५८
( ४ ) " उपसर्गात् सुनोति० " ८।३।६५॥कौ०पृ० ३८४
इत्यादिना षः, ष्टुत्वम्. लोक उक्तः. दीर्घः.
( ५ ) " लिङ्गमशिष्यम् " इत्यादि. ❀ ॥ महाभाष्यम् ॥ २०
तत्र च सदा सर्वस्सर्वथानुभवेपि अद्भुतः अतिविस्मय-
नीयो भवति इति—

निरु०—८९५लोकाना मुक्तभोग्यानां (लोकाधिष्ठान) माश्रयः॥७०

( ८९६ ) अद्भुतः,॥ श्लो० ॥ ९६ ॥ ( ८९७ ) सनात्,

ॐ अद्भुताय नमः ॐ सनाते नमः ।

५ भा०— ( अद्भुतः ).
( १ ) " अदिभुवो डुतच्" उणा०पा०५कौ०पृ०६४२
सर्वदा सर्वैः सर्वथाऽनुभवेप्यपूर्ववदतिविस्मयनीयः. ❀
तेषां संभजनात्–
( सनात् ).
१० सनस्सनादिति गणे निपातितः.

निर्व०— ( अद्भुतः ).
( १ ) " भू, सत्तायाम् " धा०भ्वादिः कौ०पृ०३६८
अवपूर्वः.
( २ ) " अधिभुवो डुतच् " उणा०पा०५ कौ०पृ०६४२
१५ इति विस्मयार्थे स्वरादेराकृतिगणत्वात् अव्यये दान्ते
उपपदे डुतच्, टिलोपः. क्लीबपाठेपि प्राग्वदेव.
( ३ ) " लिङ्गमशिष्यम् " इत्यादि. ❀ कौ०३३९–१६भा०।
तन्नित्यसंभजनमागयमखण्डनिर्देशेन सनादिति वा सनम्
उक्तसंभजनम्. अतति गच्छतीति वा, तमयते प्राप्नोति इति वा–
२० ( सनात् ).
( १ ) " वन- षण, संभक्तौ " धा०भ्वादिः कौ०पृ०४०१
पत्वः. आद्ये स्वरादौ सनादिति पाठादव्ययत्वम्.

निरु०—८९६ तत्सदा सर्वथा सर्वैर्भुज्यमानोप्यपूर्ववत् ।
स्मयनीयो ( ऽद्भुतः )–
२५ ८९७ भोक्तॄणां संभजनात् ( सनात् ) ॥७०६ ॥

१ अद्भुतम्।

(८९८) सनातनतमः,

ॐ सनातनतमाय नमः ।

भा०—एवम्—
(सनातनतमः).
सनापुराणे तनपि रूपम्.
पुराणतमः पुरापि नवः पुराणः सदातनत्वेपि तदातन-
वन्नित्यं नूतनभोग्यः. ❀
किंरूपः मध्यस्थनीलतोयदविद्युल्लेखोज्ज्वलवर्णः—

*निर्व०—तत्र च सनतेस्सनादित्यातिर्निपात्यते. द्वितीये*
(२) " अत, सातत्यगमने " धा०भ्वादिः कौ०पृ०३८३
क्विप् विज्वा. तृतीये,
(३) " अय , गतौ " ततः क्विवेव. धा०भ्वादिः कौ०पृ०४०२
(४) " लोपो व्योर्वलि " ६।१।६६ ॥ कौ०पृ०१६९
इति यलोपः. क्विपस्सर्वापहारको लोपस्तूक्तः.
(५) "ह्रस्वस्य पिति कृति तुक् " ६।१।७१॥कौ०पृ०५५९
इति तुक्. सनेर्भावे घञर्थे कः. प्राग्वदेव पस्तः.
सर्वत्र दीर्घः. अव्ययानव्ययाभ्यां विभक्तेर्लुग्लुकौ
विशेषः. जश्त्वचर्त्वे. ❀
सदातनोपि तदातनवन्नित्यभोग्यतया अतिशायितस्सना-
तनः पुराणः इति—
(सनातनतमः).
पुरापि नवश्च पुराणः अत उक्तार्थोपपत्तिः.
(१)" पुराणप्रोक्तेषु ब्राह्मणकल्पेषु " ४।३।१०५॥कौ०पृ०२६९
इत्यादिनिपातनाद् अयं साधुः. तत्र हि ट्युट्युलोस्तुडो-

निरु०—८९८ नित्यनूतनभोग्यत्वाद् (सनातनतमः) स्मृतः ।

(८९९) कपिलः,

ॐ कपिलाय नमः ।

ना०–( कपिलः ). ❀

५ निर्व०–ऽ भावः. पुरा पूर्वानुवर्तेः डश्च वा निपात्यते. आद्ये,
* निपातनात् आकारस्य नलोपः. पक्षद्वयेपि यथा-
संख्यम्.
(२) " अट्कुप्वाङ्० " ८।४।२॥ कौ०पृ०३२
इति वा संज्ञात्वात् निपातनाद्वा णत्वम्. "अबाधकान्यपि
१० निपातनानि भवन्ति" इति पुरातनशब्दस्यापि संभव
इत्यलम्. सनेत्यव्ययादुक्तार्थकात्,
(३) " सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च "
इति ट्युट्युलौ शैषिकौ तयोस्तुट् च.४।३।२३॥ कौ०पृ०२५६
अनः नच कृते तुटश्चयमादेशः. येन टिदाद्यवयवः
१५ इति तस्यापि युग्रहणेन ग्रहणात्
(४) " युवोः० " ७।१।१॥कौ०पृ०२३३
इत्यनादेशेन तकारोप्यपहियेत. यद्वा अनुनासिकस्य
योरनादेशविधानेन मृत्युरित्यादाविव स एव वा न स्यात्
परंतु तुटः प्रागेव चायमादेशः.
२० (५) " घकालतनेषु कालनाम्नः " ६।३।१७॥ कौ०पृ० १८८
इत्यादिनिर्देशात् तत आतिशायनिकस्तमप्. ❀
स किंरूपः तत्रोच्यते मध्यस्थनीलतोयदविद्युल्लेखोज्ज्वल-
वर्णतया कपिलः पिङ्गल इति–
( कपिलः ).

२५ निरु०–८९९ विद्युन्मण्डलमध्यस्थनीलमेघवदुज्ज्वलः ॥ ७०७ ॥
( कपिलः ) स समाख्यातः सत्तवर्णो महामनुः ।

(९००) कपिरव्ययः, ।

ॐ कपये अव्ययाय नमः ।

भा०—स्वयमपि तदनुभवसुखनिर्वृतिं पाति पिबति वा—
(कपिरव्ययः). ❋ ५
(१) "इन् सर्वधातुभ्यः" आतो लोपः. उणा०पा०४कौ०
पृ०६३७

१० इति श्रीहरितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः-
श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य
श्रीरङ्गनाथस्य कृतौ श्रीमद्विष्णुनामसहस्रविवरणे १०
भगवद्गुणदर्पणे
नवमं शतकं समाप्तम् ।

निर्व०—(१) "कमु, कान्तौ" धा०भ्वादिः कौ०पृ०३९९
(२) "कबृ, वर्णे" वा. धा०भ्वादिः कौ०पृ०३९६
इलच्प्रकरणे, १५
(३) "कमेः पश्च" उणा०पा०१कौ०पृ०६१३
(४) "कबेः" इति वा पाठः.
इति लच्. मस्य पाठान्तरे वस्य च वा पकारः. ❋
स्वयमप्यव्ययः.अप्ययो वानुपक्षीणः. कम् इहा-
र्थं सुखार्थः.तदनुभवसुखनिर्वृतिं पिबति पाति रक्षतीति इति वा— २०
(कपिरव्ययः).
अप्ययो वा सविशेषणमेकनाम.
(१) "पा, पाने" धा०भ्वादिः कौ०पृ०४२४
(२) "पा, रक्षणे" च धा०अदा० कौ०पृ०४४३
(३) "इन् सर्वधातुभ्यः" इति इन्. उणा० पा०४कौ०पृ०६३७ २५

निरु०—९००अनश्वरसुखं पाति स उक्तः(कपिरव्ययः) ॥७०८॥

निर्व०–( ४ ) "अच इः",वा. पूर्वत्र बाहुलकात्, उणा०पा०४ कौ०पृ०६३८

( ५ ) " इगुपधात् कित् " इति. उणा०पा०४कौ०पृ०६३७

५ इनः कित्त्वमन्यतोपि भवति अपरत्र अकुतस्त्यमपि इप्रत्ययस्य कित्त्वं बाहुलकाल्लभ्यते तस्य हि महान् प्रभावः. इयांस्तु विशेषः. इनः कित्त्वं श्रुतं कचिदन्यतोपि एस्तु अश्रुतमेव कुत्रचित् कल्प्यते इति ऐदमर्थ्येन हि अच इरित्येव वक्तव्ये इनोपि ग्रहणम् कित्त्वादातो लोपः.

( ६ ) " कै, शब्दे" धा०भ्वादिः कौ०पृ०४२४

१० ( ७ ) " कॄ, शब्दे " धा०तुदादिः कौ०पृ०४६८

( ८ ) "कनी, दीप्तिकान्तिगतिषु " वा. धा०भ्वादिः कौ०पृ०४०१ कायतेरात्त्वम्. त्रिष्वपि

(९)" अन्येष्वपि०"इति डः. टिलोपः. ३।२।१०१॥कौ०पृ०५८५

( १० ) " इण्, गतौ " धा०अदा०कौ०पृ०४४१

१५ ( ११ ) " एरच् " ३।३।५६॥ कौ०पृ०६५३

इति भावे अच्. गुणः. अय्. विपूर्वः. पाठान्तरे तु, अयमेवापिपूर्वः. तत्र

( १२ ) " वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः " कौ०पृ०८८

इति भागुरीष्टयाऽपेरल्लोपः. शेषं प्राग्वत्. उभयत्रापि

२० यण् यकारः. नञ्पूर्वो बहुव्रीहिः. नञो नलोपः. संहितायां पूर्वस्य रोरावसानिको विसर्गः.

इति कुशिककुलतिलकश्रीविङ्कटेश्वरमहाचार्यवर्यात्मज-
वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते

## श्रीपराशरभट्टार्यभाषित-

२५ श्रीमद्विष्णुसहस्रनामभाष्यानुगे भगवन्नामसहस्रनिर्वचने
नवमं शतकं समाप्तम् ।

# अथ दशमशतकम् ।

(९०१) स्वस्तिदः,

ॐ स्वस्तिदाय नमः ।

ना०— एवं महन् मङ्गलं ददातीति— ५
(स्वस्तिदः). ❀
स्वगुणैः स्वभोगाशिषं करोतीति-

निर्व०— एवं स्वस्ति महन् मङ्गलं ददाति इति—
(स्वस्तिदः).
(१) "डुदाञ्, दाने" धा०जुहो०कौ०पृ०४५१ १०
(२) "आतोनुपसर्गे०" इति कः. आल्लोपः.३।२।३॥कौ०पृ०५७०
(३) "अस, भुवि" सुपूर्वः. धा०अदा०कौ०पृ०४४४
(४) "वसेस्तिः" उणा०पा०४ कौ०पृ०६४०
इति वर्तमाने "सावसेः शित्" उणा०पा०४कौ०पृ०६४०
इति सावुपपदे असेस्तिः शित्. शित्त्वात् १५
(५) "तिङ्शित्०" ३।४।११३॥कौ०पृ०३६८
इति सार्वधातुकत्वेन आर्धधातुकविषयोऽस्तेर्भूभावो न अनार्धधा-
तुकत्वात् नेट्. बाहुलकान्न श्नसोरल्लोपः. शिदित्यपाठेपि बाहुल-
कात्तद्भावः, इह,
(६) "तितुत्र०" इति नेट्.७।२।९॥ कौ०पृ०६०८ २०
(७) "इको यणचि" इति यण् वः. ६।१।७७॥कौ०पृ०८
स्वरादिपाठादव्ययत्वम्. तति प्रयोगेऽनन्यथा सिद्धे-
ऽनव्ययमपि एवमुत्तरत्रापि. ❀
स्वगुणैः स्वस्ति स्वभोगाशिषं करोतीति—

निरु०—९०१ भक्तेभ्यो मङ्गलं स्वस्ति तद्दानात्(स्वस्तिदः)स्मृतः।२५

१ जग।

(९०२)स्वस्तिकृत,(९०३)स्वस्ति,(९०४)स्वस्तिभुक्,

५ ॐ स्वस्तिकृते नमः।ॐस्वस्तिने नमः।ॐ स्वस्तिभुजे नमः।

भा० – ( स्वस्तिकृत् ). ❀
स्वयमेव महन्मङ्गलम्–
( स्वस्ति ).
( १ ) " स्वस्ति शिवाशिषोः " उदा० ।
( २ ) " सावसेश्शित् " उणा०पा०४ कौ०पृ० ६४०
इति तिप्रत्ययः. शित्त्वात् गुणाभावः. ❀
सर्वमेतत् स्वस्ति भुनक्ति पालयतीति–
( स्वस्तिभुक् ).

नि० – ( स्वस्तिकृत् ).
( १ ) " डुकृञ्, करणे " धा० तना०कौ०पृ०४७३
कृञः क्विपि तुगित्यो दि. ❀
स्वयमेव स्वस्ति महत् मङ्गलमिति–
( स्वस्ति ).
अव्ययात् सुपो लुक्. अनव्ययात्तु लिङ्गमशिष्यमित्यो "दि. ❀
स्वस्ति भुनक्ति सदा पालयतीति–
( स्वस्तिभुक् ).
( १ ) " भुज, पालनाभ्यवहारयोः " धा०रुधा०कौ०पृ०४७१
पालनक्रिय इहायम्. क्विप्. अगुणः. चोः कुः. चर्त्वम्. ❀

निरु० – ९०२ स्वस्ति स्वभोगागियं यः करोति ( स्वस्तिकृत् ) च
२६ सः ॥ ७०९ ॥
९०३ महामङ्गलरूपत्वात् स्वयं ( स्वस्ती ) ति कथ्यते ।
९०४ पालनान्मङ्गलस्यैव ( स्वस्तिभुक् ) चेति गम्यते ॥ ७१० ॥

(९०५) स्वस्तिदक्षिणः, ॥ श्लो०॥९७॥ (९०६) अरौद्रः,

ॐ स्वस्तिदक्षिणाय नमः । ॐ अरौद्राय नमः ।

भा०— अन्यदपि स्वपरिचरणानुगुणं दिव्यशरीरशक्त्यादि स्वस्ति स्वात्मदानदीर्घसत्रे ऋत्विग्भ्यो देया दक्षिणाऽस्येति— (स्वस्तिदक्षिणः). ❋ 5
परमैश्वर्येपि गुणशीतलिम्ना— (अरौद्रः). ❋

निर्व०—स्वस्ति स्वपरिचरणानुगुणदिव्यशरीरशक्त्यादिदक्षिणा स्वात्मदानदीर्घसत्रे ऋत्विग्भ्यो देयांशः अस्य इति— (स्वस्तिदक्षिणः). 10
(१) "दक्ष, वृद्धौ शीघ्रार्थे च" धा०भ्वादिः कौ०पृ०४०६ वृद्ध्यर्थे च.
(२) "द्रुदक्षिभ्यामिनन्" उणा०पा०२ कौ०पृ०६२१ इति इनन्. णत्वम्. ततः स्त्रियाम् अतष्टावादि. बहुव्रीहावुपसर्जनह्रस्वः. ❋ 15
परमैश्वर्येपि गुणशीतलिम्ना रौद्र उग्रः स नेति— (अरौद्रः).
(१) "रुदिर्, अश्रुविमोचने" धा० अदा०कौ० पृ०४४५ णिच् रक्प्रकरणे, 20
(२) "रोदेर्णिलुक् च" उणा०पा०२कौ०पृ० ६२०
इति रक्. णेर्लुक् च.
(३) "नेड् ०" इति नेड्. ७२।८॥ कौ०पृ०५८१

निरु०—९०५ शक्त्याद्या प्रकृतिः स्वस्ति स्वात्मदानं च दक्षिणा।
आत्मार्पणाख्ययागे तु यस्यास्ति (स्वस्तिदक्षिणः) ॥७११॥ २५
९०६ सर्वैश्वर्येपि सुगुणः शीतलो (अरौद्र) उच्यते।

( ९०७ ) कुण्डली,

ॐ कुण्डलिने नमः ।

भा०—यथोचितनित्यदिव्यभूषणः—
५ ( कुण्डली ).

निर्व०—लुका लुप्ते प्रत्ययलक्षणाभावान्न गुणः एतदर्थो हि
( ४ ) " णेरनिटि " ६।४।५१ ॥ कौ०पृ०३९९
इत्येव सिद्धे लोपे लुक आरम्भः. यदि त्वत्रापि लोप इत्येव
पाठः तदा तेनैव उक्तेन सिद्धे लोपे प्रत्ययलक्षणबाधनार्थः.
१० पुनरारम्भः. ततश्च न लघूपधगुणः. इत्यवधेयम् प्रागपि
इदमवोचाम. ततः रुद्रशब्दात् रौद्ररसस्य तद्दैवत्यतया
(५)"सास्य देवता "इत्यण् आदिवृद्धिः.४।२।२४॥कौ०पृ०२३०
( ६ ) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति लोपः. ततो मत्वर्थीयोऽर्श आद्यच्. प्राग्वदेव,
१५ ( ७ ) " यस्य० " इति लोपः. ६।४।१४८ ॥कौ०पृ०५६
नञ्समासो नलोपः. ❋
यथोक्तनित्यदिव्यभूषणतया कुण्डलं तदुपलक्ष्यं दिव्यभूषणजातं
नित्यमस्य इति—
( कुण्डली ).
२० ( १ ) " कुडि, दाहे " धा०भ्वादिः कौ०पृ०३९०
( २ ) " कुडि, रक्षणे " वा. चुरा०कौ०पृ०४८१
इदित्त्वान्नुम्.
( ३ )"कलस्तृपश्च"उणा०पा० १कौ०पृ०६१५
( ४ )" इति प्राक् प्रत्ययनिर्देशाचकारात् बाहुलकाच अन्य-
२५ तोपि" इति कलप्रत्ययः.

नि०—९०७दिव्यभूषणवान् योसौ(कुण्डली) ति प्रकथ्यते॥७१२॥

(१०८) चक्री,

ॐ चक्रिणे नमः ।

भा०—तादृशदिव्यायुधः—
(चक्री). ५

निर्व०—इदित्वान्नलोपः, अन्यत्र तु न तत्प्रसङ्गः. तत्रणेर्लोपः.
तदनित्यतायां तु प्रागुक्तैव गतिः उभयत्र अनुस्वारपर-
सवर्णौ. ततः कुण्डलशब्दात् नित्ययोगे मत्वर्थे अत इनिः.
(५) "यस्य०" ६ । ४। १४८ ॥ कौ०पृ०५६
इति लोपः. इन्नन्तदीर्घ "इत्यादि. ❀ १०
तथा चक्रं तदुपलक्ष्यं तादृशदिव्यायुधजातं नित्यमस्य इति-
(चक्री).
(१) "चक, तृप्तौ प्रतिघाते च" धा० भ्वादिः कौ०पृ०३८८
रक्प्रकरणे,
(२) "चकिरम्योरुच्चोपधायाः" उणा०पा०२कौ०पृ०६२० १५
इति रक्. बाहुलकादिह नोत्त्वम्.
(३) "नेड्०" इति नेट्. यद्वा, ७।२।८॥कौ०पृ०५८१
(४) "कृञः कः" इत्यनुवृत्तौ
(५) "करोतेर्द्वे च"
इति कः. द्वित्वं च बाहुलकादभ्याससंज्ञा उरदत्वादि. २०
अगुणः. यण् रः. तत एव बाहुलकात्
(६) "सिचेः कोन्यत्रापि द्वित्वं च" उणा०पा०५कौ०पृ०६४४
इत्यादि प्रागपि इदं विशदमुदैरिराम. ततश्चक्रशब्दात्
प्राग्वत् अत इनिः.
(७)"यस्य०"इति लोपः.दीर्घादि. ❀ ६।४।१४८॥कौ०पृ०५६ २५

( ९०९ ) विक्रमी, ( ९१० ) ऊर्जितशासनः, ।

ॐ विक्रमिणे नमः । ॐ ऊर्जितशासनाय नमः ।

५ भा०— गाम्भीर्यानुकूलविलासः—
( विक्रमी ). ❀
विरिञ्चिपुरन्दराद्यलङ्घ्याज्ञः—
( ऊर्जितशासनः ). ❀

निर्व०— तथा विक्रमो गाम्भीर्यानुरूपो विलासोस्य इति—
१० ( विक्रमी ).
( १ ) " क्रमु, पादविक्षेपे " विपूर्वः. भावे घञ्. धा०भ्वादिः को०पृ०४०१
( २ ) " नोदात्त० " ७।३।३४॥ कौ०पृ०५४१
इत्यादिना वृद्धिः. ततः,
१५ ( ३ ) "संज्ञायां मन्माभ्याम्" इति. ५।२।१३६॥कौ०पृ०३३३
ठनो बाधनार्थं नियमितो मत्वर्थीय उक्तार्थ इनिः. लोपदीर्घादि. ❀
तथा विरिञ्च्याद्यलङ्घ्यतया ऊर्जितं बलवच्छासन-
माज्ञास्य इति— (ऊर्जितशासनः ).
( १ ) " शासु, अनुशिष्टौ " भावे ल्युट्. अनः. धा०अदा०को०
२० पृ०४४७
( २ ) " ऊर्ज, बलप्राणनयोः " धा०चुरा०को०पृ०४८०
चुरादिः. ततो णिचि. तथा बहुलमेतन्निदर्शनमिति अनित्यण्यन्ता हि चुरादयः, ततस्तदभावे च अकर्मकात् कर्तरि क्तः. इट् आद्ये,
( ३ ) " निष्ठायां सेटि " ६।४।५२॥ कौ०पृ०५९२

२५ निरु०—९०९स्याद्विलासी तु ( विक्रमी )।
९१०ब्रह्माद्यलङ्घ्यस्याज्ञो यः स स्या ( दूर्जितशासनः ) ॥ ७१३ ॥

१ रूप

(९११) शब्दातिगः,

ॐ शब्दातिगाय नमः ।

भा०—अनन्तजिह्वेनानन्तेन अनन्तशास्त्रैराम्नायैस्साक्षात्
सरस्वत्या च दुरुदाहरमहिमा— ५
( शब्दातिगः ). ❀

निर्व०—इति णिलोपः. अन्यत्र तु निष्ठायां न कोपि विशेषः.
तत्र ऊर्जा संजाता अस्येति विग्रहे तु ततः.
( ४ ) " गुरोश्च हलः" ३।३।१०३॥ कौ०पृ०६६०
इति स्त्रियामकारप्रत्यये, १०
टाबादौ च सिद्धादूर्जाशब्दात्. संजातोपाधिकात्
( ५ ) " तदस्य संजातम्०" ५।२।३६॥ कौ०पृ०३१८
इत्यादिना तारकादेराकृतिगणत्वात् इतच्.
( ६ ) " यस्य०" ६।४।१४८॥कौ०पृ०५६
इत्याल्लोपः. एतच्च प्रागेव प्रव्यञ्जितम् बहुव्रीहिः. ❀ १५
अनन्तजिह्वेनानन्तेन अनन्तशास्त्रैराम्नायैः साक्षात्
सरस्वत्या च दुरुदाहरणमहिमतया शब्दं वाचम् अति—
गच्छति अतिक्रामति इति—
( शब्दातिगः ).
( १ ) " गमॢ, गतौ " धा०भ्वादिः कौ०पृ०४३० २०
अतिपूर्वः. गमेर्डप्रकरणे,
( २ ) " अन्यत्रापि दृश्यत इति वक्तव्यम् " ३ । २ । १०१ ॥
कौ०पृ०५८५
इति डः. टिलोपः.
(३)"शप,आक्रोशे"भ्वादिः दिवादिर्वा.धा०भ्वादिःकौ०पृ०४३२२५

निरु०—९११ अनन्तशास्त्रैराम्नायैर्वाग्देव्यानन्तभोगिना ।
वक्तुं ह्यशक्यमहिमा यस्य ( शब्दातिगो ) स्ति सः ॥ ७१४॥

## (९१२) शब्दसहः, (९१३) शिशिरः,

### ॐ शब्दसहाय नमः । ॐ शिशिराय नमः ।

५ भा०— अथ गजेन्द्रमोक्षणम् अस्पष्टशब्दानां तिरश्चामपि
आर्तशब्दम् अतिभारमिव सहते इति—
( शब्दसहः ).
( १ ) " किं तस्यानुचिन्त्येति " ❋
आर्तशब्दश्रवणानन्तरम् अतित्वरया गतः—
१० ( शिशिरः ).

निर्व०—(४) " शाशपिभ्यां ददनौ " उणा०पा०४ कौ०पृ०६३६
इति दन्. अनिट्.
( ५ ) " झलां जश् झशि " ८।४।५३॥कौ०पृ०९
इति जश्त्वम्. पस्य बः. दीर्घः ❋
१५ अथ प्रासङ्गिकनिदर्शनं गजेन्द्रमोक्षणं प्रस्तूयते.
अस्पष्टशब्दानां तिरश्चामपि शब्दमार्तनादं सहते भार-
मिव वहति इति—
( शब्दसहः ).
( १ ) " षह, मर्षणे " धा० भ्वादिः कौ०पृ०४१९
२० षस्सः. पचाद्यच्. शब्द उक्तः. ❋
आर्तशब्दश्रवणसमनन्तरमतित्वरया तत्र गमनात्,
शशाति प्लुवते इति—
( शिशिरः ).

निरु०—९१२ अतिभारमिवास्पष्टं तिरश्चां शब्दमार्तिजम् ।
२५ सहते यः ( शब्दसहो ) वरवर्णो मनुरुजगः ॥ ७१५ ॥
९१३ गजेन्द्रपाऊनार्थं यः ( शिशिर ) स्त्वरया गतः ।

(९१४) शर्वरीकरः, ॥

ॐ शर्वरीकराय नमः ।

भा०—(१) "शश, प्लुतगतौ" धा०भ्वादिः कौ०पृ०४१०
(२) "अजिरशिशिर०" इत्यादिना रक्प्रत्ययान्तो निपातितः. ५
उणा०पा० १ कौ०पृ०६१२
(३) "श्रुत्वा चक्रगदाधरः । सान्निध्यं कल्पयामास तस्मिन् सरसि" इति. ❀
(शर्वरीकरः).
(१) "शृणातेः कृशृवृञ्चतिभ्यः ष्वरच्" उणा० पा० २ १० कौ०पृ० ६२४
ष्वरच्. पित्वात् ङीष्. शर्वरी हिंस्रापरविदारिणी
पञ्चायुधी तदाकरे अस्येति— ❀

निर्व०—(१) "शश, प्लुतगतौ" धा०भ्वादिः कौ०पृ०४१०
किरच्प्रकरणे, १५
(२) "अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः" उणा० पा०१ कौ०पृ०६१२
इति किरच्. धातोरुपधाया इत्वं च निपात्यते. कित्वान्न गुणः. ❀
तथा शर्वरी हिंस्रापरविदारिणी पञ्चायुधी करे अस्येति—
(शर्वरीकरः). कृञः पचाद्यच्. २०
(१) "कृ, विक्षेपे" वा, धा०तुदा०कौ०पृ०४६८
(२) "अकर्तरि च०" इत्यनुवृत्तौ ३।३।१९॥कौ०पृ०६४७
(३) "ऋदोरप्" इति अप्. ३।३।५७॥ कौ०पृ० ६५३
उभयत्रापि गुणो रपरः. नच किरतेः,

निरु०—९१४ उच्यते शर्वरीशब्दाद्धिंस्रापरविदारिणी ॥७१६॥ २५
पञ्चायुधी करे चास्येत्युदितः (शर्वरीकरः) ।

१ यरट् इति पाठे टित्वात् ङीप् ।

श्लो० ॥ ९८ ॥ ( ९१५ ) अक्रूरः,

ॐ अक्रूराय नमः।

भा०—गजपरिजिहीर्षया करस्थैरप्यायुधैर्ग्राहमपि झटित्य-
५ कृत्तवान्—
( अक्रूरः ).

निर्व०—( ४ ) " ऋत इद्धातोः " ७।१।१००॥कौ०पृ०४२७
इतीत्वं शङ्क्यम् इत्वोत्वाभ्यां हि गुणवृद्धी विप्रतिषेधेन भवतः.
( ५ ) " शॄ, हिंसायाम् " धा०क्र्यादिः कौ०पृ०४७६
१० ( ६ ) " कॄगॄशॄवृञ्चतिभ्यः ष्वरच् " उणा०पा०३कौ०पृ०६२४
इति ष्वरच्.
( ७ ) " षः प्रत्ययस्य " इति ष इत्. गुणो रपरः १।३।६॥
कौ०पृ०९३
(८) " नेट्० " इति नेट्. स्त्रियां षित्वात् ७।२।८॥कौ०पृ०५८१
१५ ( ९ ) " षिद्गौरादिभ्यश्च " ४।१।४१॥ कौ०पृ०९८
इति षिल्लक्षणो ङीप्. वरच्. इति पाठे,
( १० ) " टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्
कञ्क्वरपः " ४।१।१५॥कौ०पृ०९३
इति टित्वात् ङीप्. स्वरे भेदः. भवने,
२० (११)"यस्येति च " इति अकारलोपः. ६।४।१४८॥ कौ०पृ०५६
पञ्चायुधी प्राधान्यविवक्षया चार्य स्त्रिया निर्देशः. ❀
वचनात् प्रथमं जलाशयात् केवलं ग्राहमुद्धरता च अनेन
गजपरिजिहीर्षया करस्थैरप्यायुधैः झटिति तदकर्तनात्.
कृन्ततीति क्रूरः स नेति—
२५ ( अक्रूरः )

निरु०—९१५योऽसौ युतायुधैर्ग्राहं ( मक्रूरो ) मकृन्तन
रुनवान् ॥ ७१७ ॥

(९१६) पेशलो,

ॐ पेशलाय नमः।

भा०-(१) " कृतेश्छः क्रू च " उणा० पा०२कौ०पृ०६२० इति रक्. क्रूआदेशश्च. यथा,

(२) " ग्राहग्रस्तं गजेन्द्रं च तं ग्राहं च जलाशयात्। उज्जहाराप्रमेयात्मा तरसा मधुसूदनः " इति.

संभ्रमादयथातथ्यगूपाम्बररमणीयः—

(पेशलः). ❀

निर्व०-(१२)"कृती,छेदने"रक्प्रकरणे,धा०तुदा०कौ०पृ०४७०।०

(१३). " कृतेश्छः क्रू च " उणा०पा०२कौ०पृ०६२० इति रक्. धातोरन्त्यस्य छः. पाक्षिकः तदभावे क्रू इति धातोरादेशश्च. अत्र तु रक्. क्रू इति धातोरादेशश्च

(१४) " नेड्० " इति नेट्. ७।२।८॥कौ०पृ०५८१ अगुणः. ततो नञ्समासः. नलोपः. ❀

तदातनसंभ्रमादयथातथ्यगूपणाम्बरैः पिंशति स्वात्मानं दीपयति तथा च रमणीय इति वा पेशं दीपनात्तदुपलक्ष्यं च रामणीयकं लाति गृह्णातीति वा-

(पेशलः).

(१) " पिश, अवयवे " धा०तुदा०कौ०पृ०४७०

तुदादौ मुचादिः. अयं दीपनायामपि इह चायं दीपनक्रियः. आद्ये " कलः " इत्यनुवृत्तौ. उणा०पा०१कौ०पृ०६१५

(२)"वृपादिभ्यश्चित्"इति कलः चित्,उणा०पा०१कौ०पृ०६१५ कित्त्वेपि बाहुलकाद्गुणः अन्यत्र,

निरु०-९१६ त्वरातिशयतः स्रस्तस्रगूपाम्बरसुन्दरः। गजेन्द्ररक्षासमये योऽसौ स्यात् (पेशलः) स्मृतः॥ ७१८॥

{९१७ / ४२४} दक्षः, (९१८) दक्षिणः,

ॐ दक्षाय नमः । ॐ दक्षिणाय नमः ।

५ भा०—क्षिप्रमागन्ता—
( दक्षः ). ❋
तथाऽऽगत्य धिङ् मां दूरगतोहं त्वामिति सान्त्वनैर्गजेन्द्र-
स्यानुकूलः—
( दक्षिणः ).
१० ( १ ) " दक्ष, वृद्धौ " धा०भ्वादिः कौ० पृ०४०६
( २ ) " द्रुदक्षिभ्याम्० " उणा०पा०२ कौ०पृ०६२१
इतीनन् यथा,

निर्व०—( ३ ) " ला, आदाने" धा०अदा० कौ०पृ०४४३
( ४ ) " आतोनुपसर्गे० " ३।२।३॥ कौ०पृ०५७०
१५ इति कः. आल्लोपः. पिशिरुक्तः. ततो भावे घञ्. गुणः. ❋
तदानीं तत्र आगमने दक्षते शीघ्रो भवतीति—
( दक्षः ).
( १ ) " दक्ष, वृद्धौ शीघ्रार्थे च" धा०भ्वादिः कौ०पृ०४०६
इहार्थ शीघ्रार्थः. पचाद्यच्. ❋
२० तथा तत्र चागत्य स्वदूरवासादिगर्हणमुखेन अतिसम-
र्थो गजेन्द्रं सान्त्वयन् तस्यानुकूलो दक्षते वर्धते
इति—
( दक्षिणः ).

निरु०—९१७ ( दक्षो ) यो द्रुतमागन्ता रक्षणाय स उच्यते ।
२५ ९१८ गजेन्द्रस्य प्रपन्नस्य यः प्रीतो ( दक्षिण ) स्तु सः ॥ ७१९ ॥

( ९१९ ) क्षमिणां वरः,।

ॐ क्षमिणां वराय नमः।

भा०— ( ३ ) " प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः।
भजन्तं गजराजानं मधुरं मधुसूदनः "
"२११" इत्यादि. ❋
तद्दर्शनेन धृतात्मा—
( क्षमिणां वरः ).
( १ ) " अभवत्तत्र वै देशः " इति. ❋ ५

निर्व०—प्राग्वदेव धातुः. इह वृद्ध्यर्थः. १०
( १ ) " द्रुदक्षिभ्यामिनन् " उणा०पा०२कौ०पृ०६२१
इति इनन्. णत्वम्. एतच्च प्रागेव प्रव्यक्तम्. ❋
तद्दर्शनेन धृतात्मतया क्षमिणां तितिक्षूणां वरः
श्रेष्ठः इति—
( क्षमिणां वरः ). १५
( १ ) " वृञ्, वरणे " धा० स्वादिःकौ०पृ०४६२
( २ ) " ग्रहवृदृनिश्चिगमश्च " ३।३।५८॥कौ०पृ०६५३
इति अप्. गुणो रपरः.
( ३ ) " क्षमू, सहने " दिवादिः. धा०दिवा०कौ०पृ०४५९
ततः " शमित्यष्टाभ्यो घिनुण् " ३।२।१४१॥कौ०पृ०६०२ २०
इति शमादित्वात् घिनुण् ताच्छीलिकः.
( ४ ) " नोदात्त० " ७।३।३४॥कौ०पृ०५४१
इत्यादिना न वृद्धिः. भ्वादेस्तु पितः
( ५ ) " षिद्भिदादिभ्योऽङ् " ३।३।१०४॥कौ०पृ०९८

निरु०—९१९ गजेन्द्रदर्शनेनासौ धृतात्मा ( क्षमिणां वरः )। २५

( ९२० ) विद्वत्तमो ,

ॐ विद्वत्तमाय नमः।

भा०— तच्चिकित्सायाम्—

५ ( विद्वत्तमः ).

( १ ) " एवमुक्त्वा कुरुश्रेष्ठ गजेन्द्रं मधुसूदनः । स्पर्शयामास हस्तेन " इत्यादि. ❋

निर्व०—इति स्त्रियामङि टावादौ च क्षमाशब्दात् व्रीह्यादिलक्षणो मत्वर्थीय इनिः.

१० ( ६ ) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति लोपे च क्षमिन्शब्दनिष्पत्तिरित्यन्यदेतत् स ह्याकृतिगणः. तत आम्. णत्वम्. अनुस्वारादिः सांहितः. ❋
स्वहस्तसंस्पर्शादिना तच्चिकित्सायाम् अयमतिशयेन विद्वान् ज्ञाता इति— विद्वत्तमः

१५ ( १ ) " विद, ज्ञाने " ततो वर्तमाने लट् धा०अदा०कौ०पृ०४४३
( २ ) " लटः शतृशानचावप्रथमासमानाधिकरणे " ३।२।१२४॥ कौ०पृ०५९९
इति लटः शता शित्त्वात् सार्वधातुकत्वे कर्तरि शप्.
तस्य आदादिको लुक्. शतुश्च.

२० ( ३ ) " सार्वधातुकमपित् " १।२।४॥ कौ०पृ०३७६
इति क्त्वान्न गुणः.
( ४ ) " विदेश्शतुर्वसुः " ७।१।३६॥कौ०पृ०६००
इति शतुः, वसुरादेशः. पाक्षिकः
( ५ ) " नेट्० " ७।२।८॥ कौ०पृ०५८१

२५ इति नेट्. आतिशायनिकस्तमप्.

निरु०—९२०गजेन्द्रार्तिचिकित्सायां विद्वान्(वित्तम)स्तु सः ७२०

(९२१) वीतभयः,

ॐ वीतभयाय नमः।

भा०— तत्समागमतुमुलोपलम्भात् वीतं भयं गजेन्द्रस्य इति—
(वीतभयः). ❀ ५
" श्रुतेन हि कुरुश्रेष्ठ स्मृतेन कथितेन वा। गजेन्द्रमोक्षणे-
नैव सद्यः पापात् प्रमुच्यते " इति—

निर्व०— (६) " स्वादिषु० " १।४।१७॥कौ०पृ०३८
इति पदत्वे,
(७) " झलां जशः० " ८।२।३९॥ कौ०पृ०१४ १०
इति जश्त्वम्. आन्तरतम्यात् तस्य दः. तस्य.
(८) " खरि च " ८।४।५५॥कौ०पृ०२०
इति चर्त्वम्. ❀
तत्समागमतुमुलोपलम्भात् गजेन्द्रस्य निर्भयतया
वीतमपगतं भयमस्मात् इति— १५
(वीतभयः).
(१) " ञिभी, भये " अजुविधौ धा०जुहो०कौ०पृ०४४१
(२) " भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् "
इत्यच् गुणः. अय्, ३।३।५६॥ कौ०पृ०६५३
(३) " वी, गतिव्याप्तिप्रजनकान्त्यसनखादनेषु " धा०अदा० २०
कौ०पृ०४४२
ततो गत्यर्थात् कर्तरि क्तः. अनिट्. अगुणः. ❀
वचनात् पुण्ये पावने तथाकरणेन शुभकर्मणी, तान् शुभ-
कर्मणः कुर्वाणे वा, गजेन्द्रमोक्षणगोचरे श्रवणकीर्तने
श्रवणम् आकर्णनं च कीर्तनं कथनं चेति द्वन्द्वः ते अस्मात् इति—२५

निरु०—९२१वीतं भयं गजेन्द्रस्य यस्माद् (वीतभय) श्च सः।

( ९२२ ) पुण्यश्रवणकीर्तनः, ॥

ॐ पुण्यश्रवणकीर्तनाय नमः ।

भा०–( पुण्यश्रवणकीर्तनः ). ❀

५ निर्वे०–( पुण्यश्रवणकीर्तनः ).
( १ ) " कृत, संशब्दने " चुरादिः. धा०चुरा०कौ०पृ०४८३
णिच्. " उपधायाश्च " ७।१।१०१॥ कौ०पृ०४८३
इति ऋत इत्वम्. रपरत्वम्.
( २ ) " उपधायां च " ८।२।७८॥ कौ०पृ०३८३
१० इति दीर्घः. ततो भावे ल्युट्. अनः. णिलोपः.
( ३ ) " श्रु, श्रवणे " धा०भ्वादिः कौ०पृ०४२६
भावे ल्युट्. अनः. गुणः. अप् णत्वम्.
( ४ ) " पूञ्, पवने " धा०क्र्यादिः कौ०पृ० ४७५
( ५ ) " पुण, कर्मणि शुभे " वा आद्ये, धा०तुदा०कौ०पृ० ४६६
१५ ( ६ ) " पूञो यण् णुक् ह्रस्वश्च " उणा०पा०५कौ०पृ०६४३
इति यत्. तस्य णुट्. धातोर्ह्रस्वश्च. ह्रस्वविधान-
सामर्थ्यान्न गुणः.
( ७ ) " नेड्० " ७।२।८॥कौ०पृ०५८१
इति नेट्. यद्वा यण्णुक् धातोः कित्. ह्रस्वः प्राग्वत्.
२० तत्सामर्थ्यात् एव न लघूपधगुणः. अन्यथा हि ओदि-
त्येव विदध्यात्. यद्वा बाहुलकात् संज्ञापूर्वकस्य विधे-
रनित्यतया न गुणः धातुभक्तत्वात् णुको नेटः प्राप्तिः द्वितीये,
( ८ ) " अघ्न्यादयश्च " उणा०पा०४कौ०पृ०६३७

निरु०–९२२गजेन्द्रमोक्षणं श्रुत्वा सद्यः पापात् प्रमुच्यते ॥७२१॥
२५ यस्मात् तत्कीर्तनं पुण्यं श्रवणं चेति स स्मृतः ।
द्वादशार्णो मनुश्रेष्ठः ( पुण्यश्रवणकीर्तनः ) ॥ ७२२ ॥

॥श्लो०॥९९॥ (९२३) उत्तारणो, (९२४) दुष्कृतिहा,

ॐ उत्तारणाय नमः। ॐ दुष्कृतिघ्ने नमः।

भा०—तौ सरस उत्तारितवान्— ५
(उत्तारणः). ❋
(१) " स्थलस्थं दारयामास ग्राहं चक्रेण माधवः" इति.वि०ध०६९।
(दुष्कृतिहा). ❋

निर्व०—इति तस्याकृतिगणत्वात् यक्. अगुणः. तृतीये पुण्यतेः पचाद्यच्. इत्थमविचिकित्सं प्रागेवायं प्रत्यपादि. द्वन्द्व- १०
गर्भो बहुव्रीहिः. ❋
तौ च गजग्राहौ सरस उत्तारयति स्मेति—
(उत्तारणः).
(१) " तृ, प्लवनतरणयोः " धा०भ्वादिः कौ०पृ०४२७
तरणकर्मेहायम्. उत्पूर्वः. चर्त्वम्. णिच् वृद्धिः. रपर- १५
त्वम्. ततो ल्युरि "युवो" दि. अनः. णिलोपः. णत्वम्. ❋
स्थलस्थस्य ग्राहस्य प्रतिहतप्रत्यर्थिचक्रेण चक्रेण दारणात्
दुष्कृतिनं ब्रह्मविदपचारात् अपुण्यकर्माणं ग्राहं
हन्ति स्मेति—
(दुष्कृतिहा). २०
हनः क्विप्. तत्प्रकारश्च प्रागेवोक्तः. करोतेः क्तः. अगुणः.
अनिट्. दुष्पूर्वः सोरुत्वम्. रोर्विसर्गः. ततः
(१) " विसर्जनीयस्य सः " इति सत्वे प्राप्ते, ८।३।३४॥कौ०पृ०२२
(२) " इदुदुपधस्य चाप्रत्ययस्य " ८।३।४१॥कौ०पृ०२५
इति उदुपधाप्रत्ययविसर्गस्य षः. तत्पूर्वककृतशब्दात् २५

निरु०—९२३सरसस्तं तारितवानि (त्युत्तारण) ईरितः।
९२४ग्राहं विदारयामास यस्माद् (दुष्कृतिहा) च सः॥ ७२३॥

(९२५)पुण्यो, (९२६)दुःस्वप्ननाशनः, ।

ॐ पुण्याय नमः । ॐ दुःस्वप्ननाशनाय नमः ।

५ भा०—अनया कीर्त्या अस्मदादीनपि पुनातीति—
( पुण्यः ). ❀
क एवम्—
( दुःस्वप्ननाशनः ).
यथा,
१० ( १ ) "ये मां त्वां च सरश्चैव " वि०ध०६९ ।

निर्व०—मत्वर्थीय इनिः,
( २ ) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति लोपः. ततो नलोपः. इन्नन्तदीर्घ "इत्यादि. ❀
अनया कीर्त्या अस्मदादीनपि पुनाति स्वयमेतानेवं
१५ कारयित्वा शुभकर्मा भवति तान् पुण्ययति स्वपावितत्व-
लक्षणपुण्यवतः करोति इति वा—
( पुण्यः ).
पुञः पुणतेर्वा त्रैधेष्वपि हि कल्पेषु न्यरूप्यतायं
प्रागेव. ❀
२० क एवं वचनात् दुःस्वप्नोपशमनतया स्वात्मानं गजेन्द्रं
तच्च सरः स्मरतां भाव्यनिष्टसूचनं दुःस्वप्नं नाशयति
अपनोदयतीति—
( दुःस्वप्ननाशनः ).

निरु०—९२५ कीर्त्यास्मदादीनपि यो गजेन्द्रत्राणरूपया ।
२५ ( पुण्यः ) स स्यात् पुनातीति पदर्णः पावनत्वतः ॥ ७२४ ॥
९२६गजेन्द्रमोक्षणाध्यायजपाद्दुःस्वप्नजं फलम् ।
नाशयत्यञ्जसा योऽसाविति ( दुःस्वप्ननाशनः ) ॥ ७२५ ॥

{ १६८ / ७४७ } (९२७) वीरहा, ( ९२८ ) रक्षणः ,

ॐ वीरघ्ने नमः । ॐ रक्षणाय नमः ।

भा०– ( २ ) " इत्युपक्रम्य दुःस्वप्नो नश्यते तेषाम् " इति. ५
( ३ ) " दुःस्वप्नोपशमायालम् " इति च. ❋ वि० ध० ।
वीरं तद्बाधकं हतवान्–
( वीरहा ).
(१)"मोक्षयामास नागेन्द्रं पाशेभ्यः शरणागतम्"इति. ❋ वि० ध० ६९।
तं स्पर्शनपरिरम्भणसान्त्वनादिभिः रक्षितवान्– १०
( रक्षणः ).

निर्व०– ( १ ) " णश, अदर्शने " धा० दिवा० कौ० पृ० ४५८
णो नः. णिच् वृद्धिः. ल्युरित्यादि. अनः णिलोपः.
( २ ) " ञिष्वप्, शये " दुस्पूर्वः. धा० अदा० कौ० पृ० ४४५
(३) " स्वपो नन् " इति नन्. ❋ ३।३।९१॥ कौ० पृ० ६५८ १५
शरणागतं गजेन्द्रं पाशेभ्यो मोक्षयंश्च अयं वीरं
तद्बाधकं हन्ति स्मेति–
( वीरहा ). हनः क्विबुक्तः.
( १ ) " अज, गतिक्षेपणयोः " धा० भ्वादिः कौ० पृ० ३९१,
(२)"स्फायितञ्चि०"इत्यादिना रक्. उणा० पा० २ कौ० पृ० ६ १९२०
(३)"अजेर्वी०" गुणः. अनिट्. वीरयतेः २।४।५६॥ कौ० पृ० ३९१
पचाद्यचि णिलोपो वा, हन्नन्तदीर्घादि. ❋
तं स्पर्शनपरिरम्भसान्त्वनादिभी रक्षतीति–
( रक्षणः ).

निरु०–९२७ वीरं तद्बाधकं मृत्युं हतवान् यस्स ( वीरहा ) । २५
९२८ स्पर्शसंश्लेषणाद्यैस्तं रक्षतीति स ( रक्षणः ) ॥ ७२६ ॥

(९२९) सन्तो,

ॐ सन्ताय नमः ।

भा०— ( १ ) " स्पर्शयामास हस्तेन " "इत्यादि. ❀ वि०ध०६९।
५ एवमाश्रितान् सन्तनोतीति—
( सन्तः ).
( १ ) " अन्येष्वपि दृश्यते " ३।२।१०१ ॥ कौ०पृ०५८५
इति डः. तेषामस्तीति वा सन्तः. वचनव्यत्ययः. तेभ्यः इष्टं दत्तवान् सनोतेर्निष्ठा.
१० (२) " जनसन०" इत्यादिना आत्वविकल्पः. ❀ ६।४।४२॥कौ० पृ० ४५२

निर्वि०—(१) "रक्ष, पालने"नन्द्यादिल्युः.धा०भ्यादिःकौ०पृ०४०९
( २ ) " कृत्यल्युटः० " ३।३।११३ ॥ कौ०पृ०६६३
इति बाहुलकात् कर्तरि ल्युट्.
१५ ( ३ ) " बहुलमन्यत्रापि " उणा० पा० २ कौ० पृ० ६२४
(४)"इति युज् वा " अनः."अट्कुप्वाङ्०"८।४।२॥कौ०पृ०३२
इति णत्वम्. ❀
एवमाश्रितान् तदिष्टं वासं तनोतीति वा तेषामयमस्तीति सन्निति वा तेभ्य इष्ट सनोति ददातीति वा—
२० ( सन्तः ). आद्ये,
( १ ) " तनु, विस्तारे " धा० तना०कौ०पृ०४७२
संपूर्वः. अनुस्वारादि.
( २ ) " अन्येष्वपि०" ३।२।१०१ ॥कौ०पृ०५८५

निरु०—९२९ यः स्वाश्रितान् संतनोति स ( सन्त ) इति कथ्यते ।
२५ तेषामस्तीति वा सन्तो वचनव्यत्ययः स्मृतः ॥ ७२७ ॥
तेभ्य इष्ट दत्तवान् वा सनोतेस्सन्त उच्यते ।

(९३०) जीवनः,

ॐ जीवनाय नमः।

भा०—स्वहस्तेन हननात् ग्राहमपि गन्धर्वत्वेन जीवयन्—
(जीवनः). ५
(१) " स हि देवलशापेन हूहूर्गन्धर्वसत्तमः। ग्राहत्वमगमत्
कृष्णात् वधं प्राप्य दिवं गतः" इति. ❀ वि०४०६९।

निर्व०—इति डः. टिलोपः. अन्यत्रास्तेश्शतरि व्युत्पादितात् सच्छ-
ब्दात् जस् एकत्व एव.
(३) " व्यत्ययो बहुलम्" ३।१।८५॥ कौ०पृ०६८५ १०
इति सुब्व्यत्ययः. छान्दसः. उक्तो हि छन्दोभावः. तत्र च
बहुवचनमिह जस्. शतुरुगित्त्वात्
(४) " उगिदचाम्०" ७।१।७०॥ कौ०पृ०६५
इति नुम्. अनुस्वारपरसवर्णौ. सोरुत्वम्. अन्यत्र,
(५) " षणु, दाने " तानादिकः. धा०तना० कौ०पृ०४७२ १५
षत्सः. ततोऽविवक्षितकर्मकतया अकर्मकात् कर्तरि क्तः.
(६) " उदितो वा " ७।२।५६॥ कौ०पृ०६६८
इति क्त्वायामिड्विकल्पान्निष्ठायां नेट्. तत एव प्रागुक्त-
न्यायादिह,
(७) " जनसनखनां सञ्झलोः" ६।४।४२॥ कौ०पृ०४५२ २०
इति नात्वम् न चान्यत्.
अनुस्वारपरसवर्णौ. ❀
स्वहस्तेन हननात् ग्राहमपि गन्धर्वत्वेन जीवयतीति—
(जीवनः).

निरु०—९३० स्वहस्तेन हत ग्राह गन्धर्वत्वेन जीवयन्॥७२८॥२५
पूर्वशापं निरस्याथ यस्तिष्ठति स (जीवनः)।

१ जीवनम्।

(९३१) पर्यवस्थितः ॥ श्लो०॥१००॥ (९३२)अनन्तरूपो,

ॐ पर्यवस्थिताय नमः । ॐ अनन्तरूपाय नमः ।

५ भा०—वात्सल्यात् गजेंद्रं परिपरितोऽवस्थित इति—
(पर्यवस्थितः).
(१) "प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः" वि०ध० ।
इति. ❀
ईदृंशि सद्यः संपाद्यानि रूपाण्यस्येति—
१० (अनन्तरूपः). ❀

निर्व०—(१) "जीव, प्राणधारणे" धा०भ्वादिः कौ०पृ०४०५
णिच् ल्युरि "२१।" दि. अनः, णेर्लोपः, क्लीबपाठे तु लिङ्गमशि-
ष्यमि "३६" दि. हूहूर्नामगन्धर्वः देवलशापात् ग्राहरूपी
पुरुषोत्तमात् वधं प्राप्य पुनर्दिवमगमदिति हि प्रथा? ❀
१५ शरणागतवत्सलश्चायं वात्सल्यात् गजेन्द्रं परितोऽवस्थित इति—
(पर्यवस्थितः).
तिष्ठतिः पर्यवपूर्वः, सत्वं तोः ष्टुः परेर्यण् ततः
कर्तरि क्तः, अनिट्.
(१) "द्यतिस्यति०" ७।४।४०॥कौ०पृ०५९४
२० इत्यात इत्वम्, अगुणः, ❀
ईदृंशि सद्यः संपाद्यानि चानन्तानि बहूनि रूपाण्य—
स्येति—
(अनन्तरूपः).

निरु०—९३१वात्सल्याद्यो गजेन्द्रं तु परितो वसनाच्च सः ॥ ७२९
२५ (पर्यवस्थित) आख्यातो नवार्णो ह्यमितप्रदः ।
९३२(अनन्तरूपः) स स्याद्वै यस्यासंख्येयविग्रहाः ॥ ७३० ॥

( ९३३ ) ऽनन्तश्रीर्,

ॐ अनन्तश्रिये नमः ।

भा०—तेभ्यो देयाः स्वप्राप्तिपर्यन्ताः अनन्ताः श्रियोऽप्यस्येति—( अनन्तश्रीः ). ५

( १ ) " ततो दिव्यवपुर्भूत्वा हस्तिराट् परमं पदम् । जगाम" इति. ❀ वि० ध० ६१ ।

यः शरणागतगजेन्द्रद्वेषिणे जलकीटाय क्रोधः स इदानीं जितः इति—

निर्व०—( १ ) " ऋ, शब्दे " धा०अदा०कौ०पृ०४३९

(२)"खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः" उणा०पा० ३कौ०पृ०६२६

इति पः. इडभावः. धातोर्दीर्घश्च निपात्यते. अमतेस्तनि अन्त उक्तः.१०

( ३ ) " तितुत्र० " ७।२।९॥कौ०पृ०६०८

इति नेट्. नञ्समासः. नलोपः. नुट् बहुव्रीहिः. तद्गर्भः. ❀

ततो गजेन्द्रमस्मात् कलेवराद्विमोक्षदिव्यं च वपुः

प्रापय्य तस्य स्वसायुज्यप्रदानात् तेभ्यो देयाः

ऐहिकाद्याः स्वप्राप्तिपर्यन्ताः अनन्ता बहवः श्रियस्सं— १५

पदोऽप्यस्येति—( अनन्तश्रीः ). श्रिञः,

( १ ) " क्विब्वचि० " उणा०पा०२कौ०पृ०६२१

इत्यादिना क्विपि दीर्घे च श्रीशब्द ऊचे. अनन्तशब्दश्चानुपदमेवोक्तः. बहुव्रीहिः. प्राग्वत्.

(२)"नद्यृतश्च"५।४।१५३॥कौ०पृ० १६१ इति न कप्. यतः २०

(३)"नेयडुवङ्०" इति नदीसंज्ञानिषेधात् इत्युक्तम्. ❀ १।४।४॥ कौ०पृ०५४

तथा पूर्वं प्ररूढोपि इदानीं जितः निर्जितः मन्युः शरणागतविद्वेषिजलकीटगोचरः क्रोधोऽनेनेति—

निरु०—९३३देयाः स्वप्राप्तिपर्यन्ताः श्रियोऽनन्ताश्च नित्यशः । २५
प्रपन्नेभ्यो यस्य सन्ति सो ( ऽनन्तश्री ) रिति स्मृतः ॥ ७३१ ॥

(९३४) जितमन्युर्, (९३५) भयापहः,।

ॐ जितमन्यवे नमः । ॐ भयापहाय नमः ।

५ भा०—(जितमन्युः). ❀
अस्मदादीनामपि स्ववात्सल्येन तादृशानाथत्वभयं
वध्यादित्याशंसनार्हः—
(भयापहः).
(१) "आशिषि हनः" इति डः. ३।२।४९॥कौ०पृ०५७९
१० (२) "भये महति मग्नांश्च त्राति नित्यं जनार्दनः" इति. ❀

निर्व०—(जितमन्युः).
(१) "मन, ज्ञाने" धा० दिवा० कौ०पृ० ४५६
(२) "मनु, अवबोधने" वा. धा० तना०कौ०पृ०४७३
(३)"यजिमनिशुन्धिदसिजनिभ्यो युच्"उणा०पा०३कौ०पृ०६२६
१५ इति युच्. अननुनासिकत्वात् न योरनः.
(४) "जि, जये" कर्मणि क्तः, धा०भ्वादिः कौ०पृ०४०५
अगुणः. अनिट्. बहुव्रीहिः. ❀
अस्मदादीनामपि स्ववात्सल्यात् तत्रैव तादृशानाथत्वभयापनोदना-
शंसनार्हतया भयम् अनाथत्वभयम् अपवध्यादिति—
२० (भयापहः).
(१) "हन, हिंसागत्योः" अपपूर्वः. धा०अदा०कौ० पृ०४३५

निरु०—९३४ गजेन्द्रद्वेषिणो ये च कीटाद्या जलवासिनः ।
यस्तेषु मन्युं जितवान् (जितमन्युः) स कथ्यते ॥ ७३२ ॥
९३५ अनाथत्वभयं हन्ति वात्सल्येनैव मादृशाम् ।
२५ (भयापहः) समाख्यातो वरवर्णी मनूत्तमः ॥७३३ ॥

(९३६) चतुरश्रो,

ॐ चतुरश्राय नमः ।

भा०—यद्यपि स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरण-
मालं जगाम यद्यपि क्षुद्रजलकीटाय चुक्रोध, तथापि— ५
(चतुरश्रः).
समवेतकारी आश्रितार्थः संभ्रमो हि साम्प्रतम्. ❀

निर्व०—डप्रकरणे,
(१) "आशिषि हनः" इति ३।२।४९॥ कौ०पृ०५७९
आशीर्विषये डः, टिलोपः, बिभेतेरचि भयशब्द उक्तः, दीर्घः. ❀ १०
स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरणमालं गमनेऽ-
पि क्षुद्रकीटाय ग्राहाय कोपेपि आश्रितार्थसंभ्रमस्साम्प्रत-
मिति समवेतकारितया चतस्रोऽश्रयोऽस्येति
चतरश्रः युक्तकारीति—
(चतुरश्रः). १५
विग्रहप्रदर्शनमात्रमेतत् नात्रावयवार्थेऽभिनिवेष्टव्यम्.
(१) "अशू, व्याप्तौ" धा०स्वादिः कौ०पृ०४६३
(२) "अश, भोजने" वा. ततः क्विन्प्रकरणे, धा०क्र्यादिः
कौ०पृ०४७८
(३) "वङ्क्र्यादयश्च" उणा०पा०४ कौ०पृ०६३५ २०
इति तस्याकृतिगणत्वात् क्रिन्नन्तोयमश्रिशब्दो निपात्यते.
(४) "चते-चदे, याचने" धा०भ्वादिः कौ०पृ०४२१
(५) "चतेरुरन्" उणा०पा०५ कौ०पृ०६४४
इत्युरनि साधितोऽयं चतुरशब्दः. प्रागेव बहुव्रीहिः. पूर्व-
स्य पुवत्. २५

निरु०—समवेतकारी यः स्यात्स (चतुरश्रः) स कीर्तितः ।

१ वा ।

( ९३७ ) गभीरात्मा, ( ९३८ ) विदिशो,

ॐ गभीरात्मने नमः । ॐ विदिशाय नमः ।

५ भा०—अन्येषां चतुर्मुखमुखानाम् अप्रधृष्यगाम्भीर्यः—
( गभीरात्मा ).
तेषां विनयगद्गदस्तुतिगिरामस्य दूरे विविधाः दिशा देशा इति—
( विदिशः ).

निर्व०— ( ६ ) " सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रेणीपदाजपद-
१० प्रोष्ठपदाः" ५।४।१२० ॥ कौ०पृ० १६७
इति बहुव्रीहौ अच्प्रत्ययान्तोऽयं निपातितः.
( ७ ) " यस्य० " इति लोपः. ❀ ६।४।१४८॥कौ०पृ०५६
चतुर्मुखमुखान्यदेवतादुराधर्षगाम्भीर्यतया गभीरो
गम्भीरः आत्मा अस्येति—( गभीरात्मा ).
१५ आत्मा व्युदपादि. " गम्लृ, गतौ " धा०भ्वादिः कौ०पृ०४३०
ईरन्प्रकरणे, " गभीरगम्भीरौ " उणा०पा०४कौ०पृ०६३३
इतीरन् गमेर्मस्य भः. पक्षे धातोर्नुम् च निपात्यते इति,
इति ईरन्. मस्य भश्च. इह नुंवर्जम् बहुव्रीहिः. सांहितो
दीर्घः. ततो नान्तदीर्घादि. ❀
२० तेषां विनयगद्गदस्तुतिगिरां दूरीभूताः विविधाः दिशाः
अनवधिकातिशयस्वरूपरूपगुणविभवानन्तमाहात्म्यसीमाः अस्येति—
( विदिशः ).

निरु०—९३७ धात्रादीनामप्रधृष्यं गाम्भीर्यं यस्य विद्यते॥ ७३४ ॥
( गभीरात्मा ) स विज्ञेयो वरवर्णो मनुरुत्तमः।
२५ ९३८ विनयाद्गद्गदस्तोत्रधात्रादीनां विशेषतः ॥ ७३५ ॥
दूरस्य विविधा देशा ( विदिशः ) सतु कीर्तितः ।

(९३९) व्यादिशो, (९४०) दिशः, ॥

ॐ व्यादिशाय नमः । ॐ दिशाय नमः ।

भा०—तेषाम् अभिमतं तत्तत् पदम् अतिसृजतीति— ५
(व्यादिशः).
इगुपधत्वात् कः. ❀
न तान् गजेन्द्रवदन्तरङ्गीकरोति किंतु आज्ञापयतीति—
(दिशः). पूर्ववत् कः.

निर्व०—(१) "दिश, अतिसर्जने" धा०तुदा०कौ०पृ०४६४ १०
क्विप्. अगुणः.
(२) "आपं चैव हलन्तानाम्०" कौ०पृ०८८
इति भागुरिरीत्या हलन्तात् टाप्. विपूर्वो बहुव्रीहिः.
उपसर्जनह्रस्वः. ❀
तेषामभिमतं तत्तत् पदं व्यादिशति अतिसृजति ददातीति— १५
(व्यादिशः). इहापि,
(१) "दिश, अतिसर्जने" धा०तुदा०कौ०पृ०४६४
इत्येव धातुः. व्याङ्पूर्वः. अतिसर्जनम् दानं वेर्यण्.
इगुपधलक्षणः कः. अगुणः. ❀
वचनात् गजेन्द्रमोक्षणं दृष्ट्वा विस्मितांस्तान् ब्रह्मादीन् २०
प्राञ्जलीन् वन्दमानान्न गजेन्द्रवदन्तरङ्गीकरोति परतु दिशति
तानाज्ञापयतीति—
(दिशः).

निरु०-९३९ब्रह्मादीनां तत्तत्स्थानसर्जनाद्(व्यादिश)श्च सः।७३६।
९४०धात्रादीन् सर्वकृत्येषु ह्याज्ञापयति यस्सदा । २१
(दिशः) सतु समाख्यातः षडर्णो मनुरुत्तमः ॥ ७३७ ॥

श्लो० ॥ १०१ ॥ ( ९४१ ) अनादिर्,

ॐ अनादये नमः ।

भा०—( १ ) " गजेन्द्रमोक्षणं दृष्ट्वा सर्वे सेन्द्रपुरोगमाः । ब्रह्माण-
५ मग्रतः कृत्वा देवाः प्राञ्जलयस्तदा । ववन्दिरे महात्मा-
नं प्रभुं नारायणं हरिम् । विस्मयोत्फुल्लनयनाः प्रजा-
पतिपुरस्सराः " इति. वि०ध०६९ ।
श्रीपौष्करे,
( २ ) " गजेन्द्रग्राहमोक्षी च संसारोत्सारलक्षणः "
१० इति. ❀
एवं तिर्यक्ष्वपि भक्तेषु विवशो ब्रह्मादिषु फल्गुफलमेव
प्रयच्छति यस्मात्—
( अनादिः ).
तैरन्यपरैर्न स्वामित्वेनादीयत इति. ❀

१५ निर्व०—प्राग्वदेव धातुः. इहाज्ञापनक्रियः. अनेकार्था हि धातवः
कः. अगुणः. ❀
कुतोऽयमेवं तिर्यक्ष्वपि भक्तेषु विवशो ब्रह्मादिषु फल्गुपदमेव
प्रयच्छति तत्रोच्यते यतस्तैरन्यपरैः स्वामित्वे-
नायमादीयते उपादीयते इति-
२० आदिः स नेति—
( अनादिः ).
( १ ) " डुदाञ्, दाने " धा०जुहो०कौ०पृ०४५१
आङ्पूर्वः. घत्वे,
( २ ) " उपसर्गे घोः किः " ३।३।९२॥कौ०पृ०३५८

२५ निरु०—९४१ देवतान्तरभक्तैर्यः कुत्सितैश्चापि सर्वदा ।
नादीयते स्वामितया ( अनादिः ) परिकीर्तितः ॥ ७३८ ॥

{९४२ / ४३९} भूर्भुवो,

ॐ भुवो भुवे नमः ।

भा०—भवतीति भूः स्वदास्यज्ञानेनात्मलाभवान् तस्य भुवः
स्वयमेव भूः पदं भवतीति— ५
( भूर्भुवः ).
( १ ) " निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः" ❀

निर्व०—इवि कर्मणि क्तः, आल्लोपः, नञ्समासः, नञो नलोपः,
नुट्. ❀
प्रतिपिपादयिषितस्य च अस्य तदाधारत्वकथनात् १०
भुवः स्वदास्यज्ञानेनात्मलाभवान् भवतीति भूः, तस्य स्व-
यमेव भूः पदम् अतो भुवो भूरिति—
( भूर्भुवः ).
एकन्नाम. भवतेर्भावे,
( १ ) " अकर्तरि च कारके० " इत्यनुवृत्तौ, ३।३।१९॥ १५
कौ०पृ० ६४७
( २ ) " संपदादिभ्यः क्विप् " ३।३।९४॥ कौ०पृ०६५८
इति स्त्रियां क्तिनोऽपवादोऽविकरणे क्विप्.
( ३ ) " भुवस्संज्ञान्तरयोः" ३।२।१७९॥ कौ०पृ०६०७
इति कर्तरि सा, पुनरपि स एव आवर्तते. २०
( ४ ) " क्विप् च " ३।२।७६॥ कौ०पृ०५८१
इति क्विप्, ततो ङम्.
( ५ ) " अचिश्नुधातु०" ६।४।७७॥ कौ०पृ०४५

निरु०—९४२तथ्यस्वदास्यज्ञानेन ह्यात्मलाभवतः पदम् ।
भवति स्वयमेवेति ( भूर्भुवः ) सच कथ्यते ॥ ७३९ ॥ २५

( ९४३ ) लक्ष्मीः, ( ९४४ ) सुवीरो,

ॐ लक्ष्म्यै नमः । ॐ सुवीराय नमः ।

५ भा०—इति तेषाम्—
( लक्ष्मीः ). सर्वा संपच्च.
( १ ) " भवद्दत्तं मे राज्यं च जीवितं च सुखानि च " इति. ❀
रा० यु०१६—६ ।
( २ ) " कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
१० कृष्णः परायणं तेषां ज्योतिषामिव चन्द्रमाः" ❀
भा०द्रो०१८३—२४ ।
तेषां विनिपातप्रतीकारः—
( सुवीरः ). ❀

निर्व०—इत्यादिना ओरुवङ्. सोरुत्वादि. आविष्टलिङ्गोयमि"त्यादि.
१५ तेषामयं लक्ष्मीस्सर्वा संपत् इति—
( लक्ष्मीः ).
( १ ) " लक्ष, दर्शनाङ्कनयोः" धा०चुरा० कौ०पृ०४७९
चुरादिः णिच्. ईरिति वर्तमाने,
( २ ) " लक्षेर्मुट् च " उणा०पा०३ कौ०पृ०६३२
२० इति ईः. तस्य मुट् च. णिलोपः " नेट् ०"७।२।८॥कौ०पृ०५८१
इति नेट्. अयं चाविष्टलिङ्ग"इत्यादि. संहितायां रुत्वोत्व-
गुणाः. ❀
तेषां विनिपातप्रतीकारपरतया सुतरां वीर इति—( सुवीरः ).

निर्व०—९४३ आत्मलाभवतां सर्वसंपद् ( लक्ष्मीः ) स यत् स्मृतः ।
२५ ९४४ तेषां यो विनिपातस्य प्रतीकारं करोति सः ॥ ७४० ॥
( सुवीर ) इति विख्यातः समार्णो मनुरुत्तमः ।

(९४९) रुचिराङ्गदः,।

ॐ रुचिराङ्गदाय नमः।

भा०—तेभ्यस्स्वं रुचिरम् अतिमनोहरमनुभवयोग्यं अङ्गं
ददातीति—
(रुचिराङ्गदः). यथा,
(१) "न ते रूपम्" "इत्यादि. ❀ जितन्ते।
अथ सर्वभगवद्व्यापाराणां प्रयोजनं
तदनुभवक्षमकरणयुक्तानन्यानपि जनयतीति—

निर्व०—अजेः वीरयतेश्च वीर उक्तः. ❀
सुष्ठु भक्तेभ्यो रुचिरमतिमनोहरम् अङ्गं दिव्यरूपं
ददाति अनुभवयोग्यं वितरतीति—
(रुचिराङ्गदः). ददातेः,
(१) "आतोऽनुपसर्गे०" ३।२।३॥कौ०पृ०५७०
इति कः. आल्लोपः. अङ्गेर्गतिकर्मण इदित्वान्नुम्. अनुस्वार-
परसवर्णौ. पचाद्यच्.
(२) "रुच, दीप्तौ अभिप्रीतौ च" धा०भ्वादिः कौ०पृ०४११
(३) "इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहि-
मुचिरुचिरुधिबन्धिशुषिभ्यः किरच्" उणा०पा०१कौ०पृ०६१२
इति किरच्. अगुणः. दीर्घः. ❀
अथ सर्वभगवद्व्यापाराणां प्रयोजनमभिधीयते तदनु-
भवक्षमकरणयुक्तानन्यानपि जनयतीति—

निरु०—९४९प्रपन्नेभ्यः स्वानुभवयोग्यमङ्गं मनोहरम्॥ ७८१॥
अप्राकृतं सदा दत्ते योऽसौ स्याद् (रुचिराङ्गदः)।

(९४६) जननो, (९४७) जनजन्मादिर्,

ॐ जननाय नमः। ॐ जनजन्मादये नमः।

५ भा०—(जननः). ❀
तेषां जनानां जन्मनः आदिर्निमित्तं प्रयोजनमिति—
(जनजन्मादिः). यथा,
(१) "अद्य मे सफलं जन्म" वि०पु०५-१-७३।
(२) "जन्मन्यविफला सैका या गोविन्दाश्रया क्रिया। सुजन्म देह-
१० मत्यन्तं तदेवाशेषजन्तुषु। यदेव पुलकोद्भासि विष्णुना-
मनि कीर्तिते। अद्य जन्म यथार्थं मे" "इत्यादि. ❀

निर्व०—(जननः).
(१) "जनी, प्रादुर्भावे" णिच्. धा०दिवा०कौ०पृ० ४५४
(२) "जनिवध्योश्च" ७।३।३५॥कौ०पृ०४५५
१५ इति प्रतिषेधाद् नोपधावृद्धिः. ल्युरित्यादि. अनः णिलोपः. ❀
तेषां जनानां जन्मनः आदिः निमित्तं प्रयोजनमिति—
(जनजन्मादिः).
ददातेराङ्पूर्वात् उपसर्गे घोः किः. आल्लोपः. ततश्चा-
दिशब्द इत्युक्तम्.
२० (१) "जनी, प्रादुर्भावे" धा०दिवा०कौ०पृ०४५४
(२)"सर्वधातुभ्यो मनिन्"इति मनिन्. उणा०पा०४कौ०पृ०६३९
(३) "नेड्०" ७।२।८॥कौ०पृ०५८१
इति नेट्. नलोपः. स एव धातुरावर्तते. पचाद्यच्. दीर्घः.

निरु०—९४६अथोच्यतेऽत्र भगवद्व्यापाराणां प्रयोजनम् ॥७४२॥
२५ ९४७(जननो) (जनजन्मादि) मेयाणों जन्मनाशकः।

{९४८ / ३५९} भीमो,

ॐ भीमाय नमः ।

भा०—एवंविधमहानुग्रहविमुखानाम्—
( भीमः ).                                                   ५
गर्भनरकादिहेतुः स ह्यनात्मनीनान् हितबुध्या शत्रुदत्रासयते
( १ ) " तानहं द्विषतः" इति. ❋ भ० गी० ।
अन्येष्वपि जगदहितनिरतेषु हिरण्यादिषु—

निर्व०—सांहितः इदमेव हि जन्मनः फलम् यदस्य नामश्रवणादि-
मात्रेण सपुलकीभवनम्. ❋                                       १०
एवंविधमहानुग्रहविमुखानाम् अनात्मनीनानां
गर्भनरकादिहेतुत्वेन शत्रुवद्भीषणतया ते बिभ्य-
त्यस्मादिति—
( भीमः ).
(१) " ञिभी, भये" मक्प्रकरणे, धा० जुहो० कौ०पृ०४४९ १५
( २ ) " भियष्षुग्वा" उणा०पा०१ कौ०पृ०६१७
इति मक्. पाक्षिको धातोष्षुक्. चेति इह केवलो मक्. अगुणः.
अनिट्.
( ३ ) " भीमादयोऽपादाने" ३।४।७४॥ कौ०पृ०६४५
इति अपादानेयं साधुः. ❋                                       २०
अन्येष्वपि जगदहितनिरतेषु हिरण्यादिषु भीमः पराक्रमः
अस्येति—

निरु०—९४८एवंविधानुग्रहस्य विमुखानान्निरन्तरम् ॥ ७४३ ॥
गर्भजन्मादिहेतुत्वाद् ( भीम ) इत्युच्यते बुधैः ।

( ९४९ ) भीमपराक्रमः, ॥ श्लो० ॥ १०२ ॥
( ९५० ) आधारंनिलयो,

५ ॐ भीमपराक्रमाय नमः । ॐ आधारनिलयाय नमः ।

भा०—( भीमपराक्रमः ).
भयमप्यनुग्रह एव यथोन्मादिनो निगलादिनिग्रह-
स्तस्य तद्बाध्यानां चानुग्रहः. ❀
धार्मिकतया जगदाधाराः प्रह्लादविभीषणपाण्डवादयः तेषां निलयः-
१० ( आधारनिलयः ).
ते ह्याधाराः यथा, श्रीविष्णुस्मृतौ,
( १ ) " वर्णाश्रमाचारपराः सन्तः शास्त्रैकतत्पराः । त्वां धरे!
धारयिष्यन्ति तेषु त्वद्भारमाहितम् " इति. ❀ वि०स्मृ० ।

निर्व०—( भीमपराक्रमः ).
१५ क्रमेः परापूर्वात् भावे घञ्.
( १ ) " नोदात्त० " ७।३।३४॥ कौ०पृ०५४१
इत्यादिना न वृद्धिः. तथा चायं न्यरूपि हि पराक्रमः अनु-
पदमेव च भीम उक्तः. भयमपि ह्यनुग्रहः ? यथोन्मादि-
नो निगलादिनिग्रहोपि तस्य तद्बाध्यानां चानुग्रहः. ❀
२० वचनात् धार्मिकाः प्रह्लादविभीषणपाण्डवाद्यो जगता-
माधाराः तेषां निलयः आस्पदमिति—
( आधारनिलयः ).
( १ ) " लीङ्, श्लेषणे " धा० दिवा० कौ०पृ०४५४

निरु०—९४९ लोकाहितेषु नितरां हिरण्यादिषु सर्वदा ॥ ७४४ ॥
२५ भीमः पराक्रमो यस्य स स्याद् ( भीमपराक्रमः ) ।
९५० धार्मिका जगदाधाराः प्रह्लाद्या विशेषतः ॥ ७४५ ॥
तेषां तु निलयं स्थान ( माधारनिलय ) श्च सः ।

{ ९५१ / ४३ } धाता,

ॐ धात्रे नमः ।

भा०—स्वयं च धर्माचार्यकेण—
( धाता ). ५
( १ ) " न मे पार्थास्ति कर्तव्यम् " "इत्यादि. ❀ गी० ३—२२।
एवं निष्पादितस्वानुभवशक्तीनां सायमिव पुष्पस्य ह्रासो भोग्यतोल्लासोऽस्येति—

निर्व०—( २ ) " ली, श्लेषणे " धा०; निपूर्वः. ततः, धा० क्र्यादिः कौ० पृ० ४७६ १०
( ३ ) " एरच् " इत्यधिकरणे अच्. ३।३।५६॥ कौ० पृ० ६५३
( ४ ) " विभाषा लीयतेः " ६।१।५१॥ कौ० पृ० ४५४
इत्यात्वे वैकल्पिके प्राप्ते,
( ५ " निमिमीलियां खलचोरात्वं नेति वक्तव्यम् "
इति तत्प्रतिषेधः. गुणः अय्. १५
( ६ ) " धृञ्, धारणे " आङ्पूर्वः. धा० भ्वादिः कौ० पृ० ४२२
( ७ ) " अकर्तरि च कारके० " ३।३।१९॥ कौ० पृ० ६४७
इत्यधिकरणे घञ्. वृद्धिः. रपरत्वम्. ❀
स्वयं च धर्माचार्यकेण दधातीति—
( धाता ). २०
( १ ) " डुधाञ्, धारणपोषणयोः " धा० जुहो० कौ० पृ० ४५१
तृच्. अनिट्. अनङादि. ❀
एवं निष्पादितस्वानुभवशक्तीनां सायंपुष्पस्येव ह्रासः भोग्यतोल्लासोऽस्येति—

निरु०—९५१ स्वयं च धर्माचार्यत्वाद्(धाते)ति परिकीर्त्यते ७४६ २५

## (९५२) पुष्पहासः, (९५३) प्रजागरः, ।

ॐ पुष्पहासाय नमः । ॐ प्रजागराय नमः ।

५ भा०–(पुष्पहासः). ❀
सस्येष्विव कृषीवलः तेषु रात्रिंदिवं प्रजागर्तीति–
(प्रजागरः).
(१) "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः"
इति. ❀

१० निर्व०–(पुष्पहासः).
(१) "हसे, हसने" धा०भ्वादिः कौ०पृ०४१०
भावे घञ्. वृद्धिः.
(२) "पुष्प, विकसने" धा०दिवा०कौ०पृ०४५३
दिवादिः. पचाद्यच्. बहुव्रीहिः. व्यधिकरणानामप्यस्ति
१५ हि सः,
(३) "सप्तमीविशेषणे बहुव्रीहौ" २।२।३५॥कौ०पृ०१७२
इत्यत्र सप्तमीग्रहणात् ज्ञापकात् इत्युक्तम्. ❀
तेषु सस्येष्विव कृषीवलो रात्रिंदिवं प्रकर्षेण जागर्ति
क्षीणनिद्रो भवतीति–
२० (प्रजागरः).
(१) "जागृ, निद्राक्षये" धा०अदा०कौ०पृ०४४६
प्रपूर्वः. पचाद्यच्. गुणो रपरः. ❀

निरु०–९५२ स्वात्मानुभवशक्तीनां सार्वपुष्पवदस्य वै ।
ह्रासोऽस्ति भोग्यतोल्लासः (पुष्पहास.) इति स्मृतः ॥ ७४७ ॥
२५ ९५३रात्रिंदिवं प्रजागर्ति सस्येष्विव कृषीवलः।
भक्तेषु नितरां योऽसौ (प्रजागर) इहोच्यते ॥ ७४८ ॥

(९५४) ऊर्ध्वगः,

ॐ ऊर्ध्वगाय नमः।

भा०—कुतस्तदर्थमनिद्रो यतः—
(ऊर्ध्वगः).
स्वभावतुङ्गः. यथा,
(१) "महात्मनां संश्रयमभ्युपेतो नैवावसीदत्यतिदुर्गतोपि"
इति. ❋
तन्महत्त्वफलम् सत्त्वये स्वाभाविकदास्यमार्गे आचरणं
तेषां प्रवर्तनमस्येति—

निर्व०—तदर्थं कुतोयमनिद्रस्तत्रोच्यते. अतिदुर्गततदनवसाद-
फलकस्वभावतुङ्गताकतया ऊर्ध्वं गच्छति महान् भवतीति—
(ऊर्ध्वगः). गमेः,
(१) "अन्यत्रापि दृश्यते" ३।२।४८॥कौ०पृ०५७८
इति वक्तव्याड्डः. टिलोपः.
(२) "उर्द, माने क्रीडायां च" धा०भ्वादिः कौ०पृ० ३८३
(३) "इण्शीभ्यां वन्" उणा०पा०१कौ०पृ०६१७
(४) "कॄगॄशॄद्ॄभ्यो वः" उणा०पा०१ कौ०पृ०६१८
इत्ययं विधिर्बाहुलकादन्यतोपि भवतीति वन्. वो वा.
(५) "उपधाया च" ८।२।७८॥कौ०पृ० ३८३
इति दीर्घः. बाहुलकात् पृषोदरादित्वाद्वा दस्य धः.
(६) "नेट्०" इति नेट्. ❋७।२।८॥कौ०पृ०५८१
तथा तेषां सत्त्वये सन्मार्गे स्वाभाविकसात्त्विकदास्यमार्गे
आचारः आचरणम् अन्तर्भावितण्यर्थोयम् ण्यन्तो वा
उत्तयथापि प्रवर्तनमस्येति—

निरु०—९५४योऽसौ स्वभावकृतुङ्ग (ऊर्ध्वगः) परिकीर्तितः।

( ९५५ ) सत्पथाचारः,

ॐ सत्पथाचाराय नमः ।

भा०–( सत्पथाचारः ). यथा,

५ ( १ ) " अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् " "इत्यादि. ❀

एवं विषयविषमूर्छितनष्टात्मभ्यः आत्मोज्जीवनं ददातीति–

निर्व०–( सत्पथाचारः ).

( १ ) " चर, गतिभक्षणयोः" धा०भ्वादिः कौ०पृ०४०५

१० आङ्पूर्वः. एकत्र भावे घञ्. वृद्धिः. अन्यत्र णिच्. वृद्धिः.

( २ ) " एरच् " ३।३।५६॥कौ०पृ०६५३

इति भावे अच्. णिलोपः.

( ३ ) " पथ्ऌ, गतौ " धा०भ्वादिः कौ०पृ०४११

इनिः इत्यनुवृत्तौ,

१५ ( ४ ) " पतस्थ च " उणा०पा०४कौ०पृ० ६३२

इति, इनिः. तस्य थश्च. अस्तेश्शतरि सच्छब्द उक्तः. कर्मधारयः. जश्त्वचर्त्वे.

( ५ ) " ऋक्पूरब्धूः पथामानक्षे" ५।४।७४॥कौ०पृ०१८२

इति अप्रत्ययः समासान्तः. तस्य,

२० ( ६ ) " तद्धिताः " इति तद्धितत्वात्, ४।१।७६॥कौ०पृ०१०६

( ७ ) " नस्तद्धिते " ६।४।१४४॥कौ०पृ०१३३

इति नान्तस्य भस्य टेर्लोपः. बहुव्रीहिः. दीर्घः. ❀

एवं विषयविषमूर्छितेभ्यः आत्मभ्यः प्राणम् आत्मोज्जीवनम् ददाति इति–

२५ निरु०–९५५ (सत्पथाचार) इत्युक्तः सन्मार्गे तत्प्रवर्तनात्॥७४९॥

{ ६६–३२२ / ४०९–९५६ } प्राणदः,

ॐ प्राणदाय नमः।

भा०–( प्राणदः ). ❀
प्रणवेन ईदृशसंबन्धमुद्बोध्य,
( १ ) "मां नमस्कुरु" ❀ गी० १८–६५।
इति स्वचरणारविन्दयोः तान् प्रणमयतीति–

निर्व०–( प्राणदः ). ददातेः,
( १ ) "आतोनुपसर्गे०" ३।२।३॥ कौ०पृ०५७०
इति कः. आल्लोपः. अनितेः प्रपूर्वात्,
( २ ) "अकर्तरि च कारके०" इति अपादाने ३।३।१९॥
कौ०पृ०६४७
( ३ ) "हलश्च" ३।३।१२१॥ कौ०पृ०६६३
इति करणे वा घञ्. वृद्धौ दीर्घे संज्ञायां णत्वे च प्राण उक्तः.
समुदायस्य संज्ञात्वे तु,
( ४ ) "अनितेः" ८।४।१९॥ कौ०पृ०४४६
इति णत्वं विशेषः. ❀
तेषां स्वस्वामिभावलक्षणसंबन्धमुद्बोध्य तान् अथर्व-
शिरःप्रोक्तरीत्या प्रणाति प्रणमयतीति वा, ईदृशसंबन्ध-
शक्तिप्रतिपादकरूपक्षरमात्रप्रणवोऽस्य अस्तीति वा,
तथा प्रणप्रीऋतेः तैः प्रणूयते प्रकर्षेण स्तूयते तोष्ट्यत
इति वा–

निरु०–९५६ कान्तारादिविपदव्याप्त्या नष्टात्मनः कृपावशात्।
महात्मोज्जीवनं येषां ददाति ( प्राणदः ) स्मृतः ॥ ७५० ॥

(९५७) प्रणवः,

ॐ प्रणवाय नमः ।

भा०—(प्रणवः).

५ (१) "प्राणान् सर्वान् परमात्मनि प्रणामयति एतस्मात् प्रणव इति" इति अथर्वशिरसि १ । ❋

निर्व०—(प्रणवः).

(१) "णु, स्तुतौ" प्रपूर्वः. णो नः. धा०अदा०कौ० पृ०४३९

(२) "उपसर्गादसमासेपि" ८।४।१४॥ कौ०पृ० ३८६

१० इत्यादिना णत्वम्. आद्ये णौतिरयं अन्तर्भावितण्यर्थस्य नमेरर्थे वर्तते. पचाद्यच्. गुणः. अव. द्वितीये,

(३) "पुंसि संज्ञायाम्०" ३।३।११८॥ कौ०पृ०६६३

इति करणे घः. अन्यत् सर्वं प्राग्वत्. ततः प्रणवशब्दात् मत्वर्थीयोर्श आद्यच्.

१५ (४) "यस्य०" इति लोपः. तृतीये, ६।४।१४८॥ कौ०पृ०५६

(५) "अकर्तरि च कारके०" इत्यनुवृत्तौ ३।३।१९॥कौ०पृ०६४७

(६) "ऋदोरप्" ३।३।५७॥ कौ०पृ०६५३

इति कर्मण्यप्. अन्यत्तु प्राग्वदेव सर्वम् अज्वर्जम् प्रणम इति चेत् पाठः, तर्हि स्पष्ट एव प्राथमिकोर्थः. तत्र,

२० (७) "णमु, प्रह्वत्वे शब्दे" धा०भ्वादिः कौ०पृ०४३०

प्रपूर्वः. प्राग्वदेव नत्वणत्वे. णिच्. वृद्धिः. अमन्ततया नित्यं मित्त्वम्. उपसृष्टतया,

(८) "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" ग०गणसूत्रम्. कौ०पृ०४१७

निरु०—९५७ आत्मोज्जीवनसंबन्धमुद्बोध्य प्रणवेन वै ।

२५ पादारविन्दयोस्तान् यः प्रणामयति नित्यशः ॥ ७५१ ॥

(प्रणवः) स समाख्यातः सतार्णो मोक्षदो मनुः ।

(९५८) पणः, ॥ श्लो० ॥ १०३ ॥ {९५९/४३०} प्रमाणं,

ॐ पणाय नमः । ॐ प्रमाणाय नमः ।

भा०—एवं तेषां स्वाम्यदास्यव्यतिहारेण व्यवहरति इति— ५
( पणः ).
( १ ) " पण, व्यवहारे " ❀ धा०भ्वादिः कौ०पृ०३९८
एवं निस्संशयविपर्ययवेदरहस्यपरमार्थप्रत्यायकत्वात्—
( प्रमाणम् ). ❀

निर्व०—इति विकल्पाप्रवृत्तेः ततो मितां ह्रस्वः.अथ पचाद्यच्. णि-१०
लोपः, इदं च प्रागप्युक्तम्. प्रणव इत्येव तु मुख्यः पाठः. ❀
इत्थं तैस्सह स्वाम्यदास्यव्यतीहारेण पणते व्यवहरतीति—
( पणः ).
( १ ) " पण, व्यवहारे स्तुतौ च " धा०भ्वादिः कौ०पृ०३९८
इह व्यवहारार्थोऽयम्. पचाद्यच्. ❀ १५
एवं निस्संशयविपर्ययवेदरहस्यपरमार्थप्रत्यायकतया
सोऽर्थः प्रमीयतेऽनेनेति—
( प्रमाणम् ).
( १ ) " माङ्, माने " धा०जुहो०कौ०पृ०४५०
प्रपूर्वः. करणे ल्युट्. अनः. दीर्घः. २०
( २ ) " कृत्यचः " इति णत्वम्. ८।४।२९॥ कौ०पृ०५५६
( ३ ) " लिङ्गमशिष्यम् " इत्यादि. ❀ ॥ महाभाष्ये ॥

निरु०—९५८स्वाम्यदास्यव्यतीहारव्यवहारात्(पणः) स्मृतः ७५२
. ९५९ परमार्थत्रयीसारप्रत्यायकतया स्वयम् ।
(प्रमाण) मिति निरुयातः सतां मनुरुत्तमः ॥ ७५३ ॥ २५

(९६०) प्रणनि यः,

ॐ प्राणनिलयाय नमः।

भा०—प्राणन्तीति प्राणाः अन्ये हि जीवाः ते स्वनीड इव शकुन्ताः
५ तस्मिन् लीयन्ते इति—
(प्राणनिलयः).
(१) "पुंसि संज्ञायाम्०" इत्यादिना घः. ❀३।३।११८॥
कौ०पृ०६६३

निर्वे०—तथा प्राणाः अन्येपि जीवाः ते स्वनीड इव शकुन्ताः निली-
१० यन्ते श्लिष्टा भवन्त्यस्मिन्निति—
(प्राणनिलयः).
लीयतेः लीनातेर्वा निपूर्वात्,
(१) "पुंसि संज्ञायाम्०" इति अधिकरणे घः ३।३।११८॥
कौ०पृ०६६३
१५ (२) "विभाषा लीयतेः" ६।१।५१॥कौ०पृ०४५४
इति व्यवस्थितविभाषाविज्ञानान्नात्वम्. लीयतेरिति यका निर्दे-
शो नतु श्यना अत उभयोरपि ग्रहणम्. गुणः. अय्.
यद्वा अयमेरजधिकरणे,
(३) तत्र च "निमिमीलियां खल्चोरात्वं न" कौ०वा०
२० इति वक्तव्यात् तद्विप्रतिषिद्धम् शेषं प्राग्वत्. अनितिः
प्रपूर्वः. पचाद्यच्. दीर्घः. संज्ञायाम् णत्वम् असंज्ञायां तु
(१) "अनितेः" ८।४।१९॥ कौ०पृ०४४६
इति वा. एवमुत्तरत्रापि. उभयत्र कर्तरि व्युत्पाद्योयम्
प्राणशब्दः. षष्ठीसमासश्चायम्. प्रदर्शितं तु विग्रहमात्रम्. ❀

२५ निरु०—९६०यस्मिन्नित्यं प्रलीयन्ते प्राणा जीवाः सदाऽग्रजे।
शकुन्ता इव नीडे स्वे स (प्राणनिलयः) स्मृतः॥ ७५४॥

(९६१) प्राणभृत्, (९६२) प्राणजीवनः, । (९६३) तत्त्वं,

ॐ प्राणभृते नमः। ॐ प्राणजीवनाय नमः। ॐ तत्त्वाय नमः। ५

भा०—तान् मातृवद्धारयति चेति—
(प्राणभृत्). ❀
तान् अन्नपानीयादिवज्जीवयतीति—
(प्राणजीवनः). ❀
दधिदुग्धयोरिव दधिसारः चिदचितोर्व्याप्तिप्रयोजनाभ्यां १०
सारांशः—
(तत्त्वम्). यथा,

निर्व०—तान् प्राणान् मातृवद्धरति चेति—
(प्राणभृत्).
भृञः क्विपि तुक्. अगुणः. जश्त्वचर्त्वे. भृग् इति पाठे- १५
पि उक्तैव गतिः. ❀
तान् प्राणान् अन्नपानादिवज्जीवयति प्राणान्
धारयति इति—
(प्राणजीवनः).
(१) "जीव, प्राणधारणे" धा०भ्वादिः कौ०पृ०४०५ २०
णिच् ल्युरि"स्या"दि. अनः. णिलोपः. ❀
-दधिदुग्धयोरिव दधिसारः चिदचितोः व्याप्तिप्रयोजनाभ्याम्
अयं सारांशतया तत्त्वं परमार्थभूत इति—(तत्त्वम्).

निरु०—९६१तान् मातृवद्धारयति (प्राणभृत्) स स्मृतो बुधैः।
९६२जीवयत्यन्नवज्जीवान् स उक्तः (प्राणजीवनः) ॥७५५॥ २५
९६३सारांशभूतो जगतो योऽसौ (तत्त्व) मिति स्मृतः।

(९६४) तत्त्ववित्,

ॐ तत्त्वविदे नमः ।

भा०-(१) " परमार्थमशेषस्य जगतः प्रभवाप्ययम् । शरण्यं
५ शरणं गच्छन् गोविन्दं नावसीदति "
(२)" एकतो वा जगत् कृत्स्नं एकतो वा जनार्दनः । सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः " इति. ❀
तथा तत्त्वमात्मनो वेत्तीति-
(तत्त्ववित्).
१० (१) " त्वमेव त्वां वेत्थ " इति.
(२) " स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम "
इति. ❀
सर्वस्य चिदचिद्वर्गस्य अयमेक एव शेषी भोक्ता अभिमानी चेति-

निर्व०-(१) " तनु, विस्तारे " अदिः इत्यनुवृत्तौ, धा०तना०
१५ कौ०पृ०४७२
(२) " त्यजितनियजिभ्यो डित् " उणा०पा०१कौ०पृ०६१६
इति अदिः डित् टिलोपः. ततः;
(३) " तस्य भावस्त्वतलौ " ५।१।११९॥कौ०पृ०३०९
इति भावे त्वः.
२० (४) " खरि च " इति चर्त्वम् ८।४।५५॥कौ०पृ०२०
दस्य तः. आविष्टलिङ्गोयम् "इत्यादि. ❀
तथा श्रुत्युपबृंहणाभ्यां तत्त्वं स्वात्मतत्त्वम् स्वयमेव
वेत्तीति-
(तत्त्ववित्).
२५ वेत्तेः क्विप्. अगुणः. आवसानिक चर्त्वम् निरुक्ते हि तत्त्वशब्दः. ❀

निरु०-९६४वेत्ति यः स्वात्मनस्तत्त्वं (तत्त्ववित्) स च कथ्यते ७५६

( ९६५ ) एकात्मा, ( ९६६ ) जन्ममृत्युजरातिगः, ॥

ॐ एकात्मने नमः । ॐ जन्ममृत्युजरातिगाय नमः ।

भा०—( एकात्मा ). ❀ ५
तथापि तदुभयविधर्मात्मा—
( जन्ममृत्युजरातिगः ). ❀

निर्व०—तथा सर्वस्यापि चिदचिद्वर्गस्य अयमेकः अद्वितीयश्चा-
शावात्मा शेषी भोक्ता अभिमानी चेति—( एकात्मा ).
अततेरसातिभ्यां मनिणि आत्मा द्युकः ? तथा इणश्च कन्येकः. १०
कर्मधारयः. दीर्घः. नान्तदीर्घादि. संहितायाम् जश्त्वम्. ❀
तथापि नायं तदुभयधर्मा. यतो जन्मजननं च मृत्युः
मरणं च जरापलितभावश्च इति जन्ममृत्युजराः इति द्वन्द्वः.
ताः अतिगच्छति अतिक्रामतीति—
( जन्ममृत्युजरातिगः ). १५
( १ ) " गमॢ, गतौ" अतिपूर्वात् धा०भ्वादिः कौ०पृ०४३०
( २ ) " अन्यत्रापि दृश्यते " ३।२।४८॥ कौ०पृ०५७८
इति वक्तव्यात् डः. टिलोपः.
( ३ ) " जॄष्-झॄष्, वयोहानौ" दिवादिः. धा०दिवा०कौ०पृ०४५३
ततो जीर्यतेः, २०
( ४ ) " षिद्भिदादिभ्योऽङ्" ३।३।१०४॥ कौ०पृ०९८
इति षितः स्त्रियामङ्.
(५) " क्ङिति च" इति गुणनिषेधे प्राप्ते, १।१।५॥कौ०पृ०३७४

निरु०—९६५ शेषी भोक्ताभिमानी च एकश्चिदचितोस्तु यः ।
( एकात्मे ) ति स समार्णः सर्वप्राणप्रदो मनुः ॥ ७५७ ॥ २५
९६६ चिदचिद्धर्महीनो यो ( जन्ममृत्युजरातिगः ) ।

श्लो० ॥ १०४॥ (९६७) भूर्भुवःस्वस्तरुस्,

ॐ भूर्भुवःस्वस्तरवे नमः।

भा०—भूर्भुवःस्वरुपलक्षितैः पक्षिपथिकैरिव प्राणिभिरुप-
५ जीव्यमानच्छायपत्रलपारिजातः—
( भूर्भुवःस्वस्तरुः ).
(१) "समाश्रिताद्वृक्षतरोरनन्तान्निसंशयः पक्वफलप्रपातः" इति. ❀

निर्व०—(६) "ऋदृशोऽङि गुणः" इति. ७।४।१६।।कौ०पृ०४२१
अङि ऋवर्णान्तस्य गुणः. रपरः. ततः अतष्टावादि.
१० (७) "मृङ्, प्राणत्यागे" धा०तुदा०कौ०पृ०४६८
(८) "भुजिमृङ्भ्यां युक्त्युकौ" उणा०पा०३कौ०पृ०६२६
इति त्युक्. अनिट्. अगुणः.
(९) "युवोः०" ७।१।१।। कौ०पृ०२३३
इत्यत्र अनुनासिकग्रहणान्नेह योरनः. बाहुलकाद्वा,
१५ (१०) "जनी, प्रदुर्भावे" धा०दिवा०कौ०पृ०४५४
(११) "सर्वधातुभ्यः०" इति मनिन् उणा०पा०४को०पृ०६३९
(१२) "नेट्०" इति नेट्. ७।२।८॥कौ०पृ०५८१
नलोपः, दीर्घस्सांहितः. ❀
तथा भूः अय लोकश्च भुवः अन्तारिक्षलोकश्च स्वः
२० असौ लोकश्चेति भूर्भुवःस्वः द्वन्द्वः ततश्च तात्स्थ्यात्
तदुपलक्ष्याणां प्राणिनामयं वृक्षः पक्षिवत् पथिकवच्च.
तदुपजीव्यच्छायः पत्रलः पारिजात इति—
( भूर्भुवःस्वस्तरुः ).

निरु०—९६७ भूरादिभिर्लक्षितानां जीवानां यः समाश्रयः ॥७५८॥
२५ ( भूर्भुवःस्वस्तरुः ) स स्यादृशार्णस्सर्वदो मनुः।

१ प्रवाल।

निर्व०—एकं नाम.

( १ ) " तॄ, प्लवनतरणयोः" धा०भ्वादिः कौ०पृ०४२७

( २ ) " भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः"

इति उः. गुणो रपरः. उणा०पा०१ कौ०पृ०६०२ ५

( ३ ) " स्वृ, शब्दोपतापयोः" धा०भ्वादिः कौ०पृ०४२५

( ४ ) " विजुपेश्छन्दसि " ३।२।७३॥ कौ०पृ०६८३

( ५ ) " आतो मनिन्क्वनिब्वनिपः"० इति वर्तमाने, ३।२।७४ ॥

कौ०पृ०६८३

( ६ ) " अन्येभ्योपि दृश्यन्ते " ३।२।७५॥कौ०पृ०५८१ १०

इति विच्. छन्दसीति चात्र निवृत्तम् गुणो रपरः.

( ७ ) " स्वरादि०" १।१।३७॥ कौ०पृ०८६

इत्यव्ययत्वम्.

( ८ ) " भू, सत्तायाम् " धा०भ्वादिः कौ०पृ०३६८

( ९ )" सर्वधातुभ्यः०" इत्यसुन्. उणा०पा०४ कौ०पृ०६४०१५

( १० ) " भूरञ्जिभ्यां कित् " उणा०पा०४ कौ०पृ०६४१

इति कित्. ततो न गुणः. ओरुवङ्. पुनश्च स धातुरावर्त्यः.

( ११ ) " संपदादिभ्यः क्विप् " ३।३।९४॥ कौ०पृ०६५८

इति स्त्रियामधिकरणे क्विप्.अत्र चैकत्र महाव्याहृतित्रय-

प्रत्यभिजिज्ञापयिषया छन्दोभावान्न सामासिकस्सोर्लुक्. २०

यथानुलोम्यमत्र सोरुत्वम्. संहितायां न विसर्गः.

अन्यत्र रुत्वविसर्गसत्वानि अपरत्र विसर्गसत्वे चेति विवेकः.

यद्वा भूरिति सान्तं रान्तं वा. उक्तेर्थे अव्ययम्. आकृति-

गणत्वात् स्वरादेः अतो न सोर्लुगादिक्लेशः.

भुव इत्यसिर्वा, सान्तमव्ययम्. उक्तेर्थे अत एव हेतोः २५

अत्र च भूरित्यस्य रान्तत्वे रुत्ववर्जं सांहितिकं प्राग्वत्.

इति विशेष इति ध्येयम्. ❀

{९६८ / ३४०} तारः, {९६९ / ८८७} सविता, (९७०) प्रपितामहः, ।

५ ॐ ताराय नमः । ॐ सवित्रे नमः । ॐ प्रपितामहाय नमः।

भा०—तेषां संसारतारणात्—
( तारः ). ❀
सर्वेषां साक्षाज्जनयिता—
( सविता ). ❀
१० पितामहस्यापि जनकत्वात्—
( प्रपितामहः ). ❀

निर्व०—एनमनन्तं ब्रह्मतरुम् आश्रितवताम् असंशयो हि पक्कफल-
प्रपातः तान् संसारात्तारयति उत्तारयतीति—
( तारः ).
१५ तरतेर्ण्यन्तात् पचाद्यचि णिलोपे च तार उक्तः. ❀
तान् सूते साक्षाज्जनयतीति—
( सविता ).
( १ ) "षूङ्, प्राणिगर्भविमोचने" धा०अदा० कौ०पृ०४३८ –
तृच्.
२० ( २ ) "स्वरतिसूति०" ७।२।४४॥ कौ०पृ०३८५
इति वेट्. गुणः, अव्. अनङादि. ❀
पितॄणां प्रजापतीनामपि पितुः जनयितुः पितामहस्य
परमेष्ठिनोपि जनकत्वात् प्रकृष्टः पितामह इति—
( प्रपितामहः ).

२५ निरु०—९६८संसारतारणात्तेषां (तारः)स्यात् प्राणिनां सदा॥७५९॥
९६९ साक्षाज्जनयिता योऽसौ सर्वस्य ( सविता ) स्मृतः ।
९७० पितामहस्य जनकः ( प्रपितामह ) उच्यते ॥ ७६० ॥

{९७१ / ४७} यज्ञो,

ॐ यज्ञाय नमः ।

भा०—स्वाराधनधर्मसमृद्धिरिक्तानां तदर्थिनां स्वयमेव—
(यज्ञः). ❀ ९

निर्व०—(१) "पा, रक्षणे" धा०अदा० कौ०पृ०४४३
(२) "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ"
उ० पा० २ कौ० पृ० ६२३
इति तृच्, पातेरात इत्त्वं च निपात्यते. अनिट्.
एवं सिद्धात् पितृशब्दात् तत्पितरि अभिधेये, १०
(३) "पितृव्यमातुलमातामहपितामहाः" ४।२।३६॥कौ०पृ०२३२
इति डामहच् निपात्यते. स तद्धितः. भसंज्ञायाम्,
(४) "टेः" ६।४।१४३॥ कौ०पृ०५६
इति डिति टेर्लोपः. ततः प्रपूर्वः.
(५) "कुगतिप्रादयः" २।२।१८॥ कौ०पृ०१४८ १५
इति प्रादिसमासः. स च, १।४।७३॥ कौ०पृ०१५०
(६) "प्रादयो गताद्यर्थे प्रथमया" इति प्रथमया भवति. ❀
स्वाराधनधर्मसमृद्धिरिक्तानाम् अथ च तदर्थिनां
स्वयमेव यज्ञः तादृशो धर्म इति—
(यज्ञः). २०
(१) "यज, देवपूजासङ्गतिकरणदानेषु" धा०भ्वादिः कौ०पृ०४३२
भावे,
(२) "अकर्तरि च कारके०" ३।३।१९॥ कौ०पृ०६४७
(३) "यजयाचयतविच्छप्रच्छरक्षोनङ्" ३।३।९०॥कौ०पृ०६५८
इति नङ् अनिट्. चर्त्वम्. नस्य ञः. ❀ २५

निरु०—९७१ जयन्त्रस्वरूपत्वाद् (यज्ञ) इत्युच्यते बुधैः ।

(९७२) यज्ञपतिः, (९७३) यज्वा,

ॐ यज्ञपतये नमः । ॐ यज्वने नमः ।

५ भा०—स्वयज्ञफलप्रदः—
(यज्ञपतिः). ❀
अशक्तानां स्वयमेव यजमानः—
(यज्वा).
(१) "सुयजोर्ङ्वनिप्" ३।२।१०३॥ कौ०पृ०५९७
१० आश्वमेधिके वैष्णवे धर्मे भगवान्,
(२) "तेषां तु पावनायाहं नित्यमेव युधिष्ठिर । उभे संध्येऽनुतिष्ठामि ह्यस्कन्नं तद्व्रतं मम" इति. ❀ भा०आ० ।

निर्व०— तेषां स्वाराधनयज्ञफलप्रदतया यज्ञस्य पतिः स्वामीति—
(यज्ञपतिः).
१५ पातेर्डतौ टिलोपे च पतिरुक्तः. यज्ञः प्राग्वद् एवमुत्तरत्रापि. ❀
अनेकत्र अत्यन्ताशक्ते तादृशविषये तत्संपादनाय तदनुष्ठेयं सन्ध्यादिकं कर्म स्वयमेवानुष्ठाय अस्कन्नतद्व्रततया तदर्थं स्वयं यजति स्मेति—
२० (यज्वा).
यजिरुक्तः. ततो भूते,
(१) "सुयजोर्ङ्वनिप्" ३।२।१०३॥ कौ०पृ०५९७
इति ङ्वनिप्. अनिट्. अकित्त्वात्,
(२) "वचिस्वपि०" ६।१।१५॥ कौ०पृ०४३२
२५ इत्यादिना न संप्रसारणम्. नान्तदीर्घ "इत्यादि. ❀

निरु०—९७२यज्ञस्य फलदो यस्मात्तस्माद् (यज्ञपतिः)स्मृतः॥७६१॥
९७३ अशक्तं तु स्वयं यदा त (यज्वे) ति प्रचक्षते ।

( ९७४ ) यज्ञाङ्गो, ( ९७५ ) यज्ञवाहनः, ॥

---

ॐ यज्ञाङ्गाय नमः । ॐ यज्ञवाहनाय नमः ।

---

भा०—समर्थानुष्ठितमपि यज्ञान्तरमस्य शेषभूतम् इति— ५
( यज्ञाङ्गः ). ❀
तेषां शक्तिश्रद्धाधिकारदानेन यज्ञं वाहयतीति—
( यज्ञवाहनः ). ❀

---

निर्व०—समर्थानुष्ठितोपि अन्यो यज्ञोङ्गं तद्वच्छेषभूत-
मस्येति— १०
( यज्ञाङ्गः ).
अङ्गेरिदितो गतिकर्मणः पचाद्यचि अङ्गशब्दस्साधितः.
बहुव्रीहिः. दीर्घः सांहितः. ❀
तेषां शक्तिश्रद्धाधिकारान् प्रदाय यज्ञं वाहयति निर्व-
र्तयतीति वा, तं वहति निर्वहतीति वा— १५
( यज्ञवाहनः ).
( १ ) " वह, प्रापणे " धा० भ्वादिः कौ०पृ०४३२
आदौ णिच्. वृद्धिः. ततो ल्युरि "त्वो" दि. अनः. णिलोपः. अनुकल्पे
( २ ) " कृत्यल्युटः० " ३।३।११३॥कौ०पृ०६६२
इति बाहुलकात् कर्तरि ल्युडि "त्वो" दि. २०
( ३ ) " वाहनमाहितात् " ८।४।८॥कौ०पृ० २००
इति निपातनात्, अनिमित्ता वृद्धिः. अनः. षष्ठीसमासः. ❀

---

निरु०—९७४शेषस्यकरुतो यज्ञोप्यस्य ( यज्ञाङ्ग ) उच्यते॥७६२॥
९७५तेषां श्रद्धाधिकारादिदानात् स्याद् ( यज्ञवाहनः ) ।

श्लो० ॥ १०५ ॥ ( ९७६ ) यज्ञभृत्, ( ९७७ ) यज्ञकृत्,
५ ( ९७८ ) यज्ञी,

ॐ यज्ञभृते नमः । ॐ यज्ञकृते नमः । यज्ञिने नमः ।

भा०—विकलमपि यज्ञं स्वस्मरणपूर्णाहुतिभ्यां पुष्णातीति—
( यज्ञभृत् ). यथा,
( १ ) " प्रमादात् कुर्वतां कर्म प्रच्यवत्यध्वरेषु यत्। स्मर-
१० णादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः" इति ❀
जगद्धिताय यज्ञमादौ सृजतीति—
( यज्ञकृत् ). ❀
सर्वयज्ञानां शेषी—
( यज्ञी ). ❀

१५ निर्व०—वचनात् विकलमपि यज्ञं बिभर्ति स्वस्मरणपूर्णाहुतिभ्या
पुष्णातीति—
( यज्ञभृत् ):
बिभर्तिरिह पोषणार्थः. ततः. क्विपि तुक्. अगुणः. जश्त्वचर्त्वे. ❀
जगद्धिताय यज्ञं करोति आदौ सृजति इति—
२० ( यज्ञकृत् ).
कृञः क्विपि तुक्. अगुण इत्यादि . ❀
स्वस्य सर्वयज्ञशेषितया सर्वो यज्ञः शेषभूतोऽस्यास्तीति—
( यज्ञी ) व्युत्पादिताद् यज्ञशब्दात् मत्वर्थीयोऽत इनिः.

निरु०—९७६ पूर्णाहुतिस्वस्मृतिभ्यां विफलं यज्ञमच्युत ॥ ७६३ ॥
२५ पुष्णाति ( यज्ञभृत् ) स स्यात् सतां मनुजसत्तमः ।
९७७ जगद्धिताय स्रष्टा यज्ञमादौ स ( यज्ञकृत् ) ॥ ७६४ ॥
९७८ परस्यैषां तु यज्ञानां शेषी ( यज्ञी ) ति कथ्यते ।

(९७९) यज्ञभुग्, (९८०) यज्ञसाधनः, ।

ॐ यज्ञभुजे नमः । ॐ यज्ञसाधनाय नमः ।

भा०— तान् भुङ्क्ते भुनक्ति वेति— ५
(यज्ञभुक्). ❀
तेऽस्य ज्ञानद्वारा सिद्ध्युपाया इति—
(यज्ञसाधनः). ❀
(१) "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति. गी०४-३३।
यज्ञपर्यवसानं स्वतत्त्वज्ञानं करोतीति— १०

निर्व०—(१) "यस्य०" ६।४।१४८॥ कौ०पृ०५६
इति लोपः. इन्नन्तदीर्घे "ईत्यादि. ❀
तान् यज्ञान् भुङ्क्ते अभ्यवहरति भुनक्ति पालयति वा इति—
(यज्ञभुक्).
(१) "भुज, पालनाभ्यवहारयोः" धा०रुधा०कौ०पृ०४७१ १५
क्विप्.-अगुणः. कुत्वम् कः. वा चर्त्वम्. ❀
ते च यज्ञास्साधनानि ज्ञानद्वारा स्वसिद्ध्युपाया अस्येति—
(यज्ञसाधनः).
(२) "राध-साध, संसिद्धौ" धा० स्वादिः कौ०पृ०४६३
करणे ल्युट्. ण्यन्ताल्ल्युटि "इत्यादि वा. अनः. णिचि तल्लोपश्च. २०
बहुव्रीहिः. नाम्नोरसहितायां जश्त्वम्. ❀
तथा यज्ञस्यान्तं पर्यवसानभूतं स्वतत्त्वज्ञानं करो-
तीति—

निरु०—९७९ भुङ्क्ते तान् वा भोजयति (यज्ञभुक्) स च
कथ्यते ॥ ७६५ ॥ २५
९८० ज्ञानद्वारा सिद्ध्युपायो यस्य स्याद् (यज्ञसाधनः ।

(९८१) यज्ञान्तकृत्, (९८२) यज्ञगुह्यम्,

ॐ यज्ञान्तकृते नमः। ॐ यज्ञगुह्याय नमः।

५ भा०—(यज्ञान्तकृत्). ❋
यन्निरपेक्षोपि सापेक्षवत् यज्ञेषु पुरोडाशादिकं भुक्त्वा
तृप्यंस्तर्पयति तद्यज्ञविधिगतिसाधनविद एव विदन्ति
न स्थूलदृशः इति—
(यज्ञगुह्यम्). यथा वेद्युदाहरणे,

१० निर्व०—(यज्ञान्तकृत्).
कृञः क्विपि तुक्. अगुणः.
(१) " अम, गत्यादिषु " धा०भ्वादिः कौ०पृ०४०१
ततः तनि अन्त उक्तः.
(२) " तितुत्र०" इति नेडि ँँ त्यां " दि. दीर्घः. ❋७।२।९॥
१५ कौ०पृ०६०८
यदयं निरपेक्षोपि सापेक्षवत् यज्ञेषु पुरोडाशादिकं
भुञ्जानः ततस्तृप्यन् यदृंस्तर्पयति—
तदिदं यज्ञविधिगतिसामान्यविदः सूक्ष्मदृश एव विदन्ति
नतु स्थूलदृशः इत्यतो यज्ञस्य गुह्यं तद्रहस्यमिति—
२० (यज्ञगुह्यम्).

निरु०—९८१समाप्तिं चैव यज्ञानां स्वतत्त्वज्ञानतः क्षणात् ॥७६६॥
निरपेक्षं यः करोति स (यज्ञान्तकृदु) च्यते।
९८२यस्तर्पयति यज्ञेषु नित्यतृप्तोप्यतृप्तवत् ॥ ७६७ ॥
पुरोडाशादिकं भुक्त्वा तृप्यन्नन्यान् विशेषतः।
२५ तद्यज्ञविधिगत्यादिविद एव विदन्ति हि ॥ ७६८ ॥
न स्थूलबुद्धयस्तस्मात् (यज्ञगुह्य) मिति स्मृतः।

१ मान्य।

## (९८३) अन्नम्,

ॐ अन्नाय नमः ।

भा०–(१) "सर्वे वेदास्सर्ववेद्यास्सर्वे यज्ञाः सर्व इज्यश्च कृष्णः"
(२) "विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञाः समाप्ताः" ५
(३) "ज्योतींषि शुक्लानि च यानि लोके त्रयो लोका लोकपालास्त्रयो च। त्रयोग्नयश्चाहुतयश्च पञ्च सर्वे वेदा देवकीपुत्र एव"
॥२३०॥ इत्यादि. ❋
एवं निष्पादितभोक्तृशक्तिभिर्भुज्यत इति– १०
(अन्नम्). ❋

निर्व०–(२) "गुहू, संवरणे" धा०भ्वादिः कौ०पृ०४२२
(३) "शंसिदुहिगुह्यो वा"
इति काशिकानुरोधात् ण्यतो विषये पाक्षिकः क्यप्. कृत्यः. अगुणः. तत्र, १५
(४) "प्रशस्यस्य०" ५।३।६०॥कौ०पृ०३४१
इत्यादिनिर्देशात् अन्यथापि शंसेस्सिद्धम् इतरयोस्तु मूलं मृग्यम् इदमेव वा मूलमिति प्रागप्यभ्यधाम. षष्ठीसमासः. लिङ्गमशिष्यमि ॥२२६॥ त्या दि. ❋
एवं निष्पादितभोक्तृशक्तिभिरेतैरयमद्यते भुज्यत इति– २०
(अन्नम्).
(१) "अद, भक्षणे" कर्मणि क्तः. धा०अदा०कौ०पृ०४३५

निरु०–९८३एवं निष्पादितानन्तभोक्तृशक्तिसमन्वितैः ॥ ७६९॥
भुज्यते यस्सदा कालं सो (ऽन्न) मित्युच्यते बुधैः ।

(९८४) अन्नाद, एव च ॥

ॐ अन्नादाय नमः ।

भा०— तांश्च तथा भुङ्क्ते इति—
५ (अन्नादः).

निर्व०— (२) स च "मतिबुद्धिपूजार्थेभ्यश्च" ३।२।१८८॥ कौ०पृ०५९७
इति चकारादनुक्तसमुच्चयार्थात् कचिदन्यतोपि वर्तमाने भवति अनिट्.
(३) नच "अदो जग्धिर्ल्यप्ति किति" २।४।३६॥कौ०पृ०५९६
१० इति तादौ कित्यदो जग्ध्यादेशशङ्क्यः.
(४) "अन्नाण्णः" ४।४।८५ ॥ कौ०पृ०२८८
(५) "अदोऽनन्ने" ३।२।६८ ॥ कौ०पृ०५८१
इत्यादिनिर्देशेन संज्ञायी तदभावज्ञापनात्,
(६) "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" ८।२।४२॥कौ०
१५ पृ० ५८६
इति निष्ठातस्य नः, पूर्वस्य च दस्य अनेरोणादिके
(७) "धापृवस्यज्यतिभ्यो नः" उणा०पा०३कौ०पृ०६२५
(८)"कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्"उणा०पा०३कौ०पृ०६२५
इति नप्रत्यये,
२० (९) "नेट्०" ७।२।८॥ कौ०पृ०५८१
इतीट्प्रतिषेधे च अन्नशब्दनिष्पत्तिस्तु प्रकृतेनातीवेत्युपेक्षिता. आविष्टलिङ्गोयमि"२३॥"त्यादि. ॐ
तथा अन्नं तदुपलक्ष्यान् तद्वत् भोग्यान् तानप्यन्नि भुङ्क्ते इति—
(अन्नादः).

२५ निरु०-९८४ य आदत्ते तथा भुङ्क्ते स्वयं सो(ऽन्नाद) ईरितः॥७७०॥

श्लो० ॥ १०६ ॥ ( ९८५ ) आत्मयोनिः,

ॐ आत्मयोनये नमः ।

भा०—कोऽन्य ईदृश इत्येवकारः चशब्दस्सर्वमुक्तमेकत्रास्मिन् समुच्चिनोति. ❀ ५
दुग्धेनेव सितावलयमात्मना भोक्तारं मिश्रयतीति—
( आत्मयोनिः ). ❀

निर्व०— प्राग्वद्धातुः. ततः,
(१) "अदोऽनन्ने" इति अन्ने उपपदे इटः, ३।२।६८॥कौ०पृ०५८१
प्रतिषेधात् कर्मण्यण्. उपधावृद्धिः. अन्नशब्दस्साधितः. १०
आकारेण दीर्घः. एवकारोयमेवेदृशो नान्य इत्यवधारणार्थः. सर्वस्याप्युक्तस्य वक्ष्यमाणस्य च अस्मिन्नेवैकस्मिन् समुच्चयार्थश्चकारः. ❀
दुग्धेनेव सितावलयं शर्कराविशेषम् आत्मना स्वात्मना यौति भोक्तारं मिश्रयतीति वा,आत्मानं भोक्तारं स्वात्मना यौतीति वा— १५
( आत्मयोनिः ).
( १ )" यु, मिश्रणे" करणे निप्रकरणे, धा०अदा०कौ०पृ०४३९
(२)"वह्निश्रियुद्रुग्लाहात्वरिभ्यो नित्"उणा०पा०४कौ०पृ०६३४
इति कर्तरि निः. नित्- गुणः. २०
( ३ ) " नेट्० " ७।२।८॥ कौ०पृ०५८१
इति नेट्. आत्मा ह्युक्तः ? यथायथं तृतीयेति द्वितीयेति वा,
योगविभागात् समासः. षष्ठीसमासो वा. ❀

निरु०—९८५ भोक्तारमात्मना नित्यं यो यौनयति सर्वदा ।
( आत्मयोनिः ) स चैवोक्तो वर्ण्वर्णरसुखभोगदः ॥ ७७१ ॥

( ९८६ ) स्वयंजातो, ( ९८७ ) वैखानः,

ॐ स्वयंजाताय नमः । ॐ वैखानाय नमः ।

५ भा०— प्रार्थनानिरपेक्षतया जातः—
( स्वयंजातः ). ❀
जनित्वा भवदुःखविखननात्—
( वैखानः ).
विपूर्वात् खनतेः,

१० निर्व०— प्रार्थनादिनैरपेक्ष्येण स्वयमेव जातः प्रादुर्भूत इति—
( स्वयजातः ).
( १ ) " जनी, प्रादुर्भावे " धा० दिवा०कौ० पृ०४५४
ईदित् अकर्मकात् कर्तरि क्तः.
( २ ) " श्वीदितः० " इति नेट्.७।२।१४ ॥ कौ०पृ०५८९
१५ ( ३ ) " जनसनखनां सन्झलोः " ६।४।४२॥ कौ०पृ०४५२
इति झलादौ किति आत्वम्.
( ४ ) " अलोन्त्यस्य "१।१।५२॥ कौ०पृ०७
इति नस्यान्त्यस्यादेशः. दीर्घः. स्वयमिति स्वरादित्वादव्य-
यत्वम्. अनुस्वारपाक्षिकपरसवर्णौ. ❀
२० जनित्वा दुःखविखननात् विखानो विखननम् उक्तदु.खावदा-
रणम् तदुत्पादकतया तस्यायमिति वा विखानयति
उक्तदुःखविखनन करोतीति विखानः स एव वैखान इति वा—
( वैखानः ).
( १ ) " खनु, अवदारणे " विपूर्वः. धा०भ्वादिः कौ० पृ० ४२१

२५ निरु०—९८६ जातो योऽसौ ( स्वयजातः ) प्रार्थनाद्यनपेक्षया ।
९८७ जनित्वा भव दु.ख यो विविन खनति स्वतः ७७० ॥
( वैखानः ) स च निर्दिष्टः सनार्णोऽरिलदुःसहा ।

(९८८) सामगायनः, ।

ॐ सामगायनाय नमः ।

भा०—(१) " खनो घ च" इति घञ्. विखानः. ३।३।१२५ ॥ कौ०पृ०६६४ ५
(२) " तत्र साधुः" इत्यण्. ❀ ४।४।९८॥ कौ०पृ०२८९
स्वप्रातिमधुपानेन हाव् हाव् हाव् इति सामानि
गायमानो मुक्तोऽस्यास्तीति—
(सामगायनः).
(१) " ण्युट् च " इति ण्युट्. ३।३।११४७॥ कौ०पृ०५७० १०
(२) " एतत्साम गायन्नास्ते " इत्यादि. ❀ तै०भृगु०अ०१०—५।

निर्व०—(२) " खनो घ च" ३।३।१२५॥ कौ०पृ०६६४
इति चकारात् भावे घञ्. वृद्धिः. ततः पूर्वत्र,
(३) " तस्येदम्" ४।३।१२० ॥ कौ०पृ०२७१
इत्यण्. आदिवृद्धिः. १५
(४) " यस्य०" ६।४।१४८॥ कौ०पृ०५६
इति लोपः. अपरत्र उक्तादिखानशब्दात्,
(५) " तत्करोति०" इति णिच्. चु०गणसूत्रम् कौ० पृ०४९०
(६) "णाविष्ठवत्" इति टिलोपः. ६।४।१५५॥ कौ०पृ०३१०
ततः पचाद्यचि णिलोपः. ततस्स्वार्थे प्रज्ञाद्यणित्यादि. ❀ २०
स्वप्रातिमधुपानेन सामानि हाव्३ हाव्३ हाव्३ इति
सामानि गायन्तीति सामगायनाः मुक्ताः तेऽस्य सन्तीति—
(सामगायनः).
(१) " गै, शब्दे" धा०भ्वादिः कौ०पृ०४२४
(२) " आदेच उपदेशेऽशिति" ६।१।४५॥ कौ०पृ०४२३ २५

निरु०—९८८ स्वप्रातिमधुपानेन निरतास्सामगीतिषु ॥ ७७३ ॥
नित्यमुक्तास्सन्ति यस्य स उक्तः (सामगायनः)।

(९८९) देवकीनन्दनः ,

ॐ देवकीनन्दनाय नमः ।

भा०— एवंविधो न परावस्थः किंतु—
( देवकीनन्दनः ).
( १ ) " य एष पृथुदीर्घाक्षस्संबन्धी ते जनार्दनः "
( २ ) " एष भूतं भविष्यच्च भवच्च भरतर्षभ " इति. ❀

निर्व०—इति धातोरेच आत्त्वमनिमित्तम्.
(३) "शिल्पिनि ष्वुन्" इत्यतश्शिल्पिनि ३।१।१४५॥ कौ० पृ० ५६९
( ४ ) " गस्थकन् " इत्यतः ग इति वर्तमाने ३।१।१४६॥ कौ० पृ० ५७०
( ५) "ण्युट् च " इति गायतेश्शिल्पिनि ३।१।१४७॥ कौ० पृ० ५७०
( ६ ) " क्रियाकौशलं शिल्पम् "
तद्वति कर्तरि ण्युट्. ण इत्. योरनः.
( ७ ) " आतो युक्चिण्कृतोः " ७।३।३३॥ कौ० पृ० ५३९
इति णिति कृति धातोर्युक्. स्यतेरात्त्वे,
( ८ ) " सातिभ्याम्०" उणा० ४। ० ४ कौ० पृ० ६३९
इति मनिनि च सामशब्दः प्रागेवोक्तः. अनिट् षष्ठीसमासः.
ततस्सामगायनशब्दात् मत्वर्थीयोऽर्श आद्यच्.
( ९ ) " यस्य० " इति लोपः. ❀ ६।४।१४८॥ कौ० पृ० ५६
एवंविधश्च न परावस्थः परंतु वचनात् देवस्याः
देवको नाम क्षत्रियः तदपत्यभूतायाः वसुदेवभार्याया
नन्दनः तनयः कृष्ण इति—
( देवकीनन्दनः ).
( १ ) " टुनदि, समृद्धौ " धा० भ्वादिः कौ० पृ० ३८७

निरु०—९८९ देवस्यास्तनयत्वेन परावस्थः प्रजज्ञिवान् ॥ ७७४ ॥
वात्सल्याद्वरो योऽसौ ( देवकीनन्दनः ) स्मृतः ।

निर्व०—इदित्वान्नुम्. अनुस्वारादि. णिचि.
(२) " नन्दिग्रहि० " इत्यादिना, ३।१।१३४॥कौ०पृ०५६७
नन्द्यादिलक्षणो ल्युरित्यादि. अनः. टिलोपः.
(३) " दिवु, क्रीडादौ " धा०दिवा०कौ०पृ०४५२ ५
(४) " ण्वुल्तृचौ " ३।१।१३३॥कौ०पृ०५६६
इति ण्वुल्. वोरकः. लघूपधगुणः. ततः,
(५) " पुंयोगादाख्यायाम् " ४।१।४८॥कौ०पृ०१००
इत्यत्र दम्पतिभाव एव पुंयोग इति स्वीकारे,
(६) " तस्यापत्यम् " ४।१।९२॥ कौ०पृ०२०७ १०
इत्यण्. नच तत्र,
(७) " तद्धितेष्वचामादेः " ७।२।११७॥कौ०पृ०२०४
इत्यादिवृद्धिः.
(८) " ओर्गुणः " ६।४।१४६॥कौ०पृ०१६५
इति सूत्रे ओरोदिति वक्तव्ये गुणोक्त्या संज्ञापूर्वको विधि- १५
रनित्य इति ज्ञापनात् ततः,
(९) " यस्य० " ६।४।१४८॥कौ०पृ०५६
इति तद्धितेऽलोपः. ततस्त्रियामदन्तत्वात्,
(१०)"टिड्ढाणञ्०"इत्यादिना ङीप्. पुनः४।१।१५॥कौ०पृ०९३
(११) " यस्येति च " ६।४।१४८॥कौ०पृ०५६ २०
इति लोपः. अथ संकोचे प्रमाणविरहात् जन्यजनकभावोपि
पुंयोग इति दर्शने पुंयोगमाश्रित्य,
(१२) " पुंयोगादाख्यायाम् " इति. ४।१।४८॥कौ०पृ०१००
स्त्रियां ङीप्. अत्र च नापत्यप्रत्ययादिकल्पनागौरवम्.
(१३) " यस्य० " इति लोपः. ॥ ६।४।१४८॥कौ०पृ०५६ २५

{९९०/८९९५} स्रष्टा, (९९१) क्षितीशः,

ॐ स्रष्ट्रे नमः । ॐ क्षितीशाय नमः ।

५ भा०—परावस्थोपि स एवेति—
(स्रष्टा).
(१) "योऽनन्तरूपोऽखिलविश्वरूपो गर्भेपि लोकान् वपुषा बिभर्ति" इति. ❊
सर्वेशत्वेपि अतिभूयिष्ठत्वात् भूयिष्ठं भूमेरीशः—
१० (क्षितीशः). ❊

निर्व०—अथ स एव सृजति विश्वमिति स्रष्टा वचनात् परावस्थोपीति—
(स्रष्टा).
(१) "सृज, विसर्गे" तृच्. अनिट्. धा०तुदा०कौ०पृ०४६९
(२) "सृजिदृशोर्झल्यमकिति" इति. ६।१।५८॥ कौ०पृ०४३०
१५ अकिति अम् मित्त्वादन्त्यादचः परः. यण् ऋतो रः. ततः,
(३) "व्रश्चभ्रस्जसृजमृजयजराजभ्राज०" ८।२।३६॥कौ०पृ०५१
इत्यादिना झलि षोन्तादेशः. ष्टुत्वम्.तस्य टः. ततोऽनङ् इत्यादि. ❊
एवंभूतस्य परावस्थस्य चास्य देवकीपुत्रत्वेन क्षितावक्त-रणं हि भूभारावतारणार्थम् । अतः क्षितेरीष्टे तद्भारा-
२० वतारणसमर्थो भवतीति—
(क्षितीशः).
(१) "ईश, ऐश्वर्ये" धा०अदा०कौ०पृ०४३८
सामर्थ्यकर्मेहापम्. इगुपधलक्षणः कः;
(२) "क्षि, निवासगत्योः" धा०तुदादिः कौ०पृ०४६८

२५ निरु०—९९०परावस्थां प्रपञ्चोऽसौ(स्रष्टे)ति सर्जनात् स्मृतः॥७७५॥
९९१ भूभारक्लेशहारी यः (क्षितीशः) स च कथ्यते ।

## (९९२) पापनाशनः, ॥

### ॐ पापनाशनाय नमः ।

भा०— अत्र दधिनवनीतस्तैन्यरासक्रीडादिकथामृतेन परेषाम्—
(पापनाशनः). ५
अवतारेपि वैष्णवानां बाह्याभ्यन्तरशत्रुनाशनः. ❀
परमैश्वर्यचिह्नदिव्यायुधत्वात्—

निर्व०—निवासार्थश्चेहायम्.
(३) " अकर्तरि च कारके० " इत्यनुवृत्तौ, ३।३।१९॥ कौ० १०
पृ०६४७
(४) " स्त्रियां क्तिन्" ३।३।९४॥ कौ०पृ०६५८
इत्यधिकरणे क्तिन्. अगुणः. अनिट्. दीर्घः. ❀
एवमवतारेपि श्रीमतां वैष्णवानां पापं तदुपलक्ष्यं
बाह्याभ्यन्तरशत्रुं नाशयतीति—
(पापनाशनः). १५
(१) " नश, अदर्शने " धा०दिवा० कौ०पृ०४५८
णौ नः. णिच्. वृद्धिः. ल्युरित्यादि. अनः. णिलोपः.
(२) " पा, रक्षणे " धा०अदा०कौ०पृ०४४३
(३) " पानीविषिभ्यः पः" उणा० पा०३ कौ०पृ० ६२९ २०
इति पः. अनिट्. ❀
अथ परमैश्वर्यचिह्नदिव्यायुधसम्पत्तिः दैवशिक्षसङ्गति-
विशेषविशिष्टानुपूर्व्या प्रदर्श्यते तत्र शङ्खं पाञ्चजन्यं
बिभर्ति धरति तं स्वाधरविद्रुमसुधया पुष्णाति चेति—

निरु०—९९२देवकीतनयत्वेपि भक्तानां विशेषतः ॥ ७७६ ॥
बाह्यान्तःशत्रुसंहारी यस्स स्यात् (पापनाशनः)। २५

श्लो०॥ १०७ ॥ ( ९९३ ) शङ्खभृत्, (९९४) नन्दकी,

ॐ शङ्खभृते नमः । ॐ नन्दकिने नमः ।

५ भा०—( शङ्खभृत् ).
स्वाधरविद्रुमसुधया पाञ्चजन्यं पुष्णातीति— ❋
भगवतापि मामयं नन्द्यादिति प्रार्थ्यो नन्दकः.
( १ ) " आशिषि च " ३।१।१५०॥कौ०पृ०५७०
इति वुन्. सोस्य नित्ययोगीति—
१० ( नन्दकी ). ❋

निर्व०—( शङ्खभृत् ).
( १ ) " डुभृञ्, धारणपोषणयोः " धा०जुहो०कौ०पृ०४५०
किप्. तुक्. अगुणः.
( २ ) " शमु, उपशमे " धा०दिवा०कौ०पृ०४५९
१५ ( ३ ) " शमेः खः " उणा०पा०१कौ०पृ०६१५
इति खः. विधानात् बाहुलकाद्वा खस्य नेत्वम्. इह प्रयो-
जनाभावाच्च. बाहुलकान्नेट्. अनुस्वारपरसवर्णौ. ❋
भगवतापि मामयं नन्द्यादिति आशंसनार्हो नन्दको नाम
खड्गो नित्यमस्यास्तीति—( नन्दकी ).
२० ( १ ) " टुनदि, समृद्धौ " धा०भ्वादिः कौ०पृ०३८७
इदित्वान्नुमनुस्वारादि. ततो वुन्नित्यनुवृत्तौ,
( २ ) " आशिषि च " ३।१।१५०॥कौ०पृ०५७०
इत्याशीर्विशिष्टे कर्तरि वुन्. वोरकः. ततो नित्ययोगे मत्वर्थी-

निरु०—९९३ ( शङ्खभृत् ) परमैश्वर्यलक्षणायुधधारणात् ॥७७७॥
२५ ९९४नन्द्यान्मामयमित्येवं प्रार्थ्यो भगवतापि यः ।
स नन्दको नित्ययोगी यस्यासौ ( नन्दकी ) स्मृतः ॥ ७७८ ॥

{ ९९५ / ९०८ } चक्री,

ॐ चक्रिणे नमः ।

भा०—नित्यसुदर्शनः स्वभृत्यसुरप्रतिभटरक्षोऽसुरशोणितकल्माषित-
ज्वालाञ्चितं चक्रमपि तथैवेति— ५
( चक्री ). ❀

निर्व०—योऽत इनिः.
( ३ ) " यस्य० " ६ । ४ । १४८ ॥ कौ०पृ०५६
इति लोपः. इन्नन्तदीर्घ इत्यादि. ❀
तथैव स्वभृत्यभूतसुरप्रतिभटरक्षोऽसुरशोणितकल्माषितमुज्ज्वलचक्रं १०
सुदर्शनमपि स्वभूतं नित्यमस्येति—
( चक्री ). चकेः प्रतिघातार्थात्
( १ ) " चकिरम्योः " उणा०पा०२ कौ०पृ०६२०
इत्यादिना करणे रकि बाहुलकादुत्त्वाभावे,
( २ ) " नेट्० " ७ । २ । ८ ॥ कौ०पृ०५८१ १५
इतीट्प्रतिषेधे तथा,
( ३ ) " कृञः "
( ४ ) " करोतर्द्वे च " इति करोतेः,
के द्वित्वे बाहुलकादभ्याससंज्ञेत्यादौ वा तत एव बाहुलकात् कद्वित्व-
योश्च वा. घञर्थे कः. द्वित्वप्रकरणे के २०
( ५ ) " कृञादीनामुपसंख्यानम् "
इति वा चक्रशब्दो हि न्यरूप्यत प्रागेव ततो नित्ययोगे इनिः.

निरु०—९९५ सर्वरक्षोऽसुरच्छेत्ता नित्यं चक्रेण योगतः ।
( चक्री ) ति कथ्यते सम्यगुत्वर्णरसानुनासकः ॥ ७७९ ॥

(९९६) शार्ङ्गधन्वा,

ॐ शार्ङ्गधन्विने नमः ।

भा०—शार्ङ्गं च विस्फारितज्याघोषशरवर्षनाशिताशेषविद्वेषिवार्तं
५ स्वसदृशं धनुरस्येति—
(शार्ङ्गधन्वा). ❀

निर्व०—(६) "यस्य०" ६।४।१४८॥ कौ०पृ०५६
इति लोपः. इत्यन्तदीर्घ इत्यादि. ❀
तथा विस्फारितज्याघोषशरवर्षप्रणाशिताशेषविद्वेषि कथं शार्ङ्गनाम
१० स्वसदृशं धनुश्शरासनमस्येति—
(शार्ङ्गधन्वा).
(१) "धन, धान्ये" धा० जुहो०कौ०पृ०४५२
उसिरिति वर्तमाने,
(२) "अर्तिपृवपियजितनिधनितपिभ्यो नित्" इति उसिः नित.
१५ उणा०पा०२कौ०पृ०६२४
(३) नित्त्वात् "ञ्नित्यादिर्नित्यम्"६।१।१९७॥कौ०पृ०७२५
इत्याद्युदात्तः.
(४) "शॄ, हिंसायाम्" धा०क्र्यादिः कौ०पृ०४७६
(५) "शृञः किन्नुट् च" उणा०पा०१कौ०पृ०६१६
२० इति वर्तमाने,
(६) "शृणातेर्ह्रस्वश्च" उणा०पा०१कौ०पृ० ६१६
इति गन् कित्. तस्य नुट्. धातोर्ह्रस्वश्च. उक्तयुक्त्या किदित्यनुवर्त-
नाद्वा न ग इत्.
(७) "क्ङिति०" १।१।५॥कौ०पृ०३७४

२५ निरु०—९९६ शार्ङ्गाख्यं धनुरस्येति (शार्ङ्गधन्वा) प्रकीर्तितः ।

निर्वं०—इत्यत्र चर्त्वंभूतस्य गकारस्यापि प्रश्लेषात् उक्तं
चैतत्. कित्त्वादगुणः.
(८) " नेट्० " इति नेट्. ७।२।८॥कौ०पृ०५८१
अनुस्वारपरसवर्णौ. ततः शृङ्गशब्दात् आद्युदात्तात्, ५
(९) " तस्य विकारः " ४ । ३ । १३४ ॥ कौ०पृ०२७३
इत्यण्. अस्य घृतादित्वपरिकल्पनादिना
(१०) " घृतादीनां च " पा० १फिट्सूत्रम्. कौ०पृ०७३०
इत्यन्तोदात्तत्वपरिग्रहे
(११) "अनुदात्तं पदमेकवर्जम्" ६।१।१५८॥कौ०पृ०७१९ १०
इत्यनुदात्तादित्वात्,
(१२) " अनुदात्तादेश्च " ४।३।१४० ॥कौ०पृ०२७३
इति विकारे अञ्. उभयत्राप्यादिवृद्धिराकारः. रपरत्वम्.
(१३) " यस्य० " ६ । ४ । १४८ ॥ कौ०पृ०५६
इति लोपः. यद्वा नुट् च शृणातेरित्येतावत्यनुवर्तमाने, १५
(१४) " गण् शकुनौ " उणा०पा०१कौ०पृ०६१६
इति गण्. बाहुलकात् अशकुनावपि क्वचित् इति गणि तस्य नुट् चं
कित् इत्यननुवृत्तावपि उक्तयुक्तिमात्रान्नेत्. गः.
(१५) " नेट्० " इति नेट्. ७ । २ । ८ ॥ कौ पृ०५८१
प्राग्वदनुस्वारपरसवर्णौ च वृद्धिः रपरत्वम्. रङ्गानां संयोगः. २०
बहुव्रीहिः
(१६) " धनुषश्च " इति वर्तमाने, ५।४।१३२॥ कौ०पृ०१६९
(१७) " वा संज्ञायाम् " इति पाक्षिकोऽनङ्. ५ । ४ । १३३ ॥
कौ०पृ०१६९
(१८) "ङिच्च " इत्यन्तादेशश्च, १ । १ । ५३॥कौ० पृ०७२५
यण् वः, नान्तदीर्घः सोर्लोपः. नलोपः. ❀

## ( ९९७ ) गदाधरः, । ( ९९८ ) रथाङ्गपाणिर्,

## ॐ गदाधराय नमः । ॐ रथाङ्गपाणये नमः ।

५ भा०—गदाधिपत्नीं च सर्वतस्समुद्भ्रान्तकल्पान्तानलस्फुलिङ्गिनीं नित्यसंमोदिनीं कौमोदकीं धारयतीति—
( गदाधरः ). ❀
यथोचितं रथाङ्गं च पाणावस्येति—
( रथाङ्गपाणिः ).

१० निर्व०—तथा सर्वतस्समुद्भ्रान्तकल्पान्तानलस्फुलिङ्गिनीं नित्यसंमोदिनीं कौमोदकीं नाम गदाधिपत्नीं गदां धारयतीति—
( गदाधरः ).
( १ ) "धृञ्, धारणे" धा०भ्वादिः कौ०पृ०४२३
पचाद्यच्. गुणो रपरः.
१५ ( २ ) "गद, व्यक्तायां वाचि" भ्वादिः. धा०भ्वादिः कौ० पृ०३८६
( ३ ) "स्तन-गदी, देवशब्दे" धा०चुरा०कौ०पृ०४८८
चुरादौ कथादिः. अदन्तश्च. पूर्वत्र केवलं पचाद्यच्.
अपरत्र णिच्. अतो लोपः.
( ४ ) तस्य "अचः परस्मिन्०" १।१।५७॥कौ०पृ०८
२० इति स्थानिवत्त्वात् नोपधावृद्धिः. ततः पचाद्यचि णिलोपस्संनिभापिनः, इत्यन्यदेतत् तत उभयत्रापि स्त्रियामतष्टाप्. दीर्घः. षष्ठीसमासोयम्. अतो न कर्मण्यणित्युक्तमेव. ❀
तथा यथोचितं रथाङ्गं स्यन्दनाङ्गं सुदर्शनापरपर्यायं सदोद्यतचक्रं च पाणौ हस्तेऽस्येति—
२५ ( रथाङ्गपाणिः ).

निरु०—९९७ कौमोदकीधारणाच ( गदाधर ) इतीरितः ॥७८०॥
९९८ यथोचितं रथाङ्गं च पाणौ यस्यास्ति नित्यशः ।
( रथाङ्गपाणि ) राख्यातो नचाणां भयनाशकः ॥ ७८१ ॥

निर्व०—(१) " पण, व्यवहारे स्तुतौ च " धा०भ्वादिः कौ०पृ०३९८ व्यवहारकर्मेहायम्. ततः,

(२) "गुपूधूपविच्छिपणिपनिभ्य आयः " ३।१।२८॥ कौ०पृ०३९७ इत्यायप्रत्ययः. स्वार्थिकः. अवयुत्यनिर्देशात् स्तुत्येककर्मणापि ५ पनिना साहचर्याविवक्षायाम् वणिजां पणायामित्यादिवत् व्यवहारेपि भवति. स चार्धधातुकविवक्षायाम्,

(३) " आयादय आर्धधातुके वा " ३।१।३१॥ कौ०पृ०३९७ इति वैकल्पिकः. ततः,

(४) " जनिवसिभ्यामिण् " उणा०पा०४कौ०६३८ १० इत्यतः इणिति वर्तमाने,

(५) "अशिपणाय्योरुडायलुकौ च" उणा०पा०४कौ०पृ०६३८ इति इण्. आयस्य लुक् च. यदा तु तदविवक्षा तदा लुग्वर्जमन्यत् प्राग्वदेवेति व्याख्यास्यते. अथवा,

(६) " इणजादिभ्यः " उणा०पा०कौ०पृ० १५ इतीण्. यद्वा,

(७) " इन् सर्वधातुभ्यः " उणा० पा० ४ कौ०पृ०६३७ इतीन्. तत्र च इणि,

(८) " अत उपधायाः " ७।२।११६ ॥कौ०पृ०३८६ इत्युपधावृद्धिः. इनि तु, २०

(९) " युजन्युब्जौ पाण्युपतापयोः "७।३।६१॥ कौ०पृ०५६३ इति निपातनात् सेति विवेकः. अङ्गिर्गतिकर्मा. इदित्. नुम्. अनुस्वारपरसवर्णौ. पचाद्यच् उक्तं चैतत्.

(१०) " रमु, क्रीडायाम् " धा०भ्वादिः कौ०पृ०४२०

(११)"हनिकुषिनीरमिकाशिभ्यः क्थन्"उणा०पा०२कौ०पृ०६१८ इति क्थन् कित्. अनिट्.

{ ९९९ / ८०७ } अक्षोभ्यः,

ॐ अक्षोभ्याय नमः ।

भा०—चक्रीत्यनेन स्वस्वामिसंबन्ध उक्तः. अद्य सदोद्यत-
५ त्वमित्यपुनरुक्तिः. ❀
प्रपन्नाभयदानदार्ढ्यात् स्वमहिम्नापि—
(अक्षोभ्यः). ❀

निर्व०—(१२) "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति"६।४।३७ ॥ कौ०पृ०४३५
१० इति झलि किति अनुनासिकस्य मरय लोपः. सवर्णदीर्घः.
बहुव्रीहिः. स हि,
(१३) "सप्तमीविशेषणे बहुव्रीहौ" २।२।३५॥कौ० पृ० १७३
इत्यादिज्ञापनात् व्यधिकरणानामपि भवति. नच तेनैव
सूत्रेण सप्तम्यन्तस्य प्राङ् निपातश्शङ्क्यः
१५ (१४)" प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ"२।२।३७॥कौ०पृ० १७३
इति परनिपातोपसंख्यानात् अत्र च स्वस्वामिसंबन्धसदोद्यतत्वाभि-
प्रायेण च चक्री रथाङ्गपाणिरिति नाम्नोर्न पौनरुक्त्यम्. ❀
प्रपन्नजनाभयप्रदानप्रीतिदार्ढ्याच्च स्वस्य स्वमहिम्नापि
दुष्प्रधर्षतया च क्षोभयितुं शक्योर्हो वाक्षोभ्यः स नेति—
२० (अक्षोभ्यः).
(१) "क्षुभ. संचलने" धा०दिवा०कौ०पृ०४६०
भ्वादिः. दिवादिर्वा.

निरु०—९९९ अभयप्रदाननियमदार्ढ्यादपि च नित्यशः ।
अचाल्यस्त्वमहिम्नापि (ह्यक्षोभ्य) इति कीर्तितः ॥ ७८२॥

भा०—स्वनिष्ठानां सर्वानिष्टोन्मूलयितॄणि असंख्येयानि अमर्यादसामर्थ्यानि आत्मोचितान्यनन्तान्याभरणविकल्प्यानि सदा सर्वत्र सर्वथा सर्वप्रकारसमाश्रितसंरक्षादीर्घसत्रदीक्षितानि सर्वैश्वर्यधुरंधराणि अन्यान्यपि दिव्यायुधान्यस्येति— ५

---

निर्व०—( २ ) " अचो यत्" इति यत्. ३।१।९७ ॥ कौ० पृ० ५५७

( ३ ) " शकि लिङ् च " ३।३।१७२ ॥ कौ०पृ०५५२

( ४ ) " अर्हे कृत्यतृचश्च" इति,३।३।१६९॥ कौ०पृ०५५२

यथायथं शक्यार्हयोरयं कृत्यः. णलोपः. १०

नच संनिपातपरिभाषाविरोधः. यतस्साऽनित्येत्यलम्.

यद्वा णिचमन्तरेण भुजेरन्तर्भावितण्यर्थात्,

( ५ ) " ऋहलोर्ण्यत्" ३ । १ । १२४ ॥ कौ० पृ० ५६२

इति ण्यत्. शेषं प्राग्वत्. नञ्समासः. नञो नलोपः. ❋ १५

स्वनिष्ठानामुपासीनानां सर्वेषां सर्वाणि यान्यनिष्टानि तेषां प्रहरणानि सवासनमुन्मूलयितॄणि यान्यमर्यादसामर्थ्यानि आत्मोचितान्यनन्तान्याभरणविकल्प्यानि सर्वदा सर्वत्र च सर्वथा च सर्वप्रकारसमाश्रितसंरक्षणदीक्षितानि तानि तानि सर्वैश्वर्यधुरंधराणि अन्यान्यपि दिव्यायुधानि हेतयोऽस्येति— २०

(१०००) सर्वप्रहरणायुधः ॥

ॐ सर्वप्रहरणायुधाय नमः ।

भा०— (सर्वप्रहरणायुधः).

५ एवम् अशेषदोषप्रत्यर्थ्युपाधिसंख्यावधिविरोधितुङ्गमङ्गलस्वरूप-रूपगुणविभवचेष्टितमनङ्गशैश्वर्यसौशील्यमापत्सखमर्थिकल्पकं प्रपन्नैकजीवातुं श्रियः पतिं भगवन्तं पुरुषोत्तममाश्रितानामाश्चर्यस्सर्वसंपत्समुदायः. ❀

इति श्रीहारितकुलतिलकश्रीवत्साङ्कमिश्रसूनोः

१० श्रीरङ्गराजदिव्याज्ञालब्ध-श्रीपराशरभट्टापरनामधेयस्य

श्रीरङ्गनाथस्य कृतौ श्रीभद्विष्णुनामसहस्रविवरणे

भगवद्गुणदर्पणे

दशमं शतकं समाप्तम् ।

श्रीमते रामानुजाय नमः ।

१५ निर्व०— (सर्वप्रहरणायुधः).

(१) "युध, संप्रहारे" आङ्पूर्वः. धा०दिवा०कौ०पृ०४५६.

(२) "स्थास्नापाव्यधिहनियुध्यर्थम्" ३।३।५८॥कौ०पृ०

इतीह यञर्थे करणे कः. किन्त्वात्,

निरु०—१०००पादमूलं प्रपन्नानां भक्तानां चापि नित्यशः ।

२० असंख्येयान्यमर्यादसामर्थ्यान्यात्मनस्सदा ॥ ७८३ ॥

सर्वत्र सर्वथा सर्वप्रकाराश्रितरक्षणे ।

दीक्षितान्युचितान्यन्यान्यनन्तान्यायुधानि हि ॥७८४ ॥

यस्य सन्ति स वै नित्यं (सर्वप्रहरणायुधः) ।

द्वादशार्णो महामन्त्रस्सर्वदुःखविनाशकः ॥ ७८५ ॥

२५ श्रीमते रामानुजाय नमः ।

निर्व०–( २ ) " क्ङिति च " इति न लघूपधगुणः. १।१।५॥
कौ०पृ०४२३
( ३ ) " हृञ्, हरणे " प्रपूर्वः. धा०भ्वादिः कौ०पृ०४२३
( ४ ) " करणाधिकरणयोश्च " ३।३।११७॥कौ०पृ०६३२ ५
इति करणे ल्युट्. 'योरनः. गुणो रपरः.
( ५ ) " अट्कुप्वाङ्० " इति णत्वम्. ८।४।२॥कौ०पृ०३२
( ६ ) " सृ, गतौ " धा०भ्वादिः कौ०पृ०४२५
( ७ ) " सर्वनीघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे " इति,
उणा०पा०१कौ०पृ०६१७ १०
अकर्तरि वन्नन्तो निपातितः. अनिट्.
(८)"सार्वधातुकार्धधातुकयो "इति गुणः.७।३।८४॥कौ०पृ०६६८
( ९ ) " उरण् रपरः " १।१।५१॥कौ०पृ०११
इति रपरः. ततः षष्ठीतत्पुरुषगर्भबहुव्रीहिः. सवर्णदीर्घः.
( १० ) " खरवसानयोर्विसर्जनीयः" ८।३।१५॥कौ०पृ०१३ १५
इति पदान्ते रेफस्य आवसानिको विसर्गः. नामाभ्यासो
नामसहस्रपरिसमाप्तिद्योतनार्थः. सर्वान्ते च प्रणवनमसोरु-
पादानं प्रतिनामाद्यन्तयोरनयोरध्येयताप्रख्याप-
नार्थम्. तथैव हि ओंकारादीनि नमोन्तानि चतुर्थ्यन्तानि
नामान्यधीयन्तेऽध्येतारः युक्तं चैतत् प्रणवविवरणभूतमन्त्रशे- २०
षस्य तद्प्रपञ्चनरूपत्वादशेषनाम्नां तत्र चतुर्थ्यन्तान्नमसः
प्राथम्यं श्रौतक्रमात् अत्र तु तदार्थक्रमादिति विशेषः.
अर्थक्रमोह्युभयत्राविशिष्टः. इत्यादिकम् अन्यच्चानयोरत्र
वक्तव्यमपडक्षीणम्. इति नात्र विस्मृतम्. अत्र च संहितापाठे,
( ११ ) " सुपां सुलुक्० " ७।१।३९॥कौ०पृ०७०३ २५
इत्यादिना सोर्लुक्. छन्दस्यः अस्त्येव हि छन्दस्त्वम् ? यतो-
ऽयं पञ्चमवेद इत्यसकृदुक्तम्. ततः,

( १२ ) " ओमाङोश्च " ६।१।९५॥कौ० पृ० १४

इति आदोमि वृद्ध्यपवादः. पररूपमेकादेशः. इतिशब्द-

श्चायमन्ते प्रयुज्यमानो वक्तव्यशेषपरिसमाप्तिं द्योतयति.

५ संहितायां पूर्वत्रानुस्वारसाक्षिकारसवर्णौ.

उत्तरत्र आवसानिके विसर्गे ततः संहितायाम्,

( १३ ) " स्थानिवदादेश० " इति तस्य स्थानिवद्भावात् १।१।५६॥

कौ० पृ० ८

( १४ ) " भोभगो० " इति यत्वम्., ८।३।१७॥कौ० पृ० २७

१० न ह्ययमल्विधिः. रोरिति समुदायरूपाश्रयणात् ततः,

( १५ ) " लोपश्शाकल्यस्य " ८।३।१९॥कौ० पृ० ११

इति यलोपः. तस्यासिद्धत्वान्न स्वरसन्धिः. सर्वत्रोक्तेष्वर्थे-

षु प्रमाणान्याकरे स्पष्टानि तत्रैव द्रष्टव्यानि. तथोपोद्घाततः

परत्रोक्ता वैभवश्लोकास्तदर्थाश्च तत्रैव स्फुटमवसेया इति

१५ तदर्थं नेहातिप्रयत्यते ततश्चैवमशेषदोषप्रत्यनीककल्याणै-

कतानस्वरूपरूपगुणविभवचेष्टितमनङ्कुशैश्वर्यं प्रणतजनार्ति-

शमनपटुतरकटाक्षविक्षेपं पुण्डरीकाक्षं प्रपन्नजनपारिजातं सहस्र-

दिव्यनामानं देवदेवं भगवन्तं पुरुषोत्तमं जगत्कारणं श्रीपतिं

नारायणं परं ब्रह्म भजमानानां सर्वेषामात्मनाम-

२० सत्ययं सुलभो ह्यवाङ्मनसगोचरसर्वसंपदां

समुदय इति सर्वमपि सुस्थितम्. ❋

---

इति कुशिककुलतिलकश्रीवेङ्कटेश्वरमहाचार्यवर्यात्मज-

वरददेशिकतनयवरदगुरुवरसूनु-वरदाचार्यसूरिविरचिते

श्रीपराशरभट्टार्यभाषित-

२५ श्रीमद्विष्णुसहस्रनामभाष्यानुगे भगवन्नामसहस्रनिर्वचने

दशमं शतकं समाप्तम् ।

श्रीमते रामानुजाय नमः ।

अथास्यनामसहस्रस्य गौरवं ग्राहयन् शान्तनवः कौन्तेयमाह— इतीदमिति ॥ यदेतत्कीर्तनं भगवन्महिम्नि अद्यप्रभृति भगवान् कीर्तनारम्भमर्हतीत्युक्तम्- कीर्तनीयस्येति । अत्र कारणं केशवस्य महात्मन इति । नाम्नां प्राकृतपरमपदव्यवहारयोग्यत्वमाह—दिव्या- ५ नामिति । त्वद्गौरवात् किंचिदपि ज्ञातव्यं न हापितव्यमित्याह— अशेषेणेति । अथाधिकारिफलाङ्गनिर्णयः-य इदं शृणुयादित्यादि॥ यथाधिकारिणं श्रवणमननयोस्सामान्येनोभयलोकाशुभविरोधित्वं तावत् फलमुक्तम्. अथ चतुर्णां वर्णविशेषाणामनधिरूढभगव- द्भक्तीनामनाकाङ्क्षितफलविशेषाणां यथायोग्यं फलमाह—वेदान्तग १० इति ॥ अथ वर्णविशेषेण यथाकाममभ्युदयफलमाह-धर्मार्थीति॥ अथ नियमविशेषवज्जपरूपसंकीर्तनं भक्तस्य सर्वसमृद्धिमाह—भ क्तिमान् य इत्यादिभिश्चतुर्भिः ॥

अनुत्तमं श्रेयः मुक्तिः अन्येऽभ्युदयविशेषाः अथ भगवदेकार्थिनो- ऽनन्यभक्तेरप्रार्थितामपि अनर्थनिवृत्तिमाह—दुर्गाणीति ॥ अथ ते १५ षां तत्प्राप्तिमाह- न वासुदेवेति ॥ नियमवतो भक्तस्यानुषङ्गिणी- मभ्युदयसिद्धिमाह—इमं स्तवमिति॥ श्रद्धा सगौरवत्वरा. भक्तिर्व्या- ख्याता आत्मा चेतनः भगवति भक्तिर्महतः सुकृतस्य फलम् " गो- विन्दभक्त्यत्यधिकं श्रेयश्चान्यन्न विद्यते" इति तत्वतः एते दो- षाः स्वभावत एव निवर्तन्ते इत्याह—न क्रोध इति ॥ नायं फलार्थ- २० वादश्शङ्क्यो निर्भाग्यैः कुतार्किकैर्भगवत्प्रभावस्य असंभाव्याभावेन अतिवादापवादयोरसंभवादित्यभिप्रयन् तस्य तं प्रभावमाह-द्यौ- रसचन्द्रेति ॥ विधुतानीति नानालिङ्गानां- " नपुंसकमनपुंसकेने- कवच्चास्यान्यतरस्याम" १।२।६९॥ कौ० पृ० १८०

---

१ ज्ञानं न हापितम् ।

इति नपुंसकलिङ्गशेषना सर्वस्य तच्छक्तिविभूतत्वमुक्त्वा तद्वश-
वर्तित्वमाह-ससुरासुरेति ॥ वर्ततेदम् इत्यार्षी संहिता अवर्ततेद-
मिति वा इदं तद्वशवर्तित्वं शरीरात्मभावेन विशिनष्टि—इन्द्रियाणी-
५ ति ॥ वासुदेवात्मकानि तच्छरीराणीत्यर्थः. आहुः शास्त्राणीति
शेषः. एवं तत्त्वशास्त्रार्थानां तदधीन्यमभिधाय अनुष्ठानशास्त्रार्था-
नामपि तादधीन्यं मन्दाधिकारिणां भयमन्तेतुमाह-सर्वागमानामि-
ति ॥ सर्वागमानां सर्वधर्मप्रमाणानां प्रथमं परिकल्पितः प्रथमप्र-
तिपाद्यधर्मः आचारः शौचादिस्तदङ्गश्रौतो धर्म इति तस्यारा-
१० ध्यः फलदः सहायश्चाच्युत इति.

धर्मानुबन्धिनामपि तदुद्भवत्वमाह-ऋषय इति॥ऋषयः मन्वाद-
यः तस्य स्मर्तारः अनुष्ठातारश्च पितरो देवाश्च अवान्तराराध्याः
महाभूतानि वियदादीनि धातवः तत्त्वार्याणि त्वक्चर्मादीनि एता-
नि धर्मफलभोगोपकरणानि भोक्तृवर्गो जङ्गमाजङ्गमं जगदिति.
१५ ज्ञानहेतुतामप्याह—योगज्ञानमिति ॥ ज्ञानं शास्त्रं योगस्य ज्ञानम्
योगो द्विविधः समाधियोगः कर्मयोगश्चेति. संख्यया तत्त्वानामव-
धारणं सांख्यं विद्या व्याकरणाद्यङ्गविद्याः धनुरायुर्गान्धर्वप्रभृतीनि
दृष्टार्थानि उपविद्याः शिल्पानि सर्वज्ञानुष्ठेयं कर्म वेदाः प्रधानविद्याः
शास्त्राणि स्मृतीतिहासपुराणानि सर्वमेतत् विज्ञानं कृत्स्नं जनार्द-
२० नादुद्भवतीति शेषः. अनया महाविभूतिवैचित्र्या[1] भगवतो महानि-
र्वाहं दर्शयति—एकोविष्णुरिति ॥ स्वयमेकरसन् अनेकशोऽसं-
ख्येयतया रूपप्रकारपरिणामप्रयोजनभेदेन पृथक् च स्थितानि म-
हान्ति भूतानि त्रीन् लोकांश्च बद्धमुक्तनित्यान् चेतनान् व्याप्य
तेषां नियमयोपित्वादिभिरात्मभवन् विश्वभुक् सर्वस्य परिपालकः

[1] वैचित्र्यम् ।

तथाप्यव्ययः तद्दोषैरपरामृष्टः पुनश्च परविभूत्या महद्भूतम् अवा-
ङ्मनसगोचरश्च भवन् भुङ्क्ते लीलाभोगरसमनुभवतीति निस्सीमभू,
मा भगवांस्तुत्यः तन्निगरणक्षमज्ञानवाग्विभवो भगवान् व्यास-
स्तोता तदुभयमाङ्गल्यमहिमेदं स्तवरत्नं तदर्पणेयमहादारिद्र्यमिदं ५
जगत् तदधिकारीति पुष्कलमेतत्. यः कश्चित् चेतनः परावर-
श्रेयोर्थी निर्विशङ्कस्सेवतामित्याह—इमं स्तवमिति ॥ एवं स्वभा-
वत एव समस्तद्वन्द्वप्रतिद्वन्द्विसकलकल्याणगुणाकरं प्रपन्नपारिजातं
पुण्डरीकाक्षं लक्ष्मीपतिं भगवन्तं भजमानानां स एव सर्वस्वमिति
तत्संपदो वाचामगोचराः कुतस्सांसारिकपरिभवप्रसङ्ग इति पर्या- १०
त्पयति—विश्वेश्वर मिति ॥ तमिममर्थं शपथेन भावयन् न ते यान्ति
पराभवं न ते यान्ति पराभवमिति आवृत्त्या पूरयतीति ॥ अस्माक-
मत्र च परत्र च सर्वदुःखमुन्मूल्य संपदमशेषविधां विधाय । श्रीरङ्ग
राजमहिषी सच वैष्णवानां सङ्कत्सुखं सह जयेन सदा क्रियास्ताम् ॥

---

इति

भगवद्गुणदर्पणाख्यभाष्य-निर्वचन-निरुक्तसहितं

श्रीमद्विष्णुनामसहस्रम्

समाप्तम्

---

पुस्तक मिलनेका ठिकाना—
गंगाविष्णु श्रीकृष्णदास
"लक्ष्मीवेङ्कटेश्वर" छापाखाना.
कल्याण—(मुंबई)

इति नपुंसकलिङ्गशेषणा सर्वस्य तच्छक्तिविधुतत्वमुक्त्वा तद्वशवर्तित्वमाह-ससुरासुरेति ॥ वर्ततेदम् इत्यार्षी संहिता अवर्ततेदमिति वा इदं तद्वशवर्तित्वं शरीरात्मभावेन विशिनष्टि—इन्द्रियाणीति ॥ वासुदेवात्मकानि तच्छरीराणीत्यर्थः, आहुः शास्त्राणीति
५ शेषः, एवं तत्त्वशास्त्रार्थानां तादधीन्यमभिधाय अनुष्ठानशास्त्रार्थानामपि तादधीन्यं मन्दाधिकारिणां भयमपनेतुमाह-सर्वागमानामिति ॥ सर्वागमानां सर्वधर्मप्रमाणानां प्रथमं परिकल्पितः प्रथमप्रतिपाद्यधर्मः आचारः शौचादिस्तदङ्गश्रौतो धर्म इति तस्याराध्यः फलदः सहायश्चाच्युत इति,
१०

धर्मानुबन्धिनामपि तदुद्भवत्वमाह-ऋषय इति॥ऋषयः मन्वादयः तस्य स्मर्तारः अनुष्ठातारश्च पितरो देवाश्च अवान्तराराध्याः महाभूतानि वियदादीनि धातवः तत्कार्याणि त्वक्चर्मादीनि एतानि धर्मफलभोगोपकरणानि भोक्तृवर्गो जङ्गमाजङ्गमं जगदिति.
१५ ज्ञानहेतुतामप्याह—योगज्ञानमिति ॥ ज्ञानं शास्त्रं योगस्य ज्ञानम् योगो द्विविधः समाधियोगः कर्मयोगश्चेति, संख्यया तत्त्वानामवधारणं साख्यं विद्या व्याकरणाद्यङ्गविद्याः धनुर्वेदगान्धर्वप्रभृतीनि दृष्टार्थानि उपविद्याः शिल्पानि सर्वस्यानुष्ठेयं कर्म वेदाः प्रधानविद्याः शास्त्राणि स्मृतीतिहासपुराणानि सर्वमेतत् विज्ञानं शास्त्रं जनार्द-
२० नादुद्भवतीति शेषः, अनया महाविभूतिवैचित्र्या भगवतो महानिर्वाहं दर्शयति—एकोविष्णुरिति ॥ स्वयमेकस्सन् अनेकशोऽसंख्येयतया रूपप्रकारपरिणामप्रयोजनभेदेन पृथक् च स्थितानि महान्ति भूतानि त्रीन् लोकांश्च बद्धमुक्तनित्यान् चेतनान् व्याप्य तेषां नियमशेषित्वादिभिरात्मा सन् विश्वभुक् सर्वस्य परिपालकः

१ वैचित्र्यम् ।

तथाप्यव्ययः तद्दोषैरपरामृष्टः पुनश्च पराविभूत्या महद्भूतम् अवा-
ङ्मनसगोचरश्च भवन् भुङ्क्ते लीलाभोगरसमनुभवतीति निरसीमभू,
मा भगवांस्तुल्यः तन्निगरणक्षमज्ञानवाग्विभवो भगवान् व्यास-
स्तोता तदुभयमाङ्गल्यमहिमेदं स्तवरत्नं तदपनेयमहादारिद्र्यमिदं ५
जगत् तदधिकारीति पुष्कलमेतत्. यः कश्चित् चेतनः परावर-
श्रेयोर्थी निर्विशङ्कस्सेवतामित्याह—इमं स्तवमिति ॥ एवं स्वभा-
वत एव समस्तद्वन्द्वप्रतिद्वन्द्विसकलकल्याणगुणाकरं प्रपन्नपारिजातं
पुण्डरीकाक्षं लक्ष्मीपतिं भगवन्तं भजमानानां स एव सर्वस्वमिति
तत्संपदो वाचामगोचराः कुतस्सांसारिकपरिभवप्रसङ्ग इति पर्या- १०
नयति—विश्वेश्वरमिति ॥ तमिममर्थं शपथेन भावयन् न ते यान्ति
पराभवं न ते यान्ति पराभवमिति आवृत्त्या पूरयतीति ॥ अस्माक-
मत्र च परत्र च सर्वदुःखमुन्मूल्य संपदमशेषविधां विधाय । श्रीरङ्ग
राजमहिषी सच वैष्णवानां सङ्गत्सुखं सह जयेन सदा क्रियास्ताम् ॥

---

इति
भगवद्गुणदर्पणाख्यभाष्य—निर्वचन—निरुक्तसहितं
## श्रीमद्विष्णुनामसहस्रम्
समाप्तम्

---

पुस्तक मिलनेका ठिकाना—
गंगाविष्णु श्रीकृष्णदास
"लक्ष्मीवेङ्कटेश्वर" छापाखाना.
कल्याण—(मुंबई)

अथ

# निर्वचनशेषः.

निर्व०—विश्वाद्यं प्रथमं सर्वाद्यन्तं शतकमुच्यते ॥ अच्युताद्यममृत्स्वन्तं द्वितीयमिह गम्यते ॥ १ ॥ तृतीयं सर्वदृक्पूर्वं प्राग्वन्तमनुकथ्यते ॥ युगादिकृत्प्रभृति च नयान्तं तुर्यमीर्यते ॥ २ ॥ अनयाद्यं पञ्चमं पुरातनान्तं प्रपठ्यते ॥ शरीरभूतभृत्पूर्वं गोप्त्रन्तं षष्ठमिष्यते ॥ ३ ॥ सप्तमं वासुदेवान्तं वृषभाक्षादि भण्यते ॥ अष्टमं वसुपूर्वं सुलोचनान्तं प्रकीर्त्यते ॥ ४ ॥ अर्काद्यव्ययकल्प्यन्तं नवमं परिगण्यते ॥ स्वस्तिदप्रमुखं चापि दशमं तत्त्ववेदिभिः ॥ ५ ॥ तथा सर्वप्रहरणायुधान्तं परिगण्यते ॥ नाम्नां सहस्रे श्रीविष्णोरित्थं शतकनिर्णयः ॥ ६ ॥ षडेकानेकनामानि तत्र तत्र भवन्ति हि ॥ एकनामानि च त्रिंशदेकत्रिंशदथापि वा ॥ ७ ॥ दशशत्यां च विरतविरजःपाठभेदतः ॥ स्फुटानीतरनामानि तत्प्रकारः प्रदर्श्यते ॥ ८ ॥ सहस्रसंख्याह्यन्यूनानतिरिक्ता च सर्वथा ॥ तत्रैकानेकनामानि प्रदर्श्यन्ते च पूर्वतः ॥ ९ ॥ प्रथमे त्रिककुब्धामेत्येकं वा द्विकमिष्यते ॥ तत्राप्युपपदं वान्तं दान्तं वा पाठभेदतः ॥ १० ॥ दान्तोपपदपाठे स्यादेकतानैकतोदिता ॥ चतुर्थे च तथा बोध्यमेकमेव हविर्हरिः ॥ ११ ॥ विरतो विरजश्चेति तत्र पाठोपि भिद्यते ॥ पञ्चमे द्वे समुदिते सदसत्क्षरमक्षरम् ॥ १२ ॥ अष्टमे द्वे भवश्चेति चतुर्वेदविदेकपात् ॥ इत्येकानेकनामानि षोढा सन्ति तथादिमे ॥ १३ ॥ शतके चैकनामानि मुक्तानां परमा गतिः ॥ निधिरव्यय इत्येतत्परतो मङ्गलं परम् ॥ १४ ॥ इति त्रीणि द्वितीये स्याच्छाश्वतस्थाणुरेककम् ॥ तृतीये स्युश्च चत्वारि गुरुर्गुरुतमस्ततः ॥ १५ ॥ अहस्सवर्तकश्चैव विश्वभुग्विभुरित्यपि ॥ ओजस्तेजोद्युतिधरश्चतुर्थे द्वे तथा मते ॥ १६ ॥ इष्टोविशिष्टस्तदनु परमस्पष्ट इत्यपि ॥ विरतो विरजा मार्गः पाठे त्रीणीति बुध्यताम् ॥ १७ ॥ पञ्चमेपि च चत्वारि स्फुटं धर्मविदुत्तमः ॥ तथा च स्थावरस्थाणुर्बीजमव्ययमि-

स्यपि ॥ १८ ॥ ज्ञानमुत्तममित्येवं षष्ठे भवति च ध्रुवम् ॥ ज्योतिरादित्य इत्येकं चत्वार्यपि च सप्तमे ॥ १९ ॥ श्रेयश्श्रीमानपि तथा नूनं ज्योतिर्गणेश्वरः ॥ शाश्वतःस्थिर इत्येतद्विज्ञेयं समनन्तरम् ॥ २० ॥ पश्चात्तु ब्रह्मकृद्ब्रह्माऽष्टमे पदमनुत्तमम् ॥ तेजोवृषो द्वे नवमे सन्तेत्यध्यवसीयताम् ॥ २१ ॥ सर्वविज्जम्प्यपि तथा सर्ववागीश्वरेश्वरः॥ ततः पश्चादपि तथा शत्रुजिच्छत्रुतापनः॥२२॥ न्यग्रोधोदुम्बरश्चापि हुतभुग्विभुरित्यपि॥ अनन्तहुतभुग्भोक्ता कपिरव्यय इत्यपि ॥२३॥दशमे चापि संभाव्ये नाम्नी द्वे चैव भूर्भुवः॥ भूर्भुवस्स्वरतरुश्चेति त्रिंशदेतानि सन्ति हि ॥ २४ ॥ एकनामानि चाप्येकत्रिंशत्पाठभेदतः॥ पुरैवोक्तः स भेदोपीत्येकानेकैकनिश्चयः ॥ २५ ॥ स्फुटान्यन्यानि नामानि संकलय्य सहस्रकम् ॥ यथा च त्रिककुद्धाम तथैव च हविर्हरिः ॥ २६ ॥ एकमेकं भवेन्नाम विरतश्चैव पठ्यते॥ नामानि च स्युश्चत्वारि सदसत्क्षरमक्षरम्॥२७॥ सर्वो द्वे द्वे तथा स्यातां चतुर्वेदविदेकपात् ॥ त्रिंशत्स्युरेकनामानि स्फुटा नवशतीतरा ॥२८॥ षट्युत्तरा भवति च प्रोक्ताव्यन्तव्यवस्थितिः ॥ तदेवमिति वोद्धव्यं शतके शतके बुधैः ॥ २९ ॥ न दोषाय भवेत्तस्य व्यवस्थातिक्रमः क्वचित् ॥ यदा तु त्रिककुद्धाम द्वे द्वे यद्वा हविर्हरिः ॥ ३० ॥ विरजोमार्ग इत्येव पाठस्तत्र नियम्यते॥विना विशेषं सर्वत्रान्यत्पाग्वदवधार्यताम् ॥३१॥ तद्रूपत्वं तु नेहेष्टं येन संख्या विरुध्यते ॥ सहस्रसंख्यावैयात्यं माभूदिह कथंचन ॥ ३२ ॥ विरजोमार्ग इत्यत्र ह्युभयैक्यं नियम्यते ॥ यदा द्वे नामनी स्यातां सदसत्क्षरमक्षरम् ॥३३॥ विरतोमार्गपाठेन द्वयोर्भेदो नियम्यते॥चत्वारि स्युर्यदेमानि न भिद्येते उभे अपि ॥ ३४ ॥ युगपत्सव इत्येवं चतुर्वेदविदेकपात् ॥ तदानीं च द्वयोर्भेदो यौगपद्यान्नियम्यते ॥३५॥ नाम्नोश्च त्रिककुद्धाम्नरतथैव च हविर्हरेः॥ पदेद्वान्यतरादिन्नं भिन्नं नान्यत्र तत्तथा॥३६॥

सहस्रसंख्यासंक्षोभो नैवोद्भाव्यः कदाचन ॥ इत्येवं सूक्ष्मया बुद्ध्या बुद्धिमद्भिर्विभाव्यताम् ॥ ३७ ॥ क्वचित् क्वचित्पाठभेदः स्फुटनामस्वपि स्थितः ॥ तथैव कुत्रचिच्चास्ति ह्येकनामविशेषणे ॥ ३८ ॥ नातीव तत्तात्पर्यैक्यादिति सोप्युपगम्यते ॥ द्वेधा त्रेधा चतुर्धा च पञ्चधा सप्तधापि वा ॥ ३९ ॥ पुनरुक्तानि नामानि षडशीत्यधिकं शतम् ॥ इत्थमूह्यं तत्प्रकारप्रपञ्चो नेह रूप्यते ॥४०॥ निरुक्ते संग्रहे नाम्नां विष्णोर्नामसहस्रिणः ॥ सारे सङ्क्षेपरिप्सुत्वान्मा भूद् ग्रन्थस्य विस्तरः॥४१॥परिहारस्तु निपुणतरमभिधीयते ॥ शब्दतो वार्थतो वेह द्वाभ्यां वा तत्र तत्र हि ॥४२॥ नामानि पुनरुक्तानि प्रतिभान्तीव यद्यपि॥तथापि तत्तत्प्रस्तावानुगुणार्थानुयायिना ॥४३॥ अद्वितीयविशेषार्थगौरवानुविधायिना ॥ व्याख्यानेनोदितेनैषां पौनरुक्त्यं परोच्यते ॥ ४४ ॥ तत्र तत्राप्यसूचीयं दिक्प्रदर्शनतःस्थितिः॥आनुशासनिके पञ्चत्रिंशद्द्विशतपूरणः॥४५॥ सहस्रनाम्नामध्यायो महाभारतसंभवः ॥ सुधीः कुशिकसन्तानकलशाम्बुधिकौस्तुभः ॥ ४६ ॥ वरदार्यो हरेर्नाम्नां सहस्रं निरवोचत॥श्रीपराशरभट्टार्यश्रीसूक्तेः स्थितये हृदि॥४७॥ अभिप्रायो हरेर्नाम्नामप्यधायि यथामति ॥ ऐहिक्यामुष्मिकी संपत्तेषां भवति धीमताम्॥ येधीयते श्रीसहस्रनामनिर्वचनं हरेः४८ श्रीमन्नामसहस्रं तन्निर्वचनमिदमप्युभे जयताम् ॥ पावयति यत्प्रवदनं पापाकूपारपातिनोपि जनान् ॥४९॥ शब्दसिद्धिमपि संगतिमस्मिन्नर्थवर्णनमवेक्ष्य च नाम्नाम् ॥ नामनिर्वचनसंग्रहसारे वीतमत्सरकथा विबुधाः स्युः॥५०॥परिग्रहोमुष्य भवेदसंशयं विपश्चितां यत्कमलातदीशयोः॥ अनुग्रहो मद्वचसि प्रगल्भते विशिष्य पित्रोरिव मुग्धभाषिते ॥५१॥ वक्षःपीठीम्मधुविजयिनो वर्चसा वर्धयन्ती वाञ्छातीतं वसु वितरतो वारणाद्रीश्वरस्य॥लक्ष्मीर्नित्यं लसतु हृदि मे लक्ष्यमाणा गुणौघैर्भूतिं भूते भुवनमहितां भूयसीं यत्कटाक्षः॥५२

श्रीमत्सहस्रनामनिर्वचनशेषः संपूर्णः.

अथ

# फलश्रुतिश्लोकाः.

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ॥ नाम्नां सहस्रं दिव्याना- मशेषेण प्रकीर्तितम् ॥१०८॥ य इदं शृणुयान्नित्यं यश्चापि परिकी- र्तयेत् ॥ नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥१०९॥ वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ॥ वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ ११० ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्- थार्थी चार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुया- त्प्रजाम् ॥१११॥ भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ॥ सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ ११२ ॥ यशः प्राप्नो- ति विपुलं ज्ञातिप्राधान्यमेव च ॥ अचलां श्रियमाप्नोति श्रेयः प्रा- प्नोत्यनुत्तमम् ॥ ११३ ॥ न भयं क्वचिदाप्नोति वीर्यं तेजश्च वि- न्दति ॥ भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥११४॥ रो- गार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भी- तस्तु मुच्येतापन्न आपदः ॥ ११५ ॥ दुर्गाण्यतितरत्याशु पु- रुषः पुरुषोत्तमम् ॥ स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ११६ ॥ वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ॥ सर्वपापवि- शुद्धात्मा याति ब्रह्म सनातनम् ॥११७॥ न वासुदेवभक्तानामशु- भं विद्यते क्वचित् ॥ जन्ममृत्युजराव्याधिभयं नैवोपजायते ११८ इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥ युज्येतात्मसुखक्षा- न्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ ११९ ॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ॥ भवन्ति कृतपुण्यानां भक्तानां पुरुषो- त्तमे ॥ १२० ॥ द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ॥

वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १२१ ॥ ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ॥जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १२२ ॥ इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ॥ वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १२३ ॥ सर्वागमानामाचारः प्रथमं परिकल्प्यते ॥ आचारः प्रथमो धर्मो धर्मस्य प्रभुरच्युतः ॥ १२४ ॥ ऋषयः पितरो देवा महाभूतानि धातवः ॥ जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥१२५॥ योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म च ॥ वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १२६ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥ त्रीँल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १२७ इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ॥ पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥१२८॥ विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ॥ भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवं, न ते यान्ति पराभवमिति ॥ १२९ ॥

इति श्रीमन्महाभारते शतसहस्रसंहितायां वैयासिक्यां प्राक्शान्तिपर्वणि स्थितः सम्प्रत्यानुशासनिके पर्वणि दानधर्मप्रकरणस्थः भीष्मयुधिष्ठिरसंवादरूपः एकोनपञ्चाशदधिकशततमः ( १४९ ) श्रीविष्णोः सहस्रनामस्तोत्राध्यायः समाप्तः ॥

श्रीकृष्णार्पणमस्तु ॥

---

श्रीमते रामानुजाय नमः ।

## श्रीमदनन्तार्यमहागुरवे नमः ।



श्रीमत्यां द्वारवत्यां शमदमशुभधीसंहतौ मूर्तिमत्यां संगच्छन्त्याश्च प-श्चाज्जलधिमधितटं गोमतीदिव्यनद्याः ॥ त्रैविक्रम्यां च मूर्तौ सततमुपगतं रु-क्मिणीप्राणनाथं श्रीमन्तं द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरेशम् १ श्रीमत्यां द्वारवत्यामनितरसुलभां पश्चिमस्याम्बुराशेरन्तर्दैत्येन नीतां जगद-वनकरीं श्रीमतीं गोमतीं यः ॥ दुर्वासोऽभ्यर्थितस्स्मानयति तदनु तं रुक्मिणीप्रा-णनाथं श्रीमन्तं द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरेशम् ॥२॥ आन-र्ताङ्क्यायामपरजलनिधेरङ्कगायां नगर्यां श्रीमत्यां द्वारवत्यां शुभसलिल-वतीं गोमतीमुत्तरेण ॥ व्याचक्षाणं सुभिक्षं स्वनिकटसुलभं मोक्षमन्यैर्दुरापं श्रीमन्तं द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरेशम् ॥३॥ चक्रं दोर्भिश्च-तुर्भिर्दरमपि दधदाजानुदीर्घैरनर्घैः पद्मं कौमोदकीं च श्रितरिपुविहतिव्य-ग्रचतास्सदैव ॥ स्वोद्भूतैर्लोकरक्षां फलमवगमयन्नुत्थितश्चास्ति यस्तं श्रीम-न्तं द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरेशम् ॥४॥ देयास्तं बुद्धियो-गं स्वयमिह भजतां प्रीतितो दीयमानं स्वप्राप्त्यै सन्निधायापि च हृदि सततं मोहजातान्धकारम् ॥ कारुण्यार्थं ममेश स्फुटमतिलसता ज्ञानदीपेन वध्याः श्रीमंस्त्वां द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरेशम् ॥ ५ ॥ हन्ता-सम्मन्यमानाः प्रपदनमिह मे यद्भजन्त्यन्यदेवान् कामैस्तैस्तैर्विमुग्धा इदम-विधि ममैवार्चनं स्यान्मदेव ॥ जायेताप्यन्तवत्तत्फलमिति जहति त्वां हि वक्तारमन्धाः श्रीमंस्त्वां द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरेशम् ॥६॥ मायां देवीं मदीयां जगति गुणमयीं दुस्तरां निस्तरेयुर्मुक्त्वान्यान् क्षुद्रदेवान् शरणमुपगतास्सर्वभावेन मां चेद् ॥ लोकास्स्युर्नान्यथेति ह्यपि जहति विभो त्वां प्रवक्तारमन्धाः श्रीमंस्त्वां द्वारकाया अधिपतिमनिशं वन्दिषीयेन्दिरे-शम् ॥७॥ घण्टाकर्णं स्वनामश्रवणपरुषतामानिनं वोग्रशैवं भूतीभूतं मुमुक्षुं

